लेली अर्थनिर्णायक तत्त्वें केवळ यज्ञयागासाठींच नसून त्यांचा कायदा व व्यवहार यांत वारंवार उपयोग केला जातो. 'मीमांसा' म्हणजे 'वेदाच्या अर्थाचा सम्यक् विचार करण्याचें शास्त्र' हा जरी असला, तरी त्यांत सांगितलेले नियम हे सर्वसाधारण कोणत्याही शास्त्राचा योग्य अर्थ लावण्यास अत्यंत उपयुक्त आहेत.

भगवान् जैमिनीनीं पूर्वमीमांसाशास्त्र सूत्ररूपानें सुव्यवस्थित लिहिलें आहे. या शास्त्रीय ग्रंथातील सूत्राचें पदशः विवरण व त्याचा भावार्थ सुलभ संस्कृत भाषेत श्रींनीं केला असल्यामुळें मद्रचा ग्रंथ मीमांसाशास्त्राचा अभ्यास करणाऱ्यांना अतिशय उपयोगी झाला आहे.

हल्लीं हिंदुस्थान स्वतंत्र झालेमुळें आपली भारतीय संस्कृती व संस्कृत विद्या यांचा पद्धतशीर अभ्यास होऊन त्यांचा उत्कर्ष होणेचीं सुचिन्हें दिसत आहेत.

महाविद्यालयात मीमांसाविषयाचा अभ्यास करणाऱ्या विद्यार्थ्यांस या भावबोधिनीचा अत्यंत उपयोग होईल. तसेच, कायद्याचे अभ्यासात हा विषय समाविष्ट झाल्यास त्यावेळींहि ह्या भावबोधिनीचा उपयोग होईल.

श्रींनीं हा ग्रंथ अखिल जगांतील गीर्वाणभाषाभिज्ञांकडून अभ्यासिला जावा म्हणून मुद्दाम सुलभ संस्कृत भाषेत लिहिला आहे.

श्रींचेकडून अशाचप्रकारें श्रीआद्यशंकराचार्य पीठाची सेवा व्हावी व प्रतिवर्षी श्रींच्याकडून अशीच अमोल ग्रंथसंपत्ती निर्माण व्हावी व ती पीठाकडून प्रकाशित केली जावी याबद्दल व श्रींना दीर्घायुरारोग्य लाभो एतदर्थ श्रीपरमेश्वराचे चरणीं आमची प्रार्थना आहे.

श्रींच्या या असामान्य ग्रंथाचें तज्ज्ञांकडून योग्य तें स्वागत व परिशीलन होईल अशी आम्हास पूर्ण उमेद आहे.

सदर ग्रंथास प्रो. गणेश श्रीपाद हुपरीकर, एम्. ए. यांनीं विद्वत्तापूर्ण व मार्मिक अशी प्रस्तावना लिहिली आहे, त्याबद्दल आम्ही त्यांचे आभारी आहों. तसेंच पीठाचे ग्रंथालयाध्यक्ष वे. शा. सं. सदाशिवशास्त्री मारुलकर यांनीं या मोठ्या व शास्त्रीय ग्रंथाचीं मुद्रितें तपासण्याचें क्लिष्ट व अवघड काम मोठ्या परिश्रमानें केलें असल्यानें त्यांचेंहि आभारी आहों, या कामीं पीठाचे व्यवस्थापक राजेश्री दामोदर दत्तात्रय कुलकर्णी, नूलकर यांनीं बरेंच श्रम घेतले आहेत याबद्दल त्यांचा उल्लेख करणें उचित आहे. तसेंच चिंतामणी प्रेसचे मॅनेजर यांनीं ठराविक मुदतींत सदर ग्रंथाचें छपाईचें काम करून दिलेबद्दल त्यांचाहि उल्लेख करणें योग्यच आहे.

प्रतिवर्षीं ग्रंथप्रकाशनाचा असाच सुयोग यावा अशी श्रीपरमेश्वरचरणीं आमची प्रार्थना आहे.

श्रीजगद्गुरु मठ
कोल्हापूर.
मि. वैशाख शु. १०
शके १८७३

गोपाळ विठ्ठल कुलकर्णी, माजनाळकर
बी. ए. एल्एल्. बी.
कारभारी.
नि॥ श्रीस्वामी जगद्गुरु शंकराचार्य
पीठ करवीर

# मुखप्रबन्धः

## १

श्रुतिजनन्या पुरुषार्थचतुष्टये कर्मापरपर्यायो धर्म एव मोक्षोपायत्वेनादौ परिगणितः। अर्थकामौ धर्माविरोधेन साधितावेवाभ्युदयसाधकौ भवतः, नान्यथा, इत्यतो धर्म एव सम्यगाचरितः सन्नभ्युदयद्वारा निःश्रेयसाय भवतीति पुरातनैर्वैदिकाचार्यैरव्याहतपरम्परया व्यवस्थापितम्। यद्यपि यज्ञादिकर्माण्यपूर्वद्वारा निरतिशयसुखरूपं स्वर्गं प्रापयन्तीति निर्णीतं कर्ममीमांसायाम्, तथापि तान्येव कर्माणि परमेश्वरार्पणबुद्ध्या विहितानि चित्तशुद्धये, तत्साहाय्येन च मोक्षाय कल्पन्त इति श्रीभगवत्पूज्यपादैरवधारितम्। अतो मनुजश्रेयःसंसिद्ध्य एव समग्रो वेदः कर्मकाण्डं ज्ञानकाण्डं चेति द्विधा विभक्तः। समीहितस्वर्गादिसाधकानां यज्ञकर्मणां प्रतिपादिका कर्मकाण्डापरनामधेया मीमांसा 'कर्ममीमांसा' 'पूर्वमीमांसा' वेति पदेन व्यपदिश्यते, मोक्षसाधिका ज्ञानकाण्डापराभिधाना मीमांसा 'वेदान्तः' 'उत्तरमीमांसा' वेति पदेन च। एवमर्थकामयोर्गौणत्वं प्रतिपाद्य धर्ममोक्षावेव मीमांसाद्वये प्राधान्येन विमर्शविषयीभूतौ।

इदानीन्तने काले कार्श्यमुपगतोऽप्ययं पूर्वमीमांसाप्रतिपादितो यागादिधर्मः प्राचीनजनचेतःस्वप्रतिहतं प्रभुत्वमाप। अतः सदैव यज्ञकर्मनिरता याज्ञिका विद्वत्परिषत्सु यज्ञानुष्ठानविषयकान् सन्देहानधिकृत्य, मौखिकपरम्पराप्रभेदानुसारिणीर्यज्ञविप्रतिपत्तीश्च लक्ष्यीकृत्य मुहुर्मुहुः संवादविवादान्समाशिश्रियुः। अपि च संहिताब्राह्मणगतस्य सुविस्तृतयज्ञविज्ञानस्येतस्ततो विकीर्णतया क्रमविहीनतया च यज्ञतत्त्वमधिकृत्य प्रभिन्नमतानि सम्बभूवुः। अतो भगवता श्रीजैमिनिना यज्ञविज्ञानराशेः सङ्कुलत्वं समवबुध्य स मीमांसासूत्रेषु सम्यग्व्यवस्थितिं प्रापितः। तेन विविधमतानां सुसंवादं संसाध्य यज्ञविधाने सर्वथा समुचितसन्निवेशं निश्चित्य च शेषशेषित्वचिन्ता-

परा पूर्वमीमांसा शास्त्रपदवीमापादिता । यज्ञानां सम्यक्सम्पादने यानि वैदिकवाक्यानि परमोपयुक्तानि तेषामर्थनिर्धारणानियमास्तेन समुद्भाविताः । प्रतिद्वन्द्विदार्शनिकविमतोपन्यासपुरस्सरं स्वीयसिद्धान्ताः श्रीजैमिनिना मीमांसासूत्रेषूपस्थाप्यन्ते । एतेषु सिद्धान्तेषु केचिद्विद्वत्परिषत्सु प्रत्यक्षं सञ्जातानां संवादविवादानां मौखिकनिर्णया एव सूत्ररूपेण सङ्कलिता इत्यनुमीयते । एतेषां सूत्राणां न्यायाधिष्ठितत्वात्तेषां संहतिर्न्यायसाहस्रीपदवाच्यापि विद्यते ।

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं विदुः ॥

इति श्लोकानुसारेण प्रत्यधिकरणं लोकव्यवहारागमयुक्तितो निर्णीताः सिद्धान्ता एव पूर्वं न्यायपदभाजो बभूवुः, तदनन्तरं च न्यायशब्दः स्थूलतया गौतमीयन्यायशास्त्रवाचकः सञ्जज्ञे । जैमिनीयन्यायसाहस्र्या ज्ञातव्यविषयसङ्ख्यानुरोधेन—

शास्त्रेऽध्याये तथा पादे न्यायसङ्ख्यात्रिधा ।
शास्त्रादिविषये ज्ञाते तत्तत्सङ्ख्यातिरुच्यताम् ॥

इति वचनानुसारतोऽध्यायपादाधिकरणादयो विभागाः प्रकल्पिताः, पुनश्च तत्र प्रत्यधिकरणं विषयसंशयादीनि पञ्चाङ्गानि विभक्तानि, येन मीमांसाशास्त्रगतं यज्ञविज्ञानं विशिष्टपद्धतिसनाथं सद् व्यवस्थितिं प्राप्तम् । एवं पूर्वमीमांसागतेषु पञ्चाङ्गघटिताधिकरणेषु प्रमाणोपबृंहितं वादकौशलं, सूक्ष्मतर्कपाटवं, विशदं व्यवस्थितं च व्याख्यानमित्येतानि बाहुल्येनावकाशं भेजिरे । पूर्वमीमांसाशास्त्रोपज्ञैषाऽधिकरणानुसारिणी व्याख्यानपद्धतिरेव तदुत्तरभाविन्या वेदान्तापराभिधया उत्तरमीमांसया विशदव्याख्यानोपायत्वेन प्रचुरतया परिगृहीता ।

उत्तरकाले तु भट्टपादप्रभाकरप्रभृतयो मीमांसका गौतमीयन्यायशास्त्रमधितिष्ठन्तस्तद्गतानि प्रत्यक्षानुमानोपमानशब्दप्रमाणानि परिजगृहुः ।

-त्र गौतमीयप्रमाणचतुष्टयेनार्थापत्तिं सङ्कलय्य प्राभाकराः प्रमाणपञ्चकं स्वीकुर्वन्ति। भाट्टाश्चैतत्प्रमाणपञ्चकेनानुपलब्धिं संयोज्य प्रमाणषट्कमङ्गी- कुर्वन्ति। विशेषतोऽत्रावधेयं यदुपरितनप्रमाणाङ्गीकारेऽपि मीमांसकाः प्राधान्येन शब्दप्रमाणशरणा एव ( जै. १।१।४-५ )। वेदं मूर्धन्यीकृत्य तच्छब्दनित्यत्वसिद्धय एव ते साधनरूपेण शब्देतरप्रमाणान्युररीकुर्वन्ति। एवं मीमांसकाः शब्दतत्त्वमग्रतो निधाय वैदिकवाक्यानां सोपपत्तिकमर्थं निर्धार- यितुमेव श्रुत्यनुकूलं तर्कं समाश्रयन्ति। अपि च प्राभाकरा वैशेषिकाणां द्रव्यगुणकर्मसामान्यसमवायपदार्थान् स्वीकृत्य तैः शक्तिः, सादृश्यं, संख्या चेति प्रमाणत्रयं संयोजयन्ति, भाट्टाश्च केवलं द्रव्यगुणकर्मसामान्याभाव- पदार्थाननुमन्यन्ते। उभये मीमांसकाः पुनः कार्यकारणभावं प्रायः परि- गृह्णन्ति। एवमुत्तरकालीनैर्मीमांसकैर्न्यायवैशेषिकदर्शनगतान् कांश्चिद्विषया- नादाय स्वीयदर्शनं परमां परिवृद्धिं प्रापितम्।

यथार्हं यज्ञानुष्ठानं स्वर्गोपादकमपूर्वं जनयतीति पूर्वमीमांसासिद्धान्तः। एतदपूर्वाङ्गत्वेनैव तैर्यज्ञगतानि शेषशेषिभूतान्यखिलानि कर्माणि कल्प्यन्ते। अतः ‘ प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ’ इति वचनानुसारेण पूर्वमी- मांसा यियक्षूणां पुरत आदौ विस्पष्टं प्रयोजनमुद्दिष्टं वा संस्थापयति, पश्चा- च्चैतत्प्रयोजनं फलं वोद्दिश्यैव मीमांसकास्तत्सहकारिभूतानि सर्वाणि वस्तूनि यथाविभागं विन्यस्यन्ति। ‘ फलवत्संनिधावफलं तदङ्गम् ’ इति न्यायतः समग्रे वेदे यज्ञक्रियाश्चाङ्गाङ्गिभावेन प्रकल्प्य ते यज्ञ- विज्ञानाङ्गभूतानि तत्त्वानि तथा व्यवस्थापयन्ति यथा सर्वेषां सङ्कलनं सुसङ्घटितं यज्ञपुरुषवपुर्निर्मापयिष्यति। एवं विस्पष्टं प्रयोजनं, न्यूनाधिक- भावेन पदार्थग्रहणं, पदार्थविभागः, पदार्थानामङ्गाङ्गिभावकल्पनं, प्रामाण्य- विवेचनं, अर्थनिर्णये च मनोविज्ञानाधिष्ठितयोः सङ्कलनविकलनरूपयोरन्व- यव्यतिरेकयोः समाश्रय इति पद्धतिविज्ञानस्य ( methodology ) सकला अपि विशेषा अन्यशास्त्रेष्विव पूर्वमीमांसाशास्त्रेऽप्यनुसृता दृश्यन्ते। विशेषतश्च

यज्ञतत्त्वव्याख्यानमिषेण शब्दनित्यत्वपुरस्सरं वेदार्थनिर्णयरतैर्मीमांसकैः सर्वसाधारण्येन पद्धतिविज्ञानतत्त्वान्येव स्फुटीक्रियन्ते। अतः पूर्वमीमांसा वेदार्थनिर्णये प्राच्यप्रतीच्यशास्त्रसाधारणानि पद्धतिविज्ञानतत्त्वानि समाश्रित्य यथार्थ शास्त्राभिधानमुपगतेति निश्चप्रचम्। यज्ञोपयुक्तत्वविषये स्वर्गापूर्वविषये च सन्दिहाना अवैदिका मीमांसकेभ्य. कदाचिद्विभिद्येरन्, किन्तु मीमांसाप्रतिपादितानां वाक्यार्थनिर्णयतत्त्वानामेतानत्सर्वव्यापकत्वे यत्तानि यथा धर्मनिर्णये तथा लौकिकव्यवहारनिर्णयेऽपि परम प्रामाण्यमर्हन्ति। अन्यशास्त्रैर्मीमांसाया वाक्यार्थनिर्धारणतत्त्वानि तारतम्येन यद्यपि गृहीतानि, तथापि तानि विशेषतो धर्मशास्त्रार्थनिर्धारणे प्रयुज्यन्ते। प्राय सर्वशास्त्रैर्विशेषतश्च वेदान्तशास्त्रेण सङ्कलनदृष्ट्या प्रातिस्विकविषयतात्पर्यनिर्णयाय पूर्वमीमांसाप्रतिपादितम्-

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥

इतिश्लोकगत तात्पर्यलिङ्गषट्कमवलम्ब्यते। यतो विकलनपूर्वकं सङ्कलनमस्मिन् व्यापारे सदृश्यते ततो मीमांसकानामितरशास्त्राणां चेयं परिपाटी प्राधान्येनान्वयव्यतिरेकात्मिकेति समवधेयम्। अन्तिमतत्त्वनिर्णये मीमांसकेभ्यो विभिन्नाशया अपि श्रीभगवत्पूज्यपादा. स्वीयब्रह्मसूत्रभाष्ये विशेषतश्च तद्गततृतीयाध्याये ब्रह्मज्ञानोपायभूतानां कर्मोपासनापरश्रुतिवाक्यानां समन्वयं संसाधयितुं पूर्वमीमांसागतानि वाक्यार्थनिर्णयतत्त्वानि मुहुर्मुहुरुपयुञ्जत इति सविशेषमवधानमर्हति। अपि च तान्यर्थनिर्धारणतत्त्वानि सप्रपञ्चं पर्यालोच्याऽऽलङ्कारिकैरभिधालक्षणादिप्रतिपादने तानि न्यूनाधिकतया परिगृहीतानि। वैयाकरणा अपि-

संज्ञा च परिभाषा च विधिर्नियम एव च।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्॥

इति रीत्या पाणिनीयसूत्रविभागावसरे, तत्तत्सूत्रलक्षणनिबन्धने, लौकिकशास्त्रीयन्यायासिद्धपरिभाषाविवेचने, कारकार्थप्रतिपादने च जैमिनी-

यान् न्यायान् परिसङ्ख्यायार्थनिर्धारणपरिपाटीं च सामान्यतः संग्रथयन्ते। तथैव समाख्यापेक्षया लिङ्गवाक्ययोर्बलीयस्त्वं ख्यापयन्ती मीमांसकोपज्ञा वाक्यार्थविवरणपद्धतिः प्रतीच्यभाषाशास्त्रस्याप्युपकुरुते । प्रतीच्यानां तौलनिकभाषाशास्त्रेण ( Comparative Philology ) समाश्रितः शब्दव्युत्पादनोद्यमो वाक्यप्रकरणसन्दर्भविहीनत्वाद्विफलायास एवेति सोपपत्तिकं मीमांसाशास्त्रेण निर्दिश्यते । अन्यच्च " औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः " ( जै. १-१-५ ) इति सिद्धान्तमुपस्थाप्य मीमांसकैर्नित्यः शब्दो नोत्पद्यते, अपि त्वभिव्यज्यत इति सकण्ठरवमुद्घोष्यते । वेदस्य नित्यत्वापौरुषेयत्वे साधयितुमेवायं सिद्धान्तस्तैरुररीकृतः ( जै. १।१।१२-२३ ) । भाषागताश्च शब्दा जातिवाचका एव, न तु व्यक्तिवाचकाः, व्यक्तिश्चाक्षेपलभ्येति तेषां मतं सविशेषं संलक्ष्यम् ( जै. १।३।३३ ) यद्यपि भाट्टैरभिहितान्वयवादं पुरस्कृत्य विविक्तपदानां सार्थक्यं परिगृह्यते, तथापि प्रायो मीमांसका अर्थनिर्धारणे पदापेक्षया वाक्यमेवाधिकतरं मन्यन्ते । अन्विताभिधानवादिनः प्राभाकरास्तु विधिवाक्येऽन्वितानामेव पदानां सार्थत्वं प्रतिपाद्य वृद्धव्यवहारे वाक्यमुखेनैव पदार्थज्ञानं भवतीत्याचक्षते । मीमांसकाश्च पुनर्वाक्यार्थबोधे भावनाजनकं क्रियापदमेव प्रधानं मन्यन्ते, तत्रापि च विशेषतः प्रत्ययम् ( जै. १।१।२५; २।१।१ ) ।

वाक्यार्थनिर्णये शीघ्रान्वयोपस्थितिरेव प्रमुखं प्रयोजनम् । तत्रान्विताभिधानवादिनः प्राभाकराः शक्तिग्राहकशिरोमणिं वृद्धव्यवहारमभिमन्वाना वाक्यस्थितानामर्थान्तरसम्बद्धानां परस्परान्वितानामेव पदार्थानामभिधानं शब्दैः प्रतिपादनं भवतीत्यतो वाच्यार्थ एव वाक्यार्थ इति वदन्ति । अभिहितान्वयवादिनो भाट्टाश्च पुनरभिहितानामर्थाभिधायिनां स्वार्थमात्रविश्रान्तानां विशिष्टपदानामाकाङ्क्षायोग्यतासन्निधिबलेनान्वये सञ्जाते " तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसति " ( काव्यप्रकाशः ) इति मन्यन्ते । एवमन्वयबोधरीतिमेवाविष्कुर्वतोरप्युभयोर्मध्येऽभिहितान्वयवाद एव

ज्यायस्त्वेनाभिमतो बहुलप्रचारश्च संदृश्यते । नैयायिकाश्च शाब्दबोधविषये जातिविशिष्टव्यक्तिवादिनोऽपि प्रायोऽभिहितान्वयवादमेव पुरस्कुर्वन्ति । अतः

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।**
**वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥**

इति वचनं प्रायः शब्दप्रामाण्यवादिनां वाक्यार्थनिर्णयरतानां च मीमांसकानां शाब्दबोधपद्धतिं प्रदर्शयति । तद्यथा—आप्तवाक्यं तु शब्दप्रमाणमेव । व्यवहारः पुनरन्विताभिधानवादिनां वाक्यबोधपुरस्सरपदबोध्यत्वं ख्यापयति । अन्ये च शक्तिग्रहोपायाः पदबोधपुरस्सरं तात्पर्यरूपं वाक्यार्थमधितिष्ठतामभिहितान्वयवादिनां प्रायः सम्मताः ।

अभिहितान्वयवादिनो नैयायिका

**पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।**
**शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥**

इति रीत्या शाब्दबोधं प्रति पदज्ञानस्य करणत्वं मन्यन्ते । किन्त्वभिहितान्वयवादिनो मीमांसका. " पदानि हि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि, अथेदानीं पदार्था अवगता. सन्तो वाक्यार्थं गमयन्ति " इत्युक्त्या सामान्याकाराणां स्मर्यमाणपदार्थानामन्योन्यान्वयेनैव विशिष्टार्थतात्पर्यरूपो वाक्यार्थो लक्षणया समुदेतीति प्रख्यापयन्ति । एवं प्रायोऽभिहितान्वयवादिन आदौ पदज्ञानं तदनु पदार्थस्मरणं तदनन्तरमाकाङ्क्षायोग्यतासन्निधिमत्पदान्वयबोधस्तत्तश्च तात्पर्यरूपमेकवाक्यार्थज्ञानमिति शाब्दबोधक्रममङ्गीकुर्वन्ति । मीमांसकदृष्ट्या शास्त्रार्थनिर्णये शक्त्यपरपर्यायाऽभिधैव मुख्या वृत्तिः, झटिति वाक्यार्थबोधजनकत्वात् । विलम्बेन वाक्यार्थमियमुपादयन्ती गौणीवृत्तिर्लक्षणा वा यावच्छक्यं नाश्रयणीया, अन्वयानुपपत्तौ तात्पर्यानुपपत्तौ वा सा गत्यन्तराभावात्स्वीकार्या, यतो वाक्यभेदरूपवाक्यदोषाल्लक्षणारूपः पददोषोऽल्पीयान् । आलङ्कारिकाभिमतां पृथग्भूतां व्यञ्जनावृत्तिमनादाय मीमांसकास्तां तात्पर्यांशे एवान्तर्भावयन्ति ।

पुनश्च मीमांसकैः पदैकवाक्यता वाक्यैकवाक्यता चेति, द्विविधमेकवाक्यतातत्त्वं प्रतिपाद्यते । अर्थवादवाक्यानां पदस्थानीयतया, विधिवाक्येनैकवाक्यत्वं भवतीत्येषा पदैकवाक्यता । प्रभिन्नवाक्यानि पुनराकाङ्क्षादिवशेन—

स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनःसंहत्य जायते ॥

इति वचनानुसारतो महावाक्यार्थबोधं जनयन्तीत्येषा वाक्यैकवाक्यता च । ( जै. १।२।७ )

जटिलयज्ञप्रक्रियां व्याकुर्वद्भिर्मीमांसकैः समुद्भावितयाऽनया वाक्यार्थनिर्णयपद्धत्या शास्त्रान्तराणि यथोपकृतानि तथेदानीन्तनं लौकिकभाषाशास्त्रमपि भृशमुपकृतं स्यात् । वेदस्य गौणमुख्यभेदैर्विभागः कथं मीमांसकानां सुस्थिरस्य पद्धतिविज्ञानस्य निदर्शनभूतः, तेषां वाक्यार्थनिर्णयरीतिश्च शाश्वतमूल्यानि भाषाबोधनतत्त्वानि प्रतिपाद्य कथमिष्टप्रयोजनसाधिका सञ्जातेति दिङ्मात्रमिह प्रदर्श्यते ।

## २

तेषां दृष्ट्याऽऽदौ वेदो द्विविधः । मन्त्ररूपो ब्राह्मणरूपश्चेति । मन्त्रविभागादन्यो ब्राह्मणविभागश्च पुनर्विधिनामधेयनिषेधार्थवादभेदैश्चतुर्विधः । एवं सकलोऽपि वेदः पञ्चविधः । पञ्चविभागेषु विधिविभागस्य सर्वाधिकत्वात्स एव स्वीयप्रभेदैः सह मीमांसायां सविस्तरं निरूपितः । प्रेरणारूपो विधिश्चोदनापरत्वान्निवर्तकस्य निषेधस्याप्युपलक्षकः । अर्थवादः प्राशस्त्यनिन्दान्यतरवाक्यैर्विधिनिषेधाभ्यामेकवाक्यत्वं भजते ( जै. १।२।७ ) । नामधेयविभागस्तु विधिनिषेधार्थवादेषु कुत्राप्यनन्तर्भूतः स्वतन्त्र एव कल्पितः । एवं विधेः प्रयोजनवदर्थविधानेनार्थवत्त्वम्, मन्त्रस्य प्रयोगसमवेतार्थस्मारकत्वे-

नार्थवत्त्वम्, नामधेयस्य विधेयार्थपरिच्छेदकतयाऽर्थवत्त्वम्, निषेधस्यानर्थहेतुक्रियानिवृत्तिजनकत्वेनार्थवत्त्वम्, अर्थवादस्य च विधेयार्थस्तावकतयाऽर्थवत्त्वम्।

१ तत्र प्रयोजनवदज्ञातार्थज्ञापको वेदभागो विधिः। यथा- 'स्वर्गकामो यजेत', 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति। यत्र कर्म प्रमाणान्तरेण प्राप्तं तत्र तदुद्देशेन गुणविधानं गुणविधिः। यथा--दध्ना जुहोतीति। अग्निहोत्रमित्यनेन होमस्य प्राप्तत्वाद्दधिविधानं होमोद्देशेन दध्ना होमं भावयेदिति। यत्र प्रधानहोमस्तद्गुणश्चेत्युभयमप्राप्तं तत्र विशिष्टविधानम्। यथा—सोमेन यजेतेति। सोमपदे मत्वर्थलक्षणा सोमवता यागेनेष्टं भावयेदिति। अत्र वाक्यभेदादिमहत्तरदोषपरिहारेणाल्पीयान् लक्षणादोषोऽगत्याऽऽश्रीयते।

विधिवाक्ये तिङन्तार्थस्य प्राधान्यात्सुबन्ताभिहितानां सर्वेषामपि कारकाणां तिङन्तार्थक्रियायैवान्वयः कर्तव्यः। तत्रापि च "प्रकृत्यर्थापेक्षया प्रत्ययार्थस्य प्राधान्यात्प्रथमं प्रत्ययार्थभावनाया उपस्थितिर्युक्ता"। अतो 'यजेत' इति क्रियापदे यजिधातोरुपरितनस्य तप्रत्ययस्य भावनाजनकत्वेन प्राधान्यम्। तप्रत्यये पुनर्दशलकारसाधारणमाख्यातत्वं लिङ्त्वं चेति धर्मद्वयमस्ति। "आख्यातत्वलिङ्त्वाभ्यां भावनैवोच्यते। भावना नाम भवितुर्भवनानुकूलो भावकव्यापारविशेषः। सा च द्विविधा शाब्दी भावना आर्थी भावना चेति"। प्रेरणारूपा शाब्दी भावना पुरुषप्रवृत्तिरूपामार्थभावनामुत्पादयति। अत उभयोः कार्यकारणसम्बन्धादार्थभावनाया शाब्दभावनया साध्यत्वेनान्वयः। एवं च प्रवृत्तिरूपाऽऽर्थभावना यजिधातुना दर्शितं यागं भावयति साधयति करोति वा। अतो यजिधातोरुपरितनस्य तप्रत्ययस्य 'भावयेत्' इत्यर्थो गृह्यते। भावयेदिति पदेन दर्शितैवोभयविधा भावना साध्यं साधनमितिकर्तव्यता चेत्यंशत्रयमपेक्षते। भावयेदित्यस्याकाङ्क्षा यथाक्रमं 'किम्' 'केन' 'कथं' चेति पदैः प्रदर्शिता पुरस्तनरीत्या पूर्यते। शाब्दभावनाविषये तावत् किं भावयेदिति साध्याकाङ्क्षायामार्थी

भावना साध्यत्वेनान्वेति, केन भावयेदिति साधनाकाङ्क्षाया लिङादिज्ञानं साधनत्वेन (करणत्वेन) अन्वेति, कथं भावयेदिति कथंभावाकाङ्क्षायां चार्थवादप्रतिपाद्यप्राशस्त्यज्ञानमितिकर्तव्यतात्वेनान्वेति । आर्थभावनाविषये साध्याकाङ्क्षाया भिन्नपदोपात्तमपीप्सिततम स्वर्गादिफलं साध्यत्वेन (कर्मत्वेन) अन्वेति, साधनाकाङ्क्षायां यजेतेतिसमानपदोपात्तो यागः करणत्वेनान्वेति, कथंभावाकाङ्क्षाया च प्रयाजाद्यङ्गजातमितिकर्तव्यतात्वेनान्वेति । एवं 'यजेत स्वर्गकामः' इत्यस्य 'प्रयाजाद्यङ्गजातेनोपकारं सम्पाद्य यागेन स्वर्गं भावयेत्' इति वाक्यार्थः समुदेति। इत्थं प्रेरणाप्रवृत्तिरूपेणाभिभूताया भावनाया विवेचने मीमांसकैर्दर्शितमेतद्विश्लेषणपाटवं मनोविज्ञानाधिष्ठितं सद् भाषानुशीलनेऽपि परमोपयुक्तम्। एषैव भावना प्रागुक्तरीत्या 'किम्' 'केन' 'कथम्' इति प्रश्नत्रयेण त्रिविधामाकाङ्क्षामुत्थापयति । अनया मीमांसकपद्धत्या तिङन्तार्थप्राधान्यं गृहीत्वा तद्द्वारेतरेषां कर्तृकर्मकरणादिकारकपदानां तिङन्तेन सह प्रश्नपूर्वकमन्वयः सम्पाद्यते। एतस्मिन्नेव भावनाधिष्ठिते मनोव्यापारे आकाङ्क्षायोग्यतासन्निधीनत्वं पुरस्कुर्वत्या प्रश्नप्रतिवचनभङ्गीमाश्रयन्त्याष्टीकाग्रन्थेषु प्रचुरप्रचाराया भाषाध्यापनोपकारिण्याः खण्डान्वयपद्धतेर्मूलमिति भाति ।

[ १ अ ] स च विधिश्चतुर्विधः । उत्पत्तिविनियोगप्रयोगाधिकारभेदात् । तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः । यथा--अग्निहोत्रं जुहुयादिति । अत्र द्वितीयान्तस्याग्निहोत्रमिति कर्मणस्तृतीयान्तकरणत्वेनान्वयः अग्निहोत्रहोमेनेष्टं भावयेदिति ।

[१ आ] अङ्गप्रधानसम्बन्धबोधको विधिर्विनियोगविधिर्गुणविधिर्वा। विनियोगो नामाङ्गत्वेनान्वयः । यथा- दध्ना जुहोतीति । अत्र तृतीयान्त 'दध्ना' इति पदं प्रधानभूतहोमपदस्याङ्गं गुणो वा । तस्माद्गुणविधौ धात्वर्थस्य होमस्य कर्मत्वेनैवान्वयः 'दध्ना होमं भावयेत्' इति । विनियोगविधेः सहकारिभूतानि षट् प्रमाणानि । तानि श्रुतिलिङ्गवाक्यप्रकरणस्था-

नसमाख्याख्याणि । तत्र प्रमाणान्तरनिरपेक्षः शब्दः श्रुतिः । शब्दसामर्थ्यं लिङ्गम् । सामर्थ्यं रूढिरेव । यौगिकशब्दसमाख्यातो रूढ्यात्मकलिङ्गशब्दो भिन्नः । पदान्तरसमभिव्याहारो वाक्यम् । शेषशेषिवाचकपदयोः सहोच्चारणं समभिव्याहारः । आकाङ्क्षायोग्यतासन्निधिमत्पदसमुदायो वाक्यं वा । **प्रकरणं** नाम परस्पराकाङ्क्षा । वाक्यद्वयसामर्थ्यम् आरम्याधीतविषयं प्रकरणं वा । **स्थानं** नाम सन्निधिर्देशसामान्यं वा । **समाख्या** नाम यौगिकः शब्दः । एतेषु षट्सु प्रमाणेषूत्तरोत्तरस्मात्पूर्वंपूर्वं प्रबलमुत्तरोत्तरं च दुर्बलम् । एवं श्रुत्या लिङ्गस्य, लिङ्गेन वाक्यस्य, वाक्येन प्रकरणस्य, प्रकरणेन स्थानस्य, स्थानेन समाख्यायाश्च बाधो वेदितव्यः । तेनार्थनिर्धारणे यौगिकसमाख्यातो रूढ्यात्मकलिङ्गस्य बलीयस्त्वं निर्णीतं भवति । वाक्यप्रकरणादिसन्दर्भेण विनैव शब्दान् व्युत्पादयद्भिरध्याप्यध्यापकैरेतत्तत्त्वं विशेषतः समवधेयम् । विनियोगविधेः सहकारिभूतमङ्गत्वबोधकमेतत्प्रमाणषट्कं वेदान्तादिशास्त्रेषु वाक्यार्थनिर्धारणार्थं मुहुर्मुहुः संप्रयुक्तं सदाधुनिकभाषाशास्त्रपाश्चात्त्येषु कुरुते । अन्यच्चाङ्गप्रधानयोस्तारतम्यं संस्थापयन्नेव विनियोगविधिर्मीमांसकाना पद्धतिविज्ञानस्य वैशिष्ट्यं दर्शयति ।

अनेन विनियोगविधिना यान्यङ्गानि विनियोज्यन्ते तानि द्विविधानि । सिद्धरूपाणि साध्यरूपाणि चेति । तत्र सिद्धानि जातिद्रव्यसंख्यादीनि । साध्यरूपाणि ( क्रियारूपाणि ) पुनर्द्विविधानि । गुणकर्माणि प्रधानकर्माणि ( अर्थकर्माणि ) च । गुणकर्म संस्कारजनकम् । आत्मगतापूर्वजनकं कर्मार्थकर्म । गुणकर्माणि द्रव्यस्य प्राधान्यं कर्मणो गुणत्वम् । अर्थकर्माणि कर्मणः प्राधान्यं द्रव्यस्य गुणत्वम् । एतानि द्विविधान्येव कर्माण्यनुपूर्वशः संनिपत्योपकारकाणि आरादुपकारकाणीति चोच्यन्ते । तत्र कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म संनिपत्योपकारकम् । तच्च पुनर्द्विविधम्— उपयुक्तसंस्कारकमुपयोक्ष्यमाणसंस्कारकं चेति । तत्र उपयुक्तसंस्कारकं प्रतिपत्तिकर्म । गुणकर्म दृष्टार्थमदृष्टार्थं दृष्टादृष्टार्थं चेति । पुनरपि तच्चतु-

विधम्--- उत्पत्ति-आप्ति-विकृति-संस्कृतिभेदात् । द्रव्याद्यनुद्दिश्य केवलमदृष्टार्थं विधीयमानं कर्म आरादुपकारकमर्थकर्म वा । तत् त्रिविधम्-- नित्य-नैमित्तिककाम्यभेदात् । यान्यङ्गानि प्रधानयागशरीरं निष्पाद्य तद्द्वारा तदुत्पत्त्यपूर्वोपयोगीनि तानि संनिपत्योपकारकाणि । आरादुपकारकाणि तु परमापूर्वोत्पत्तावेवोपयुज्यन्ते । एवं सर्वेषामङ्गानामपूर्वार्थत्वम् ।

यत्र समग्राङ्गोपदेशः सा प्रकृतिः । यत्र न समग्राङ्गोपदेशः सा विकृतिः । प्रकृतावेवोभयाकाङ्क्षारूपं प्रकरणं सम्भवति, न विकृतौ । तत्र 'प्रकृतिवद्विकृतिः कर्तव्या' इति चोदकवाक्येनातिदेशेन वा कतिपयाङ्गानां प्राप्तिः ।

कर्मणां शब्दान्तर-अभ्यास-संख्या-संज्ञा-गुण-प्रकरणान्तरैर्भेदो भवति ।

वेदादिप्रमेयोऽर्थस्त्रिविधः-- क्रत्वर्थः पुरुषार्थ उभयार्थश्चेति । तत्र प्रयाजादिकं केवलं क्रत्वर्थः । फलं तत्करणं च पुरुषार्थः । यथा--स्वर्गादि-ज्योतिष्टोमादिश्च । दध्यादि तूभयरूपम् । क्रत्वर्थे प्रयाजादौ क्रतुः प्रयोजकः । पुरुषार्थे फलं प्रयोजकम् । प्रयोजकत्वं नामानुष्ठापकत्वम् । विधिर्यदर्थं यदनुष्ठापयति स तत्र प्रयोजकः ।

( १६ ) साङ्गप्रधानकर्मप्रयोगैक्यबोधकः प्रयोगप्राशुभावबोधकः इतरविधित्रयमेलनरूपः प्रयोगविधिः । प्रधानविधिवाक्यमेवाङ्गविधिवाक्यैरेकवाक्यतया महावाक्यतामापन्नं संसर्गाङ्गविशिष्टप्रधानप्रयोगविधायकत्वात्प्रयोगविधिरित्युच्यते । अयं प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते । तत्र क्रमो नाम विततिविशेषः पौर्वापर्यरूपो वा । तत्र च षट्प्रमाणानि--श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यानि । तत्र क्रमपरवचनं श्रुतिः । यत्र प्रयोजनवशेन क्रमनिर्णयः सोऽर्थक्रमः । पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः । स्थानं नामोपस्थितिः । प्रधानक्रमेण योऽङ्गानां क्रम आश्रीयते स मुख्यक्रमः । सहप्रयुज्यमानेषु प्रधानेषु

संनिपातिनामङ्गानामावृत्त्यानुष्ठाने कर्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमायः क्रमः स प्रवृत्तिक्रमः। एतेषु प्रमाणेषूत्तरोत्तरं दुर्बलम्।

( १ ई ) सेतिकर्तव्यताकस्य करणस्य यागादेः फलसम्बन्धबोधको विधिरधिकारविधिः। यथा-दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति। एवं निरूपितं चतुर्विधभेदनिरूपणेन विधेः प्रयोजनवदर्थपर्यवसानम्।

( २ ) प्रयोगसमवेतार्थस्मारका मन्त्राः। तेषां तादृशार्थस्मारकत्वेनैवार्थवत्त्वम्। न तु तदुच्चारणमदृष्टार्थम्। सम्भवति दृष्टेऽदृष्टस्यान्याय्यत्वात्। न च दृष्टस्यार्थस्मरणस्य प्रकारान्तरेणापि सम्भवान्मन्त्राम्नानं व्यर्थमिति वाच्यम्। मन्त्रैरेव स्मर्तव्यमिति नियमविध्याश्रयणात्। यथाहुः

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥

अस्यार्थः—यो विधिरत्यन्ताप्राप्तमर्थं प्रापयति सोऽपूर्वविधिः। यः पक्षेऽप्राप्तमर्थं नियमयति स नियमविधिः। द्वयोः समुच्चित्य प्राप्तावितरनिवृत्तिफलको विधिः परिसंख्याविधिः। परिसंख्या च द्विविधा। श्रौती लाक्षणिकी चेति। श्रौती यथा—अत्र ह्येवावपन्तीति। अस्यां प्राप्तबाध इत्येक एव दोषः। लाक्षणिकी यथा- पञ्च पञ्चनखा भक्ष्या इति। अत्र तु श्रुतहानिरश्रुतकल्पना-प्राप्तबाधश्चेति दोषत्रयम्। अस्मिन्दोषत्रये दोषद्वयं शब्दनिष्ठम्, प्राप्तबाधस्त्वर्थनिष्ठः। धर्मशास्त्रार्थनिश्चये नियमपरिसंख्यादीन्यसकृदुपयुज्यन्ते।

[३] नामधेयानां विधेयार्थपरिच्छेदकतयाऽर्थवत्त्वम्। वेदवाक्येषूद्भिच्चित्राग्नेयादिपदानां कथमन्वयः कर्तव्य इति समुचितायां शङ्कायां तेषां भावनाकरणत्वेनाभिमतयागनामत्वेन ( अभेदसम्बन्धेनैव ) यागेऽन्वयः कर्तव्य

इति सिद्धान्तः । नामधेयत्वं च निमित्तचतुष्टयात्---मत्वर्थलक्षणाभयाद्वाक्यभेदभयात्तत्प्रख्यशास्त्रात्तद्व्यपदेशाच्चेति ।

(४) पुरुषस्य निवर्तकं वाक्यं निषेधः । निषेधवाक्यानामनर्थहेतुक्रियानिवृत्तिजनकत्वेनार्थवत्त्वम् । यथा न कलञ्जं भक्षयेदिति । निषेधस्थले नञ् लिङर्थप्रवर्तनाविरोधिनीं निवर्तनामेव बोधयति । तस्मान्नञर्थेन प्रत्ययार्थस्यान्वयस्तत्रापि च लिङंशवाच्यशब्दभावनायाः । पर्युदासे त्वष्टदोषदुष्टस्य विकल्पस्य परिहारार्थं नञर्थेन धात्वर्थस्य नाम्नो वाऽन्वयः क्रियते। तदुक्तम्—

पर्युदासः स विज्ञेयो यत्र पूर्वपदेन नञ् ।
प्रतिषेधः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥
नामधात्वर्थयोगी तु नैव नञ् प्रतिषेधकः ।
वदत्यब्राह्मणाधर्मावन्यमात्रविरोधिनौ ॥– इति ।

एवं प्रत्ययार्थस्य धात्वर्थस्य नाम्नो वा नञर्थेन कुत्रान्वयः कर्तव्य इत्यस्मिन् विमर्शे मीमांसकैः सूक्ष्मं भाषाज्ञानं प्रदर्शितम् । एतन्नञर्थनियमनं साहित्यधर्मशास्त्रादिगतवाक्यानामर्थनिर्धारणेऽतीवोपयुक्तम् ।

(५) वेदस्य पञ्चमो विभागोऽर्थवादः । प्राशस्त्यनिन्दान्यतरलक्षणया विधिनिषेधशेषभूतं वाक्यमर्थवादः । अर्थवादाना स्वार्थपरत्वे प्रयोजनाभावादध्ययनविधिवशेन फलवदर्थज्ञानार्थमवश्यापेक्षणाद्विधेयगतप्राशस्त्यप्रतिपादनद्वारा विधिवाक्यैकवाक्यतया प्रामाण्यम् [ जै० १।२।७ ] । अर्थवादस्त्रिविधः—गुणवादोऽनुवादो भूतार्थवादश्चेति । तत्र प्रमाणान्तरविरुद्धार्थबोधको गुणवादः । यथा- 'आदित्यो यूपः' इत्यादि । प्रमाणान्तरावगतार्थबोधकोऽनुवादः । यथा- 'अग्निर्हिमस्य भेषजम्' इति । प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधको भूतार्थवादः । यथा—इन्द्रो वृत्राय वज्रमुदयच्छत्' इत्यादि । तदुक्तम्–

विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥ इति ।

अर्थवादः परकृतिपुराकल्पादिभेदेन वाक्यरूपः पुराणेतिहासाख्यानोपाख्यानादि-परिच्छेदरूपो वा सन् विधिवाक्येनैकवाक्यता प्रापणीय इति मीमांसासिद्धान्त । अस्य सिद्धान्तस्यायं व्यापकोऽर्थो यच्छास्त्रकाव्यादिगतानि गौणवाक्यानि वाक्याङ्गानि वा प्रधानवाक्येन सह संयोजनीयानि, तत्तद्ग्रन्थगतपरिच्छेदाश्च ग्रन्थकर्तुर्मुख्याभिप्रायेण समं सङ्घटनीया. । यतो वक्तृतात्पर्यं प्रधानवाक्ये मुख्याभिप्राये वा निधीयते, प्रधानवाक्यं च प्रतिज्ञावाक्येन ज्ञाप्यते, ततो मुख्याभिप्रायद्योतनाय ग्रन्थकर्त्रा नियोजिताः सुभगदृष्टान्तवैदग्ध्यान्विता विविधा वचनविन्यासा वाक्यार्थविवरणकाले वक्तृतात्पर्येणैवान्वेतव्याः, येन ग्रन्थकर्तु· सङ्कलितोऽभिप्रायः सम्यगाकलित. स्यात् । विध्यर्थवादयोरैकवाक्यत्वं समरबुध्यैवाभिहितान्वयवादिनो भाट्टाः सङ्कलनदृष्ट्या तात्पर्यार्थं सविशेषं द्रढयन्ति ।

३

एवमालिखितैषा पूर्वमीमांसाप्रकरणग्रन्थगतविषयाणा रूपरेखा । इमे विषया एव श्रीजैमिनिना पूर्वमीमांसासूत्राणां द्वादशाध्यायेषु विभक्ताः । प्रायः श्रीजैमिनिना—

धर्मो द्वादशलक्षण्या व्युत्पाद्यस्तत्र लक्षणैः ।
प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः ॥
अधिकारोऽतिदेशश्च सामान्येन विशेषतः ।
ऊहो बाधश्च तन्त्रं च प्रसङ्गश्चोदिताः क्रमात् ॥

इति श्रीमाधवाचार्यवचनानुसारेण द्वादशाध्यायेषु धर्म एव साङ्गोपाङ्गं विचारितः । तत्र पूर्वषट्के निरूपितः साकल्येनोपदेशः, उत्तरषट्के चातिदेशः ।

उपदेशो नाम शब्दप्रमाणोपलब्धं ज्ञानम् । " यत्रापेक्षितस्यार्थजातस्य प्रतिपादको ग्रन्थसन्दर्भः पठ्यते स उपदेशो " वा । " अतिदेशो नामाऽन्यत्र श्रुतानामङ्गानामन्यत्र प्रापकं शास्त्रम् " ।

इदानीं द्वादशाध्यायगताः केचिदतीवोपयोगिनो विषया अध्यायानुक्रमेण सङ्क्षेपतोऽत्रोपस्थाप्यन्ते स्थूलस्वरूपज्ञापनाय—

**प्रथमेऽध्याये** धर्मलक्षणं, विधिस्वरूपं, शब्दप्रामाण्यं शब्दार्थयोर्नित्यसम्बन्धः, वेदापौरुषेयत्वम्, अर्थवादः, विध्यर्थवादयोरेकवाक्यत्वं, मन्त्राणां सार्थत्वम्, अर्थनिर्णये निगमनिरुक्तव्याकरणादीनामुपयोगः, स्मृतिप्रामाण्यं, शब्दस्य जातिवाचकत्वं, नामधेयविचारः, गौणी वृत्तिः, वाक्यशेष इत्यादयो विषयाः ।

**द्वितीयेऽध्याये** भावनानिरूपणम्, आख्यातस्यापूर्वबोधकत्वमपूर्वसद्भावश्च, नामाख्यातलक्षणे, गौणप्रधानकर्मलक्षणे, मन्त्रब्राह्मणादिलक्षणानि, ऋग्यजुःसामादिलक्षणानि, वाक्यगताः साकाङ्क्षत्वादिधर्माः, अनुषङ्गः, धातुभेदपुनरुक्तिसंख्यासंज्ञादेवतादिभिः कर्मभेदः, कर्मभेदप्रामाण्यापवादः, सामान्यविशेषसम्बन्धबोधकवाक्यानां व्यवस्था, गुणगुणिसम्बन्धनिरूपणैकवाक्यतासिद्धिः, नित्यकाम्ययोः प्रयोगयोर्भेद इत्यादयः ।

**तृतीयेऽध्याये** शेषशेषिचिन्तापूर्वकं विनियोगविधिविवेचनम् । तत्र द्रव्यफलयोर्विधिवाक्ये सम्बन्धः, आरुण्यन्यायः, उद्देश्यविधेयगतैकवचनव्यवस्था, मिथोऽसम्बन्धन्यायः, वार्त्रघ्नीन्यायः, बर्हिर्न्यायः, गार्हपत्यन्यायः, प्रस्तरप्रहरणन्यायः, असञ्जातविरोधन्यायः, शेषत्वबोधकानां श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां परस्परविरोधे प्राबल्यदौर्बल्यचिन्ता, उत्कर्षापकर्षचिन्ता, निवीतोपवीतादिष्वर्थवादत्वविधित्वादिनिर्णयहेतुः, श्रुत्यादेः परस्परविरोधप्रदर्शनद्वारा, प्रतिपत्तिकर्माणि, अनारभ्याधीतानि, मुख्यप्रतिनिधिविचारः, नियमविधिः, प्रधानोपकारकप्रयाजादयङ्गानि, यजमानकर्माणि, संनिपत्योपकारकाण्यारादुपकारकाणि चेत्यादयः ।

चतुर्थेऽध्याये क्रत्वर्थपुरुषार्थजिज्ञासा, वचनलिङ्गयोर्विवक्षितत्वं, मुख्या-पूर्वाङ्गापूर्वविचारः, साम्यवैषम्यचिन्ता, वाजिनन्याय., प्रयोज्यप्रयोजकसम्बन्धः, अर्थकर्म प्रतिपत्तिकर्म च, उत्पत्तिविधिर्नियमविधिश्च, जुहूपर्णमयीत्वादेः फलम्, नित्यनैमित्तिकविचार, विश्वजिन्न्याय–रात्रिसत्रन्याय–दर्शपूर्णमासन्याय–योग-सिद्धिन्याय–जातेष्टिन्यायादिकथनपूर्वकं फलविचारः, अङ्गाङ्गित्वविचारः, राजसूयगताक्षद्यूतादिचिन्ता चेत्यादयः ।

पञ्चमेऽध्याये—प्रयोगविधिविवेचनम् । तत्र श्रुत्यर्थपाठस्थानमुख्य-प्रवृत्त्याख्यप्रमाणषट्कस्य प्राबल्यदौर्बल्याभ्यां क्रमनिरूपणं, तदादितदन्त-न्याय॰, पदार्थानुसमयकाण्डानुसमयौ, प्रकृतिविकृतिसम्बन्ध, आनन्तर्यव्यवधाने चेत्यादयः ।

षष्ठेऽध्याये—अधिकारविधिनिरूपणम् । तत्र कर्माधिकारः, रथकार-निषादस्थपतिन्यायौ, अधिकारिधर्मा, विरुद्धत्रिकद्वय, कलञ्जन्याय, उप-नीताचार॰, अग्निहोत्रन्याय॰, ऋणत्रयापाकरणं, प्रतिनिधिनिरूपणं, सत्रन्याय॰, पदार्थलोपनं, प्रायश्चित्तानि, प्रत्येक वाक्यपरिसमाप्तिः समुदाये वाक्यपरि-समाप्तिश्च, क्रत्वाचिन्तान्याय, परकृतिपुराकल्पयोरर्थवादत्व, सत्रगतदेयादेय-विचारः, अग्निविचारश्चेत्यादय॰ ।

सप्तमाष्टमाध्याययोः सामान्यातिदेशविशेषातिदेशौ विचारितौ । तत्रातिदेशलक्षण यथा—

प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु ।
धर्मप्रदेशो येन स्यात्सोऽतिदेश इति स्मृतः ॥ इति ।

अस्मिन्नध्यायद्वये ' द्वयो प्रणयन्ति, तस्माद् द्वाभ्या यन्ति ' इति वाक्यविषये निर्णय, विध्यादिविध्यन्तौ, रथाक्षपुरोडाशन्यायः, सिंहावलो-कितन्याय इत्यादयो विषया. ।

**नवमाध्याये**—ऊहविचारः । ऊहो नाम प्राकृतस्य पदार्थस्य विकृतौ कार्यमुखेनाऽऽगतस्य तत्रत्यकार्यानुरोधेनान्यथाभावः । अस्मिन्नध्याये प्रयोजकनिमित्तयोर्भेदः कथितः ।

**दशमाध्याये** बाधसमुच्चयौ व्याख्यातौ । बाधो नाम पदार्थनिवृत्तिः । "प्रकृतितोऽतिदेशात् समवप्राप्तिकानामङ्गानां केनचित् कारणेन विकृतावननुष्ठानम्" वा । समुच्चयो नाम प्राकृताङ्गैः सह वैकृताङ्गानामनुष्ठानम् । अत्रावापोद्वापौ, नञर्थविचारे पर्युदासप्रतिषेधपर्युदासप्रतिप्रसवादयश्च व्याख्याताः ।

**एकादशाध्याये** तन्त्रावापौ विचारितौ । अनेकोद्देशेनाङ्गाना सकृदनुष्ठानं तन्त्रम् । तच्च प्रकृतिविकृत्युभयसाधारणम् । अङ्गानां भेदेनाऽऽवृत्त्याऽनुष्ठानमावापः । अत्र खलेकपोतन्यायः, कपिञ्जलन्यायश्चेत्यादयो विषयाः ।

**द्वादशाध्याये** प्रसङ्ग-तन्त्र-निर्णय-समुच्चय-विकल्पा निरूपिताः । अन्योद्देशेनान्यदीयस्यापि सहानुष्ठानं प्रसङ्गः । एककार्योद्देशेन विहितानां द्व्यर्थत्वे विकल्पः । इत्येवमादयो विषया द्वादशलक्षण्यां सङ्ग्रथिताः ।

## ४

अधुना विरलप्रचारे सञ्जाते गीर्वाणवागध्ययने को नाम शास्त्राध्ययनेऽनुत्सहेत । तत्र पुनर्महाप्रक्रियाजटिलायाः पूर्वमीमांसाया अध्ययने को नाम रतिं बध्नीयात् । एतेन कारणकदम्बकेन पूर्वमीमांसानुशीलनं सम्प्रति भारते तत्रापि च महाराष्ट्रे तनुप्रसरं संवृत्तम् । ये केचनाङ्गुलिगण्याश्छात्राः पूर्वमीमांसामधीयते, ते प्रायः प्रकरणग्रन्थेष्वेव समवतिष्ठन्ते । यत् पूर्वमीमांसाया मूलप्रतिष्ठाभूतैर्जैमिनिसूत्रैस्ते काचित्कत्वेन परिचितास्तन्नस्तेषां ज्ञानं

विकलाङ्गं सम्पद्यते । एतत्सर्वं सुचिरं पर्यालोच्य श्रीनारायण्या समधिगत-पूर्वोत्तरमीमांसापरमप्रावीण्यैः, इदानीमशीतिवर्षदेशीयैरप्यनवरतं निष्कामभक्त्याऽनुष्ठिताध्यापनलेखनप्रवचनादिपावनाभियोगैः, स्वीयप्रकृष्टपाण्डित्येन करवीरस्थशाङ्करपीठं यथार्थेनालङ्कुर्वद्भिः, अपरिमेयतया शिष्यजनवत्सलैः, **श्रीविद्याशङ्करभारतीस्वामिपादै**र्मीमांसाधीतिनां परमहितबुद्ध्या विरचितैषा **भावबोधिनी नाम पूर्वमीमांसासूत्रवृत्तिः** । भाष्यटीकादिग्रन्थानां नानाविधत्वाद् दुरवगाहत्वाच्च सागरायमाणा पूर्वमीमांसा यद्यपि श्रीमाधवाचार्यप्रणीतेन जैमिनीयन्यायमालाविस्तरेण बालानां नूनं नातिदूरगा क्रीडापुष्करिणीव सञ्जाता, तथापि जैमिनीयन्यायमालायां प्राधान्येन प्रत्यधिकरण विषयविन्यासात् अधिकरणान्तर्गतसूत्राणामेकैकशः पदबोधो न यथावद्भवति । एतमन्तरायमपाचिकीर्षवः श्रीमदाचार्यचरणा बहुवत्सरेभ्यः प्राक् स्वसकाशे पूर्वमीमांसामधीयानैर्व्याकरणरत्नपण्डितमुरगुडकरोपाभिधलक्ष्मणशास्त्रिमहोदयैः सुगमवृत्तिलेखनार्थं सनिर्बन्धं प्रार्थिता इमां प्रतिसूत्रपदानुसारिणीं सुबोधामनतिविस्तरां सुविज्ञेयशास्त्रार्थसङ्ग्रहकारिणीं च वृत्तिं विरचयितुं प्रवृत्ताः । अन्तरा वृत्तिविरचनमेतत्कार्यान्तरबाहुल्यात्कानिचिद्धायनान्यन्तरितमासीद् । द्वित्रेभ्यो वर्षेभ्यः पूर्वं तदेव छात्रहितकाम्यया सम्यग्धर्मावगतये श्रीस्वामिपादैः पुनरपि प्रारभ्य समाप्तिं नीतम् । एतेन श्रीमदाचार्यचरणानां वाक्यार्थनिर्णयतत्त्वावबोधकेन धर्मविमर्शोपकारकेण च लेखनेन पूर्वमीमांसाध्यायिनः सर्वेऽप्यधुनातना भाविनश्च छात्रास्तेषां नितरामधमर्णाः संवृत्ताः खलु । अनन्यसुकरं चिरयशोविसारि च लेखनमेतच्चरमे वयस्यपि कर्तव्यबुद्ध्या सोत्साहं विधाय श्रीचरणैः श्रीपरेशप्रसादान्निःशेषतां नीतमिति नितान्तं मोदावहम् । एतादृशग्रन्थविरचनाय लोकोपकृतये च श्रीशङ्करास्तान् दीर्घायुषः संयोजयन्त्वित्येवं तेषां विनीतैरन्तेवासिभिरनन्यभावेन प्रार्थ्यते । एषा पूर्वमीमांसासूत्रवृत्तिरध्यायपादाधिकरणादिक्रमेण समग्रमपि विषयं वैशद्येन साङ्गोपाङ्गं विविच्य सङ्कलितं शास्त्रार्थं विस्पष्टतया पुरतः संस्थाप्य च शास्त्रान्तराभिज्ञानां पूर्वमीमांसाधीतिनां भृशं व्युत्पादिका भवेदित्यत्र नास्ति सन्देहलवः ।

श्रीमदाचार्यपादमूल एव मया स्तोकं पूर्वमीमांसाज्ञानं सम्पादितम् । अल्पज्ञानवतो ममेदं मुखप्रबन्धलेखनं नामातितमां साहसम् । किन्तु श्रीमदाचार्यचरणैरेव तल्लेखने वात्सल्यपुरस्सरं प्रेरितेन मया कर्मैतत्कथञ्चिदनुष्ठितम् । अतोऽयं प्रबन्धः पूर्वमीमांसानभिज्ञानां जनानां स्थूलाशयबोधाय भवत्विलाशास्ते—

| | |
|---|---|
| करवीरे<br>शके १८७३<br>चैत्रशुद्धसप्तम्याम्. | श्रीचरणानां विनीततमश्छात्रो<br>हुपरीकरोपाभिधश्रीपादापरनामकबाल-<br>शास्त्रिसूनुर्गणेशशर्मा । संस्कृतप्राध्यापकः |



॥ श्रीः ॥

# अथ पूर्वमीमांसासूत्रवृत्तेर्भावबोधिन्याः क्रमशः अधिकरणसूचीपत्रम् ॥

## अथ प्रथमोऽध्यायः । तत्राद्यः पादः ।



## अथ द्वितीयः पादः ।



## अथ तृतीयः पादः ।

## चतुर्थः पादः ।

अस्मिन् पादे सूत्राणि ३०॥ अधिकरणानि १९॥
आहत्य सू०॥ १५० ॥ अधि० ४२ ज्ञेयानि ।

---

# अथ द्वितीयोऽध्यायः ।

## प्रथमः पादः ।

## द्वितीयः पादः



## तृतीयः पादः

अस्मिन् पादे सूत्राणि २९ ॥ अधिकरणानि १४ ॥

## द्वितीयाध्यायस्य चतुर्थः पादः ।



अस्मिन् पादे सूत्राणि ३२ ॥ अधिकरणे द्वे २ ॥ एवमाहत्य १३९ सूत्राणि ॥ ४६ अधिकरणानि ज्ञेयानि ॥

## अथ तृतीयोऽध्यायः ।

तत्राद्यः पादः ।

## तृतीयाध्यायस्य द्वितीयः पादः।

## तृतीयाध्यायस्य तृतीयः पादः ।

# तृतीयाध्यायस्य चतुर्थः पादः ।



अस्मिन्पादे सूत्राणि सप्तपंचाशत् ५७ ॥
अधिकरणानि २१ एकविंशति ॥

## तृतीयाध्यायस्य पंचमः पादः ।



अस्मिन् पादे सूत्राणि चतुःपञ्चाशत् ५४ ॥
अधिकरणानि २० विंशतिः ॥

## तृतीयाध्यायस्य षष्ठः पादः ।

## तृतीयाध्यायस्य सप्तमः पादः ।

अधिकरणानि २३ त्रयोविंशतिः ॥

## तृतीयाध्यायस्याष्टमः पादः ।

द्वाविंशति २२ रधिकरणानि ॥
आहत्यसूत्राणि– ३६९ ॥ अधिकरणानि–१५१ ॥
॥ इति तृतीयाध्यायः ॥

# अथ चतुर्थोऽध्यायः

आस्मिन् पादे अष्टचत्वारिंशत् ४८ सूत्राणि । अधिकरणानि १७ सप्तदश ॥

## चतुर्थाध्यायस्य द्वितीयः पादः ।

## चतुर्थाध्यायस्य तृतीयः पादः।

## चतुर्थाध्यायस्य चतुर्थः पादः ।



---

## अथ पंचमाध्यायस्याद्यः पादः ।

## पंचमाध्यायस्य द्वितीयः पादः ॥

अस्मिन् पादे त्रयोविंशति २३ सूत्राणि । द्वादश १२ अधिकरणानि ॥

---

## ॥ अथ पञ्चमाध्यायस्य तृतीयः पादः॥

अस्मिन् पादे सूत्राणि चतुश्चत्वारिंशत्. ४४ ।
अधिकरणानि १५ पंचदश ॥

## ॥ अथ पञ्चमाध्यायस्य चतुर्थः पादः ॥


अस्मिन् पादे सूत्राणि षड्विंशतिः २६ । अधिकरणानि ९ नव
मिलित्वा सूत्राणि अष्टाविंशत्युत्तरशतम्. १२८ ।
अधिकरणानि चतुःपंचाशत् ५४

## ॥ अथ षष्ठाध्यायस्य प्रथमः पादः ॥

## ॥ अथ षष्ठाध्यायस्य द्वितीयः पादः॥

## ॥ अथ षष्ठाध्यायस्य तृतीयः पादः॥

## ॥ अथ षष्ठाध्यायस्य चतुर्थः पादः ॥



## ॥ अथ षष्ठाध्यायस्य पंचमः पादः ॥

## ॥ अथ षष्ठाध्यायस्य षष्ठः पादः ॥

## ॥ अथ षष्ठाध्यायस्य सप्तमः पादः॥



## ॥ अथ षष्ठाध्यायस्याष्टमः पादः॥

## ॥ अथ सप्तमाध्यायस्य प्रथमः पादः ॥



## ॥ अथ सप्तमाध्यायस्य द्वितीयः पादः ॥

## ॥ अथ सप्तमाध्यायस्य तृतीयः पादः ॥



अस्मिन् पादे सूत्राणि ३६ षट्त्रिंशत् ।

अधिकरणानि चतुर्दश— १४ ।

## ॥ अथ सप्तमाध्यायस्य चतुर्थः पादः ॥



अस्मिन् पादे विंशतिसूत्राणि, २० ।

त्रीणि ३ अधिकरणानि ॥

मिलित्वा सूत्राणि— शतम्- १०० ।

अधिकरणानि च— त्रयोविंशतिः २३ ।

## ॥ अथाष्टमाध्यायस्य प्रथमः पादः ॥



अस्मिन् पादे सूत्राणि त्रिचत्वारिंशत् — ४३।

अधिकरणानि एकोनविंशति — १९।

## ॥ अथाष्टमाध्यायस्य द्वितीयः पादः ॥

अस्मिन् पादे सूत्राणि द्वात्रिंशत् ३२ ।
आधिकरणानि षडेव–६ ।

## ॥ अथाष्टमाध्यायस्य तृतीयः पादः ॥



[illegible] ६ ।

## ॥ अथाष्टमाध्यायस्य चतुर्थः पादः ॥



अस्मिन् पादे सूत्राणि अष्टाविंशतिः २८ ।
अधिकरणानि तु चत्वार्येव–४ ।
मिलित्वा सूत्राणि—१४० ।
मिलित्वा अधिकरणानि च ३५ ।

## ॥ अथ नवमाध्यायस्य प्रथमः पादः ॥



अस्मिन् पादे सूत्राणि सप्तपञ्चाशत् ५७।
अधिकरणानि एकोनविंशति १९।

## अथ नवमाध्यायस्य द्वितीयः पादः ॥

## ॥ अथ नवमाध्यायस्य तृतीयः पादः ॥

अस्मिन् पादे सूत्राणि पंचचत्वारिंशत्- ४५।
अधिकरणानि चतुर्दश १४।

## ॥ अथ नवमाध्यायस्य चतुर्थः पादः ॥

नवमाध्याय संपूर्ण

## ॥ अथ दशमाध्यायस्य प्रथमः पादः ॥

## ॥ अथ दशमाध्यायस्य द्वितीयः पादः ॥

अस्मिन् पादे सूत्राणि ७४ चतुरधिकसप्ततिः।
अधिकरणानि ३५ पंचत्रिंशत्. ॥

## ॥ अथ दशमाध्यायस्य तृतीयः पादः ॥

## ॥ अथ दशमाध्यायस्य चतुर्थः पादः ॥

अस्मिन् पादे सूत्राणि षष्ठिः ६० ।
अधिकरणानि सप्तविंशतिः २७ ।
चतुर्थः पादः समाप्तः ॥

---

## ॥ अथ दशमाध्यायस्य पंचमः पादः ॥

अस्मिन् पादे सूत्राणि ८८।

अधिकरणानि २७।

## ॥ अथ दशमाध्यायस्य षष्ठः पादः ॥

इति दशमाध्यायस्याष्टमः पादः ॥

अस्मिन् पादे सूत्राणि एकोनसप्ततिः ६९ ॥

अधिकरणानि अष्टादश. १८ ॥

दशमाध्यायः संपूर्णः ॥

## ॥ अथ एकादशाध्यायस्य प्रथमः पादः ॥

इत्येकादशाध्यायस्य प्रथमः पादः ॥

अस्मिन् पादे सूत्राणि सप्तति ७० ॥
अधिकरणानि एकादश ११ ॥

## ॥ अथ एकादशाध्यायस्य द्वितीयः पादः ॥

इत्येकादशाध्यायस्य द्वितीयः पादः ॥

अस्मिन् पादे सूत्राणि ६७ ॥

अधिकरणानि १६ ॥

## ॥अथ एकादशाध्यायस्य तृतीयः पादः ॥

॥ इत्येकादशाध्यायस्य चतुर्थः पादः ॥

अस्मिन् पादे सूत्राणि सप्तपञ्चाशत् ५७ ॥

धिकरणान्येकविंशतिः २१ । इत्येकादशोऽध्यायः ॥

## ॥ अथ द्वादशाध्यायस्याद्यः पादः ॥

॥ इति द्वादशाध्यायस्याद्यः पादः ॥

अस्मिन् पादे सूत्राणि षट्चत्वारिंशत् ४६ ॥

अधिकरणानि एकविंशतिः २१ ॥

## ॥ अथ द्वादशाध्यायस्य द्वितीयः पादः ॥

॥ इति द्वादशाध्यायस्य तृतीयः पादः ॥

अस्मिन् पादे सूत्राणि अष्टात्रिंशत् ३८ ॥

अधिकरणानि षोडश-१६ ॥

## ॥ अथ द्वादशाध्यायस्य चतुर्थः पादः ॥

॥ इति द्वादशाध्यायस्य चतुर्थः पादः ॥

अस्मिन् पादे सूत्राणि सप्तचत्वारिंशत् ४७ ॥
अधिकरणानि पञ्चदश १५ ॥

॥ इति द्वादशाध्यायः समाप्तः ॥

॥ सम्पूर्णा चेयं पूर्वमीमांसासूत्रवृत्तेर्भावबोधिन्याः क्रमशोऽधिकरणसूची ॥ श्रीः ॥

श्री. विद्याशङ्करभारतीस्वामिचरणाः ।



जगद्गुरुकरवीरपीठाधिष्ठिता विद्यमानश्रीशङ्कराचार्याः ।

॥ श्रीः ॥

# ॥ मङ्गलाचरणम् ॥



श्रीरत्नाचलसंस्थितं हिमगिरेरागत्य याम्यां दिशम्
ब्रह्माद्यैरभिवन्दितं सुमनसामाभीलसंहारकम् ।
अस्मद्वंशभवैरनन्यशरणैः संसेवितं सादरात्
ज्योतिर्लिङ्गमहं नमामि यमदिक्केदारनाथाह्वयम् ॥ १ ॥

मानुषाणां समुन्नत्यै भारती वेदसंज्ञिता ।
धर्मोपदेष्ट्र्याविरासीद्यतस्तं नौमि सादरम् ॥ २ ॥

धर्मानुष्ठानतो यस्मादुपात्तैनोनिबर्हणम् ।
तदुक्तधर्मविद्यां यः सूत्रैः सम्यगुपादिशत् ॥ ३ ॥

तं मुनिं जैमिनिं नत्वा, तत्सूत्रार्थप्रकाशिकाम् ।
भाष्यानुसारतः सम्यङ् नामतो भावबोधिनीम् ॥४॥

वृत्तिं, समासतो वक्ति विद्याशङ्करभारती ।
शङ्कराचार्यकर्वीरपीठभाग् यतिरात्मवित् ॥५॥

# ॥ पूर्वमीमांसासूत्रवृत्तिः ॥

## ( भावबोधिनी )

### ॥ प्रथमाध्यायस्य प्रथमः पादः ॥

विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥

धर्मजिज्ञासाधिकरणम् ॥ १ ॥

**अथातो धर्मजिज्ञासा ॥ १ ॥**

अथ — साङ्गवेदाध्ययनानन्तरम्, अतः — अधीतवेदस्य तदर्थधर्मजिज्ञासायां हेतुत्वात् तदनन्तरम्, धर्मजिज्ञासा — धर्मज्ञानेच्छाप्रयुक्तविचारः कार्य इत्यर्थः ॥१॥

धर्मलक्षणाधिकरणम् ॥ २ ॥

**चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥**

चोदना — विधिवाक्यम्, तया प्रतिपाद्यते - ज्ञाप्यते च यः सः चोदनालक्षणः अर्थः — स्वर्गादीष्टम्, तत्साधनो यः अग्निहोत्रादिरनुष्ठेयोऽर्थः, स धर्म इत्यर्थः ॥२॥

धर्मप्रामाण्यपरीक्षाधिकरण ॥३॥

**तस्य निमित्तपरीष्टिः ॥३॥**

तस्य — उक्तलक्षणलक्षितस्य धर्मस्य, निमित्तपरीष्टिः - प्रमाणपरीक्षा प्रस्तूयत इत्यर्थः । सा च चोदनैव प्रमाणम्, अन्यदपि वेत्यादिः ॥३॥

धर्मे प्रत्यक्षादीनामप्रामाण्याधिकरणम् ॥४॥

**सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥४॥**

**इन्द्रियाणां**-चक्षुरादीनां प्रत्यक्षप्रमाणतयाऽभिमतानाम्, **सता**-विद्यमानेन रूपरसाद्यर्थेन, **सम्प्रयोगे**-सन्निकर्षे सति, **पुरुषस्य**-प्रमातुः, **यत्**-यादृशं, **बुद्धिजन्म**-ज्ञानमुत्पद्यते, **तत्**-तादृशज्ञानस्योत्पादकं प्रत्यक्षम्, **अनिमित्तम्**-अप्रमाणम्-प्रमाणं न भवति। इह-प्रस्तुते धर्मे इति शेषः। कुतः? तेषां-प्रत्यक्षप्रमाणत्वेनाभिमतानां चक्षुरादीनाम्, **विद्यमानोपलम्भनत्वात्**-वर्तमानार्थमात्रप्रत्यायकत्वात् हेतोः, भविष्यति धर्मे न तेषां प्रसर इति भावः ॥ ४ ॥

धर्मे वेदस्यैव प्रामाण्यमित्यधिकरणम् ॥५॥

## औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः, तस्य ज्ञानमुपदेशः, अव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ ५ ॥

**शब्दस्य**-वाचकस्य, **अर्थेन**-वाच्येन सह, **सम्बन्धः**- वाच्यवाचकलक्षणः, **औत्पत्तिकस्तु**-नित्य एव न कृतक इत्यर्थः। **तस्य**-वाच्यस्य—अग्निहोत्राद्यात्मनो धर्मस्य, **ज्ञानं**-ज्ञापकं मानं—न तु कारकम्। **उपदेशः** विशिष्टशब्दोच्चारणम्, चोदनापरपर्यायं विधिवाक्यमिति यावत्। यतः, **अव्यतिरेकश्च**-व्यतिरेकस्य—नैतदेवमिति अप्रामाण्यहेतोः व्यभिचारस्य अभावोऽस्ति। ततोऽ**नुपलब्धे**-प्रत्यक्षाद्यनवगतेऽर्थे- धर्मादौ, **तत्**- विधिवाक्यम्, **प्रमाणम्**—तदेव प्रमाणमिति बादरायणस्यानुमतम्। **अनपेक्षत्वात्**-प्रत्ययान्तरादिसापेक्षत्वस्य अप्रामाण्यशङ्काहेतोः अभावादित्यर्थः। बादरायणस्येति तं संमानयितुम्, नात्मीयमतं पर्युदसितुमिति भावः ॥५॥

शब्दानित्यत्वाधिकरणम् ॥६॥

॥ पूर्वपक्षोपक्रमः ॥

## कर्मैके तत्र दर्शनात् ॥६॥

**एके**—काणादादयः, **कर्म** कृतकं-अनित्यं शब्दं मन्यते । यतः, **तत्र**—शब्दे, **दर्शनात्**—प्रयत्नानन्तर्यस्य उपलब्धेरित्यर्थः ॥६॥

## अस्थानात् ॥७॥

अस्थिरत्वात्—नोच्चारितः शब्दो मुहूर्तमप्युपलभ्यते । ततोऽप्यनित्यः॥७॥

## करोतिशब्दात् ॥८॥

'शब्दं कुरु, मा शब्दं कार्षी' रिति व्यवहारादपि घटादिवत्तस्य अनित्यत्वम् ॥८॥

## सत्वान्तरे च यौगपद्यात् ॥९॥

युगपदनेकत्रकर्तृकचरितस्य शब्दस्य **सत्वान्तरे**-मुखादिस्थानान्तरे, **यौगपद्यात्**—एककालिकत्वदर्शनात् । तच्च विभोरेकस्यानुपपन्नमित्यनित्यत्वं शब्दस्य ॥९॥

## प्रकृतिविकृत्योश्च ॥१०॥

दध्यत्रेत्यादौ इकारयकारादीनां सादृश्येन प्रकृतिविकारभावोपदेशादपि तस्यानित्यत्वम् ॥१०॥

## वृद्धिश्च कर्तृभूम्नाऽस्य ॥११॥

**कर्तृभूम्ना**—उच्चारयितृबहुत्वेन, **अस्य**—शब्दस्य, **वृद्धिः**-महत्त्वं परिदृश्यते । तथा च -मृत्पिण्डरूपकारणबहुत्वेन प्रसिद्धकार्यस्य घटादेर्महत्त्वदर्शनात् । तद्वदस्याप्यनित्यत्वं बोध्यमिति भावः ॥११॥

॥ उत्तरारम्भः ॥

## समन्तु तत्र दर्शनम् ॥१२॥

यदुक्तं—प्रयत्नानन्तर्योपलब्धेरनित्यत्वमिति, तन्न । यत्स्तत्र, **दर्शन**—शब्दे प्रयत्नानन्तर्यस्य दर्शनं, **समन्तु**—उत्पत्त्यभिव्यक्तिपक्षयोः साधारणमेव। तथा च—हेतोः साधारणत्वेन दुष्टत्वाऽनुमानस्येति भावः ॥१२॥

## सतः परमदर्शनं विषयानागमात् ॥१३॥

यदुक्तं-मुहूर्तमप्युच्चारणोत्तरमनुपलम्भाद्विनष्टः शब्द इति, तन्न । **सतः**-विद्यमानस्यैव, तस्य, **परमदर्शनम्**-उच्चारणोत्तरमनुपलम्भनमुपपद्यते । कुतः, **विषयानागमात्**-उपलब्धिस्थानं श्रोत्रं प्रति तस्य अप्राप्तेः । इति हेतोः स्वरूपासिद्धता ज्ञेया ॥१३॥

## प्रयोगस्य परम् ॥१४॥

शब्दं कुर्वित्यादिव्यपदेशः, गोमयान् कुर्वित्यस्य गोमयपिंडविषयत्ववत्, **प्रयोगस्य परं**-लक्षणया शब्दप्रयोगस्यैव ज्ञेयः । सर्वमिदं वक्ष्यमाणेन हेतुना शब्दस्य नित्यत्वं सिद्धवत्कृत्य बोध्यम ॥१४॥

## आदित्यवद्यौगपद्यम् ॥१५॥

यदेकस्य नानास्थानेषु युगपदुपलम्भनमनुपपन्नमिति, तत्राह-**आदित्यवत्**, यथा-एकस्याप्यादित्यस्य नैकस्थानेषु युगपदुपलब्धिः, तथा-शब्दस्याप्येकस्य नानापुरुषोच्चारणानुरोधेन नानादेशेषु **यौगपद्यं**-युगपदुपलब्धिः, व्यापकत्वयोपपद्यत इत्यर्थः ॥१५॥

## वर्णान्तरमविकारः ॥१६॥

दध्यत्रेत्यादौ इकारात् यकारः शब्दान्तरमेव । सादृश्यमप्रयोजकं प्रकृतिविकारभावे । अतो नेकारविकारो यकारः ॥१६॥

## नादवृद्धिपरा ॥१७॥

उच्चरयितृबाहुल्ये, महान् शब्द इति या उपलब्धिः, सा-**नादवृद्धिपरा**-शब्दाभिव्यञ्जकनिरन्तरकृतसंयोगविभागरूपनादानां वृद्धिगोचरैवेति ॥ १७ ॥

॥ सिद्धान्तः ॥

## नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥ १८ ॥

शब्दः नित्य एव स्यात्। कुतः। **दर्शनस्य**- तद्व्यञ्जकोच्चारणस्य, **परार्थत्वात्**-परप्रत्यायनार्थत्वात्। शब्दस्यानित्यत्वे त्वर्थप्रतिपत्तिं यावदनवस्थानात् परस्यार्थप्रतिपत्तिर्न स्यादेवेति भावः ॥१८॥

## सर्वत्र यौगपद्यात् ॥ १९ ॥

गोशब्दे उच्चारिते **सर्वत्र**-सकलासु गोव्यक्तिषु, **यौगपद्यात्**- युगपत्प्रत्ययोत्पत्तेः, तस्य नित्याकृतिवचनत्वम्। तच्च गोशब्दस्य नित्यत्व एव घटते नानित्यत्वे। नह्यनित्यस्य नित्यः सम्बन्धः सम्भवति। सम्बन्धनित्यत्वद्वारकमिदं शब्दनित्यत्वसंसाधनं बोध्यम्। यद्वा, **सर्वत्र**- सकलेषु गोशब्देषु, **यौगपद्यात्**-स एवायं गकार इति युगपत् बहूनामबाधितप्रत्यभिज्ञाया उत्पत्तेः, तस्य नित्यता वेदितव्या ॥१९॥

## सङ्ख्याऽभावात् ॥२०॥

द्विः कृत्वा गोशब्द उच्चारितः, न तु द्वौ गोशब्दावुच्चारिताविति व्यवहारः। स च स एवायं गकार इति प्रत्यभिज्ञया। तस्यैकत्वादुपपद्यते। ततः शब्दे द्वित्वादिसङ्ख्याया अभावादपि तन्नित्यताऽवगंतव्या ॥२०॥

## अनपेक्षत्वात् ॥२१॥

यथा-लोके घटपटादेरिदं नाशकमित्युपलभ्यते, तथा--शब्दस्य नाशकमिदमिति किञ्चिदपि केनाचिन्नानुभूयते। ततोऽनपेक्षत्वात्-विनाशहेतोरुपलम्भाभावादपि नित्यः शब्दः ॥ २१॥

## प्रख्याभावाच्च योगस्य ॥२२॥

'वायुरापद्यते शब्दता' मिति वचनाद्वायवीयत्वेनानित्यः शब्द इत्यत्रोत्तरमिदं सूत्रम्। **योगस्य**-उपादानतया वायवीयत्वयोगस्य, **प्रख्याभावात्**-प्रख्यायाः साक्षात्कारस्याभावात्, न वायुकारणकः शब्दः। अतो नित्यः ॥२२॥

## लिङ्गदर्शनाच्च ॥२३॥

'वाचा विरूपनित्यया' (ऋ०) इति श्रूयते। ध्वंसप्रागभावाप्रतियोगित्वं हि नित्यत्वम्। तथा च—शब्दस मर्थ्यरूपाशक्यत्वात्पफलिङ्गदर्शनादपि शब्दस्य नित्यत्वं द्रष्टव्यम्। 'तस्मै नूनमभिद्यवे वाचा विरूपानित्यया, वृष्णे चोदस्व सुष्टुतिम्' इति समग्रो मंत्रः (ऋ. अ. ६ अ. ५) ॥२३॥

वेदस्यार्थप्रत्यायकताधिकरणम्।

वाक्यनित्यताधिकरणं वा ॥७॥

## उत्पत्तौ वा अवचनाः स्युरर्थस्यातन्निमित्तत्वात् ॥२४॥

वाक्यार्थानित्यत्वमूलकाप्रामाण्याशङ्कासमाधिकरणम्। पदपदार्थसंबंधस्य औत्पत्तिकत्वे-नित्यत्वेऽपि, अर्थस्य—वाक्यार्थस्य-धर्मस्य, अवचनाः— अप्रतिपादकाः स्युश्चोदनाः। अप्रमाणमिति यावत्। कुतः। अर्थस्य-वाक्यार्थस्य धर्मस्य, अतन्निमित्तत्वात्-पदपदार्थसम्बन्धनिमित्तत्वाभावात्, तद्भिन्नवाक्य-वाक्यार्थसम्बन्धनिमित्तत्वाद्वा। तस्य च पुरुषसम्बन्धसापेक्षतया वाक्यमनित्यमप्रमाणमित्यर्थः ॥२४॥

## तद्भूतानां क्रियार्थेन समाम्नायः अर्थस्य तन्निमित्तत्वात् ॥२५॥

तद्भूतानां—तेषु-पदार्थेषु, भूताना-वाचकतया वर्तमानानां पदानां क्रियार्थेन—क्रियावाचकपदेन सह, समाम्नाय-समुच्चारणम्, प्रसिद्धम्। अर्थस्य-वाक्यार्थप्रतिपत्तेस्तन्निमित्तत्वात्-पदार्थप्रतिपत्तिनिमित्तत्वात्। तथाच-तत्तत्पदसमभिव्याहृतक्रियापदरूपं वाक्यं पदार्थज्ञानसहकारेण तत्तत्पदार्थान्वितभावनात्मकं वाक्यार्थं बोधयतीति न चोदनानामप्रामाण्यमिति भावः ॥२५॥

## लोके सन्नियमात्प्रयोगसन्निकर्षः स्यात् ॥२६॥

**लोके**—लौकिकेऽर्थे, **सन्नियमात्**—प्रत्यक्षेणार्थमुपलभ्य सम्यङ् निबन्धनस्य कर्तुं शक्यत्वात्, **प्रयोगस्य**—वाक्यस्य, **सन्निकर्षः**—कृतकत्वं स्यात्। अलौकिके वेदे त्वेतन्न सम्भवतीति भावः ॥२६॥

### वेदापौरुषेयत्वाधिकरणम् ॥८॥

## वेदांश्चैके सन्निकर्षं पुरुषाख्याः ॥२७॥

**वाक्य एवान्यथाक्षेपसङ्गत्येदमधिकरणम्।**

**एके**—केचन तार्किकाः, **वेदान् सन्निकर्षं**—सन्निकृष्टकालतां कृतकत्वं ज्ञापयन्ति। यतस्ते वेदाः **पुरुषाख्याः**—काठकं, कौथुमं, पैप्पलादमिति तत्तत्पुरुषेण समाख्यायमाना दृश्यन्ते। न हि सम्बन्धमन्तरा समाख्यानं संघटते। सम्बन्धश्च कृतिमन्तरेति ॥२७॥

## अनित्यदर्शनाच्च ॥२८॥

'बबरः प्रावाहणिरकामयत' इत्याद्य**नित्यस्य** वेदार्थस्य दर्शनादपि इदानींतनत्वं ज्ञेयं वेदस्येति ॥२८॥

## सि०। उक्तन्तु शब्दपूर्वत्वम् ॥२९॥

अपौरुषेयत्वं शब्दपूर्वत्वं नित्यत्वं प्रागुक्तमेव। आक्षेपः परमधुना परिहर्तव्यः। स इत्थं निरस्यते ॥२९॥

## आख्या प्रवचनात् ॥३०॥

**आख्या**—काठकमित्यादिसमाख्या तु **प्रवचनात्**—प्रकृष्टाध्ययननिमित्तकत्वादाख्येयस्य वेदस्य नित्यत्वेऽप्युपपद्यते इत्यर्थः ॥३०॥

## परन्तु श्रुतिसामान्यमात्रम् ॥३१॥

अनित्यस्यार्थस्याप्रतिपादकत्वात्, बबरः प्रावाहणिरित्यादिश्रुतेः नित्यार्थसाधारणत्वमेव सुबोध्यमिति ॥३१॥

## कृते वा विनियोगः स्यात् कर्मणः सम्बन्धात् ॥२२॥

'वनस्पतयः सत्रमासत' इत्यादीनां **कृते**—मन्त्रदिष्टे कर्मणि, **विनियोगः**—प्राशस्त्यज्ञापकतया अन्वयः **स्यात्** । कुतः । **कर्मणः**—'य एवं विद्वान् सत्रमुपयन्ति' इत्यादेः कर्मप्रतिपादकवाक्यस्य, **सम्बन्धात्**—सन्निधानात्, 'जडा अप्येते इह कर्मानुष्ठाय फलमलभन्त, किमु विद्वांसः' इति कर्मप्राशस्त्यतात्पर्यं कल्पयितुं सुशकमेव एवमादीनां वाक्यानामिति 'चोदनालक्षणोऽर्थो धर्मः' इति सुस्थिरः सिद्धान्तो महर्षेः ॥२२॥

इति पूर्वमीमांसासूत्रवृत्तौ भाट्टबोधिन्यां प्रथमाध्यायस्य प्रथमः पादः ॥ श्रीः ॥

---

# अथ प्रथमाध्यायस्य द्वितीयः पादः ।

### अर्थवादप्रामाण्याधिकरणम् ॥१॥

पूर्वपक्षः ।

## आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥१॥

वेदप्रामाण्यमध्यायार्थः । विधिप्रामाण्यमाद्यपादस्यार्थः । विध्यतिरिक्तवेदभागप्रामाण्याय द्वितीयपादस्यारम्भः । वाक्यैकदेशाक्षेपसङ्गत्या अधिकरणम् । सूत्रार्थस्तु—

**आम्नायस्य**—वेदस्य, **क्रियार्थत्वात्**—साध्यसाधनेतिकर्तव्यतेत्यंशत्रयविशिष्टभावनाख्यक्रियासामान्यप्रतिपादकत्वनैयत्यात्, **अतदर्थानाम्**—उक्तक्रियायामनन्वयिनो वा साध्याद्यंशस्याप्रतिपादकानां सिद्धार्थबोधकानां 'वायुर्वै क्षेपिष्ठा देवता' इत्येवमादीनामर्थवादानाम् **आनर्थक्यं**—निष्प्रयोजनत्वम् अप्रामाण्यमिति । **तस्मात्**—तेषामप्रामाण्याद्धेतोः, **अनित्यम्**—अनियतप्रामाण्यम् **उच्यते**—प्रतिपाद्यते । अप्रामाण्यस्य वेदत्वावच्छेदेनासम्भवेऽपि प्रामाण्यमपि

तदवच्छेदेन न सम्भवतीति भावः ॥१॥

हेतुसामान्यमुक्त्वा हेतुविशेषानाह—

## शास्त्रदृष्टविरोधाच्च ॥२॥

शास्त्रविरोधः, दृष्टविरोधः, शास्त्रदृष्टेन विरोधश्च । तस्मादप्यप्रामाण्यम्। 'स्तेनं मनः अनृतवादिनी वाक्' इत्यादौ 'नानृतं वदेत्' इत्यादिशास्त्रेण विरोधः । 'तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूमः' इत्यादौ दृष्टविरोधः । 'को हि तद्वेद यदमुष्मिन् लोके अस्ति वा नवे' त्यादौ 'स्वर्गकामो यजेते' त्यादिशास्त्रदृष्टेन विरोधश्च ज्ञेयः ॥२॥

## तथा फलाभावात् ॥ ३ ॥

'शोभतेऽस्य मुखम्, य एवं वेद' इत्यादौ अध्ययनफलस्य मुखशोभाया अनुपलब्धेरप्रामाण्यमिति ॥ ३ ॥

## अन्यानर्थक्यात् ॥४॥

'पूर्णाहुत्या सर्वान्कामानवाप्नोति' इत्यादावन्येषामग्निहोत्रादिकर्मणामानर्थक्यप्रसक्तेरप्रामाण्यम् ॥४॥

## अभागिप्रतिषेधाच्च ॥५॥

'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि' इत्यादौ अभागिनः-प्रतिषेधानर्हस्य--अप्रसक्तस्य अन्तरिक्षचयनादेः प्रतिषेधात् अप्रामाण्यम् । पृथिवीचयनप्रतिषेधस्तु चयनप्रतिषेध एव । स च शास्त्रविरुद्ध इत्यप्रामाण्यमेव ॥५॥

## अनित्यसंयोगात् ॥६॥

'बबरः प्रावाहणिरकामयत' इत्यादावनित्यस्यार्थस्य संयोगात्-प्रतिपादनात् अप्रामाण्यम् । प्राङ्निरस्तोऽप्यनिरस्तो नः पुनराक्षितः-वेदैकदेशास्योपोद्बलकतयासमुपस्थितोवेदितव्यः ॥६॥

॥ सिद्धान्तः ॥

## विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः॥७॥

विधीनाम्–विधेयार्थानाम्, स्तुत्यर्थेन–स्तुतिरूपार्थप्रतिपादकत्वेन, विधिना– 'वायव्यं श्वेतमालभेत' इत्यादिविधिवाक्येन सह, एकवाक्यत्वात्, तेऽर्थवादाः धर्माधर्मयोः प्रमाणं स्युः। तेषां स्वातंत्र्येण धर्माधर्मप्रतिपादकत्वाभावेऽपि विधिवाक्यार्थभूतशाब्दभावनायां सहकारित्वरूपेतिकर्तव्यतात्वेनान्वयिस्तुत्युपस्थापकतया विधिवाक्यसहकारेण तत्र प्रामाण्यमुपपन्नमिति भावः ॥ ७ ॥

## तुल्यं च साम्प्रदायिकम् ॥८॥

साम्प्रदायिकम्–अविच्छिन्नगुरुशिष्यपरम्परारूपसम्प्रदायसिद्धं स्वाध्यायानध्ययनादेर्गुरुमुखादधिगमादिकम्, तुल्यं च–समानमेव। सत्येवम्, तत्सामान्यादितरेषु तथात्वमिति न्यायात्, सिद्धप्रामाण्यविधिसाधर्म्येण हेतुना अर्थवादानां प्रामाण्यं सिध्यतीति बोध्यम् ॥ ८ ॥

## अप्राप्ता चानुपपत्तिः, प्रयोगे हि विरोधः स्यात्, शब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत ॥९॥

याऽनुपपत्तिरुक्ता-शास्त्रविरोधादिः, सा अप्राप्ता–न प्राप्नोतीत्यर्थः। हि यतस्स्तेयादीनां प्रयोगे उच्यमाने शास्त्रादिविरोधः स्यात्। शब्दार्थस्तु–स्तेनं मनः इत्यादिशब्दनोऽभिमतार्थस्तु, अप्रयोगभूतः–नानुष्ठेयरूपः। अपि तु स्तुतिनिन्दान्यतररूप एव। तस्मात्तेषां प्रामाण्यमुपपद्यत इत्यर्थः ॥९॥

## गुणवादस्तु ॥१०॥

'वेतसशाखयाऽवकाभिश्चाग्निं विकर्षति' ति विधिः। 'आपो वै शान्ताः' इत्यर्थवादः। तत्र विधेयाधारभूतानामपां स्तवनेन विधेयस्तुतिरूपो गुणवाद एव ज्ञेयः। अभिजनसंस्तवेन अभिजातस्तुतेर्लोकप्रसिद्धत्वादिति भावः॥१०॥

## रूपात्प्रायात् ॥११॥

' हिरण्यं हस्ते भवति, अथ गृह्णाति ' इति विधिसन्निहिते ' स्तेनं मनः ' इत्यर्थवादे मनसः प्रच्छन्नरूपतया स्तेनसारूप्यात् गौण एवस्तेनत्ववादोऽवगन्तव्यो हिरण्यस्तुत्यर्थः । तथा—अनृतवादिनी वागित्यत्रापि, प्रायात्—अनृतवादित्वबाहुल्यात्, भूमलिङ्गको गौणवाद एवेति ॥११॥

## दूरभूयस्त्वात् ॥१२॥

' अग्निर्ज्योतिर्ज्योतिरग्निःस्वाहा ' इति विधिस्तुत्यर्थः ' तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः ' इत्याद्यर्थवादो दूरभूयस्त्वमभिप्रेत्य गौणवादो ज्ञेयः । तथा च न दृष्टविरोध इत्यर्थः ॥१२॥

## स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनात् ॥१३॥

प्रवरे प्रव्रीयमाणे ' देवाः पितर इति ब्रूयादि ' ति विधिसन्निहिते प्रवरानुमंत्रणस्तुत्यर्थे ' न चैतद्विद्मः ' इत्यर्थवादे अज्ञानवचनं दुर्ज्ञानत्वाभिप्रायकं द्रष्टव्यम् । तथा च गौणवादोऽयम् । दुर्ज्ञानत्वञ्च स्त्र्यपराधात्-स्त्रियोऽपराधेन चांचल्येन, कर्तुश्च -यागकर्तुः, पुत्रदर्शनात्— अप्रात्यगनिरूपितस्यापि पुत्रत्वस्य दर्शनात्—सम्भवात्, उपपद्यत इत्यभिसन्धिः ॥१३॥

## आकालिकेप्सा ॥१४॥

तदानीमेवोत्पद्यते यत्तदाकालिकं फलम् । तस्मिन् ईप्सा उत्कटेच्छा भवतीति सार्वजनीनम् । अतः ' को हि तद्वेद, यदमुष्मिन् लोके अस्ति न वा ' इति वाक्ये यदामुष्मिकस्य संदिग्धतया निन्दनं तत् तात्कालिकधूमनिर्गमप्रत्यक्षफलसूचकस्य ' दिक्ष्वतीकाशान् करोति ' ति द्वारकरणविधेः स्तुत्यर्थं ज्ञेयम् ॥१४॥

## विद्याप्रशंसा ॥१५॥

' शोभतेऽस्य मुखम्, य एवं वेद ' इति वाक्ये मुखशोभारूपफल-

हेतुत्वेन या विद्या तस्याः प्रशंसा वेदितव्या । गर्गत्रिरात्रविधे सन्निधानाम्नानात्वाद्धेतोः इत्यर्थ. ॥१५॥

## सर्वत्वमाधिकारिकम् ॥१६॥

' पूर्णाहुतिं जुहोती ' ति विधिसन्निधावाम्नाते-'पूर्णाहुत्या सर्वान्कामानवाप्नोती'त्यर्थवादे श्रुत यत्सर्वत्व तदाधिकारिकम्-प्रकृतापेक्षम्-प्रकृतक्रतुसाध्यफलगतयानत्वबोधकम् । अतो नेतर-क्रतुसामानर्थक्यमिति भाव ॥१६॥

## फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यात् ॥१७॥

यद्यप्यय फल्विधि , तथापि फ स्य–स्वर्गादिफलस्य, कर्मनिष्पत्तेः–कर्मभिरुत्पत्ते', तेषाम्–कर्मणाम, परिमाणतः–गुरुलघुतारतम्येन, फले विशेषः–तारतम्य स्यात्–भवेदित्यर्थ । कुत । लोकवत्–यथा लोके प्रस्थव्रीहिं निष्केण विक्रीय पुनर्निष्कान्तरेण क्रये परिमाणाधिक्य भवति । तद्वदत्रापि ज्ञेयमिति भावः ॥१७॥

## अन्त्ययोर्यथोक्तम् ॥१८॥

' अप्रामाणिप्रतिषेधात् ' ' अनित्यसंयोगात् ' इति सूत्रोक्तयोराक्षेपयोर्यथोक्तम्–उक्तरीत्यैव, परिहारो बोध्यः । तथाहि–न पृथिव्यामित्यार्थवादस्य ' हिरण्य निधाय चेतव्यम ' इति विधिशेषत्वात् तेनापेक्षिताहरण्यस्तावकत्वमिति विधिना त्वेकवाक्यत्वादिति सूत्रोक्त परिहारः प्रथमस्य । द्वितीयस्य तु प्रावाहणिशब्दस्योभयसाधारणत्वेऽपि प्रवहणापत्यस्य बबरस्याप्रसिद्धत्वात् ' प्रकृष्टवहनशीलबबरध्वानियुक्तो वायुरकामयत' इत्यर्थस्यैव तस्यां श्रुतौ विवक्षणान्नानित्यसंयोगप्रसक्तिरिति ' परन्तु श्रुतिसामान्यमात्र ' मिति सूत्रोक्त सोऽप्यगन्तव्य इत्यर्थः ॥१८॥

### हेतुवन्निगदाधिकरणम्
### औदुम्बराधिकरणं वा ॥२॥

## विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥१९॥

अर्थवादसामान्ये स्तावकत्वाक्षेपसङ्गत्येदमधिकरणम्। 'औदुम्बरो यूपो भवति' इति विधिसन्निधावाम्नातः 'ऊर्ग्वा उदुम्बरः ऊर्क् पशवः ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्यै' इति विधिवन्निगदोऽर्थवादः **विधिर्वा स्यात्**—फलविधिरेव भवितुमर्हति। हि-यस्मात् ऊर्जोऽवरुध्याविति फलमवगम्यते। **अपूर्वत्वात्**—मानान्तरानधिगतबोधकत्वञ्च सम्भवति। **वादमात्रम्**—अर्थवाद एव चेत्, प्रवृत्त्यजनकत्वेन **अनर्थकं**—निष्फलं तद्वाक्यमिति स्तुतौ लक्षणा। विधौ श्रुतिशब्द। श्रुतिश्च लक्षणातः ज्यायसीति भावः ॥१९॥

## लोकवदिति चेत् ॥२०॥

स्तुतिरनर्थिका, न च शब्दनारमगम्यत इत्यत्राशङ्केयम्। यथा—लोके इयं गौः क्रेतव्येत्युक्ते प्रभूतक्षीरेयम्, स्त्रयपरया, अविनष्टप्रजेतिवाक्यस्य क्रयापेक्षितबहुक्षीरादिशब्दगम्यस्तुतिपरतया साफल्यं दृष्टम्, तथा वेदेऽपि सार्थक्यं भविष्यतीति चेत् ॥ २० ॥

## न पूर्वत्वात् ॥ २१ ॥

तस्याः परिहारोऽयम्।-नैवं युक्तम्, कुतः? **पूर्वत्वात्**—बहुक्षीरत्वादेरर्थस्य प्रत्यक्षाद्यवगतत्वात्। अतोऽनुवादकस्य तस्यागत्या स्तुतिकल्पकत्वं तत्रोपपद्यते। वेदे तु मानान्तराज्ञातपशुफलजनकत्वबोधकस्य विधिवन्निगदस्य स्तुतिपरताकल्पनमयुक्तमिति भावः ॥ २१ ॥

## सि०॥ उक्तं तु वाक्यशेषत्वम् ॥२२॥

**उक्तम्**—विधिना त्वेकवाक्यत्वादित्यत्र सूपपादितम्। वाक्यशेषत्वमेव ऊर्ग्वा इत्यादेर्विधिवन्निगदस्य युक्तम्। तस्य विधित्वासम्भवादिति भावः ॥ २२ ॥

## विधिश्चानर्थकःक्वचित्तस्मात् स्तुतिः प्रतीयेत, तत्सामान्यादितरेषु तथात्वम् ॥२३॥

क्वचित्–' अप्सु योनिर्वा अश्वः अप्सुजो वेतसः ' इत्यादिषु, विधिः–' अप्सुयोनिरश्व कर्तव्यः ' इत्यादिविधिः, अनर्थकश्च– असम्भवत्येव । तस्माद्विधेरसम्भवाद्धेतोः, स्तुतिः–प्रशंसा, प्रतीयेत–गम्यत इत्यर्थः । तत्सामान्यात्–असम्भवद्विधिरूपत्वेन सम्भवत्स्तुतिरूपत्वेन च तत्सादृश्यात्, इतरेषु–उदाहृतविधिनिगदेष्वपि, तथात्वम्–स्तावकतया विधिवाक्यशेषत्वं युक्तमिति भाव. ॥२३॥

## प्रकरणे सम्भवन् अपकर्षो न कल्पेत, विध्यानर्थक्यं हि तं प्रति ॥२४॥

' यो विदग्धः स नैर्ऋतः, योऽशृतः स रौद्रः, य. शृत. स दैवत, तस्मादविदहता श्रपयितव्यः सदेवत्वाय,' इत्यत्र यो विदग्ध इत्यादेः, अविदहता श्रपयितव्य इति विधेः शेषतया तत्स्तावकत्वम् । तदा प्रकरणे-स्वीये दर्शपूर्णमासप्रकरण एव, सम्भवन्-विदग्धादि सम्भवति । अतस्तस्यापकर्षः-प्रकरणादन्यत्र निवेश , नकल्प्येत । नैर्ऋतादियागोद्देशेन विदग्धादिविधाने तु अपकर्षः स्यादेव । तथा च प्रकरणबाध.श्रुतिबाधोऽपि । हि यतस्तं प्रति-प्रकृतदर्शपूर्णमासयागम्प्रति, विध्यानर्थक्यम्-विदग्धादेर्विधिर्न सम्भवत्येव, तस्य निर्ऋतिदेवताकत्वाभावादित्यर्थः ॥२४॥

## विधौ च वाक्यभेदः स्यात् ॥२५॥

' औदुम्बरो यूपो भवति ' इत्यौदुम्बरताविधौ, ऊर्जोऽवरुध्या इति फलविधौ च आश्रीयमाणे वाक्यभेदः स्यात् । स चायुक्त. । एकवाक्यत्वासम्भवादित्यर्थ. । तस्माद्विधिनिगदा अर्थवादा एवेति ॥२५॥

हेतुवन्निगदाधिकरणम् ॥३॥

## पू०॥ हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥२६॥

प्रत्युदाहरणसङ्गत्येदमधिकरणम् । तथा चापौनरुक्त्यम् । ' शूर्पेण जुहोती'ति विधिसन्निधावाम्नात ' तेन ह्यन्नं क्रियते ' इति हेतुवन्निगद',

**हेतुर्वा स्यात्**—हेतुत्वविधिरेव भवितुं योग्यः । कुतः ? **अर्थवत्त्वोपपत्तिभ्याम्**—शूर्पे होमसाधनत्वबोधनरूपप्रयोजनवत्त्वात्, प्रणाड्या अन्नकरणत्वस्य सम्भवाच्चेत्यर्थः । फलञ्चात्र शूर्पादन्यस्य दर्वीपिठरादेरपि अन्नकरणत्वेन होमसाधनतायाः सिद्धिः ॥२६॥

## सि०॥ स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य॥२७॥

**स्तुतिस्तु**—स्तुत्यर्थक एवायं हेतुवन्निगदः, न हेतुत्वविधिपरः । कुतः ? **शब्दपूर्वत्वात्**—शब्दः—विधिशब्दः, पूर्वं यस्येति व्युत्पत्त्या विधिशेषत्वं हेतु-क्रियते । स्तुत्यर्थत्वे तेन च स्तुत्यपेक्षा गम्यते, न हेत्वपेक्षा । **अतस्तस्य**—हेतुत्वस्य, **अचोदना च**—न विधिरित्यर्थः ॥२७॥

## व्यर्थे स्तुतिरन्याय्येति चेत् ॥२८॥ आ.

शूर्पे नान्नस्य साधकतमं करणम्, अतो **व्यर्थे**—स्तुत्यनर्हे तस्मिन्, स्तुतिः **अन्याय्या**—अयुक्ता इति **चेत्** ॥२८॥

## अर्थस्तु विधिशेषत्वाद्यथा लोके ॥२९॥ आ. नि.

स्तुत्यालम्बनार्थस्तु सम्भवत्येव । कुतः ? **विधिशेषत्वात्**—विध्यपेक्षि-तस्तुतिबोधनाय मानान्तरप्राप्तार्थानुवादकं तद्वाक्यमित्यर्थः । **यथा लोके**- निकृ-ष्टबलवदपेक्षया देवदत्ते बलवच्छब्दो दृश्यते ' बलवान् देवदत्तो यज्ञदत्तादीन् प्रसहते ' इति, **तथा**—निकृष्टान्नकरणात् दर्वीपिठरादीनपेक्ष्यैवायं शूर्पे प्रकृ-ष्टान्नकरणशब्दः, ' तेन ह्यन्नं क्रियते ' इति । अतस्तदपेक्षया साधकतमत्वस्य सम्भवात् न स्तुत्यनर्हं शूर्पम् । ततो नान्याय्या स्तुतिरिति भावः ॥२९॥

### सिद्धान्ते युक्तिः ।

## यदि च हेतुरवतिष्ठेत निर्देशात् सामान्यात् इति चेदव्यवस्था विधीनां स्यात् ॥३०॥

यद्ययं हेतुविधिः स्यात् तदापि स शूर्प एव **अवतिष्ठेत्**— स्थिरीभ-वेत्—नान्यत्र गच्छेदित्यर्थः । कुतः ? **निर्देशात्**—शूर्पस्यैव होमसाधनत्वेन निर्दे-

शात् । तेनेति प्रकृतपरामर्शिना तच्छब्देन तस्यैवाधारत्वेनोपस्थापितत्वाच्च ।
अन्यथा वैयधिकरण्य सापेक्षत्वो॰, तच्चानानुपपत्तिमिति । सामान्यादिति—
प्रबलया टाश्रुत्या करणसामान्याभिधानात् अन्तःकरणसमानस्यैव हेतुत्वमिति
चेव, अव्यवस्था विधीनां स्यात्—नान्न केनचिन्न क्रियत इति, अपि तु प्रणा-
इया समस्तेनैव क्रियते । तथाचानवस्था, विधे अशक्यार्थविधान चेति भावः।
तस्मात्—हेतुवन्निगदा अपि स्तावका एवेति ॥३०॥

मन्त्रलिङ्गाधिकरणम् ॥४॥

## पू० ॥ तदर्थशास्त्रात् ॥३१॥

प्रसङ्गक्षेपी सङ्गतिः । तस्य—मन्त्रस्य योऽर्थः तस्मिन्नेवार्थे तत्र शास्त्रं
नियमयति । यथा—' उरु प्रथस्व इति पुरोडाशं प्रथयति ' इत्यादि मन्त्रस्या-
विवक्षितार्थत्वे तु तन्नियामकं शास्त्रं व्यर्थं स्यात् । अतस्तत्सार्थक्याय विव-
क्षितार्थो मन्त्रः । उच्चारणं त्वदृष्टार्थमेव । जात्यभिप्रायेणैकवचनम् ॥३१॥

## वाक्यनियमात् ॥३२॥

नियतवर्णपदक्रमवाक्यानि मन्त्राः इति नियमः । तथैव पठ्यन्ते
पाठ्यन्ते चाविच्छिन्नसम्प्रदायत सम्प्रदायाभिमानिभिर्योगादिषु । तेषामर्थ-
प्रत्यायनार्थत्वे तु स नियमोऽनर्थकः, तद्विपर्ययेणाप्यर्थप्रतीते सम्भवात् । अतो
नार्थप्रत्यायनार्था मन्त्रा ॥३२॥

## बुद्धशास्त्रात् ॥३३॥

पाठात् बुद्धे—ज्ञातेऽप्यर्थे तद्बोधको मन्त्रो भवति । अग्नीदग्नीन्
विहर इत्यादिः । स बुद्धेऽर्थे किं बोधयेत् ? अतो नार्थप्रत्यायनार्थास्ते
इति ॥ ३३ ॥

## अविद्यमानवचनात् ॥३४॥

यागादिसाधनभूतोऽर्थो मन्त्रैः प्रकाशयितव्यः ।' चत्वारि शृङ्गा त्रयोऽस्य
पादा' ' इत्यादिमन्त्रप्रकाशितोऽर्थः न यज्ञे साधनमस्ति । तत्किम्प्रकाशये-
न्मन्त्र ? अतः--असदर्थबोधनादविवक्षितार्थास्ते इति ॥३४॥

## अचेतनेऽर्थबन्धनात् ॥३५॥

'ओषधे त्रायस्वैनम्' 'शृणोत ग्रावाणः' इत्यादयो मन्त्रा अचेतनं सम्बुध्य पशुत्राणाद्यर्थं प्रतिपादयन्ति । न चेदं शक्यम् । अतोऽप्यविवक्षितार्था इति ॥३५॥

## अर्थविप्रतिषेधात् ॥३६॥

'अदितिर्द्यौरदितिरन्तरिक्षम्' 'एको रुद्रो न द्वितीयोऽवतस्थे, असङ्ख्याताः सहस्राणि ये रुद्रा अधिभूम्याम्' इत्यादिमन्त्रा मिथो विरुद्धमर्थं बोधयन्ति । अतो विरुद्धार्थबोधनात् नार्थे तात्पर्यं तेषामिति ॥३६॥

## स्वाध्यायवदवचनात् ॥३७॥

अध्ययनकाले काचन अवहन्ति कुरुते । माणवकस्तु वेदम्--अवहन्तिमन्त्रमभ्यस्यति, न तदर्थम् । अतः--स्वाध्यायवत्तदर्थस्यानभ्यासात् नार्थप्रत्यायनार्था मन्त्रा इत्यवधेयम् ॥३७॥

## अविज्ञेयात् ॥३८॥

'सृण्येव जर्भरी तुर्फरीतू' इत्यादिमन्त्राणामर्थो ज्ञातुं सर्वथा अशक्य एव । अतोऽज्ञातार्थकत्वात् अविवक्षितार्था मन्त्रा इति सिध्यति ॥३८॥

## अनित्यसंयोगान्मन्त्रानर्थक्यम् ॥३९॥

'किं ते कृण्वन्ति कीकटेषु गावः, नाशिरं दुह्रे न तपन्ति घर्मम्। आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धया नः'॥(ऋ० ३।३।२१॥)

अस्य ऋषिणा विश्वामित्रेणेन्द्रः प्रार्थितः। तत्र कीकटा जनपदाः, प्रमगन्दो राजा, नैचाशाखं नगरम्। इत्याद्यनित्यार्थप्रतिपादनात् तत्प्राङ् नाऽसीदयं मन्त्र इति गम्यते । अतोऽनित्यसंयोगमूलकमन्त्रानर्थक्यप्रसक्त्यपेक्षया वरमविवक्षितार्थत्वं तेषाम् । तस्मादेतैस्तदर्थशास्त्रादिभिः कारणैः अविवक्षितार्था नार्थप्रत्यायनार्था मन्त्राः, किन्तूच्चारणमात्रेण यागस्योपकुर्वन्तीत्येव स्ववचम् ॥३९॥-इति पूर्वपक्षः ॥

॥ सिध्दान्तः ॥

## अविशिष्टस्तु वाक्यार्थः ॥४०॥

वाक्यस्य अर्थ. लोके वेदे च अविशिष्टः–समान एव । यथा च–लोके अर्थप्रत्यायनं वाक्यस्य दृष्टं प्रयोजनम्, तथा वेदेऽपि तस्य दृष्टमर्थ-प्रत्यायनमेव प्रयोजनम् । दृष्टे सम्भवति अदृष्टकल्पनमन्याय्यमिति ॥४०॥

## गुणार्थेन पुनः श्रुतिः ॥४१॥

यच्च- ' तदर्थशास्त्रात् ' इत्यनेन अभ्र्याऽऽदानरूपेऽर्थे मन्त्रस्य लिङ्गादेव प्राप्तत्वात्पुन. ' ताञ्चतुर्भिरभ्रिमादत्ते ' इति पुनः शास्त्रमनुपपन्नमित्युक्तं, तन्न । लिङ्गाद्विकल्पेन मन्त्रप्राप्तौ चतुर्भिरिति चतुःसङ्ख्यारूपगुण-विधानार्था पुन. श्रुतिः इत्यदोष ॥४१॥

## परिसङ्ख्या ॥४२॥

' इमामगृभ्णन् रशनामृतस्य ' इति लिङ्गेन रशनाऽऽदाने मन्त्रस्य प्राप्तौ ' इत्यश्वाभिधानीमादत्ते ' इति पुनर्विधानम्, गर्दभरशनातो मन्त्रस्य परिसङ्ख्यार्थमवगन्तव्यमिति ॥ ४२ ॥

## अर्थवादो वा ॥ ४३ ॥

' उरु प्रथा उरु प्रथस्व ' इति लिङ्गेन पुरोडाशप्रथने प्राप्तस्य मन्त्रस्य ' इति पुरोडाशं प्रथयती ' ति पुनर्विधानम्, तत् ' यज्ञपतिमेव प्रजया पशुभिः प्रथयती ' ति प्रथनस्तुत्यर्थं ज्ञेयम् ॥४३॥

## अविरुद्धं परम् ॥४४॥

परम्-यन्मन्त्रेषु पदादीनां नियतक्रम स्थानम्, तत्तदर्थप्रत्यायनार्थेऽपि नियमादृष्टकल्पनाया अविरुद्धम् । तदभावेऽपि नियमादृष्टकल्पनाऽऽवश्यकी । दृष्टत्यागो दोषश्च । स च सिद्धान्ते नेति विशेष ॥४४॥

## सम्प्रैषे कर्मगर्हानुपालम्भः संस्कारत्वात् ॥४५॥

**सम्प्रैषे** — ' अग्नीदग्नीन् विहर ' इत्यादौ बुद्धबोधनरूपस्य मन्त्रकार्यस्य **गर्हा**—गर्हणम्, **अनुपालम्भः**—तद्दूषणम् । कुतः ? **संस्कारत्वात्**—बुद्धस्यापि पुनर्मन्त्रेण बोधनम् आग्नीध्रे सस्कारं समुत्पादयति, प्रोक्षणादिवदिति ॥४५॥

## अभिधानेऽर्थवादः ॥४६॥

**अभिधाने**— ' चत्वारि शृङ्गा त्रयोऽस्य पादाः ' इत्यादिमन्त्रे अविद्यमानार्थाभिधानमित्याशङ्कायाम्, स **अर्थवादः**—अर्थवादवत् गौण्या वृत्त्या देवतादेः स्तुतिरित्यवगन्तव्यम् । एवम्-' ओषधे त्रायस्वनम्, शृणोत ग्रावाणः इत्यादावचेतने चेतनत्वमारोप्य अचेतनस्य स्तुतिरिति ज्ञेयम् ॥४६॥

## गुणादविप्रतिषेधः स्यात् ॥ ४७ ॥

' अदितिर्द्यौरदितिरन्तरिक्ष ' मित्यत्र **गुणात्**—गुणवृत्त्या स्तुतिपरत्वान्न **विप्रतिषेधः**-न विरोधः । यथा—त्वमेव माता पिता त्वमेवेति, तथा—एकरुद्रदैवत्ये एको रुद्रः, शतरुद्रदैवत्ये शतं रुद्रा इत्यविरोध ॥ ४७ ॥

## विद्यावचनमसंयोगात् ॥ ४८ ॥

अध्ययनसमये विद्याया.-अर्थज्ञानस्य, अवचनम् - अनभ्यासः, **असंयोगात्**— अभ्यासरूपसंयोगं विनापि तस्य सौलभ्यात् । दुर्ग्रहत्वात्तु अक्षराभ्यास इति भावः ॥ ४८ ॥

## सतः परमविज्ञानम् ॥४९॥

' सृण्येव जर्भरी तुर्फरीतू ' इत्यादिषु **सतः**— विद्यमानस्याप्यर्थस्य, प्रमादादिनाऽनवबोधः । तदवधारणं व्याकरणनिरुक्तादिना भाष्यादिना च कार्यम् ॥ ४९ ॥

## उक्तश्चानित्यसंयोगः ॥५०॥

' **किं ते** कृण्वन्ति कीकटेषु गावः ' इत्यादिमन्त्रे यः अनित्यसंयोग आशङ्कितः सः ' परन्तु श्रुतिसामान्यमात्रम् ' इत्यत्र **उक्तः**—परिहृत इत्यर्थः ॥५०॥

इत्थं मन्त्राणां विवक्षितार्थत्वे उपन्यस्तं बाधजातकं क्रमशो निराकृत्य तेषामर्थप्रत्यायनार्थत्वे साधकान्याह—

## लिङ्गोपदेशश्च तदर्थवत् ॥५१॥

'आग्नेय्या आग्नीध्रमुपतिष्ठते' इत्यत्र 'अग्ने नय सुपथा राये अस्मानित्यादिमन्त्रस्य अग्निदेवताप्रकाशकत्वलिङ्गेन उपस्थानोपदेशः तदर्थवत्— तन्मन्त्रवाक्यम् अर्थवत्—अर्थप्रत्यायकमेव, न केवलमुच्चारणार्थमिति ज्ञापयति। साऽस्य देवतेति शासनात् आग्नेय्येतिदेवतातद्धितः। स च प्राधान्येन तस्याः प्रकाशनेनैव सूपपन्न इति भावः ॥५१॥

## ऊहः ॥५२॥

ऊहदर्शनमपि मन्त्रवाक्यमर्थप्रत्यायनार्थमिति ज्ञापयति। तथा हि— 'अन्वेनं माता मन्यतामनुपितेत्ययं प्रकृतियागे पशुविशेषको मन्त्रः'। तत्र ब्राह्मणवाक्यमेवम्— 'न माता वर्धते न पिता' इति। प्रत्यक्षञ्च, कौमारयौवनस्थाविरैर्वर्धेते पितराविति। अतस्तन्मन्त्रीयमातृपितृशब्दयोः द्विवचनबहुवचनान्तत्वेन प्रयोगरूपा शब्दस्य वृद्धिः पश्वाधिक्येन भवतीति तस्यार्थः। पश्वाधिक्ये तु 'अन्वेनौ माता मन्यतामन्वेनान् माता मन्यतामित्यादिरूप ऊहो भवत्येव। स च ऊहो मन्त्रस्य अर्थप्रत्यायनार्थत्वमन्तरेण नोपपद्यते। द्वारान्तरप्रयुक्त अन्यथाभावे हि ऊह इति भावः ॥ ५२ ॥

## विधिशब्दाश्च ॥५३॥

'शतं हिमाः' 'शतं वर्षाणि जीव्यासम्'। इत्यादयो मन्त्रगतहिमाशब्दवत्सम्बन्धरूपा विधिशब्दा अपि मन्त्राणामर्थप्रत्यायनार्थत्वे एव सम्यगुपपद्यन्ते। एवञ्च—विवक्षितार्था प्रयोगसमवेतार्थस्मृतिहेतवो मन्त्रा इत्युक्तलक्षणलक्षिते धर्मे तेषां प्रामाण्यमिति सिद्धम् ॥५३॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां प्रथमाध्यायस्य द्वितीयः पादः ॥ श्री ॥

## अथ प्रथमाध्यायस्य तृतीयः पादः ॥

स्मृतिप्रामाण्याधिकरणम् ॥ १ ॥

'चोदनालक्षणोऽर्थो धर्मः' इत्युक्तलक्षणे धर्मे विध्यर्थवादमन्त्रात्मनो वेदस्य प्रामाण्यमभिहितम्। इदानीं स्मृतिशिष्टाचारयोः प्रामाण्यं वक्तव्यम्। तत्र–

॥ पूर्वपक्षः ॥

### धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ॥१॥

उक्तस्य धर्मस्य शब्दमूलत्वात्–वेदप्रमाणकत्वात्, तच्छून्यमप्रमाणं स्यात्–धर्मे प्रमाणं न भवतीत्यर्थः ॥१॥

॥ सिद्धान्तः ॥

### अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात् ॥२॥

अपि वेति पूर्वपक्षनिरासार्थः। कर्तृसामान्यात्–स्मृत्यनुष्ठानकर्त्रैक्यात्, वेदमूलकमनुमानं–स्मरणं प्रमाणं स्यात्। धर्मबुद्ध्या वेदोक्तकर्मकर्तॄणां मनुयाज्ञवल्क्यप्रभृतिशिष्टानां स्मृतयः धर्मे प्रमाणं भवेयुरेवेति भावः ॥२॥

श्रुतिप्राबल्याधिकरणम् ॥२॥

### विरोधे त्वनपेक्षं स्यात् असति ह्यनुमानम् ॥३॥

प्रत्यक्षश्रुतिविरोधे सति तदनुमानमप्रमाणं स्यादेव। विरोधे असति हि वेदमूलत्वात्कमनुमानं प्रवर्तेत ॥३॥

दृष्टान्यमूलस्मृत्यप्रामाण्याधिकरणम् ॥३॥

### ॥ हेतुदर्शनाच्च ॥४॥

श्रुतिविरोधाभावेऽपि परिक्रीतेषु ऋत्विक्षु लोभदर्शनात् तन्मूलेयम्–'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति' इति स्मृतिरिति लोभहेतुदर्शनादेवाप्रमाणं

सेत्यर्थः । अथवा, वेदनिर्दिष्टविपरिग्रहस्यैव दर्शनात्, वैदिकमन्वादिशिष्टपरिग्रहादर्शनाच्च शाक्यादिस्मृतयो न धर्मे प्रमाणमिति सूत्रार्थः ॥४॥

पदार्थप्राबल्याधिकरणम् ॥४॥

## शिष्टाकोपेऽविरुद्धमिति चेन्न, शास्त्रपरिमाणत्वात् ॥५।६

'वेदं कृत्वा वेदिं करोति' इत्यादिश्रुतिविहितानां वेदवेदिकरणरूपाणां पदार्थानाम् अकोपे-अविरोधे, अविरुद्धं 'क्षुत आचामेत्' इति स्मृतिवचनं प्रमाणमेव। अतस्तद्विहितमाचमनं वेदवेदिकरणमध्ये क्षुतनिमित्ते सति कार्यमिति चेन्न। शास्त्रपरिमाणत्वात्-शास्त्रेण क्रमबोधकत्वात् श्रुत्यादिना अधिगतं यत् कालाव्यवधानरूपं परिमाणं तद्बाधात् । तथा च, श्रौतक्रमबाधप्रसक्तेः उक्तस्मृतिवचनमप्रमाणमिति पूर्वपक्षः ॥५॥६॥

॥ सिद्धान्तः ॥

## अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥७॥

अपि वेति पक्षव्यावृत्तिः । कारणाग्रहणे-अप्रामाण्यकारणस्यादर्शने, प्रयुक्तानि-स्मृतिविहितानि आचमनादीनि, पदार्थरूपतया तद्धर्मभूतक्रमापेक्षया प्रबलानीति प्रतीयेरन्-ज्ञायेरन्, विपश्चिद्भिरिति शेषः ॥७॥

शास्त्रप्रसिद्धपदार्थप्राबल्याधिकरणम् ॥ ५ ॥

## तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ॥८॥

आर्यानार्यकृतयववराहादिशब्दव्यवहारेषु समा विप्रतिपत्तिः-तुल्या शक्तिवृत्तेरवगतिः स्यात् । कुतः ? तेषु व्यवहारेषु विरोधस्य-एकतरबाधकस्य प्रबलदुर्बलन्यायादेरदर्शनात् ॥८॥

## शास्त्रस्था वा तन्निमित्तत्वात् ॥९॥

वा इति पूर्वपक्षव्यावृत्तिः । शास्त्रानुसारिणामार्याणां या शास्त्रीया प्रतिपत्तिः, सा प्रबला । धर्मज्ञानस्य तत्प्रयुक्तत्वादिति भावः ॥९॥

म्लेच्छप्रसिद्धार्थप्रामाण्याधिकरणम् ॥६॥

## चोदितं तु प्रतीयेत अविरोधात् प्रमाणेन ॥१०॥

– यत्र, पिक-नेम-सत-तामरसादिशब्देषु, आर्याणां न क्वचिदर्थे प्रयोगः, तत्र-अनार्यव्यवहृतं कोकिल-अर्ध-शतच्छिद्रदारुपात्र-कमलमित्यादिपदार्थस्वरूपं क्रमशः प्रत्येतव्यम् । प्रबलेन प्रमाणेनाविरोधात्--विरोधाभावादित्यर्थः ॥१०॥

कल्पसूत्राणामस्वतः प्रामाण्याधिकरणम् ॥७॥

## प्रयोगशास्त्रमिति चेत् ॥११॥

बौधायनादिकल्पसूत्रं **प्रयोगशास्त्रम्**—प्रयोगस्य धर्मानुष्ठानस्य साक्षाद्विधायकमिति वेदमूलत्वेन प्रामाण्यमित्युक्तौ गौरवात् वेदवत्स्वतःप्रामाण्यमेव तस्येति चेत् न ॥११॥

## असन्नियमात् ॥१२॥

प्रागसतामेव तेषां **नियमात्**—निबन्धनात्, व्यक्तं तत्र पौरुषेयत्वमिति वेदवदपौरुषेयत्वकल्पनायाः साधनमूलाया असम्भव एव ॥ १२ ॥

## अवाक्यशेषत्वाच्च ॥१३॥

वेदवद्वाक्यशेषस्यार्थवादादेः कल्पसूत्रादिष्वदर्शनादपि न तेषां वेदवत्स्वतःप्रामाण्यमित्यर्थः ॥ १३ ॥

## सर्वत्र च प्रयोगात्सन्निधानशास्त्राच्च ॥१४॥

**सर्वत्र**- वेदविरुद्धेऽप्यर्थे, तैः स्ववाक्यस्य प्रयुक्तत्वात् **सन्निहितस्य**-प्रत्यक्षस्य वेदवाक्यात्मकशास्त्रस्य सत्त्वादपि न कल्पसूत्रादीनां स्वतःप्रामाण्यमिति भावः ॥१४॥

होलाकाधिकरणम् । सामान्यश्रुतिकल्पनाधिकरणं वा ॥८॥

## अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥१५॥

स्मृत्येकप्रमाणानुसरणस्य स्मृतिविशेषस्य आचारस्य च शिष्टाफलवत् व्यवस्थितदर्शनात्, न मूलभूता व्यवस्थितार्थं श्रुतिः कल्पनीया तद्व्यवस्थितैव स्यादिति भावः ॥१५॥

## अपि वा सर्वधर्मः स्यात् तन्न्यायत्वाद्विधानस्य ॥१६॥

तत्तत्स्मृत्याऽऽचारागतोऽर्थः सर्वदा धर्मः स्यात् । तत्तन्मूलकश्रुति-प्रमाणस्य सर्वधर्मताग्राहकन्यायत्वात् । विशिष्टत्वग्राहकप्रमाणाभावे सर्वधर्मत्वम्, इति युक्तो न्याय इति भावः ॥१६॥

## दर्शनाद्विनियोगः स्यात् ॥१७॥

शिखाकल्पादिषु तु 'मुण्डा भृगवः' इत्यादिवचनदर्शनात् भृग्वादिरूपाधिकारिविशेषान्वयो भवेदित्यर्थः ॥१७॥

## लिङ्गाभावाच्च नित्यस्य ॥१८॥

'शुक्लो होता' इत्यादिवत् तत्तत्कर्मकर्तृनियतस्य कस्यचिदपि लिङ्गस्य स्वरूपस्याभावान्न व्यवस्थितत्वं होलाकादीनाम्, अपि तु सर्वधर्मत्वमेवेति ॥१८॥

## आख्या हि देशसंयोगात् ॥१९॥

प्राच्यादिसमाख्या हि 'प्राच्या भवन्ति' इत्यादिरीत्या तत्तद्देशसम्बन्ध-निमित्तिका । तथा च- तद्देशं विहायान्यत्रागतैरपि तद्देशत्वाभिमानेन होलाका-दयः क्रियन्ते । 'प्राच्या होलाकां कुर्युः' इति श्रुतिकल्पने तु त्यक्तप्राग्देशेषु प्राच्यपदवाच्यत्वासम्भवात् सा श्रुतिरनुपपन्ना स्यादित्यर्थः ॥१९॥

## न स्याद्देशान्तरेष्विति चेत् ॥२०॥

तत्तद्देशं विहायान्यत्रागतेषु प्राच्यादिव्यवहारो न भवेत् । अतः प्राच्य-त्वादिजातिनिमित्तकत्वे तद्व्यवहारस्य इति चेत् ॥ २० ॥

## स्याद्योगाख्या हि माथुरवत् ॥२१॥

यथा-मथुरायां वसन् मथुराया निर्गतश्च माथुरोऽयमागत इत्यभि-धीयते, तथा-प्राचीन आगतः प्राच्य इति यौगिकीय समाख्या । न जाति-निमित्ता । जातिकल्पकाभावादित्यर्थः ॥२१॥

## कर्मधर्मो वा प्रवणवत् ॥२२॥

' प्राचीनप्रवणे वैश्वदेवेन यजेत ' इत्यादिवत् कर्मधर्मः—कर्माङ्गमेव स्यात् होलाकादिकमिति चेन्न ॥२२॥

## तुल्यन्तु कर्तृधर्मेण ॥२३॥

कर्मधर्मतयोक्तो देशविशेषः कर्तृधर्मेण-प्राच्यत्वादिना तुल्य एव। प्राचीं परित्यज्य उदीचीमागतैरपि होलाकादिकमनुष्ठीयते। अतस्तथा श्रुतिकल्पनं न सम्भवतीति ज्ञेयम ॥२३॥

### साधुपदप्रयुक्त्यधिकरणम् ॥९॥

## प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात्॥२४

साधुशब्दप्रयोगे तत्साधुत्वे च व्याकरणस्य अनियामकत्वात् गोगाव्यादिशब्देषु तेषां प्रयोगे च साध्वसाधुविभागो न स्यात्। तत्र व्याकरणं न प्रमाणमिति भावः ॥२४॥

## शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥२५॥

आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।
मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम् ॥ (पा० शि० )

इत्यादिशास्त्रात् कण्ठताल्वादिविशिष्टप्रयत्नेन शब्दनिष्पत्तेर्दर्शनात् गाव्यादिशब्दकानां करणापाटवादिप्रयुक्तापभ्रंशात्मकापराधभागित्वङ्गम्यते। अतस्तेषामसाधुत्वम्, गवादिशब्दानाञ्च साधुत्वम। ' साधुरेव प्रयोक्तव्यो ब्राह्मणेन, नासाधुः ' इति साध्वसाधुशब्दज्ञापकत्वात् प्रमाणं व्याकरणं तत्रेति बोध्यम ॥२५॥

## अन्यायश्चानेकशब्दत्वम् ॥ २६ ॥

गोशब्दवत् गाव्यादिशब्दोऽपि वाचक इत्युक्तौ ' सकृदुच्चरितः शब्दः सकृदर्थं गमयती ' ति नियमात् एकस्यार्थस्यानेकशब्दवाच्यत्वमन्याय्यं-न्याय-

भिन्नं प्रसज्येत । हस्तादिषु करायनेकशब्दवाच्यत्वम् अनाद्यभियुक्तोपदेशात् स्वीकार्यं भवति इति ज्ञेयम् ॥२६॥

## तत्र तत्त्वमभियोगविशेषात्स्यात् ॥२७॥

गवादिशब्देषु साधुत्वमितरेष्वपभ्रष्टत्वं च व्याकरणप्रणेतृणां पाणिनिपतञ्जलिकात्यायनप्रभृतीनां शिष्टानां सूत्रादिरूपोपदेशादवगन्तुं शक्यं स्यात् ॥२७॥

## तदशक्तिश्च तदनुरूपत्वात् ॥२८॥

गाव्यादिशब्दानामवाचकत्वं तु वाचकगवादिशब्दानुरूपत्वाज्ज्ञेयम् । कथंचिद्वर्णसाजात्येन गवादिशब्दोपस्थापकत्वैनार्थबोधोपपत्तेर्न गाव्यादिशब्दानां वाचकत्वमिति भाव. ॥२८॥

## एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् ॥२९॥

यथा—अश्मकैरागच्छामीति विभक्तिव्यत्ययेऽपि अश्मकशब्दैकदेशे उपलब्धे अश्मकेभ्य इति शब्द: स्मर्यते, तत अर्थश्चोपलभ्यते, तथा—गाव्याद्येकदेशदर्शनात् गोशब्दस्मरणम् । तत सास्नादिमतोऽर्थस्यावगतिरिति भावः ॥२९॥

### लोकवेदयोः शब्दार्थैक्याधिकरणम् ॥१०॥

## प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥३०॥

'अग्निहोत्रं जुहुयात्स्वर्गकाम', यजेत स्वर्गकाम.' इत्यादियागहोमकर्मप्रयोगेषु 'दध्नेन्द्रियकामस्य जुहुयात्, व्रीहीन् प्रोक्षति, व्रीहीनवहन्ति, कारीर्या वृष्टिकामो यजेत, तस्य द्वादशशतं गावो दक्षिणा, गा दद्यात्, उद्भिदा यजेत पशुकाम ' एवमादीनां चोदनानां सद्भावात् 'त एवामी गवादयः शब्दा येऽस्माभिर्लोके दृष्टा, इति प्रत्यभिज्ञया वैदिकगवादिशब्दैः सह लौकिकगवादिशब्दानाम् अभिन्नत्वम्-एकत्वं स्यात् । भिन्नत्वे तु वैदिकशब्दार्थसम्बन्धस्य दुर्ज्ञेयत्वात् चोदनानां निरर्थकत्वप्रसक्त्या तासां सद्भाव एव

नोपपद्येत। अबाधितप्रत्यभिज्ञापि निर्दिष्टा अनुपपन्ना भवेत्। अप्रसिद्धयूपादिशब्दानां शक्तिग्रहस्तु प्रसिद्धार्थकशब्दसान्निध्यात्स्यादेवेति ॥३०॥

आकृत्यधिकरणम् ॥ ११ ॥

॥ पूर्वपक्षः ॥

## अद्रव्यशब्दत्वात् ॥ ३१ ॥

गवादिशब्दानां जातिवाचकत्वे तु द्रव्यवाचकशब्दत्वाभावात् 'तस्य द्वादशशतं गावो दक्षिणा' तथा-'षड् देया द्वादश देयाश्चतुर्विंशतिर्देया' इत्यादेरनुपपत्तिः। न हि जातौ सङ्ख्याद्यन्वयो घटते। अतो व्यक्तिः पदार्थः, न जातिः ॥३१॥

## अन्यदर्शनाच्च ॥ ३२॥

'यद्युपाकृतः पशुः पलायेत अन्यं तद्वर्णं तद्वयसं पशुमुपाकुर्यात्' इत्यत्रान्यपशूपाकरणदर्शनात्, जातेः शब्दार्थत्वे तस्या एकत्वेनान्यत्वसम्भवात् न जातिः पदार्थः, अपि तु व्यक्तिरेवेति ॥ ३२ ॥

॥ सिध्दान्तः ॥

## आकृतिस्तु क्रियार्थत्वात् ॥३३॥

'श्येनचितं चिन्वीत' इत्यादौ चयनक्रियया श्येनाऽऽकारः सम्पादयितुं शक्यः। व्यक्तिस्त्वशक्यैव। अतः-श्येनचयनादिक्रियायाः समन्वयार्थं लाघवाच्च जातिरेव शब्दार्थः, न व्यक्तिः। किञ्च, 'सोमाभावे पूतिकानभिषुणुयात्' 'तद्वर्णं तद्वयसमुपाकुर्यादिति वेदे लोके च आकृतिसम्बन्धमन्तरेण व्यक्तौ शब्दप्रयोगो न दृश्यते। अतोऽप्याकृतिरेव शब्दार्थः। तया व्यक्तिर्लक्षयितुं शक्येति न काप्यनुपपत्तिरिति भावः ॥३३॥

## न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति चेत् (शङ्का) ॥३४॥

यदुक्तं, प्रोक्षणादिरूपा क्रिया जातौ न सम्भवति, एवं जातेरेव शब्द-

नैकानुगतत्वाच्च अन्यत्वासम्भवेन अन्य पशुमुपाकुर्यादित्यनुपपन्नम् । तथा, ' षड् देया द्वादश देय ' इत्यादौ सङ्ख्यान्वययोग्य द्रव्य–व्यक्तिर्न प्रतीयेत । जातिरन्वययोग्या षडादिसङ्ख्यान्वयस्येति ॥३४॥

## तदर्थत्वात्प्रयोगस्याविभागः ॥३५॥

' ब्रीहीन् प्रोक्षति । अन्यमुपाकुर्यात् । षड् देया '। एवमादिप्रयोगस्य **तदर्थत्वात्**–लक्षणया व्यक्तिरूपार्थपरत्वात्, **अविभागः**- जातिशक्तिवादभङ्गो नेत्यर्थ ॥३५॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्या प्रथमाध्यायस्य तृतीय पाद ॥

---

## अथ प्रथमाध्यायस्य चतुर्थः पादः ॥

### उद्भिदादिशब्दानां यागनामताधिकरणम् ॥ १ ॥

## उक्तं समाम्नायैदमर्थ्यं, तस्मात् सर्वं तदर्थं स्यात् ॥१॥

**समाम्नायस्य**–वेदस्य, **ऐदमर्थ्यं**–क्रियान्वितस्वार्थबोधकत्वम्, ' तद्भूतानां क्रियार्थेन समाम्नाय ' (१।१।२५) इत्यत्रोक्तम् । तस्मात्–सर्वं ' उद्भिदा यजेत, सोमेन यजेतेत्यादि उद्भिदादिपदजात तदर्थं–क्रियान्वितस्वार्थबोधक सदेव प्रमाण स्यात्, गुणविधायकत्वेनेत्यभिसन्धि ॥१॥

## अपि वा नामधेयं स्यात् यदुत्पत्तावपूर्वमविधायकत्वात् ॥२॥

यत्, उद्भिदा यजेतेत्यादिषु विधिवाक्येषु अर्थान्तररूढमिति नावधृतम् उद्भिदादिपद तन्नामधेयमेव स्यात् । अविधायकत्वात्–उद्भिन्नाम्ना यागेनेति सामानाधिकरण्येनान्वये विधायकत्वाभावात् । गुणविधौ उद्भिद्वतेति मत्वर्थो लक्ष्यः । लक्षणा च दोषः । ' न विधौ परः शब्दार्थ ' इति नियमात् । अतो–यागनामेति सिद्धम् ॥२॥

चित्रादिशब्दानां यागनामताधिकरणम् ॥२॥

## यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः ॥३॥

**यस्मिन्** 'चित्रया यजेत पशुकामः' इत्यादिवाक्यस्यगुणरूढत्वे-नावधृतचित्रादिपदे गुणविधिर्नामधेयं वेति संशयः सम्भवति। तद्वाक्ये त्वापरो **गुणोपदेशः** श्रूयते। तादृशस्य चित्रादिपदस्य **प्रधानकर्मणा** सह **अभि-सम्बन्ध**स्तत्कर्मनामधेयत्वेन बोध्यः। अन्यथा, वाक्यभेदप्रसङ्ग इत्यर्थः ॥३॥

अग्निहोत्रादिशब्दानां यागनामताधिकरणम् ॥३॥

॥ तत्प्रख्यन्यायः ॥

## तत्प्रख्यञ्चान्यशास्त्रम् ॥४॥

**तस्य**—विधित्सिताग्निदेवतारूपगुणस्य क्षरणसमर्थघृतादेर्द्रव्यस्य **च, प्रख्यापकम्**, **अन्यम्** 'अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहा। चतुर्गृहीतं वा एत-दभूत' इति **शास्त्रं** विद्यते। अतो—'अग्निहोत्रं जुहोति' 'आघारमाघारयती' त्यत्र न गुणविधिः। अपि तु कर्मनामनीत्यर्थः ॥४॥

श्येनादिशब्दानां यागनामत्वाधिकरणम् ॥४॥

॥ तद्व्यपदेशन्यायः ॥

## तद्व्यपदेशं च ॥५॥

**तस्य**—विधित्सितश्येनादेर्गुणस्य, **व्यपदेशम्**—उपमानोपमेयभावनिर्देश-शास्त्रं 'यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यमादत्ते' इति यत्र विद्यते तत्र—'श्येनेनाभिचरन् यजेते'त्यादावपि श्येनादिपदं नामधेयमेव। अन्यथा, उपमानोपमेयभावानुपपत्तिरिति भावः ॥५॥

वाजपेयादिशब्दानां यागनामधेयताधिकरणम् ॥५॥

## नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् ॥६॥

'वाजपेयेन स्वाराज्यकामो यजेत' इत्यत्र यागनामत्वेनाभिमते वाजपेयपदे **वाजम्**—अन्नं तच्च **पेयं** यवागूवादिरूपं यत्रेति व्युत्पत्त्या अन्न-गुणस्य श्रवणात् गुणविधानमेव स्यात् इति चेत् ॥६॥

## तुल्यत्वात्क्रिययोर्न ॥७॥

दर्शपूर्णमासेष्टिना जपेयक्रिययोरन्नद्रव्यकतया तुल्यत्वप्रसङ्ग । तथा च—अन्नद्रव्यमूलकसादृश्यस्य ज्यायस्त्वात् दर्शपूर्णमासविध्यन्तप्राप्तौ 'सप्तदशदीक्षो वाजपेयः, सप्तदशोपसत्को वाजपेय.' इति सोमयागीयविध्यन्तानुवादाल्लिङ्ग-दर्शनमनुपपन्नं स्यात् । अतो--गुणविधानमिति वचो न युक्तम् ॥७॥

## एकशब्द्ये परार्थवत् ॥८॥

एकस्मिन्नेव—लिङ्प्रत्ययान्तयजेतेति पदे साध्यत्वेन साधनत्वेन च फलगुणोभयान्वयस्वीकारे यागेन स्वाराज्यमिति यथा स्वार्थवत्, तथा वाजपेयेन यागमिति परार्थवच्च तद्वाक्यं स्यात् । तथा च वाक्यभेदो दोष. । एवम्—उद्देश्यत्वानुवाद्यत्वमुख्यत्वोपादेयत्वविधेयत्वगुणत्वेति परस्परविरुद्धत्रिकद्वया-पत्तिश्च प्राप्नोति । अतो—न वाजपेयेनेति गुणविधि. । अपि तु यागनामैवेति सिद्धान्तः ॥८॥

### आग्नेयादीनाम् अनामताधिकरणम् ॥६॥

## तद् गुणास्तु विधीयेरन् अविभागाद् विधानार्थे न चेदन्येन शिष्टाः ॥९॥

'यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णिमास्याञ्चाच्युतो भवती' त्यादिवाक्येषु तत्प्रधानं—यागादिकर्म, अग्न्यादिगुणाश्च विधीयेरन् । कुतः ? 'विधानार्थे—नचद्गुणविशिष्टतत्तत्प्रधानभूते विधेये कर्मणि, विधेयभेदप्रयुक्त-वाक्यभेदस्य अभावात् । विशिष्टस्य एकत्वात् हेतो. । अन्येन—वाक्यान्तरेण, न शिष्टा.—न विहितार्थेदिति यावत् । विशिष्टघटकस्य विशेषणादेर्यत्र प्रमाणा-न्तरेण प्राप्तिर्नास्ति तत्र विशिष्टविधान सम्भवतीति भावः ॥९॥

### बर्हिरादिशब्दानां जातिवाचित्वाधिकरणम् ॥७॥

## बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥१०॥

'बर्हिरादाय गावो गताः, क्रय्यमाज्यम्' एवमादिलौकिके बर्हिरादिषु प्रयोगदर्शनात्, बर्हिरादिशब्दाः न संस्कारनिमित्तकाः, अपि तु जातिनिमित्तका एवेति ॥१०॥

**प्रोक्षण्यादीनां यौगिकत्वाधिकरणम् ॥८॥**

## प्रोक्षणीष्वर्थसंयोगात् ॥११॥

दर्शपूर्णमासप्रकरणस्था–'प्रोक्षणीरासादयेति' श्रुतिः। तस्यां प्रोक्षणीशब्दः–प्रकर्षेण उक्ष्यते आभि. इति व्युत्पत्त्या प्रकृष्टोक्षणसाधनत्वरूपार्थसम्बन्धात् यौगिक एव, न संस्कारनिमित्तः, नापि जातिं निमित्तीकृत्य प्रवृत्त इति सिध्दान्तः ॥११॥

**निर्मन्थ्यशब्दस्य यौगिकत्वाधिकरणम् ॥९॥**

## तथा निर्मन्थ्ये ॥१२॥

अग्निचयनप्रकरणे 'निर्मन्थ्येनेष्टकाः पचन्ती' ति श्रूयते। तत्र-निर्मथनसाध्ये वन्हौ अरणिनिर्मथनजन्यत्वरूपार्थसयोगात्, **तथा**–यौगिक एव **निर्मन्थ्यशब्दः** ॥१२॥

**वैश्वदेवादिशब्दानां नामधेयताधिकरणम् ॥१०॥**

## वैश्वदेवे विकल्प इति चेत् ॥१३॥

वैश्वदेव–वरुण–प्रघास–साकमेध–शुनासीरीयेति पर्वचतुष्टयोपेतचातुर्मास्ययागप्रकरणे प्रथमे पर्वणि विहितानामग्न्याद्यष्टाना. यागाना सन्निधौ 'वैश्वदेवेन यजेत' इत्याम्नायते। तत्र, विश्वेदेवा. देवता अस्येति देवतातद्धितेन विश्वेदेवतारूपो गुणः तत्तद्यागविहिताग्न्यादिदेवताभि. सह विकल्पेन तेषु यागेषु विधीयते इति चेत् ॥१३॥

## न वा प्रकरणात् प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्यस्य ॥१४॥

प्रत्यक्षश्रुतिविहिताग्न्यादिदेवताभिः सह प्रकरणप्राप्तविश्वेदेवाना

विकल्पो न सम्भवति । विषमशिष्टत्वात् । समबलयोर्हि विकल्पः । न हि प्रकरण श्रुतस्य द्रव्यादेर्बाधने समर्थम् । अतो वैश्वदेवपदमाग्नेयादियागानां नामधेयमिति सिद्धम् ॥१४॥

## मिथश्चानर्थसम्बन्धः ॥१५॥

वैश्वदेवेनेति सकृदुच्चरित शब्द सन्निहिताऽऽग्नेयादिगुणविशिष्टयागगण लक्षयिष्यति । तस्मिंश्च विश्वान् देवान् विधास्यतीति वक्तु न युक्तम् । न हि सकृदुच्चरिते शब्दे लक्षकत्वविधायकत्वयो मिथ-परस्पर सम्बन्ध सम्भवति । अतोऽपि नामधेयत्व तस्येति ॥१५॥

## परार्थत्वात् गुणानाम् ॥१६॥

द्रव्यादिगुणाना परार्थत्वात्-प्रधानशेषत्वेन अप्राधान्यात्, न प्रधान कर्मावृत्तिप्रयोजकत्व सम्भवति । देवताभेदे सति तु सर्वोद्देशेन युगपत्त्यक्तु मशक्यत्वात् प्रधानकर्मभेद, न तु सान्नाय्यवत् द्रव्यभेदेऽपीत्यर्थ ॥१६॥

### वैश्वानरेष्टौ अष्टत्वादेरर्थवादत्वाधिकरणम् ॥११॥

## पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥१७॥

ये ज्ञातपूर्वार्थाभिधायका श्रुतिभागा ते, विधानसमर्था मा भवन्तु । यथा-'वायुर्वै क्षेपिष्ठा देवता' इत्यादय । 'वैश्वानर द्वादशकपाल निर्वपेत् पुत्रे जाते,' 'यदष्टाकपालो भवति गायत्र्यैवेन ब्रह्मवर्चसेन पुनाति' इत्यादिसमाम्नाये तु तत्सामर्थ्य-ब्रह्मवर्चसादिफलार्थम् अष्टाकपालत्वादिविधानसामर्थ्यं वर्तत एव । अज्ञातपूर्वार्थाभिधायकत्वात् । अतो-गुणविधायका-अष्टाकपाल इत्यादय शब्दा ॥१७॥

## गुणस्य तु विधानार्थेऽतद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्ताऽस्ति ॥१८॥

तु शब्देन पूर्वपक्षो निरस्यते । अष्टाकपालत्वादिगुणविधानार्थे 'यदष्टाकपालो भवती' त्यादिशब्दे स्वीक्रियमाण 'वैश्वानर द्वादशकपाल

निर्वपेत्' इत्युत्पत्तिवाक्यविहितद्वादशकपालत्वगुणावरुद्धे जातेष्टियागप्रयोगे **अतद्गुणाः**—उत्पन्नशिष्टतया गुणत्वेनान्वेतुमनर्हास्ते—अष्टाकपालत्वादयः पदार्थाः, निष्प्रयोजनाः स्युः। यस्मात्, अष्टाकपालत्वादिकम्प्रति तस्मिन्प्रयोगे सार्थक्यं नास्ति। अपेक्षाया अभावात्। अतो—अर्थवादा एते अष्टाकपालत्वादयः इति सिद्धान्तः ॥१८॥

## तच्छेषो नोपपद्यत इति चेत् ॥१९॥

अष्टाकपालादिवाक्यं द्वादशकपालविधिशेषः, इति न युक्तम्। द्वादशकपालककर्मणः अष्टाकपालकपदेन निर्देशासम्भवेन तत्स्तुतिपरत्वं न सम्भवतीति चेत् ॥१९॥

## अविभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन् ॥२०॥

**विधानार्थे**—विधेये द्वादशकपाले, अष्टाकपालादीनां शते पंचाशदिति न्यायेन **अविभागात्**— विद्यमानत्वात्, तदवयवाननूद्य लक्षणया द्वादशकपालकर्मस्तुत्यर्थतयोपपद्येरन्नित्यर्थः ॥२०॥

## कारणं स्यादिति चेत् ॥२१॥

लक्षणया द्वादशकपालस्तुतिकल्पनापेक्षया ' ब्रह्मवर्चसादिफलकामस्य अष्टाकपालादिः ' इति तत्तत्फलकारणत्वेन अष्टाकपालादेर्विधानं भविष्यतीति चेत् ॥२१॥

## आनर्थक्यादकारणम्, कर्तुर्हि कारणानि गुणार्थे विधीयन्ते ॥२२॥

' वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते ' इत्युपक्रम्य ' यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवती ' त्युपसंहारादेकवाक्यमिदमित्यसन्दिग्धम्। तन्मध्ये अष्टाकपालादिः श्रूयते। अतः—सः पुत्रगतपूतत्वादिफले कारणं भवितुमयोग्यः। निष्फलत्वप्रसङ्गात्। यतः, ' गुणानां कर्तृसमवेतफलजनकत्वम् ' इति नियमात् तादृश-

फलाभावेन निष्फलत्वमेव तस्य। पृथक् फलाय विधाने तु वाक्यभेद-प्रसङ्ग। तत—अर्थवादत्वमेव तस्येति सिद्धम् ॥२२॥

## यजमानशब्दस्य प्रस्तरादिस्तुत्यर्थताधिकरणम् ॥१२॥

## तत्सिद्धिः ॥ २३ ॥

'यजमान प्रस्तर, यजमान एककपाल' इत्यत्र तस्य—यजमान-कार्यस्य, सिद्धिः—सम्पादन—तत्कार्यैककारित्वम्। तथ, प्रस्तरादावस्तीति यजमानशब्देन प्रस्तरादि राजशब्देन पत्तिगणक इव स्तूयत इत्यर्थ ॥२३॥

## आग्नेयादिशब्दानां ब्राह्मणादिस्तुत्यर्थताधिकरणम् ॥१३॥

## जातिः ॥२४॥

जातिः—जननम्, 'आग्नेयो वै ब्राह्मण' इत्यत्रापि अग्निब्राह्मणयो रेकप्रजापतिमुखप्रभवत्वात्, गौण्या वृत्त्या आग्नेय इति ब्राह्मणस्तुतिरेवेति पूर्ववदर्थवाद। न गुणविधि ॥२४॥

## यूपादिशब्दानां यजमानस्तुत्यर्थताधिकरणम् ॥१४॥

## सारूप्यात् ॥२५॥

'यजमानो यूपः, आदित्यो यू' इत्यत्र चक्षुर्गम्य-ऊर्ध्वत्व—तेजस्वि-त्वसामान्यात्—सादृश्यात्, यजमानाऽऽदित्यशब्दाभ्यां यूप स्तूयत इत्यर्थवाद ॥२५॥

## अपश्वादिशब्दानां गवादिप्रशंसताधिकरणम् ॥१५॥

## प्रशंसा ॥२६॥

अजादिषु पशुत्वस्य प्रत्यक्षसिद्धत्वात् 'अग्नीषोमीय पशुमालभेत' 'छागस्य वपाया मेदसोऽनुब्रूहि' इत्यादिना तेषा तत्र तत्र विधानात् पशुमात्रे प्रतिषेधानुपपत्ते 'पशवो गा अश्वा' इति गोऽश्वान् प्रशंसितुम् 'अपशवो वा अन्ये गो अश्वेभ्य' इति पशवोऽपि सन्त अजादयो निन्द्यन्ते। इति निन्दार्थवाद स। अथापि 'न हि निन्दा निन्द्य

निन्दितुं प्रवर्तते किन्त्वितरत् प्रशंसितु' मिति न्यायात् गोऽश्वादिप्रशंसायां तस्यास्तात्पर्यमिति भावः। एवम्—'अयज्ञो वा असत्रं वा' इत्यादिष्ववगन्तव्यम् ॥२६॥

### बाहुल्येन सृष्टिव्यपदेशाधिकरणम् ॥ १६ ॥

## भूमा ॥ २७ ॥

अग्निचयने 'सृष्टीरुपदधाती' ति श्रूयते। 'ब्रह्मासृज्यत भूतान्यसृज्यन्त' इत्यादयः सृष्टिशब्दोपेता मन्त्राः यासामिष्टिकानामुपधाने विद्यन्ते, ता इष्टकाः सृष्टिशब्देनाभिधीयन्ते उपधानार्थम्। 'तद्वानासामुपधाने' इति शब्दानुशासनशास्त्रसिद्धप्रक्रियया सृष्टिशब्दार्थयोर्निष्पादनं ज्ञेयम्। तत्र, लिङ्गप्रकरणाभ्यां प्राप्तमन्त्राननूद्य तद्विशिष्टमिष्टकानामुपधानमत्र विधेयम्। सत्येवम्, यद्यपि सृष्टिशब्दोपेताश्चतुर्दश मन्त्रास्तद्रहिताश्च त्रयः, अथापि भूमगुणयोगेन ते सर्वेऽपि मन्त्राः सृष्टिशब्दप्रयोगार्हा भवन्ति। अतः—प्राप्तत्वान्मन्त्राणां नात्र विधानम्, अपि तु सृष्टिशब्दः अर्थवादः— सप्तदशेष्टकास्तुत्यर्थ इति ॥ २७ ॥

### प्राणभृदादिशब्दानां स्तुत्यर्थताधिकरणम् ॥१७॥

## लिङ्गसमवायात् ॥२८॥

'प्राणभृत उपदधाति' इत्यत्र प्राणभृल्लिङ्गकमन्त्रानुवादेनेष्टकोपधानं विधीयते। पूर्वत्र सृष्टिलिङ्गानां बाहुल्यम्। अत्र त्वल्पत्वम्। एकस्यैव मन्त्रस्य प्राणभृल्लिङ्गकत्वेऽपि छत्रिन्यायेन तत्सहचरिताः सर्वे मन्त्राः प्राणभृच्छब्देन लक्ष्यन्ते। इत्येवं गुणवृत्तिहेतवो निर्दिष्टाः। तदुक्तम्—

तत्सिद्धिजातिसारूप्यप्रशंसालिङ्गभूमभिः।
षड्भिः सर्वत्र शब्दानां गौणी वृत्तिः प्रकल्पिता॥ इति ॥२८॥

### वाक्यशेषेण सन्दिग्धार्थनिरूपणाधिकरणम् ॥१८॥

## सन्दिग्धेषु वाक्यशेषात् ॥२९॥

' अक्ताः शर्करा उपदधाति ' ' वासः परिधत्ते ' इत्यादि श्रूयते । तत्र--केन अक्ताः, कीदृश च वास इत्येव संशये-' तेजो वै घृतम् ' ' एतद्वै सर्वदेवत्यं वासो यत् क्षौमम् ' एवमादिवाक्यशेषात् ' घृतेन अक्ताः, क्षौमं वासः परिधेयम् ' इति निर्णयो भवतीति स्पष्टमेव ॥२९॥

अव्यवस्थितानां सामर्थ्यानुसारेण व्यवस्थाधिकरणम् ॥१९॥

## अर्थाद्वा कल्पनैकदेशत्वात् ॥३०॥

' हस्तेनावद्यति, स्रुवेणावद्यति, स्वधितिनावद्यति ' इति श्रूयते । तत्र-अवदेयद्रव्याऽऽज्यपुरोडाशादिषु अवदानहेतूनां हस्तादीनां सामर्थ्यानुसारेणैव निर्णयो ज्ञेयः । ' आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी ' इति न्यायात् । यया शक्नुयात्तया तत्तदवदेयद्रव्यं हस्तादिनाऽवद्य होतव्यमिति तेषामवदानहेतूनां व्यवस्थेति भावः ॥ ३० ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां प्रथमाध्यायस्य चतुर्थः पादः ।

## प्रथमाध्यायश्च सम्पूर्णः ।

---*---

॥ श्रीः ॥

## अथ द्वितीयाध्यायस्य प्रथमः पादः ॥

अपूर्वस्य आख्यातपदगम्यताधिकरणम् ॥१॥

## भावार्थाः कर्मशब्दाः, तेभ्यः क्रिया प्रतीयेत, एष ह्यर्थो विधीयते ॥१॥

भावार्थाः—भावः-भावना अन्योत्पादानुकूलात्मिका त्रिकादिप्रत्ययगम्या सामान्यक्रिया । स एव मुख्योऽर्थो येषां ' प्रकृतिप्रत्ययौ सहार्थं

'भूतस्तत्र प्रत्ययः प्राधान्येन' इति नियमात्, ते भावार्थाः । **कर्मशब्दाः**—यजत्यादिक्रियाविशेषवाचकधातुप्रतिपाद्याः । तेभ्य एव—'यजेत्, जुहुयात्, दद्यात्' एवमादिकर्मशब्देभ्यः, **क्रिया**—फलोत्पादानुरूपा उक्तभावनात्मिका प्रतीता स्यात् । **एष ह्यर्थो विधीयते**—उपदिश्यते लिङादिभिः प्राधान्येन । यजत्यादिधात्वर्थस्तु विधेयफलभावनाकरणत्वेनैव सम्बध्यते । द्रव्यगुणादिश्च धात्वर्थोपकारित्वेन । न करणत्वेनेत्यर्थः ॥१॥

## सर्वेषां भावोऽर्थ इति चेत् ॥२॥

कर्मशब्दा एव भावनान्वयिनः, न द्रव्यगुणशब्दा इत्यत्र विनिगमकस्याभावात् साकाङ्क्षत्वेन तौल्यात् **सर्वेषा**मेव पदार्थानां **भावोऽर्थः**—भावनायामेवान्वयः । तथा च—धात्वर्थस्येव उपपदार्थद्रव्यगुणादेरपि फलभावनान्वयस्वीकारात् सोमादेरपि फलसम्बन्धो युज्यत इति चेत् ॥२॥

## येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात्तेभ्यः पराऽऽकाङ्क्षा भूतत्वात् स्वे प्रयोगे ॥३॥

'सोमेन यजेत, हिरण्यमात्रेयाय ददाति, तस्मात्सुवर्णं हिरण्यं धार्यम्' इत्यादिवाक्येषु **येषाम्**—सोमादिशब्दानाम्, उच्चारणोत्पत्तिसमये स्वे स्वेऽर्थे प्रयुज्यमानानाम्, **रूपोपलब्धिः**-स्वस्ववाच्यार्थस्य सिद्धरूपता, **तानि नामानि**। **तस्मात्**—नाम्नां सिद्धार्थबोधकत्वात्, **तेभ्यः**—नामार्थेभ्यः, **पराऽऽकाङ्क्षा**-साधनाकाङ्क्षा, नास्तीति शेषः । कुतः ? **भूतत्वात्**—उच्चारणसमये तेषां विद्यमानत्वादित्यर्थः ॥३॥

## येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि, तस्मात्तेभ्यः प्रतीयेताश्रितत्वात्प्रयोगस्य ॥४॥

तुर्नामवैलक्षण्यं द्योतयति । **येषाम्**-'यजेत, दद्यात्, जुहुयात्' इत्यादिशब्दानाम्, उच्चारणोत्पत्तिसमये स्वस्वप्रतिपाद्यार्थे इन्द्रियसम्प्रयोगो न विद्यते । स्ववाच्यार्थो न सिद्ध इति भावः । **तानि आख्यातानि । तस्मात्**-

तेषामसिद्धार्थबोधकत्वात्, अनेकेभ्यः पदार्थेभ्यः स्वसिद्ध्यै साधनाऽऽकाङ्क्षा झटिति प्रतीयेत। किं च, प्रयोगस्य—यागेन भावयेदिति समानपदश्रुत्या करणत्वेन यागसम्बन्धस्यैव, आश्रितत्वात् तयैव श्रुत्या फलसम्बन्धोऽपि यागस्यैवोचितः, न द्रव्यादेः। द्रव्यादेस्तु यागेन सह सम्बन्धोऽस्तीति न वैय्यर्थ्यं तेषामिति भावः ॥४॥

## अपूर्वस्य अस्तित्वाधिकरणम् ॥२॥

## चोदना पुनरारम्भः ॥५॥

आरभ्यत इत्यारम्भः—अपूर्वम्, अस्तीति शेषः। कुतः ? यतश्चोदना—'स्वर्गकामो यजेत' इत्यादिविधिः, यागस्य स्वर्गसाधनत्वं ब्रूते। तच्च क्षणिकस्य यागस्य न सम्भवति। तस्य भङ्गत्वात्, स्वर्गस्य कालान्तरभावित्वात्, विना कारणं कार्यानुत्पादाच्च। अतो-यागजन्यं तत्कर्तृसमवेतं यागफलसम्बन्धपूर्वं स्वीकार्यमिति भावः ॥५॥

## कर्मणां गुणप्रधानभावविभागाधिकरणम् ॥३॥

## तानि द्वैधं गुणप्रधानभूतानि ॥६॥

तानि—'जुहोति, यजति, ददाति, दोग्धि, पिनष्टि, विलापयती' इत्यादीनि क्रियाप्रतिपादकानि आख्यातानि, द्वैधम्—द्विप्रकाराणि भवितुमर्हन्ति। कानिचित् प्रधानकर्मवाचकानि, कानिचिच्चाप्रधानकर्मप्रतिपादकानि-गुणकर्माणीति तेषां विभागः ॥६॥

## यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ॥७॥

यैः—कर्मभिः, द्रव्यमुत्पादयितुम् आप्तुं संस्कर्तुं विकर्तुं वा नेष्यते, तानि—यजत्यादीनि कर्माणि, प्रधानभूतानि। तेषु द्रव्यस्य गुणभूतत्वात्। श्रुत्यादिप्रमाणेनेत्यर्थः ॥७॥

## यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात् ॥८॥

**यैस्तु**-कर्मभिः, द्रव्यं संस्कर्तुम् उत्पादयितुम् आप्तुं विकर्तुं वा इष्यते, तानि 'व्रीहीन् प्रोक्षति, सोमं पिनष्टि' इत्यादीनि अप्रधानकर्माणि गुणभूतानीत्यर्थः । **तस्य**--तस्यकोयाद्व्रातस्य, **द्रव्यप्रधानत्वात्**--द्वितीयादिश्रुत्या द्रव्यप्रधानकगुणभूतकर्मबोधकत्वादिति भावः ॥८॥

### संमार्जनादीनामप्रधानताधिकरणम् ॥४॥

## धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥९॥

'स्रुचः संमार्ष्टि, परिधिं संमार्ष्टि, पुरोडाशं पर्यग्निकरोति' इत्यादिश्रुतं दर्शपूर्णमासप्रकरणे । तत्र तुषविमोकादिवत् दृष्टोपकाराजनके संमार्गपर्यग्निकरणादिरूपे **धर्ममात्रे**—पावककर्मणि, **कर्म प्रयाजवत्**-प्रधानकर्मत्वं स्यात् । द्रव्यगतदृष्टोपकारस्य **अनिर्वृत्ते**—तैः समार्गादिकर्मभिरनिष्पत्तेरिति ॥९॥

## तुल्यश्रुतित्वाद्वा इतरैः सधर्मा स्यात् ॥१०॥

**इतरैः**-अवघातादिगुणकर्मभिः, **सधर्मा**--गुणकर्मत्वेन तुल्यः स्यात्संमार्गादिः । कुतः ? **तुल्यश्रुतित्वात्**—द्रव्यगतप्राधान्यबोधकद्वितीयाश्रुतेरत्रत्रात्र च समानत्वात् । दृष्टोपकारो न स्याच्चेददृष्टोपकारः स्यादेवेति भावः ॥१०॥

## द्रव्योपदेश इति चेत् ॥११॥

'सक्तून् जुहोति' इत्यादौ गुणभूतेऽपि द्वितीयादर्शनात्, तद्वदत्रापि गुणत्वेनैव **द्रव्यस्योपदेशः** स्यादिति चेत् ॥११॥

## न तदर्थत्वाल्लोकवदस्य च शेषभूतत्वात् ॥१२॥

न करणार्थे द्वितीया । अपि तु 'कर्मणि द्वितीया' (पा. सू २।३।२) इत्यनुशासनात् तस्याः कर्मार्थत्वमेव । ग्रामं गच्छति, घटं करोति, ओदनं

प्रकृतीत्यादिलौकिकप्रयोगेऽपि तस्याः कर्मार्थत्वं परिदृश्यते । न हि गम्यादि करणभूते अश्वादौ अश्वं दण्डं काष्ठानीति प्रयोगो दृश्यते । अतः स्रुचस्संमार्ष्टीत्यादौ स्रुगादिवृत्तिप्राधान्यवाचिद्वितीयाश्रुतेः सत्वात्स्रुगादयः प्रधानभूताः, संमार्जनादिकं त्वप्रधानमिति । सक्तून् जुहोतीत्यत्र तु सक्त्वादेः होमार्थत्वात् प्राधान्यासम्भवेनागत्या तत्र करणत्वलाक्षणिकी द्वितीयेत्यर्थः ॥१२॥

॥ स्तोत्रादिप्राधान्याधिकरणम् ॥५॥

## स्तुतशस्त्रयोस्तु संस्कारो याज्यावद् देवताभिधानत्वात् ॥१३॥

' आग्नेयं स्तुवते, प्रउगं शंसति ' इत्यादिस्तोत्रशस्त्रयोः ' याज्यामन्वाहेति याज्यावद्देवताप्रकाशकत्वात् देवतास्मरणेन तत्संस्कार एव फलम् । अतो याज्यावत्संस्कारकर्मत्वं स्तोत्रशास्त्रयोरिति ॥१३॥

## अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात् ॥१४॥

ग्रहयागान्तर्वर्तिमाहेन्द्रयागसन्निधौ क्रमे च ' अभि त्वा शूर नोनुमः ' इति केवलेन्द्रलिङ्गकः प्रगाथ आम्नातः । स्तोत्रशस्त्रयोः संस्कारकर्मत्वे तु देवतानामीपेतचोदनाप्रतिपाद्यदेवतारूपार्थे प्रयुक्तमन्त्रस्याङ्गभूतत्वात् अर्थेन-तन्मन्त्रप्रतिपाद्यदेवतासंस्काररूपप्रयोजनानुसारेण, महेन्द्रयागादपकृष्य यत्र सा देवता तत्र नीयेत । तथा सति संनिधिक्रमयोरुपरोध स्यात् । अतस्तयोर्वैय्यर्थ्यापत्तिप्रसङ्गात् संस्कारकर्मत्वपक्षो हेय इत्यर्थः ॥१४॥

## वशावद्वा गुणार्थं स्यात् ॥१५॥

वशावत् ' सा वा. एषा सर्वदेवत्या यदजा - वशा, वायव्यामालभेत ' इति वशागुणेन विहितस्यापि पशोर्वशात्वगुणं विहाय ' छागस्य वपाया मेदसोऽनुब्रूहि ' इति छागत्वेन प्रख्यायको मन्त्रः स्वीक्रियते । तद्वन्महेन्द्रयाग एव महत्त्वगुणं विनिर्मुच्य इन्द्रप्रख्यायको निर्दिष्टमन्त्रः स्यात् । गुणे चोदिते निर्गुणेनाभिधानं भविष्यतीति नापकर्ष उत्कर्षो वा मन्त्रस्येति ॥१५॥

## न श्रुतिसमवायित्वात् ॥१६॥

नेदं युक्तम्। कुतः ? श्रुतिसमवायात् 'साऽस्य देवतेति देवतावाचकतद्धितश्रुत्या सम्बन्धात्। महेन्द्रपदात्प्रवृत्तस्तद्धितः 'प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्' इति नियमात् स्वप्रकृत्यर्थं महेन्द्रमेव देवतात्मना बोधयेत्, न प्रकृत्यर्थैकदेशम् इन्द्रम्। इत्थमिन्द्रस्य महेन्द्रस्य च भिन्नत्वात् केवलेन्द्रलिङ्गकमन्त्रस्योत्कर्षो दुर्वार इति भावः। यत्तु 'महान् वा अयमभूत् यो वृत्रमवधी' दितीन्द्रस्यैव वृत्रवधोत्तर महेन्द्रत्वमित्युच्यते तत् वेदस्यादिमत्त्वदोषप्रसक्तेरत्याज्यमेव। तथा चान्य एवेन्द्रो महेन्द्रादिति मन्त्रार्थः ॥१६॥

## व्यपदेशभेदाच्च ॥१७॥

'वह्न दुग्धीन्द्राय देवेभ्यः, वह्न दुग्धि महेन्द्राय देवेभ्यो हविः' इति निर्देशभेदात् नेन्द्रमहेन्द्रयोर्देवतयोरैक्यम्। देवतैकत्वे श्रौतनिर्देशभेदस्य वैयर्थ्यं स्यादित्यर्थः ॥१७॥

## गुणश्चानर्थकः स्यात् ॥१८॥

इन्द्रमहेन्द्रयोरैक्ये महत्त्वरूपगुणकथनं व्यर्थं स्यादित्याह-गुण इति ॥१८॥

## तथा याज्यापुरोरुचोः ॥१९॥

तथा—तयोरैक्ये, इन्द्रमहेन्द्रदेवत्ययोर्याज्यापुरोऽनुवाक्ययोः 'महानिन्द्रो य ओजसा' ऐन्द्र 'सानसिं रयिम्' इति भेदेन पाठो निष्फलः स्यात्। इत्येवमादिभ्यो हेतुभ्यस्तयोर्भेद एव ॥१९॥

## वशायामर्थसमवायात् ॥२०॥

पूर्वं वशावदित्युक्तदृष्टान्तस्य वैषम्यमाह—वशायामिति। वशायाम्-वन्ध्यायां छाग्याम्, वन्ध्यात्वरूपार्थस्य प्रत्यक्षेण सम्बन्धावगमात्, इन्द्रपदोपस्थाप्ये त्वर्थे महत्त्वरूपो गुणः शास्त्रैकसमधिगम्यः इति वैषम्यं बोध्यम् ॥२०॥

## यद्येति वाऽर्थवत्त्वात्स्यात् ॥ २१ ॥

च फलत एव वक्तुं न्याय्यत्वात्, इति तयोरपूर्वार्थत्वे श्रौतोऽर्थः सम्बन्धः समुपपद्यते । स्मरणार्थत्वे तु सा प्रमाणभूता श्रुतिः वदर्थिना स्यात् । *स्मरणस्यैकरूपत्वादित्यर्थः ॥२७॥

## अभिधानं च कर्मवत् ॥२८॥

'प्रउगं शंसति' 'निष्केवल्यं शंसति' इति स्तोत्रशस्त्रयोरभिधानमपि प्रधानकर्मवद्द्वितीयान्तं दृश्यते । यस्य कर्मणो द्वितीयान्तं नाम तत्प्रधानकर्म यथा— 'अग्निहोत्रं जुहोती'ति व्याप्तेः ॥२८॥

## फलनिर्वृत्तिश्च ॥२९॥

'एष वै स्तुतशस्त्रयोर्दोहः' इति स्तोत्रशस्त्राभ्यामेव फलस्योत्पत्तिः श्रूयते । न देवतायाः । तस्मादुक्तेभ्यो हेतुभ्यः प्रधानकर्मणी स्तोत्रशस्त्रे नाप्रधानकर्मणीति सिद्धम् ॥२९॥

मन्त्रविधायकत्वाधिकरणम् ॥६॥

## विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥३०॥

'यजेत स्वर्गकामः' इत्यादिर्विधिः 'देवाश्चयामिर्यजते, ददाति च ज्योगिताभिः स च ते गोपनिः सह' इत्यादिर्मन्त्रः । एवं विधिवाक्यमन्त्रवाक्यगतयजेतददातीत्याद्याख्यातपदयोः ऐकार्थ्यम्—विधिरूपएकार्थप्रतिपादकत्वम् । विधायकशब्दस्योभयत्र समानत्वादित्यर्थः ॥३०॥

## अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् ॥३१॥

अपि वेति पूर्वपक्षव्यावृत्तिः । मन्त्रः—एवजातीयकमन्त्रादिगतमाख्यातपदम्, स्वसमभिव्याहृतयच्छब्दवशात् स्वशक्यार्थप्रकाशनमात्रपरं स्यात् । न विधायकम् । यच्छब्देन विधिशक्तेः प्रतिबन्धादिति भावः । तदुक्तं वार्तिकेन

एषामाख्यातशब्दानां यच्छब्दाद्युपबन्धनात्
विधिशक्तिः प्रणश्येत ते सर्वेऽत्राभिधायकाः ॥३१॥ इति ।

मन्त्रलक्षणाधिकरणम् ॥७॥

## तच्चोदकेषु मन्त्राख्या ॥३२॥

'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति वचनान्मन्त्रो ब्राह्मणं चेति द्विविधो वेदः। तत्र 'अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रयीविदा विदुः' इति वेदप्रयुक्तमन्त्रशब्दार्थनिर्णयाय प्रसङ्गतो मन्त्रलक्षणमाह **तच्चोदकेष्विति**। प्रयोगसमवेतार्थस्मारकेषु वेदवचस्सु **मन्त्रः इत्याख्या**-नामधेयं वर्तत इत्यर्थः। तथा च विहितयागाद्यनुष्ठानसम्बन्ध्यर्थप्रकाशकत्वं मन्त्रत्वमिति मन्त्रलक्षणं पर्यवस्यति। वस्तुतस्तु, मन्त्रोऽयमिति अभियुक्तानां याज्ञिकानां समाख्यैव निर्दुष्टं मन्त्रलक्षणं बोध्यम् ॥३२॥

ब्राह्मणलक्षणाधिकरणम् ॥८॥

## शेषे ब्राह्मणशब्दः ॥३३॥

'एतद्ब्राह्मणान्येव पञ्चहवींषि' इति वेदप्रयुक्तब्राह्मणशब्दार्थनिश्चयार्थं तल्लक्षणमपि प्रसङ्गतो ज्ञेयम्। **शेषे**—मन्त्रभिन्नवेदभागे, ब्राह्मणशब्दो वाचकत्वेन वर्तते। मन्त्रातिरिक्तवेदत्वं ब्राह्मणत्वमिति यावत् ॥३३॥

ऊहादीनाममन्त्रताधिकरणम् ॥९॥

## अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः ॥३४॥

**अनाम्नातेषु**—पठ्यमानवेदान्तर्गतेषु ऊहप्रवरनामधेयेषु, **अमन्त्रत्वम्**—मन्त्रत्वं नास्ति। यतः-साक्षात्पठितेष्वेव मन्त्रब्राह्मणविभागः स्यात्। ऊहादीनां प्रत्यक्षतो वेदापठितत्वेन वेदः इत्यभियुक्तप्रसिद्ध्यविषयत्वात् न तेषां मन्त्रत्वमिति भावः ॥३४॥

ऋग्लक्षणाधिकरणम् ॥१०॥

## तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥३५॥

'यं ऋषयस्त्रयीविदा विदुः ऋचः सामानि यजूंषीति' इति वेदपठितऋगादिशब्दार्थविज्ञानाय आदौ ऋग्लक्षणमाह—**तेषामिति**। मन्त्राणां मध्ये

गायत्र्यादिच्छन्दोविशेषवशेन यत्र पादव्यवस्था विद्यते स मन्त्रो ऋक्-शब्देन व्यवह्रियते । वृत्तानुसारतः पादव्यवस्थावन्मन्त्रत्वम् ऋक्त्वमिति भावः ॥३५॥

सामलक्षणाधिकरणम् ॥११॥

## गीतिषु समाख्या ॥३६॥

**गीतीषु**—वामदेव्यरथन्तरादिषु गानेषु, **समाख्या**—सामनामप्रयोगः तत्सम्बन्धान्मन्त्रोऽपि सामशब्देनोच्यते इत्यर्थः । तथा च मन्त्रत्वसमानाधिकरणगीतित्व, गीतिविशिष्टमन्त्रत्वं वा सामत्वमिति सामलक्षणम् ॥३६॥

यजुर्लक्षणाधिकरणम् ॥१२॥

## शेषे यजुः शब्दः ॥३७॥

**शेषे**—ऋक्सामभिन्ने वेदभागे, यजु शब्दो व्यवह्रियते । ऋक्सामभिन्नमन्त्रत्वं यजुष्ट्वमित्यर्थः ॥३७॥

निगदानां यजुष्ट्वाधिकरणम् ॥१३॥

## निगदो वा चतुर्थः स्याद्धर्मविशेषात् ॥३८॥

**निगदो** नाम उक्तेभ्यस्त्रिभ्यः प्रकारेभ्यो भिन्नश्चतुर्थः प्रकारः स्याद्वेदस्य । कुतः ? धर्मविशेषात् ' उच्चैर्ऋचा क्रियते ' ' उच्चैः साम्ना ' ' उपांशु यजुषा ' ' उच्चैर्निगदेन ' इति यजुर्धर्मातिरिक्तस्य उच्चैस्त्वस्य निगदधर्मविशेषस्योपदेशात् यजुरपेक्षया भेदस्तत्रावश्यकः । पादव्यवस्थाविरहेण न ऋक्त्वं तस्य । गीतिरूपत्वाभावात्सामत्वमपि न इति ॥३८॥

## व्यपदेशाच्च ॥३९॥

*' इमे निगदा , इमे यजूंषि ' इति भिन्नाख्या व्यवहारादपि यजुर्भ्योऽन्ये निगदा इति ॥३९॥*

## यजूंषि वा तद्रूपत्वात् ॥४०॥

यजूंष्येव निगदाः। कुतः? तद्रूपत्वात्—ऋक्सामभिन्नमन्त्रत्वरूपयजुर्लक्षणवत्त्वात्, प्रश्लिष्टपाठात्मकत्वाच्च ॥४०॥

## वचनाद्धर्मविशेषः ॥४१॥

'उच्चैर्निगदेन इति वचनबलाद्धर्मविशेषो' निगदस्य यजुरूपत्वेऽप्युपपद्यते पुरुषान्तरप्रत्यायनायेति भावः ॥४१॥

## अर्थाच्च ॥४२॥

परप्रत्ययनरूपदृष्टार्थवत्त्वाच्च निगदानामुच्चैस्त्वधर्मो युज्यत इत्यर्थः। न हि 'अग्नीदग्नीन् विहर' इत्यादि निगदस्योपांशूच्चारे परप्रत्ययनं सम्भवति ॥४२॥

## गुणार्थो व्यपदेशः ॥४३॥

यजुर्भ्यो भिन्नत्वेऽपि निगद इति व्यपदेशः प्रकर्षेण गद्यमानत्वरूपगुणयोगात्सूपपद्यते ब्राह्मणपरिव्राजकवत् ॥४३॥

## सर्वेषामिति चेत् ॥४४॥

उच्चैस्त्वगुणसाम्येन ऋगादीनामपि निगदत्वापत्तिरिति चेत् ॥४४॥

## न ऋग्व्यपदेशात् ॥४५॥

गुणसाम्येऽपि न ऋचां निगदत्वप्रसक्तिः। कुतः? 'अयाज्या वै निगदाः तस्मादृचैव यजन्ति' इति ऋचां निगदभिन्नत्वव्यपदेशात्। गदतिस्तु अपादबद्धाक्षरसमूहवाचकः, इति उपांशुभिन्नस्वरयुक्तापादबद्धमन्त्राक्षरत्वमेव निगदमदशक्यतावच्छेदकम्। तस्य च ऋगादिष्वभावात् न तत्र निगदत्वप्रसक्तिरिति भावः ॥४५॥

एकवाक्यत्वलक्षणाधिकरणम् ॥१४॥

## अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥४६॥

यत् वाक्यघटकपदानां विभागे साकाङ्क्षं—शाब्दबोधाजनकम् अविभागे चैकार्थप्रतिपादकं तदेकं वाक्यमित्यर्थः ॥४६॥

वाक्यभेदाधिकरणम् ॥१५॥

## समेषु वाक्यभेदः स्यात् ॥४७॥

समेषु—परस्पराऽऽकाङ्क्षारहितेषु पदेषु, वाक्यभेदः—भिन्नवाक्यत्व-मर्थैकत्वेऽपि स्यादित्यर्थः ॥४७॥

अनुषङ्गाधिकरणम् ॥१६॥

## अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्य-योगित्वात् ॥४८॥

वाक्यपरिसमाप्तिः—समाप्तवाक्यरूपनिराकाङ्क्षता, तद्धेतुः पूर्ववाक्ये जनितान्वयबोधपदस्य तत्समूहस्य वा उत्तरवाक्ये अन्वयार्थमभिसन्धानात्मकः समनुषङ्गः कार्यः। कुतः? सर्वेषु वाक्येषु आकाङ्क्षापरिपूरकत्वस्य तुल्यत्वादित्यर्थः ॥४८॥

व्यवेतानुनुषङ्गाधिकरणम् ॥१७॥

## व्यवायान्नानुषज्ज्येत ॥४९॥

यत्र तु असम्बन्धिपदव्यवधानमस्ति । तत्र पूर्ववाक्ये विद्यमानमपि सम्बन्धार्हं पदम् असम्बन्धिपदव्यवधानात् तदुत्तरवाक्ये नानुषज्ज्यते । तत्राध्याहारः कार्य इति भावः ॥४९॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां द्वितीयाध्यायस्य प्रथमः पादः ॥१॥ श्रीः ॥

# ॥ अथ द्वितीयाध्यायस्य द्वितीयः पादः ॥

शब्दान्तरादिभिः कर्मभेदनिरूपणमेतत्पादार्थः । तत्रादौ—
अङ्गापूर्वभेदाधिकरणे सूत्रम् ॥१॥

## शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥१॥

ज्योतिष्टोमप्रकरणे 'सोमेन यजेत', 'दाक्षिणानि जुहोति' 'हिरण्यमात्रेयाय ददाति' इत्यादीनि अपर्यायधातुभेदभिन्नानि आख्यातान्तानि पदानि श्रूयन्ते । तेषु **शब्दान्तरे**—धातुभेदे सति, **कर्मभेदः**—भावनायास्तज्जन्यापूर्वस्य च भेदः । कुतः ? **कृतानुबन्धत्वात्** —कृतः अनुबन्धः-भावनायाः परिच्छेदः—व्यावर्तनं—पार्थक्यं येन सः कृतानुबन्धः, तस्य भावस्तत्त्वं तस्मात् । कार्यकारणयोरन्यन्तरस्य वैजात्येऽपरवैजात्यस्यापरिहार्यत्वेन भावनाविशेषणीभूतधात्वर्थभेदेन भावनाया अपि भेद इति भावः ॥१॥

समिदाद्यपूर्वभेदाधिकरणम् ॥२॥

## एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यात् ॥२॥

दर्शपूर्णमासप्रकरणे 'समिधो यजति' 'तनूनपातं यजति' 'इडो यजति' 'बर्हिर्यजति' 'स्वाहाकारं यजती' ति श्रुतम् । तत्र एकस्यैव यजतेः **पुनः श्रवणं** गुणाविधायकत्वेन, **एवं**—शब्दान्तरवत् भावनाभेदकं भवेत्, अन्यथा **तदनर्थकं** स्यात् । यागनामत्वेन पर्यवसानात् 'दध्ना जुहोती'त्यादिवदन्यस्य विधेयस्य कस्यचिदभावात् सकृदुच्चारणेनैव कार्यसिध्दावसकृदुच्चारणं व्यर्थं स्यादिति भावः ॥ २ ॥

आघाराद्याग्नेयादीनामङ्गाङ्गिभावाधिकरणम् ॥ ३ ॥

## प्रकरणं तु पौर्णमास्यां रूपावचनात् ॥ ३ ॥

दर्शपूर्णमासप्रकरणे ' यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां

चाच्युतो भवति ' ' तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति ' ' ताभ्यामेतमेकादशकपालमग्नीषोमीयं पूर्णमासे प्रायच्छदिति ' ' ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायाम् ' इति श्रूयते । तथा तत्समीपे ' य एवं विद्वान् पौर्णमासीं यजते ' ' य एवं विद्वान् अमावास्यां यजते ' इत्यपि श्रूयते । तत्रेदं विद्वद्वाक्यद्वयं ' यदाग्नेयोऽष्टाकपालः ' इत्यादिभिर्वाक्यैर्विहितानामाग्नेयादिषड्यागानामनुवादकम्, नापूर्वस्य यजतेर्विधायकम् । कुतः ? पौर्णमासीमिति पौर्णमास्युपलक्षित षड्यागाना प्रकरणम् । अतस्तदनुवादकं तत् । किंच द्रव्यदेवतारूपयागस्वरूपानभिधायित्वान्नयागविधायकम् इत्यपि ज्ञेयम् । न हि रूपमन्तरेण यागस्य कर्तव्यत्वं सम्भवति ॥३॥

## विशेषदर्शनाच्च सर्वेषां समेषु हि अप्रवृत्तिः स्यात्॥४॥

' सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः ' एवमादिश्रुतिविहितविकृतीष्टिषु अतिदेशप्राप्तप्राकृताङ्गप्रयाजानुवादेन ' प्रयाजे प्रयाजे कृष्णलं जुहोति ' इति विशेषदर्शनादपि विद्वद्वाक्यद्वय प्रधानभूताग्नेयादिषड्यागानुवादकमिति निश्चीयते । तद्वाक्यद्वय नानुवादकम् । किंतु,स्वतन्त्रकर्मविधायकम् अत एव प्रधानकर्मबोधकमित्युक्तौ तु तत्पूर्वविहितानां प्रयाजाऽऽघारादीनामपि कथंचिद्द्रव्यदेवतासम्पादनेन सन्दंशन्यायेन च प्रधानकर्मत्वप्राप्त्या सर्वेषामेव तेषां ' यदाग्नेय ' इत्यारभ्य विद्वद्वाक्यान्तैर्वचनैर्विहितकर्मणां प्राधान्यस्य समत्वात् प्रदर्शितं विशेषदर्शनं सुतरामनुपपन्नं स्यात् । न हि प्रधानकर्मणां विकृतिष्वतिदेशो भवति । अपि त्वङ्गानामेव । अत. प्रयाजादीनां षड्यागाङ्गत्वं विद्वद्वाक्यं च तत्कालानुष्ठेयत्रिकद्वयानुवादकमिति सिध्यति ॥४॥

## गुणस्तु श्रुतिसंयोगात् ॥५॥

ननु, विद्वद्वाक्यविहितकर्मअनूद्य ' यदाग्नेयोऽष्टाकपालः ' इत्यादिवाक्येन तत्र द्रव्यदेवतारूपो गुणो विधीयते । कुतः ? श्रुतिसंयोगात् — विद्वद्वाक्यविहितकर्मानुवादक्षमस्य पौर्णमास्याममावास्यामिति शब्दस्य तत्र सत्वात् । तथा च विद्वद्वाक्यविहितकर्मणः प्रयाजादिकमङ्गमिति विकृतिषु विशेषदर्शनमपि प्रागभिहितं नानुपपन्नमिति भावः ॥५॥

## चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत ॥ ६ ॥

'यदाग्नेय' इत्यादिश्चोदना वा—कर्मोत्पत्तिविधिरेव । कुतः ? तत्रैकेन वाक्येनानेकेषां **गुणानां युगपत् शास्त्रात्**--विधानात् । अनेकगुणविशिष्टैककर्मोपदेशादित्यर्थः । **चोदितेतु**—वाक्यान्तरेण प्राप्ते कर्मणि बहूनां गुणानां विधाने हि, तेषां **तदर्थत्वात्**-प्रधानभूतकर्मार्थत्वात्, **तस्य तस्य**-गुणस्य विधानार्थं पृथक् पृथक् कर्म विधीयेत । 'ऋजुमाघारयति' 'सन्ततमाघारयति' इत्यादिवत् । तस्माद्यदाग्नेय इत्यादिर्न गुणविधिः । अपि तु द्रव्यदेवतारूपगुणद्वयविशिष्टकर्मोत्पत्तिविधिः । विद्वद्वाक्यं च तदनुवादकमिति । तदुक्तम्—

> प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
> अप्राप्ते तु विधीयेरन् बहवोऽप्येकयत्नतः ॥ इति ॥ ६ ॥

## उपदेशश्च तद्वत् ॥ ७ ॥

'*उभाणि ह वा एतानि हवींषि अमावास्यायां सम्भ्रियन्ते*' इति उभत्वापरपर्यायप्राधान्यव्यपदेशः, तथा 'आग्नेय प्रथमैन्द्रे उत्तरे' इति सहानुष्ठानव्यपदेशश्च विरुध्येत । गुणविधित्वे तु 'व्रीहिभिर्यजेत यवैर्वा' इतिवदप्राधान्यं विकल्पश्च स्यादिति भावः ॥७॥

## लिङ्गदर्शनाच्च ॥ ८ ॥

'चतुर्दश पौर्णमास्यामाहुतयः हूयन्ते, त्रयोदश अमावास्यायाम्' इति आहुतिपरिगणनात्मकलिङ्गदर्शनादपि कर्मविधायकानि 'यदाग्नेय' इत्यादीनि वाक्यानि । विद्वद्वाक्यन्तु तदनुवादकमिति, तस्य कर्मविधित्वे लिङ्गदर्शनमनुपपन्नं स्यादित्यर्थः ॥८॥

### उपांशुयाजापूर्वताधिकरणम् ॥ ४ ॥

## पौर्णमासीवदुपांशुयाजः स्यात् ॥९॥

'जामि वा एतद्यज्ञस्य क्रियते, यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति' 'विष्णुरुपांशु यष्टव्योऽजामित्वाय' 'प्रजापतिरुपांशु यष्टव्योऽजामित्वाय' 'अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति दर्शपूर्णमासप्रकरणपठितः 'उपांशुयाजमन्तरा यजतीति वाक्यश्रुतः उपांशुयाजः 'विष्णुरुपांशु यष्टव्य'इत्यादिवाक्यविहितयागत्रयानुवादकः पौर्णमासीवत्। यथा विद्वद्वाक्यस्थं पौर्णमासीपदमाग्नेयादियागसमुदायानुवादकं तद्वदित्यर्थः ॥९॥

## चोदना वाऽप्रकृतत्वात् ॥१०॥

'उपांशुयाजमन्तरा यजती'ति **चोदना वा**- कर्मोत्पत्ति विधिरेव, नानुवादः। कुतः? उपक्रमे कस्यचिदपि कर्मणः **अप्रकृतत्वात्**। 'विष्णुरुपांशु यष्टव्यः' इत्यादिस्तु न विधिः, अपि तु तस्यैवान्तराविहितस्योपांशुयाजस्यार्थवादः। अन्यथा, वाक्यभेदापत्तेरित्यर्थः ॥१०॥

## गुणोपबन्धात् ॥११॥

'यदन्वञ्चौ पुरोडाशौ' इति पुरोडाशसान्तत्यरूपदोषजन्यजामितायाः अन्तरालगुणवता यजिना निवृत्तिप्रतीतेः। यत्रान्तरालगुणोपदेशः श्रुतस्तत्रैव विधिप्रतीतेः उपांशुयाजमन्तरा यजतीत्यत्रैवोपांशु यागविधिरिति बोध्यम ॥११॥

## प्राये वचनाच्च ॥१२॥

किंच 'तस्य वा एतद्यज्ञस्य शिरो यदाग्नेयः, हृदयमुपांशुयाजः, पादावग्नीषोमीयः' इति **प्राये**-बहुप्रधानकर्मसमभिव्याहारे 'हृदयमुपांशुयाजः' इति **वचनात्**-पाठादपि, उपांशुयागः प्रधानम्। अतोऽन्तरालवाक्ये उपांशुयागविधिरेवेति सिद्धान्तः ॥१२॥

आघारादीनामपूर्वताधिकरणम् ॥५॥

## आघाराग्निहोत्रमरूपत्वात् ॥१३॥

'आघारमाघारयति' इतिवाक्यम् 'अग्निहोत्रं जुहोति' इति च वाक्यम्, 'ऊर्ध्वमाघारयति' 'ऋजुमाघारयति' 'सन्ततमाघारयति' तथा-

'दध्ना जुहोति' 'पयसा जुहोति' इत्यादिवाक्यविहितकर्मसमुदायस्यानुवादकम् । नैव विधायकम् । कुतः ? अरूपत्वात्—तत्र तत्र च कर्मस्वरूपयोर्द्रव्यदेवतयोरश्रवणादित्यर्थः ॥१३॥

## संज्ञोपबन्धात् ॥१४॥

'आघारम्' 'अग्निहोत्रम्' इति द्वितीयान्तसंज्ञया निर्देशादपि न विधायकम्, किं त्वनुवादकमेव । सिद्धस्यैव द्वितीयया निर्देशः, न त्वसिद्धस्येति । अनुवादकत्वे तु अर्थाक्षिप्तसाध्यत्वानुवादकतया द्वितीयोपपत्तेरिति भावः ॥ १४ ॥

## अप्रकृतत्वाच्च ॥१५॥

द्रव्यदेवताबोधकवाक्यान्तरस्य अप्रकृतत्वात्—समीपवृत्तित्वाभावादपि, न विधायकं तद्वाक्यद्वयम् । दध्ना जुहोतीत्यत्र दध्नः सिद्धत्वेऽपि तद्विशिष्टव्यापारस्य विधेयत्वेन तदनुवादो युक्त इति भावः ॥१५॥

## चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्, तत्संनिधेर्गुणार्थेन पुनः श्रुतिः ॥१६॥

'आघारमाघारयति' 'अग्निहोत्रं जुहोती'ति च वाक्यं **चोदना वा**-कर्मविधायकमेव । कुतः ? **शब्दार्थस्य**—तद्वाक्यार्थस्य—आघाराग्निहोत्रहोमनामकं कर्म अनुष्ठेयमित्यस्य, अनुष्ठानापरपर्याय**प्रयोगरूपत्वात्** । अतस्तत्संन्निधेः आघाराग्निहोत्रसांनिध्यात् । 'सन्तनमाघारयति' 'दध्ना जुहोती'-त्यादि **पुनः श्रवणं गुणार्थेन**—दध्यादिरूपगुणविधायकत्वेन उपपद्यते । अनुवादे तु फलाभावात्प्रयोगरूपत्वाभावात्, सन्तनादिवाक्ये गुणविशिष्टकर्मविधौ गौरवात्, मत्वर्थलक्षणापत्तेश्च 'आघारमाघारयति' 'अग्निहोत्रं जुहोति' इति च वाक्यमेव कर्मविधायकमिति भावः ॥१६॥

पशुसोमयोरपूर्वत्वाधिकरणम् ॥ ६ ॥

**द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन ॥१७॥**

ज्योतिष्टोमे 'अग्निषोमीयं पशुमालभेत' इति श्रुतिः, तथा–'सोमेन यजेत' इति च। एवं 'हृदयस्याग्रे अवद्यति' 'ऐन्द्रवायवं गृह्णाति' इत्यादिकमपि तत्र श्रूयते। 'अतः कुत्र विधिः? कुत्र चाऽनुवादः' इति विशये सिद्धान्तमाह परमार्षिजामानः– **पशुसोमयोः**— पशुसोमघटितवाक्ययोः, **चोदना**– अपूर्वकर्मविधिः, कुतः? **द्रव्यसंयोगात्**– द्रव्येण पशुना सोमेन च संयोगात्, द्रव्यवाचकपशुसोमपदयुक्तत्वादित्यर्थः। **प्रकरणे**– तत्प्रकरणपठितहृदयैन्द्रवायवादिवाक्येन यागविधाने तु, श्रुतद्रव्यसंयोगः- द्रव्यवाचकपशुसोमपदसंयोगः, **अनर्थको**–व्यर्थः स्यात्। **हि**–**यतः**, **तस्य**- पशुपदस्य सोमपदस्य च, **गुणार्थेन**-गुणविधायकत्वेन, सार्थक्यं न सम्भवति। ऐन्द्रवायवादिवाक्ये हृदयरसादिद्रव्यस्य श्रुतत्वादित्यर्थः ॥१७॥

**अचोदकाश्च संस्काराः ॥१८॥**

किं च 'ऐन्द्रवायवम्' इति द्वितीयया हृदयस्येति षष्ठ्या च हृदयग्रहयोः प्राधान्यबोधनात् अवदानग्रहणयोः 'व्रीहीन् प्रोक्षती'तिवत्संस्कारकर्मत्वं प्रतीयते। न प्रधानकर्मत्वम्। ततः **संस्काराः**- संस्कारकर्मोपदेशकत्वेन ज्ञायमानाः शब्दाः, प्रोक्षणादिशब्दवत् **अचोदकाः**–प्रधानकर्मविधायका न भवन्तीत्यर्थः ॥१८॥

**तद्भेदात्कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्याद्भेदो द्रव्यगुणीभावात् ॥१९॥**

ननु, सोमेनेत्यस्योत्पत्तिविधित्वे तस्य कर्मण एकत्वात् ऐन्द्रवायवाद्यनेकदेवतासम्बन्धो विकल्पेन वक्तव्यः। सत्येवं 'दशैतान् ग्रहानध्वर्युः प्रातःसवने गृह्णाती'ति ग्रहाणां समुच्चयः श्रुतः, सः विरुध्येतेत्याशङ्कायामाह– तदिति। **तद्भेदात्**–देवतासम्बन्धभेदात्, सोमेनेतिविहितकर्मणोऽप्यभ्यासः–

आवृत्तिः, सायंप्रातरग्निहोत्रवत् भेद इत्यर्थः । तथा पात्रभेदेन द्रव्यस्य पृथक्त्वात्संस्कारस्य भेदः । ग्रहणस्य द्रव्यं प्रति **गुणीभावात्**—अङ्गत्वात्, प्रतिप्रधानमङ्गावृत्तिरिति न्यायेन संस्कारस्य भेदः । यागस्यापि देवतासम्बन्धभेदाद्भेदः । तथा चोक्तसमुच्चयोऽप्युपपन्नः । सकृद्गृहीत्वा विभज्य यागकरणे तु 'आश्विनो दशमो गृह्यते' इति क्रमविधिरनर्थकः—व्यर्थः स्यादिति भावः ॥१९॥

## संस्कारस्तु न भिद्येत, परार्थत्वाद्द्रव्यस्य गुणभूतत्वात् ॥२०॥

नन्वेवं 'खदिरे पशुं बध्नाति' 'पालाशे बध्नाति' इत्यत्रापि बन्धनस्य कुतो नाभ्यास इत्याशङ्कायामाह—**संस्कार** इति । बन्धनात्मकः पशुसंस्कारस्तु **न भिद्येत**—नाभ्यस्येत, **द्रव्यस्य**—यूपस्य, **परार्थत्वात्**—**गुणभूतत्वात्**, अङ्गत्वादिति यावत् । तथा च अङ्गानुरोधेन न प्रधानस्यावृत्तिरिति भावः ॥२०॥

### सङ्ख्याकृतकर्मभेदाधिकरणम् ॥७॥

## पृथक्त्वनिवेशात्सङ्ख्यया कर्मभेदः स्यात् ॥२१॥

वाजपेये 'सप्तदश प्राजापत्यान् पशूनालभते' इति श्रुतम् । तत्र प्रजापतिर्देवता यस्य पशोः स प्राजापत्यः, इति तद्धितान्तप्रातिपदिकेन एकपशुद्रव्यकं एकदेवतोपेतं चैकयागस्वरूपमुपदिश्यते । ततस्तादृशानि पृथक् पृथगनेकानि यागस्वरूपाणीति ज्ञापनाय 'प्राजापत्यान्' इति प्रातिपदिकोत्तरविहित—शस्प्रत्ययान्तेन पदेन ज्ञायते । तेषां बहुत्वविशेषस्तु सप्तदशेति विशिष्टसङ्ख्यावाचकपदेनाभिधते । तस्मात्— प्रातिपदिकार्थयागस्वरूपे सप्तदशसङ्ख्यया निवेशात् पृथक् पृथक् सप्तदशयागाः इति तेषां पशुद्रव्यकप्रजापतिदैवत्यानां यागानां सङ्ख्यया भेदः सिध्यतीति भावः ॥२१॥

### संज्ञाकृतभेदाधिकरणम् ॥८॥

## संज्ञा चोत्पत्तिसंयोगात् ॥२२॥

ज्योतिष्टोमसन्निधौ श्रूयमाणे 'अथैष ज्योतिः, अथैष विश्वज्योतिः,

अथैष सर्वज्योतिः, एतेन सहस्रदक्षिणेन यजेत ' इति वाक्ये प्रतीयमाना ज्योतिरादिसंज्ञा कर्मभेदिका । कुत. ? उत्पत्तिवाक्यसंयोगात् पाठादित्यर्थः । अथेत्यनेन पूर्वतनप्रकरणविच्छेदस्य प्रत्यायनाच्च ज्योतिरादिनामकः सहस्रदक्षिणाकः अपूर्वयागविधिरेवेति भावः ॥ २२ ॥

## देवताभेदकृतकर्मभेदाधिकरणम् ॥९॥

## गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् ॥२३॥

चातुर्मास्ये वैश्वदेवपर्वणि ' तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम् ' इति पठितम् । तत्र **गुणश्च**–वाजिनगुणोऽपि, कर्मभेदकः । कुत ? अप्रकृतदेवतानाम्ना सम्बध्यमानत्वात् पूर्वस्मिन्कर्मणि निवेशासम्भवात् आमिक्षावाक्यवाजिनवाक्ययोः निराकाङ्क्षत्वेन **समत्वात्**–तुल्यत्वादित्यर्थः ॥२३॥

## द्रव्यविशेषानुक्तिकृतकर्मैक्याधिकरणम् ॥ १० ॥

## अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत ॥२४॥

**कर्मशब्दे**–कर्मोत्पत्तिवाक्ये, **अगुणे तु**–गुणश्रवणशून्ये सति, यथा-अग्निहोत्रं जुहोतीति । **तत्र**–तस्मिन्कर्मणि–तत्समीपवर्ति-दध्नाजुहोतीत्यादिवाक्ये, **गुणः**– गुणविधि., **प्रतीयेत** । गुणश्रवणसहितोत्पत्तिवाक्यस्य तु उत्पत्तिशिष्टगुणावरुद्धत्वात् उत्पन्नशिष्टस्यात एव दुर्बलस्य गुणस्य उत्पत्तिशिष्टगुणबाधकत्वं जातु चिदपि न सम्भवति । दध्यादिवाक्ये दधिपयसोर्द्वयोरपि उत्पन्नशिष्टत्वेन तुल्यत्वात् पक्षे बाधादिकल्पो युज्यत इति भावः ॥२४॥

## दध्यादिद्रव्यस्य सफलत्वाधिकरणम् ॥११॥

## फलश्रुतेस्तु कर्म स्यात् फलस्य कर्मयोगित्वात् ॥२५॥

अग्निहोत्रं प्रकृत्य तत्सन्निधौ ' दध्नेन्द्रियकामस्य जुहुयात् ,' इति श्रुतम् । तत्रेन्द्रियकामस्येति इन्द्रियरूपफलस्य श्रवणात् दध्यादिगुणविशिष्टमप्रकृत कर्मैव फलार्थं विधातु युक्तम् । न तु गुणः । कुतः ? भावार्थाधिकरण-

न्यायेन इन्द्रियफलस्य **कर्मयोगित्वात्**—कर्मजन्यत्वादित्यर्थः । अन्यथा दध्नः सिद्धत्वात्सर्वदैव फलापत्तिरिति भावः ॥२५॥

## अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत ॥२६॥

'अग्निहोत्रं जुहुयात्स्वर्गकामः' 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यनयोर्वाक्ययोरतुल्यत्वात् **तस्य**--होमस्य, **गुणे** फलसम्बन्धः **प्रतीयेत** । जन्यत्वेनेत्यर्थः । स्वर्गकामवाक्ये विधेयान्तरस्याभावात्, कर्मफलसम्बन्धमात्रविधायकत्वेन तत्र भावार्थाधिकरणस्य प्रवृत्तिः । इन्द्रियकामवाक्ये तु गुणफलसम्बन्धविधेः सम्भवात् न तत्र भावार्थाधिकरणस्य प्रवृत्तिरित्यतुल्यत्वं तयोर्वाक्ययोर्ज्ञेयम् । तस्मात्—इन्द्रियफलोद्देशेन गुणविधिरेव प्रकृते होमे युक्त इति भावः ॥२६॥

### वारवन्तीयादीनां कर्मान्तरताधिकरणम् ॥१२॥

## समेषु कर्मयुक्तं स्यात् ॥२७॥

'त्रिवृदग्निष्टुदग्निष्टोमः' इत्यग्निष्टोमविकृतिभूतम् अग्निष्टुत्सञ्ज्ञकम् एकाहं पाप्मापहं यागं प्रकृत्य 'तस्य वायव्यासु ऋक्षु एकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत' इति पठित्वा अनन्तरम् 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति श्रुतम् । तत्र धात्वर्थक्रियात्वस्य वारवन्तीयसाम्नि यजतौ च समानत्वात् एवंजातीयकेषु आश्रयापेक्षाराहित्येन **समेषु**--तुल्येषु वाक्य श्रूयमाण ल भावार्थाधिकरणन्यायेन **कर्मयुक्तम्**—अपूर्वकर्मसम्बन्धं विशिष्टकर्मान्तरजन्यमेव स्यात् । नेन्द्रियकामाधिकरणन्यायेन गुणजन्यमित्यर्थः । अस्मिन्वाक्ये श्रूयमाणे एतच्छब्दः न पूर्वप्रकृतपरामर्शकः । अपि तु अथैष ज्योतिरित्यादिवत् विधीयमानरेवतीऋगधिकरणकवारवन्तीयसामगुणविशिष्टपशुफलकयागान्तरबोधकः । तथा च नात्र वाक्यभेदादिः कोऽपि दोष इति भावः ॥२७॥

## सौभरनिधनयोः कामैक्याधिकरणम् ॥ १३ ॥

## सौभरे पुरुषश्रुतेर्निधनं कामसंयोगः ॥ २८ ॥

' यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः, स सौभरेण स्तुवीत ' ' सर्वे वै कामाः सौभरे ' इति समाम्नायानन्तरं समामनन्ति- ' हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय ' इति । सौभरं नाम सामविशेषः । निधनं च उद्गीथ-प्रस्ताव-प्रतिहार-उपद्रव-निधनाख्यैः पञ्चावयवैरुरेतस्य साम्नोऽन्तिमोऽवयवः । तथा च सौभरे-सौभरसामसम्बन्धिनिधने निधनाश्रितहीषादौ अपरः कामसम्बन्धः-फलान्तरजनकत्वम् । कुतः ? पुरुषश्रुतेः- उत्तरवाक्ये वृष्टिकामाय हीषिति निधनं कुर्यादिति पृथक् पुरुषप्रयत्नश्रवणात् । प्रयत्नपार्थक्यात् फलपार्थक्यं युक्तम् । अन्यथा पृथक् पुरुषप्रयत्नश्रवणमनुपपन्नं स्यादिति भावः ॥ २८ ॥

## सर्वस्योक्तकामत्वात् तस्मिन्कामश्रुतिः स्यान्निधनार्था पुनः श्रुतिः ॥२९॥

वेत्यनेन पूर्वपक्षो व्यावर्त्यते । सर्वस्य-निखिलस्य शाखाभेदेनोपदिष्टनिधनाश्रितहीषादिवर्णयुतस्य सौभरसाम्नः, उक्तकामत्वात्-' यो वृष्टिकामः ' इत्यादिश्रुत्या निर्ज्ञाताशेषफलसाधनत्वात् तत्फलस्यैव हीषादिवाक्ये प्रत्यभिज्ञायत्वात् तस्मिन्-सौभरसाम्न्येव कामश्रुतिः-वृष्ट्यादिफलसाधनत्वकथनपरं हीषादिवाक्यं स्यात् । पुनः श्रुतिस्तु अनियमेन निधनप्राप्तौ तन्नियमपरत्वमवधेयम् । अपूर्वविध्यपेक्षया नियमविधौ लाघवादिति भावः ॥२९॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां द्वितीयाध्यायस्य
द्वितीयः पादः ॥२॥ श्रीः ॥

---

# अथ द्वितीयाध्यायस्य तृतीयः पादः ॥

ग्रहाग्रताया ज्योतिष्टोमाङ्गताधिकरणम् ॥१॥

## गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात् ॥ १ ॥

'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति ज्योतिष्टोमयज्ञं प्रकृत्य तत्रेत्थं श्रूयते--'यदि रथन्तरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रान्' इति ।अत्र रथन्तरं साम यस्मिन् क्रतावित्यन्यपदार्थप्रधानबहुव्रीहिणा अन्यपदार्थेन **क्रतुना** सह रथन्तरसाम्नः **संयोगात्**--सम्बन्धद्योतनात्, **गुणस्तु**--रथन्तरसामात्मको गुणः, **कर्मान्तरमेव**--प्रकृतात् ज्योतिष्टोमात् भिन्न कर्मैव, **प्रयोजयेत्**--उत्पादयेत्, कुतः ? **संयोगस्य**-रथन्तरसामसम्बन्धस्य, **अशेषभूतत्वात्**-कृत्स्नक्रतुव्यापकत्वात् । तदेव हि विशेषणं भवितुमर्हति, यत्स्वविशेष्यं कार्त्स्न्येन व्याप्नोति । यथा शङ्खः पाण्डुर इत्यादौ पाण्डुरत्वादिकं स्वविशेष्यतावच्छेदकशङ्खत्वावच्छेदेन शङ्खं व्याप्नोति । न तथा रथन्तरं साम स्वविशेष्यतावच्छेदकज्योतिष्टोमत्वावच्छेदेन ज्योतिष्टोमं व्याप्नोति । तस्य गायत्र-यज्ञायज्ञीय-वारवन्तीय-सौभरादिसामोपेतत्वात् । अतो न 'रथन्तरसामा सोमः' इति श्रौतः शब्दः प्रकृतं ज्योतिष्टोमं परामृशति । अपि तु रथन्तरसाम-ऐन्द्रवायवग्रहाग्रत्वोभयगुणशिष्टक्रत्वन्तरविधायकः स शब्दः । यदाऽऽग्नेयादिवदिति पूर्वपक्षः ॥१॥

## सिद्धान्तः--एकस्य तु लिङ्गभेदात् प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात् ॥२॥

**एकस्य तु**--एकस्यैव प्रकृतस्य ज्योतिष्टोमक्रतोर्माध्यन्दिनसवने पृष्ठस्तोत्रे रथन्तरादीनां साम्नां विकल्पेन निवेशात् रथन्तरादि**लिङ्गभेदेन**--ग्रहविशेषाग्रतायाः प्रयोगभेदेन, नियमविध्यात्मक**प्रयोजनार्थ**मिदं वाक्य**मुच्यते** 'यदि रथन्तरसामे' त्यादि । तथा च रथन्तरं साम यस्य क्रतोर्माध्यन्दिन-

पञ्चदशैव वर्षाणि यजेत ।, अत्रैव सा सम्पत्सम्पद्यते । द्वे हि तत्र पौर्णमास्यौ द्वे अमावास्ये इति ' । यदि दाक्षायणयज्ञो दर्शपूर्णमासावेव तदा पञ्चदशवत्सरेषु द्विवारमावृत्त्या तावती सङ्ख्या भवति । यावती त्रिंशद्वर्षपर्यन्तं सकृदनुष्ठाने सम्पद्यते । अन्यथेदं लिङ्गदर्शनमनुपपन्नं स्यात् । तस्मात्—दर्शपूर्णमास एव प्रकृते प्रजाफलाय आवृत्तिरूपो गुणो विधीयते तेन वाक्येनेति सिध्यति ॥९॥

## गुणात्संज्ञोपबन्धः ॥१०॥

यत्तु संज्ञया कर्मभेद इत्युक्तं तन्न । यतो दक्षस्य इमे ऋत्विज इति ते दाक्षाः, तेषाम् अयनम् अभ्यासो यत्र स दाक्षायणः इति व्युत्पत्त्या आवृत्त्यात्मकगुणनिमित्तको दाक्षायणशब्दः प्रकृतदर्शपूर्णमासबोधक एवेति गुणात्—गुणप्रयुक्तः, संज्ञाया उपबन्धो वेदितव्य इति भावः ॥१०॥

## समाप्तिराविशिष्टा ॥११॥

यच्च कर्मफलसम्बन्ध वाक्यं निराकाङ्क्षमित्युक्तं, तत्समाप्तत्वं—वाक्यस्य निराकाङ्क्षत्वं, गुणफलसम्बन्धेऽप्यविशिष्टम् । तुल्यमिति यावत् । एवं फलाय गुणविधौ न किमपि अत्यनीकमिति तात्पर्यम् । ' एव सार्क प्रस्थायीयेन यजेत पशुकामः ' ' सङ्क्रमयज्ञेन यजेतान्नाद्यकामः ' इत्यत्रापि फलाय गुणविधिर्वेदितव्यः ॥११॥

### द्रव्यदेवतायुतानां यागान्तरताधिकरणम् ॥५॥

## संस्कारश्चाप्रकरणेऽकर्मशेषत्वात् ॥१२॥

किमप्यनारभ्यैवं श्रूयते—' वायव्यं श्वेतमालभेत भूतिकामः ' ' सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः ' इति । तथा दर्शपूर्णमासप्रकरणे ' ईषामालभेत ' ' चतुरो मुष्टीन्निर्वपति ' इति श्रूयते । ईषा नाम शकटस्य दीर्घः काष्ठविशेषः। तस्याः स्पर्श आलभेतेत्यनेन विहितः । इत्थं प्रकरणपठितवाक्योक्तः ईषास्पर्शरूपः संस्कारः अप्रकरणपठितवाक्यस्थालभेतेत्यनेन अनूद्यते श्वेतत्वादिविधानाय । एवं चतुर्मुष्टिनिर्वापरूपः संस्कारः निर्वपेदित्यनेनानूद्यते

ब्रह्मवर्चसफलाय । इत्थं प्रकृते कर्मणि गुणविधिरयं न यागान्तरविधिः ।-कुतः ? अकर्मशेषत्वात्-उक्तवाक्ययोर्यागवाचकपदाभावादिति यावत् ॥१२॥ अथवा-

## यावदुक्तं वा, कर्मणः श्रुतिमूलत्वात् ॥१३॥

**यावदुक्तं**-श्वेतद्रव्यस्पर्शात्मकं श्वेतमालभेतेति धातुबोध्यं कर्म, भूतिफलाय विधीयतेऽनेन वचसा । कुतः ? **कर्मणः**--श्वेतद्रव्यस्पर्शात्मककर्मणः, एकपदश्रुतिप्रतिपाद्यत्वात् । भावार्थाधिकरणन्यायेनेति भावः ॥१३॥

## सिध्दान्तः-यजतिस्तु द्रव्यफलभोक्तृसंयोगात् एतेषां कर्मसम्बन्धात् ॥१४॥

उदाहृतविषयवाक्यद्वये आलभेतेत्यादिना लक्षितो **यजतिस्तु**-याग एव, पृथक्तया विधेयः । कुतः ? पश्वादेर्द्रव्यस्य, भूत्यादेः फलस्य, भोक्तुर्वाय्वादिदेवतायाश्च **संयोगात्**--मिथः सम्बन्धश्रवणात् । **एतेषां**-द्रव्यफलभोक्तृणां, साधनत्वेन साध्यत्वेन उद्देश्यत्वेन च **कर्मसम्बन्धात्**-प्रधानकर्मणा सहैव सम्बन्धसत्त्वाच्च, याग एवात्र वाक्यद्वये विधेयः । नालम्भमात्रं निर्वापमात्रं वेति भाव ॥१४॥

## लिङ्गदर्शनाच्च ॥१५॥

किं च 'सोमारौद्रं चरुं निर्वपेत्' 'परिश्रुते याजयेत्' इति यजिश्रवणरूपलिङ्गदर्शनादपि यजिरहिते 'निर्वपती' त्यादिवाक्ये तेन लक्षितो याग एव विधेय इत्यवगम्यते । अन्यथा तल्लिङ्गदर्शनं श्रपणविधिश्रानुपपन्नः स्यादिति भावः ॥१५॥

### वत्सालम्भादीनां संस्कारताधिकरणम् ॥६॥

## विशये प्रायदर्शनात् ॥१६॥

अग्निहोत्रप्रकरणे-' वत्समालभेत ' इति श्रुतम् । तत्र यागः संस्कारो वेति संशये **प्रायदर्शनात्**-दोहनादिसंस्कारबहुलसन्दर्भमध्ये पाठात्, स्पर्श-

मात्रसंस्कारविधिरेव । न यागविधिरिति निर्धार्यते । यथा आम्यप्राये लिखितोऽन्य इति निश्चयस्तद्वदिदमिति भावः ॥१६॥

## अर्थवादोपपत्तेश्च ॥१७॥

किं च 'वत्समालभेत' इति विधिसन्निधौ 'वत्सनिकान्ताः पशवः' इत्यर्थवादस्तच्छेषतया श्रूयते । वत्सनिकान्ताः— कामं वत्सप्रिया इत्यर्थः । तेन आलम्भः स्पर्शमात्रं धेनुसमीपे वत्सानयनार्थम् । यागत्वे तु वत्साभावादर्थवादोऽनुपपन्नः स्यादिति भावः ॥१७॥

नैवारचरोराधानार्थत्वाधिकरणम् ॥७॥

## संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ॥१८॥

अग्निचयनप्रकरणे— 'नैवारश्चरुर्भवति, चरुमुपदधाति, बृहस्पतेर्वा एतदन्नं यन्नीवाराः' इति श्रुतम् । तत्र चरुमुपदधातीति चरुकार्यबोधकोपदधातिशब्देन संयुक्तश्चरुः तदर्थः—उपधानार्थ एव स्यात् । न यागार्थः । कुतः ? श्रुतिसंयोगात्—तत्कार्यवाचकशब्दस्य साक्षाच्छ्रवणात्, यागवाचकशब्दाश्रवणाच्चेत्यर्थः ॥१८॥

त्वाष्ट्रपात्नीवतस्य पर्यग्निकरणगुणकत्वाधिकरणम् ॥८॥

## पात्नीवते तु पूर्वत्वादवच्छेदः ॥१९॥

'त्वाष्ट्रम्पात्नीवतमालभेत' इत्यस्यानन्तरं 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति श्रूयते । तत्र पात्नीवते तु पर्यग्निकृतमित्याद्युत्तरवाक्ये पूर्ववाक्यविहितदेवताद्वयोपेतयागस्य 'डित्थडवित्थयोर्माता डित्थमातेतिवत्' पात्नीवतमुत्सृजतीत्यनेन प्रत्यभिज्ञायमानत्वात् तदनुवादेन पर्यग्निकरणान्तात्मकलापस्य गुणस्यैव विधिः । अतः पर्यग्निकरणोत्तराङ्गानां विशसनादीनाम् अवच्छेदः— निवृत्तिः । न पुनः पत्नीवद्देवताकयागान्तरविधिरिति तात्पर्यम् ॥१९॥

अदाभ्यादीनां ग्रहनामताधिकरणम् ॥९॥

## अद्रव्यत्वात्केवले कर्मशेषः स्यात् ॥२०॥

अनारभ्य श्रयते–' एष ह वै हविषा हविर्यजति, योऽदाभ्यं गृहीत्वा सोमाय यजते इति '।' परावा एतस्यायुः प्राण एति योऽशुं गृह्णाति ' इति च। अनयोः प्रकरणविशेषमनारभ्याधीतयोर्वाक्ययोः द्रव्यस्य तदुपलक्षितदेवतायाश्चाश्रवणात् केवलगृह्णातिमात्रश्रवणात् अदाभ्यांशुनामकयोर्ग्रहयोर्विधीयमानः ग्रहणात्मकः संस्कारः ज्योतिष्टोमे ग्रहणभूयस्त्वसत्त्वात्तेनोपस्थितज्योतिष्टोमकर्मणः शेषः–अङ्गं स्यात् इति सूत्रार्थः ॥२०॥

अग्निचयनस्य संस्कारताधिकरणम् ॥१०॥

## अग्निस्तु लिङ्गदर्शनात् क्रतुशब्दः प्रतीयेत ॥२१॥

' य एवं विद्वानग्निञ्चिनुते ' इति श्रुतम्। अत्र वाक्ये अग्निशब्दस्तु **क्रतुशब्दः**–क्रतुवाचक एव, प्रतीयेत। कुतः? ' अग्नेः स्तोत्रम्, अग्नेः शस्त्रम् ' इति स्तोत्रशस्त्रादिरूपस्य लिङ्गस्य दर्शनात्। तादृशलिङ्गस्य क्रतुमन्तरेणासम्भवादित्यर्थः ॥२१॥

## सिद्धान्तः–द्रव्यं वा स्यात् चोदनायास्तदर्थत्वात् ॥२२॥

अग्निशब्दार्थः **द्रव्यं वा स्यात्**–उष्णस्पर्शवत् आधानसंस्कृतं ज्वलनात्मकम् आहवनीयपदवाच्यं द्रव्यमेव तदर्थः। न क्रतुः। कुतः? अग्निं चिनुते इति **चोदनायाः तदर्थत्वात्**–तादृशद्रव्यमुद्दिश्य चयनात्मकसंस्कारविधिपरत्वात्। संस्कृतस्याग्नेः ' अग्निमन्वग्निष्टोमेन यजती'ति अग्निष्टोमादियागाङ्गत्वं वेदितव्यम्। तथा च चिनोतिर्न यागलक्षक इति भावः ॥२२॥

## क्रतुसंयोगात् क्रतुस्तदाख्यः स्यात् तेन धर्मविधानानि ॥२३॥

स्तोत्रादीनां गतिमाह **क्रतुसंयोगादिति**। अग्नेः क्रतुसम्बन्धात्–अथातोऽग्निमग्निष्टोमेनेत्यनेन क्रमाङ्गाङ्गिभावसम्बन्धात्, ज्योतिष्टोमादिः **क्रतुः** शक्यसम्बन्धरूपलक्षणया **तदाख्यः**–अग्निनामा, स्यात्। तेन तत्र ज्योतिष्टोमादि–

क्रतुषु अग्नेः स्तोत्रम्, अग्नेः शस्त्रमित्यादीनि धर्मविधानानि समुपपद्यन्त इति न लिङ्गदर्शनविरोध इति भावः ॥२३॥

मासाग्निहोत्रादीनां क्रत्वन्तरत्वाधिकरणम् ॥११॥

## प्रकरणान्तरे प्रयोजनान्यत्वम् ॥२४॥

कुण्डपायिनामयनप्रकरणे—'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोती'ति श्रुतम्। अत्र **प्रकरणान्तरे**—भिन्नप्रकरणे, श्रूयमाणं वाक्यं **प्रयोजनस्य**—विधेयस्य कर्मणः **अन्यत्वं**—भिन्नत्वं, प्रत्याययतीत्यर्थः ॥२४॥

आग्नेयादिकाम्येष्ट्यधिकरणम् ॥१२॥

## फलं चाकर्मसन्निधौ ॥२५॥

किञ्चिदनारभ्येदं श्रूयते—'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः' 'अग्नीषोमीयमेकादशकपालं निर्वपेद्ब्रह्मवर्चसकामः' 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः' इति। अत्र **अकर्मसन्निधौ**—प्रसिद्धकर्मानुपस्थितौ, श्रूयमाणं रुकाम इत्यादिषु तेजआदि **फलं** प्रसिद्धकर्मतः इदं कर्म भिन्नमिति ज्ञापयति ॥२५॥

अवेष्टेरन्नाद्यफलकत्वाधिकरणम् ॥१३॥

## सन्निधौ त्वविभागात्फलार्थेन पुनः श्रुतिः ॥२६॥

'आग्नेयोऽष्टाकपालः पुरोडाशो भवती'त्यादिना वाक्येन अवेष्टिनाम्नीमिष्टिं प्रकृत्य—'एतया अन्नाद्यकामं याजयेत्' इति श्रूयते। अत्र **एतयेति** सन्निहितकर्मण उपस्थितौ सत्यां **तु अविभागात्**—सन्निहितकर्मापेक्षया भेदासम्भवात्, **फलार्थेन**—प्रयोजनानुरोधेन, **पुनः श्रुतिः**—सन्निहितकर्मण एव पुनःश्रवणम्। न तदतिरिक्तकर्मविधानार्थमिति ज्ञेयम् ॥२६॥

आग्नेयद्विरुक्तेः स्तुत्यर्थताधिकरणम् ॥१४॥

## आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत ॥२७॥

दर्शपूर्णमासयोः—'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती'ति विधाय पुनरुच्यते—'आग्नेयोऽष्टाकपालोऽमावास्यायां

भवती'ति । तत्र **आग्नेयः**—आग्नेययागस्तु, **अभ्यासेन**-अभ्यासोपेतः, प्रतीयेत । द्विः कार्य इत्यर्थः । कुतः ? **उक्तहेतुत्वात्**—अभ्यासरूपोक्तभेदकहेतोः सत्त्वादित्यर्थः ॥२७॥

## अविभागात्तु कर्मणो द्विरुक्तो न विधीयेत ॥२८॥

द्विरुक्तोऽप्याग्नेययागः द्वाभ्यां न विधीयेत । कुतः ? प्रकरणैक्येन **कर्मणः अविभागात्**—अभेदप्रत्यभिज्ञानात् । एकत्वप्रतीतेरित्यर्थः । अन्यतरेण विधीयत इति भावः ॥२८॥

## सिद्धान्तः—अन्यार्था वा पुनः श्रुतिः ॥२९॥

**पुनः श्रुतिः**—' आग्नेयोऽष्टाकपालोऽमावास्याया 'मिति पुनराग्नेयश्रवणम्, **अन्यार्था वा**—ऐन्द्रविध्यर्थमेवार्थवादरूपं तत् । यद्यप्यमावास्यायामाग्नेयो भवति । तथाप्यैन्द्रसहितः स सम्यक्तर इत्यैन्द्रस्तुत्यर्थं तद्वचनम् । न पुनराग्नेयविधानार्थमिति भावः ॥२९॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां द्वितीयाध्यायस्य तृतीयः पादः ॥ श्रीः ॥

---

# अथ द्वितीयाध्यायस्य चतुर्थः पादः ॥

### यावज्जीविकाग्निहोत्राधिकरणम् ॥१॥

## यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ॥१॥

बह्वृचब्राह्मणे श्रूयते—' यावज्जीवमग्निहोत्रं जुहोति ' ' यावज्जीवं दर्शपूर्णमासाभ्यां यजेत ' इति । अत्र यावज्जीवशब्दः चरमश्वासनिर्मोकावधिकालपरः । तथा च **यावज्जीविकः** अग्निहोत्राद्यभ्यासः—आवृत्तिः, **कर्मधर्मः**—अग्निहोत्रादिकर्माङ्गम् । कुतः ? **प्रकरणात्**—तत्प्रकरणपाठात् । एवं हि प्रकरणमनुगृहीतं भवति ॥१॥

## सिद्धान्तः-कर्तुर्वा श्रुतिसंयोगात् ॥२॥

कर्तुर्वा—कर्तुरेव—निमित्तवतः पुरुषस्य, धर्मः—अङ्गमग्निहोत्रादि, पुरुषार्थतया प्रत्यवायपरिहाराय विधीयते। कुतः ? श्रुतिसंयोगात्—यावज्जीवमिति श्रुतेः शक्यार्थसिद्धेः। अन्यथा लक्षणापत्तेरित्यर्थः ॥२॥

## लिङ्गदर्शनाच्च कर्मधर्मे हि प्रक्रमेण नियम्येत, तत्रानर्थकमन्यत्स्यात् ॥३॥

किं च, यावज्जीवमित्यस्य लक्षणया कालपरत्वं स्वीकृत्य तद्विधित्वे तावत्कालपर्यन्तं दर्शपूर्णमासप्रयोग एक एव, संवत्सरसाध्यसत्रादिवत्। तथा सति लिङ्गदर्शनविरोधो दुस्तर एव। तथा हि-'यो दर्शपूर्णमासयाजी सन्नमावास्यां पौर्णमासीं वा अतिपातयेत् स स्वर्गाच्च्यवते' 'अग्नये पथिकृते अष्टाकपालं निर्वपेत्' इति तत्र प्रायश्चित्तं श्रूयते। यद्येकः प्रयोगो मृतिपर्यन्तं, तदा तदुत्तरमेव दर्शपूर्णमासप्रयोगसमाप्तेर्न पौर्णमास्यमावास्ययोरतिपातः। कर्मधर्मपक्ष इति प्रायश्चित्तदर्शनं तत्र विरुध्येत। सिद्धान्ते माससाध्यप्रयोगस्य फलहेतुत्वात् मासे सम्पूर्णे सत्येकः प्रयोगः समाप्तः। एवं जीवने निमित्ते नैमित्तिकस्याभ्यासः प्रतिमासम्। तत्र कदाचिदेकप्रयोगलोपे प्रायश्चित्तमिति न किमप्यनुपपन्नमिति ॥ याजी सन्नित्यस्य प्रक्रमः — आरम्भः, अतिपातयेदित्यस्य असमाप्तिरित्यर्थः, कृतश्चेदपि अनुष्ठेयं पथिकृदनुष्ठानम् अन्यत् — व्यर्थं स्यादेवेति भावः ॥३॥

## व्यपवर्गं च दर्शयति, कालश्चेत्कर्मभेदः स्यात् ॥४॥

किं च 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इयं श्रुतिर्दर्शपूर्णमासयोः व्यपवर्गं — समाप्तिं दर्शयति। तदनन्तरं सोमानुष्ठानाय तव मतेन जीवनकालो विधेयश्चेज्जीवनकालव्यापकदर्शपूर्णमासप्रयोगमध्ये कर्मान्तरं — कर्मभेदः स्यात्। तथा सति 'विवा एतद्यज्ञस्य छिद्यते यदन्यस्य तन्त्रे वितते अन्यस्य तन्त्रं प्रतायते' इति श्रुतिविरोधोऽप्यस्ति ॥ ४॥

## अनित्यत्वात्तु नैवं स्यात् ॥५॥

किं च, कामसंयोगेन श्रुतस्यात एवानित्यस्य पूर्वस्य दर्शादेरयं यावज्जीवनकालो गुणविधिश्चेत्स एवैकोऽनित्यो दर्शादिः, नान्यः कश्चित् इत्यर्थात्सिद्धम्। तथा सति 'जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ, जरया वा एताभ्यां विनिर्मुच्यते मृत्युना च' इति चेत् विनिर्मोकावधारणमनुपपन्नं स्यात्। कुतः? तादृशस्य दर्शादेरनित्यत्वात्, अप्रयोगेनापि विमुच्येत। नियमसिद्धान्ते तदवधारणं समुपपद्यते। अतः—सति निमित्ते नैमित्तिकोऽयमवश्यकर्तव्यः कर्तुर्धर्म इत्यर्थः ॥ ५ ॥

## विरोधश्चापि पूर्ववत् ॥ ६ ॥

किं च, यावज्जीवनकालस्य कर्माङ्गत्वेन विधेयत्वे तस्य सौर्यादिविकृतिष्वप्यतिदेशेन प्राप्तत्वात्सर्वासां तासां यावज्जीवानुष्ठानं केनापि कर्तुमशक्यत्वात् पूर्ववत्—पूर्वसूत्रोक्तजरानर्थक्यादाविरोधवत्, अननुष्ठानलक्षणो विरोधोऽप्यायाति। नियमसिद्धान्ते नायं विरोध इति भावः ॥६॥

## कर्तुस्तु धर्मनियमात्कालशास्त्रं निमित्तं स्यात् ॥७॥

तस्मादापाततः कालविधित्वाद्भासमानं यावज्जीवमित्यादिशास्त्रम्, तथा यावज्जीवश्रुतिरहितं 'वसन्ते वसन्ते ज्योतिषा यजेत' 'अहरहः सन्ध्यामुपासीत' इत्यादिशास्त्रं च उक्तरीत्या निमित्तपरमेव स्यात्। कुतः? कर्तुस्तु—निमित्तवतो विशिष्टपुरुषस्यैव, धर्मनियमात्—नैमित्तिकधर्माङ्गीकारे लाघवात्। लक्षणागौरवाद्यनेकदोषप्रसक्तेः कर्माङ्गगुणविधिपक्षो नोपादेयः सुधीभिरिति भावः ॥७॥

सर्वशाखाप्रत्ययैककर्मताधिकरणम् ॥२॥

## नामरूपधर्मविशेषपुनरुक्तिनिन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्यात् ॥८॥

नाम—'काठकं कौथुम'मित्यादि ॥ रूपम्—'आग्नेयोऽष्टाकपाल एकादशकपाल' इत्येकस्याम् । 'द्वादशकपाल' इत्यन्यस्यां शाखायाम् ॥ धर्मविशेषः—कारीर्यध्ययने भूमिभोजनं धर्मः । अन्यत्र नेति विशेषः ॥ पुनरुक्तिः—'अग्निहोत्रं जुहोति'। अन्यत्रापि 'अग्निहोत्रं जुहोती'ति ॥ निन्दा—'प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्'। एवं यथा प्रकृतायाविधेऽन्याहतगुणादृष्टेण तदुदिते जुहोतीति शाखाभेदेन निन्दा ॥ अशक्तिः—कर्मैव एकत्वे सर्वशाखास्थगुणोपसंहारं कर्तुं पुंसोऽसामर्थ्यम् ॥ समाप्तिवचनम्—मैत्रायणीयानामग्निचयनहोमेषु समाप्यते । अन्येषामन्यत्रेति ॥ प्रायश्चित्तम्—उदितानुदितहोमिनां व्यत्यासे विहितं तत्प्रायश्चित्तम् ॥ अन्यार्थदर्शनम्—उक्तादन्यस्य निरुक्तस्याप्यर्थस्य दर्शनम् ॥ इत्य नामाद्यन्यार्थदर्शनान्तानां कर्मभेदकानां हेतूनामुपलम्भनात् एकस्यापि वेदस्य तत्तच्छाखासु विहिताग्निहोत्रदर्शपूर्णमासादिकर्मणां तेन तेन भेदकहेतुना भेदः—शाखाभेदाच्च पार्थक्यं स्यादित्यर्थः ॥८॥

## सिद्धान्तः—एकं वा संयोगरूपचोदनाख्याविशेषात् ॥९॥

एकं वा—सर्वशाखाप्रत्ययं सर्वब्राह्मणप्रत्ययं च एकमेव कर्म । कुतः? संयोगरूपचोदनाख्यानाम् अविशेषात्—एकरूपत्वात् । संयोगः—स्वर्गादिफलसम्बन्धः । रूपं—द्रव्यदेवतात्मकम् । चोदना—अकर्तव्यकरणकर्मभावनाविषयको विधिः । आख्या—अग्निहोत्रादि नाम । एतेषां सर्वत्रैकत्वात् । तेन तदेवेदं कर्म इत्येव प्रत्यभिज्ञानम् इति भावः ॥९॥

## न नाम्ना स्यादचोदनाभिधानत्वात् ॥१०॥

काठकादिनाम्ना कर्मभेदो न भवेत् । कुतः? अचोदनाभिधानत्वात्—कर्मोत्पत्तिवाक्ये यदभिधानं तस्याभावादित्यर्थः । उत्पत्तिवाक्यगतकर्मनामैव कर्मभेदकम् । न अन्यन्नामेति भावः ॥१०॥

## सर्वेषां चैककर्म्यं स्यात् ॥११॥

ग्रन्थनाम्नः कर्मभेदकत्वाङ्गीकारे यथा ग्रन्थनामभेदात् कर्मभेदं ब्रवीषि, तथा ग्रन्थनामैक्यात् कर्मैक्यमपि त्वया वाच्यमित्यापतति तुल्यन्यायेन । ओमिति चेत्, दर्शपूर्णमासज्योतिष्टोमादीनां सर्वेषामपि कर्मणामैक्यं स्यात् । तैत्तिरीयमिति नामैक्यात् । तच्च तत्राप्यनिष्टम् । अतो न ग्रन्थनाम्नः कर्मभेदकत्वमिति भावः ॥११॥

## कृतकं त्वभिधानम् ॥१२॥

किं च, **अभिधानं**—तत्काठकमित्यादि नाम, **कृतकम्**—अनित्यमेव । कुतः ? यदा हि कठेन प्रवचनं कृतं तदारभ्य प्रवृत्तमिदं नाम । तत्पूर्वं भेदकनाम्न अभावात् एकं कर्म, पश्चाद्भिन्नमिति विपरीतं स्यादिति भावः ॥१२॥

## एकत्वेऽपि परम् ॥१३॥

यच्च—एकादशकपालद्वादशकपालात्मकं **परम्**—अग्नीषोमीयस्य भेदकमुक्तम् । तत्, तस्य **एकत्वे**ऽपि व्रीहियववत् विकल्पेन उपपद्यत इति नैव भेदकम् ॥१३॥

## विद्यायां धर्मशास्त्रम् ॥१४॥

यत्—भूमिभोजनादेर्धर्मस्य शास्त्रं भेदकमुक्तम् । तत्, **विद्यायाम्**—अध्ययने, तस्याङ्गत्वबोधकम् । न कार्यमम् । ततो न तेन कर्मभेदः सिध्यतीति भावः ॥१४॥

## आग्नेयवत्पुनर्वचनम् ॥१५॥

यच्च—शाखाभेदेनाग्निहोत्रादेः **पुनर्वचनं** भेदकमुक्तम् । तत्, **आग्नेयवत्** । यथा- 'यदाग्नेय' इति वाक्येन सिद्धस्य कर्मणः 'यदाग्नेयोऽष्टाकपालो भवत्यिदं दधी'त्यत्रानुवादः, तदात्रानुवाद इत्यनुसन्धेयम् ॥१५॥

## अद्विर्वचनं वा श्रुतिसंयोगाविशेषात् ॥१६॥

अथवा, शाखाभेदेनाग्निहोत्रादेः श्रवणम् **अद्विर्वचनं**—पुनः श्रवणरूपं द्विर्वचनं नैव भवति । कुतः ? **श्रुतिसंयोगाविशेषात्**—नचच्छा

स्वाम्नायस्य तत्तच्छाखाध्येतृपुरुषान्प्रति अज्ञातज्ञापकत्वरूपश्रुतिसंयोगस्य तुल्यत्वादित्यर्थः ॥१६॥

## अर्थासन्निधेश्च ॥१७॥

शाखाभेदेनाग्निहोत्रादेः अपुनर्वचनं—पुनरुक्त्यभावोऽवगन्तव्यः । कुतः ? अर्थासन्निधेः । तत्रैव हि पुनर्वचनं—पुनरुक्तिर्भवति । यत्र पूर्वोक्तोऽर्थः तस्यैव पुरुषस्य सन्निहितो भवति। न त्विह शाखान्तरगतस्यार्थस्य सन्निधानम् । अपि तु तत्तच्छाखाध्येतृपुरुषं प्रति तत्तच्छाखागतोऽर्थ एव सन्निहितः । नान्यशाखागत इत्यपुनरुक्तिर्ज्ञेया ॥१७॥

## न चैकं प्रति शिष्यते ॥१८॥

यत्—काठके स्वर्गकामिनं प्रत्यग्निहोत्रमुपदिष्टम्, न तत् काठकमेवैकं पुरुषं प्रति विधीयते। स्वर्गकामिनस्तैत्तिरीयस्यापि तद्विहितमेव ? पुरुषविशेषवचनाभावात् । यच्च, तत्राग्निहोत्रस्य किञ्चिदङ्गं विधीयते, तत्सर्वाङ्गोपेतं फलाय समर्थं तत्स्यादित्यभिसन्धिना यच्च काठकस्य, तैत्तिरीयस्यापि तदेवेति विशेषवचनाभावेनोद्देश्यसङ्कोचे मानाभावादिति भावः ॥१८॥

## समाप्तिवच्च सम्प्रेक्षा ॥१९॥

असमाप्तावपि स्वशाखाधीताङ्गसमाप्त्यभिप्रायेण समाप्तिवत् सम्प्रेक्षा— उत्प्रेक्षामात्रम् — अचन्द्रे मुखे चन्द्रत्वोत्प्रेक्षावदिति कर्मैक्यद्योतकं तद्वचनमित्यर्थः ॥१९॥

## एकत्वेऽपि पराणि निन्दाशक्तिसमाप्तिवचनानि॥२०॥

प्राक् कर्मभेदकत्वोपन्यस्तान्यत्राशिष्टानि निन्दा-अशक्ति-समाप्तिवचनानि तु एकत्वेऽपि — कर्मैक्येऽपि उपपद्यन्ते । तथा हि-न हि निन्दायां निन्दायास्तात्पर्यम्। किं तु इतरस्य प्रशंसायां विधावित्यर्थः। ततो न निन्दितस्य प्रतिषेधः, विकल्पेनानुष्ठानमेकस्मिन् कर्मणीति यावत् । कृत्स्नाङ्गोपसंहारः शक्ताशक्तप्रयोगभेदेन कर्मैकत्वेऽप्युपपद्यत इति न तद्विरोधः । समाप्तिवचनं

च स्वशाखाधीताङ्गापेक्षयेति नैतेषां निन्दादीनां कर्मैक्ये कश्चिद्विरोध इति भावः ॥२०॥

## प्रायश्चित्तं वा निमित्तेन ॥२१॥

उदितानुदितहोमयोः स्वस्वकालातिक्रमरूपनिमित्तेन निमित्तज्ञानज्ञाप्यमित्यर्थः, प्रायश्चित्तं यदुपदिष्टम् । तत्, वा कथमुपपद्यत इत्याशङ्का ॥२१॥

## प्रक्रमाद्वा नियोगेन ॥२२॥

प्रथमप्रयोगमारभ्यैव कालादिनियमस्वीकारात् स्वीकृतनियमातिक्रमे प्रायश्चित्तं भविष्यतीति न कर्मैक्ये उक्तप्रायश्चित्तानुपपत्तिरूपो दोष इति समाधानम् ॥२२॥

## समाप्तिश्च पूर्ववत्त्वाद्यथाज्ञाते प्रतीयेत ॥२३॥

समाप्तिव्यवहारोऽपि **पूर्ववत्त्वात्**-अभेदप्रत्यभिज्ञादिपूर्वोक्तयुक्तिमत्त्वात्, अभेदज्ञानविषय एवार्थे समाप्तिलिङ्गं प्रतीयेत । समाप्तिरपि अभेदपरेति भावः ॥२३॥

## लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना, तस्मात् द्वादशाहस्याहारव्यपदेशः स्यात् ॥२४॥

'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः' इति ताण्ड्यशाखीयानारभ्याधीतवाक्यविहितं प्राथम्यरूपं **लिङ्गमविशिष्टं**—कर्मानैकत्वैकत्वपक्षयोस्तुल्यम्। कुतः? सर्वशाखीयज्योतिष्टोमशेषत्वात् । न हि ताण्ड्यशाखायां **कर्मचोदना**—ज्योतिष्टोमविधानमस्ति । येन तच्छाखाविहितज्योतिष्टोमस्यैव शेषत्वं भजेत प्राथम्यं नान्यस्य तस्येति । **तस्मात्**—प्राथम्यस्य सर्वशाखास्थज्योतिष्टोमशेषत्वात्, दिक्षितादीक्षितविरोधः कर्मभेदेऽपि तदवस्थः । अतो द्वादशाहस्य य **आहारः**—प्रयोगः, तस्मिन् **व्यपदेशः स्यात्**—विरुद्धानुष्ठानं प्रयोगभेदेन भवेत् । एवं कर्मैकत्वेऽपि तल्लिङ्गदर्शनं नानुपपन्नमिति भावः ॥२४॥

## द्रव्ये चाचोदितत्वाद्विधीनामव्यवस्था स्यान्निर्देशाद्व्यवतिष्ठेत, तस्मान्नित्यानुवादः स्यात् ॥२५॥

अग्न्याख्यद्रव्ये अग्निचयनप्रकरणे यूपैकादशिन्या **अचोदितत्वात्**-विधानाभावात्, **विधीनां** — तत्र श्रुतानां पक्षसमान-वेदिसमान-रथाक्ष-मात्रा-न्तरालविधीनां, तत्राव्यवस्था — तस्मिन्प्रकरणे व्यवस्थितिर्नैव स्यात् । वाच-स्तोमादौ यूपैकादशिन्या **निर्देशात्** — विधानात् । तत्र, अनारभ्याधीतौ रथाक्ष-मात्रान्तरालताविधिर्गमिष्यति । पक्षसंमितविधिस्तु 'यदन्तरिक्षे चिन्वीतान्तरिक्षे शुचार्पयेत्' इति श्रुतेः अन्तरिक्षे चयनासम्भवस्य लोकसिद्धत्वात् तद्दोषकथ-नपूर्वकोऽनित्यानुवादो यथा तथा नित्यानुवाद एव । सोऽपि वेदिसंमितविधे-स्तुत्यर्थः स्यात् । स्तुतिपूर्वको वेदिसंमानविधिरपि न विधानार्थः । अपि तु पश्चैकादशिनीस्थितयूपैक्यस्तुत्या पश्चैकादशिनीविधानार्थः सः । इतीदमपि लिङ्गदर्शनं कर्मैक्ये नानुपपन्नमिति तात्पर्यम् ॥२५॥

## विहितप्रतिषेधात्पक्षेऽतिरेकः स्यात् ॥२६॥

'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति' इत्येक-स्मिन्नेवातिरात्रे षोडशिग्रहणस्य विहितप्रतिषिद्धत्वात् विधिप्रतिषेधौ विकल्पेन सम्भवतः । तेन ग्रहणपक्षे तिसृणामतिरेकः । अग्रहणपक्षे द्वयोरतिरेकः । इति 'तिस्रः सस्तुताना विराजमतिरिच्यन्ते, द्वे संस्तुताना विराजमतिरिच्येते' इत्युक्तपरस्परविरुद्धसङ्ख्यातिरेकलिङ्गमपि कर्मैक्यपक्षे समुपपद्यत इति न तेन कर्मभेदः सिध्यति ॥ अतिरेकोपपत्तिर्भाष्यवार्तिकादिभ्योऽवगन्तव्या । नात्र विस्तरभयादुच्यत इति । त्रिषष्ट्युत्तरचतुःशत (४६३) सङ्ख्याया दशसङ्-ख्यया विभक्ताया त्रयोऽवशिष्यन्ते । द्विचत्वारिंशदुत्तरचतुःशत (४४२) सङ्ख्याया च दशसङ्ख्यया विभक्ताया द्वाववशिष्येते । इति दिङ्मात्रमत्र प्रदर्शितम् । सा च सा च सङ्ख्या कुतः कथं वा सम्पन्ना ? तदधिगमो-पायस्तु भाष्यादितोऽवगन्तव्य इत्युक्तमेव प्राक् ॥२६॥

## सारस्वते विप्रतिषेधाद्यदेति स्यात् ॥२७॥

'एष वाव प्रथमो यज्ञो यज्ञानाम्' इति श्रुते. सर्वेषामेव ज्योतिष्टोमविकाराणा तत्पूर्वकत्वात् तदात्मकाग्निष्टोमविकृतिभूते सारस्वतसत्रे 'ये पुरोडाशिनस्ते उपवसन्ति, ये सान्नायिनस्ते वत्सान् धारयन्ति' इति 'ये पुरोडाशिनः' इति लिङ्गदर्शनं सत्रे पुरोडाशाभावान्मतद्वयेऽपि निरुद्धम्। इति **विप्रतिषेधा**-द्विरोधात्, यदेति पदमध्याहार्यं तस्मिन्वाक्ये। तथा च—सारस्वतसत्रे प्रतिपक्षं पौर्णमास्यमावास्याख्यकर्मविधानात् ये यदा पुरोडाशिनः- पुरोडाशसाध्यकर्मकर्तार, ते तदा उपविशन्ति। ये यदा सान्नायिन —सान्नायसाध्यकर्मकर्तार, ते तदा वत्सान् धारयन्तीति कालभेदमात्रपर्यवसितं तद्वाक्यम्। न कर्मभेदपरमिति ज्ञेयम् ॥२७॥

## उपहव्ये प्रतिप्रसवः ॥२८॥

उपहव्ये-उपहव्यनाम्नि क्रतुविशेषे शाखाभेदेन पुनर्विधानरूप**प्रतिप्रसवः** कथं सङ्गच्छते। यतो ऐकाहिकयोर्बृहद्रथन्तरयो प्रकृतित प्राप्तत्वात्तयो प्रतिप्रसवोऽसङ्गत इत्याशङ्कायामाह भगवान् ऋषिर्जैमिनिः ॥२८॥

## गुणार्था वा पुनः श्रुतिः ॥२९॥

तत्तत्साम्नि निमित्ते **गुणार्था वा**-दक्षिणाविशेषरूपगुणविधानार्थो **पुनः श्रुति**पाठ, तस्याविशेषज्ञापनार्थश्च। प्राकृतिकविकल्पस्य बाधेनेति न तद् कर्मभेदे लिङ्गमित्यवगन्तव्यम् ॥२९॥

## प्रत्ययं चापि दर्शयति ॥३०॥

इत्थ भेदसाधकतयोपदर्शितानि लिङ्गान्युपदर्श्य कर्मैक्यसाधक लिङ्ग प्रदर्शयति **प्रत्ययमिति**। **प्रत्ययं**—कर्माभेदज्ञान- सर्वशाखाप्रत्ययमेकंकर्म कर्मेति ज्ञानं, वक्ष्यमाण लिङ्ग जनयति। तथा हि-मैत्रायणीयशाखाया प्रयाजानामविधानात् तैत्तिरीयशाखाया विहितान् समिदादिपञ्च प्रयाजान् 'ऋतवो वै प्रयाजा.' इत्यनेनानूद्य 'समा प्रतिष्ठा होतव्या' इति पञ्चाना देशैक्यरूपे

यागादिकर्मण्यपि . शेषभूतानीत्याचार्यजैमिनेर्मतम् । कुतः ? **फलार्थत्वात्**—तेषां फलोद्देश्यप्रवृत्तकृतिव्याप्यत्वस्य तेष्वपि सत्त्वात्तान्यपि लक्ष्याणीत्यर्थः । अपिना द्रव्यगुणसंस्कारपरिग्रहः ॥४॥

## फलं च पुरुषार्थत्वात् ॥५॥

स्वर्गादिफलमपि भोक्तृपुरुषोपसर्जनत्वात् शेषभूतम् । यो हि 'स्वर्गो मे भूयादि'ति कामयते तस्मै याग उपायतयोपदिश्यते । स्वर्गकामनावान् पुरुषः इति स्वर्गो भोग्यतया तच्छेषभूतः । अत्र स्वर्गस्य शेषत्वं गौण्या वृत्त्या बोध्यम् । तत्र परोद्देश्यप्रवृत्तकृतिव्याप्यत्वस्याभावात् ॥५॥

## पुरुषश्च कर्मार्थत्वात् ॥६॥

**पुरुषोऽपि** शेषभूतः । कुतः ? **कर्मार्थत्वात्**—यागोद्देश्यककृतौ कर्तृकारकतयोपसर्जनत्वादित्यर्थः । अत्र यागादिषु द्रव्याद्यपेक्षया प्राधान्यं फलाद्यपेक्षया च गुणत्वम् । अतः-स्वविरुद्धप्रधानत्वासमानाधिकरणं गुणत्वं नाम शेषत्वं द्रव्यगुणसंस्कारेष्वेवेति आचार्यबादरेरभिप्रायोऽवधेयः ॥६॥

**निर्वापणादीनामर्थानुसारेण व्यवस्थितविषयत्वाधिकरणम् ॥ ४ ॥**

## तेषामर्थेन सम्बन्धः ॥७॥

दर्शपूर्णमासयोः निर्वपण–प्रोक्षण-अवहननादयः औषधधर्माः, उत्पवन-विलापन-ग्रहण-आसादनादयः आज्यधर्माः, शाखाहरण-गवां प्रस्थापनं-प्रस्तावनमित्यादयः सान्नाय्यधर्माश्च श्रूयन्ते । तेषां धर्माणां तितुषीकरणादिदृष्टफलानुसारेण व्यवस्थयैव व्रीह्यादिभिः शेषशेषिभावाख्यः सम्बन्धः । सम्भवति दृष्टफलकत्वे अदृष्टकल्पनया सर्वेषां सर्वत्र सम्बन्धकल्पनमन्याय्यं, व्यर्थमिति भावः ॥७॥

## विहितस्तु सर्वधर्मः स्यात् संयोगतोऽविशेषात्प्रकरणाविशेषाच्च ॥८॥

व्रीहीनवहन्तीत्यादिशास्त्रेण विहितः अवघातादिः **सर्वधर्मः**-सर्वेषां व्रीह्याज्यादीनां शेषः स्यात् । कुतः ? **संयोगतोऽविशेषात्** — साक्षात्परम्परया

चा सर्वेषां धर्माणां परमापूर्वसम्बन्धाविशेषात्, दर्शपूर्णमासप्रकरणपाठस्य तुल्यत्वाच्च । 'व्रीहीनवहन्ति । आज्यमुत्पुनाति । शाखामाहरति' त्यादौ न व्रीह्यादिशब्दाः व्रीहित्वादिस्वार्थपराः, किं तु प्रकृतापूर्वसाधनद्रव्यपरा इति सिद्धान्तात् प्रकृतापूर्वसाधनतावच्छेदकद्रव्यत्वरूपोद्देश्यतावच्छेदकस्य सर्वद्रव्यवृत्तित्वात् तदवच्छिन्ने सर्वत्रावघातादीनां प्राप्तेरवर्जनीयतयाऽव्यवस्थिता एव ते धर्माः प्रवर्तन्ते । इति पूर्वपक्षाशयः ॥८॥

## अर्थलोपादकर्म स्यात् ॥९॥

अर्थस्य—दृष्टोपकारस्य वैतुष्यादेः, लोपात्—अभावात्, अदर्शनादित्यर्थः । अकर्म—अकरणम्, अवहननस्य आज्यादिषु अननुष्ठानम्, उत्पवनस्य व्रीह्यादिषु चाननुष्ठानम् । इति सिद्धान्ते उपपत्तिः ॥९॥

## फलं तु सह चेष्टया शब्दार्थोऽभावाद्विप्रयोगे स्यात् ॥१०॥

वैतुष्यरूपं दृष्टं फलं तु चेष्टया—अवहननादिक्रियया, जायमानं प्रत्यक्षमुपलभ्यते । अतो व्रीह्यादावेव शब्दस्य-अवहननशास्त्रस्य, अर्थः—तात्पर्यम् । वैतुष्यफलस्य विप्रयोगे-वियोगे सति, अभावात्—दृष्टोपकारकत्वाभावात्, आज्यादिः शब्दार्थः अवघातशास्त्रस्यार्थः कथं स्यात् ? तत्र तस्य तात्पर्यं नास्तीति यावत् । व्रीह्यादिशब्दाः न परमापूर्वसाधनद्रव्यपराः । अपि तु सन्निकृष्टत्वात् आग्नेयाद्युत्पत्त्यपूर्वसाधनद्रव्यपराः । तदुत्पत्त्यपूर्वसाधनद्रव्यं व्रीहिरेव । न तण्डुलाः, न च आज्यादिकम् । इति व्रीहिष्वेवावघातः नेतरत्र । शास्त्रबलेन दृष्टोपस्त्वन्याय्यः । यत्र दृष्टं नोपलभ्यते तत्रादृष्टस्य शास्त्रस्य चावसर इति भावः ॥१०॥

स्फ्यादीनां संयोगानुसारेण व्यवस्थितत्वाधिकरणम् ॥५॥

## द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत ॥११॥

दर्शपूर्णमासयोः 'स्फ्यश्च कपालानि च अग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या च उलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश

यज्ञायुधानी' ति श्रूयते। तथा 'स्फ्येनोद्धन्ति। कपालेषु पुरोडाशं श्रपयति। अग्निहोत्रहवण्या हवींषि निर्वपति। शूर्पेण तण्डुलान्विविनक्ति। कृष्णाजिनमुलूखलस्याधस्तादुपस्तृणाति। शम्यया दृषदमादधाति। उलूखलमुसलाभ्यामवहन्ति। दृषदुपलाभ्यां पिनष्टि' इत्यपि श्रूयते। तत्र द्रव्यं-स्फ्यादिरूपं द्रव्यं, यत्कार्यनिष्पत्त्यै उपदिश्यते तत्तदर्थं तदङ्गत्वेनैव विधीयते। न तु क्रियान्तराङ्गं तत्। कुतः? उत्पत्तिसंयोगात्—स्फ्येनोद्धन्तीत्याद्युत्पत्तिवाक्ये उद्धननादिक्रियासंयोगात्—साध्यसाधनभावसम्बन्धश्रवणादित्यर्थः। अथ स्फ्येनोद्धन्तीत्यस्य स्फ्यविशिष्टोद्धननेनापूर्वं भावयेदिति वाक्यार्थः। उद्धनने स्फ्यवैशिष्ट्यं च तन्निष्ठसाधनतानिरूपितसाध्यतया ज्ञेयम्। तथा च स्फ्यसाध्यमेवोद्धननं नान्यसाध्यमिति फलति। एवं कपालेषु श्रपयतीत्यादिवाक्येष्वपि तत्तत्साधनसाध्यमेव तत्तत्कर्म नेतरसाध्यमिति भावः ॥११॥

## आरुण्यादिगुणानामसङ्कीर्णताधिकरणम् ॥६॥

## अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् ॥१२॥

ज्योतिष्टोमे क्रयं प्रकृत्येदं श्रूयते—'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाती'ति। अत्र पिङ्गे अक्षिणी यस्याः, एकं हायनं च यस्या इत्यन्यपदार्थप्रधानबहुव्रीहिसमासात् पिङ्गाक्ष्यैकहायनीपदे द्रव्यवाचके एव। अतः तदुत्तरतृतीयया तादृशस्य यत् सोमं क्रीणातीति सोमक्रयसाधनत्वं बोधितं तथा-योग्यम्। द्रव्यस्य हि क्रियासाधनत्वं लोकप्रसिद्धमेवेति'। किन्त्वरुणयेति अरुणापदोत्तरतृतीयया यत् आरुण्यस्य क्रयसाधनत्वमुच्यते तदयोग्यं भाति। अरुणापदस्य अरुणगुणवाचकत्वात्, गुणस्य च द्रव्यवत्क्रियासाधनत्वस्याप्रसिद्धत्वात्। यद्यपि 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इत्यनुशासनात्, क्रयसाधनीभूतस्त्रीद्रव्यवाचिनैकहायनीपिङ्गाक्षीपदसहपाठाच्च अरुणयेति पदमपि अरुणगुणविशिष्टक्रयसाधनद्रव्यवाचकमिति वक्तुं शक्यम्। अथापि 'नागृहीतविशेषणा विशिष्टबुद्धिः' इति सर्वानुभवसिद्धन्यायेन अरुणगुणवाचकं तत्पदमित्येव वक्तव्यम्। किं चैतदरुणापदमरुणगुणविशिष्टं द्रव्यं

नियमेन नैव वक्ति । तद्द्रव्यं शुक्लादिगुणयुतं चेत् तद्वाचको न भवत्ययमरुणाशब्दः । अत अनियतं द्रव्ये अरुणापदं, गुणे तु नियतमनुभूयते । न हि जातवेदः पदमरुणेनेव शुक्लादिगुणवाचकं दृष्टम् । अरुणगुण एव शक्तं दृश्यते । अतोऽरुणगुण एव तस्य शक्योऽर्थः, न द्रव्यम् । गुणस्तु हिरण्यादिद्रव्यवत् न क्रियया साधनत्वेन सम्बद्धुं शक्तः, अमूर्तत्वात् । तस्मात्-अरुणयेत्यस्य सोमक्रयक्रियायामनन्वयात् वाक्याद्विच्छिद्य प्रकरणप्राप्तग्रहचमसादिद्रव्येषु तस्य निवेश उचित इत्याशङ्कायामाह — अर्थैकत्वे इति । यस्मिन् वाक्ये द्रव्यगुणयोरेकक्रियान्वयित्वम्प्रत्यार्थैकत्वं सम्भवति । तत्र श्रूयमाणयोस्तयोः नियमः — परिच्छेद्यपरिच्छेदकभावनियमः स्यात् । कुतः ? ऐकार्थ्यात् — एकार्थप्रतिपादकत्वरूपैकवाक्यत्वसत्त्वात् । अन्यथा वाक्यभेददोषापत्तेः । गुणस्यामूर्तत्वेऽपि क्रियाक्षिप्तद्रव्यद्वारकत्वाच्च तस्य गोद्रव्यपरिच्छेदकत्वमस्त्येव । तच्च द्रव्यं क्रयसाधनमिति तद्द्वारा गुणस्यापि तदस्तत्वम् । न च वाक्यभेदाभावेऽपि गुणवाचकस्य तस्य गुणवति द्रव्ये लक्षणाप्रसङ्ग इति वाच्यम् । अरुणयेति तृतीयया गुणस्यैव क्रयसाधनत्वमुच्यते । ननु द्रव्यद्वारं विना न सम्भवतीत्ययाद्द्रव्यावच्छेदकतया तस्य सिध्यतीति रीत्या वाक्येन विनियोगे सम्भवति न तदपेक्षया दुर्बलं प्राकरणिकं विनियोगं सङ्कीर्णताप्रयोजकोऽङ्गीकार्य इति भावः ॥१२॥ इत्यारुणीन्यायः ॥

## सर्वग्रहाणां संमार्गाधिकरणम् ॥७॥

## एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ॥१३॥

'य एवं विद्वान् सोमेन यजेत' इति वाक्यविहितसोमयागे 'दशापवित्रेण ग्रहं संमार्ष्टि' इति श्रुतम् । दशापवित्र—वास खण्ड । तेन ग्रहपात्रस्य समार्जनं कार्यमिति तद्वाक्यस्यार्थः । तत्र ग्रहमित्येकत्वसङ्ख्यायेत ग्रहद्रव्यं समार्गस्यादेव प्रतीयते । कुतः ? श्रुतिसंयोगात्—एकवचनाचकपदघटितत्वात् । अत एकस्य—दशानां एकपरिशिष्टस्य यस्य कस्यचिद्ग्रहस्य, समार्गं कार्यं । न तु ऐन्द्रवायवादीनां दशानां ग्रहणमिति भावः ॥१३॥

दर्शपूर्णमासे तदङ्गभूतप्रयाजसंनिधौ ' अभिक्रामन् जुहोति ' इति
श्रुतम्। तत्र यदिदं होमकाले आहवनीयस्याभितः सञ्चरणात्मकमभिक्रमणं, तस्य
क्रियात्वात्, क्रियायाश्च क्रियाया कारकत्वेनान्वेतुमयोग्यत्वात्, धात्वर्थहोमेन
साकं तस्य अन्वयासम्भवात्, **वाक्यभेदः**—तद्वाक्योपात्तिप्रयाजेऽन्वयस्तस्य
विच्छेदः स्यात्। ततस्तेभ्यो विच्छिन्नं तदभिक्रमणं प्रकरणेन दर्शपूर्णमास-
कर्त्रा सम्बद्धं सत् कर्तृगुणत्वेन तत्कर्तृकजुहोत्यनूदितप्राकरणिकेषु सर्वहोमेषु
तस्य कर्तृद्वारा प्राप्तिः स्यात्। तथा च सर्वे होमा अभिक्रामन् सदनुष्ठेयाः,
न केवल प्रयाजा इति ॥१९॥

## सिद्धान्तः—साकांक्षं त्वेकवाक्यं स्यादसमासं हि पूर्वेण ॥२०॥

विभागे अभिक्रामन्निति णमुलंतं पदं **साकाङ्क्षम्**। अविभागे च
अभिक्रामन् सन् जुहोतीत्येकार्थप्रतिपादकम्। इत्येकवाक्यमिदमभिक्रामन् जुहो-
तीति। नात्र वाक्यभेदः। **हि**—यतः, वाक्यभेदे **पूर्वेण**—णमुलंतपदमात्रेण,
**असमासम्**—अपरिपूर्णं तत्, इति तत्परिपूर्त्यर्थं क्रियान्तरमध्याहार्यम्। तद-
पेक्षया सन्निहितस्य योजनमेव न्याय्यम्। सन्निहितं च प्रयाजानुवादकं
जुहोतीति पदम्। अतः प्रयाजस्यैवाङ्गमभिक्रमणम्। तत्कर्तृद्वारा न दर्शपूर्ण-
मासस्येति भावः ॥२०॥

### उपवीतस्य प्राकरणिकाङ्गत्वाधिकरणम् ॥११॥

## सन्दिग्धे तु व्यवायाद्वाक्यभेदः स्यात् ॥२१॥

' विश्वरूपो वै त्वाष्ट्रः ' इत्यस्मिन्प्रपाठके सप्त-
दर्शपूर्णमासप्रकरणे ' विश्वरूपो वै त्वाष्ट्रः ' इत्यस्मिन्प्रपाठके सप्त-
माष्टमयोरनुवाकयोः सामिधेनीब्राह्मणमाम्नातम्। नवमे निविन्संज्ञकानां ' अग्ने
महानसि ब्राह्मणभारत ' इत्यादिमन्त्राणां ब्राह्मणम्। ' दशमे इदंकामस्य
एतावतीरनुब्रूयात्, इदंकामस्यैतावती ' रिति काम्याः सामिधेनीप्रकारा उक्ताः।
एकादशे त्वनुवाके ' निवीतं मनुष्याणां, प्राचीनावीतं पितॄणाम्, उपवीतं
देवानाम्, उपव्ययते देवलक्ष्ममेव तत्कुरुते ' इति उपवीतं विहितम्।

तत्रावान्तरप्रकरणमहाप्रकरणाभ्यां सन्देहे सति निविन्मन्त्रब्राह्मणेन अग्न्यङ्गभूतेन सामिधेनीप्रकरणस्य **व्यवायात्**-विच्छिन्नत्वात्,-**वाक्यभेदः स्यात्।** महाप्रकरणेन दर्शपूर्णमासाङ्गमिदं वासोविन्यासविशेषात्मकमुपवीतमिति सिद्धान्तः ॥२१॥

### वैकंकतपात्राणां कृत्स्नयागगुणताधिकरणम् ॥१२॥

## गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात् ॥२२॥

आधानप्रकरणे तत्सन्निधौ च 'वारणो यज्ञावचरः स्यात्, नत्वेतेन जुहुयात्, वैकंकतो यज्ञावचरः स्याज्जुहुयादेवैनेन' इति । यज्ञावचरो—यज्ञसाधनम् । तत्र **गुणानां**—वारणवैकङ्कतादिरूपाणां, **परार्थत्वात्**—यज्ञसाधनपात्रार्थत्वात्, आधानस्यायज्ञत्वात्, पवमानहविषां यागत्वेऽपि तदप्रकरणत्वात्, तत्सन्निधावस्य पाठाभावाच्च, नाधानेन पवमानेष्टिभिश्च साकं श्रुतस्य यज्ञावचरस्याङ्गाङ्गिभावेन सम्बन्धः । अपि तु स्ववाक्यश्रुतयज्ञपदार्थेनाभिमतानामेषां यज्ञावचराणामसन्निधिपाठस्य समत्वात् यज्ञपदघटितत्वाच्च तद्भिन्नेषु सर्वयज्ञेषु निवेशः स्यादित्यर्थः । अथवा **गुणानाम्**—आधानपवमानेष्टीनां च **परार्थत्वात्**—अग्निमुद्दिश्य विहितत्वेन अग्न्यर्थसंस्काररूपत्वात् तेषां परस्परमसम्बन्धः-अङ्गाङ्गिभावो न स्यात् । अङ्गत्वेन साम्यादिति यावत् । अङ्गत्वाच्च पवमानहविषां यज्ञावचराणामपि परस्परमङ्गाङ्गित्वं न सम्भवति । अर्थात्सर्वयज्ञेषु तेषां निवेश इति भावः ॥२२॥ मिथोऽसम्बन्धन्यायोऽयम् ॥

### वार्त्रघ्न्याद्यनुवाक्यानामाज्यभागाङ्गताधिकरणम् ॥१३॥

## मिथश्चानर्थसम्बन्धात् ॥२३॥

दर्शपूर्णमासे श्रूयते 'वार्त्रघ्नी पौर्णमास्यामनूच्येते । वृधन्वती अमावास्यायामिति' । तत्र 'अग्निर्वृत्राणि जङ्घनत्' इति प्रथमा वार्त्रघ्नी । 'त्वं सोमासि सत्पतिर्वृत्रहा' इति द्वितीया वार्त्रघ्नी । 'अग्निः प्रत्नेन जन्मना कविर्विप्रेण वावृधे' इति प्रथमा वृधन्वती । सोमगीर्भिष्ट्वावयम्, सर्वयामो

ययो विदः ' इति द्वितीया वृधन्वती । एतयोर्वार्त्रघ्नीवृधन्वतीयुगलयोः द्वित्वोपेतयाज्यापुरोऽनुवाक्ययोः प्रधानयागेन साकमनर्थः–निष्प्रयोजनः, सम्बन्धः। तत्र याज्यापुरोऽनुवाक्यान्तरस्य सत्त्वात् । इत्याज्यभागयोर्द्वित्वात् तत्र तयोर्युगलं सार्थकम् । अतः पूर्णमासे आज्यभागयोर्वार्त्रघ्नीयुगलम् । अमावास्यायामाज्यभागयोर्वृधन्वतीयुगलम् '। इति नियामकं वाक्यमिति सिद्धम् ॥२३॥ वार्त्रघ्न्यधिकरणम्॥

हस्तावनेजनादीनां कृत्स्नप्राकरणिकाङ्गत्वाधिकरणम् ॥१४॥

## आनन्तर्यमचोदना ॥२४॥

दर्शपूर्णमासप्रकरणे ' हस्तावनेनिक्ते, उलपराजिं स्तृणाति ' इति श्रूयते । अवनेजनं–प्रक्षालनम् । वेद्यामास्तीर्ण सम्पादितस्तृणस्तंब उलपराजिः । तथा ज्योतिष्टोमे 'मुष्टीकरोति । वाच यच्छति । दीक्षितमावेदयति' इति श्रुतम् । तत्र अवनेजनं हस्तसंस्कारः, मुष्टीकरणवाग्यमौ मनःप्रणिधानार्थौ । अतस्तत्त्रयमपि लिङ्गप्रकरणाभ्यां करिष्यमाणसर्वकर्मार्थं, न तु केवलमुलपराजिस्तरणदीक्षिताऽऽवेदनार्थम् ।अतस्तत्र प्रतीयमानमव्यवहितोत्तरत्वरूपमानन्तर्यं क्रमात्मकम् अचोदना–नयोरेकवाक्यत्वसाधकं न भवति । दुर्बलत्वात् । अन्यथा घटं करोति, गां नयतीत्यनयोरप्येकवाक्यतापत्तिरिति भावः ॥ २४ ॥

## वाक्यानां च समाप्तत्वात् ॥ २५ ॥

हस्तावनेजनादिपूर्ववाक्यानां तदुत्तरवाक्यानां च स्वस्वार्थबोधेन समाप्तत्वात्–निराकाङ्क्षत्वात्, एकवाक्यत्वलक्षणस्यार्थभावेन नैकवाक्यत्वमत्रेत्यर्थः ॥ २५ ॥

चतुर्धाकरणस्य आग्नेयमात्राङ्गत्वाधिकरणम् ॥ १५ ॥

## शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसम्बन्धात् ॥ २६ ॥

दर्शपूर्णमासयोः 'आग्नेयं चतुर्धा करोती'ति श्रुतम्। अत्र **शेषः**—चतुर्धाकरणात्मकः संस्कारः, **गुणसंयुक्तः**—अग्निरूपगुणसम्बन्धविशिष्टोद्देश्यकोऽपि, **साधारणः**—अग्नीषोमैन्द्राग्नसाधारणः प्रतीयेत। कुतः? तयोरपि अग्निसम्बन्धस्य विद्यमानत्वात्। किं च शाखान्तरे शतपथब्राह्मणे **तेषां**—चतुर्धाकरणव्यक्तीनामग्रेश्च परस्पर**मसम्बन्धात्**—सम्बन्धाप्रतिपादनात्। तत्र तु केवलं *पुरोडाशं प्रकृत्य तं चतुर्धा करोती* ति *श्रुतम्। अस्यां श्रुतौ* तच्छब्दस्य प्रकृतपुरोडाशमात्रपरत्वात् अत्रत्याग्नेयपदं प्रकृतपुरोडाशमात्रपरं, न गुणसम्बन्धविशिष्टोद्देश्यपरमिति भावः ॥२६॥

## सिद्धान्तः—व्यवस्था वा अर्थसंयोगात् लिङ्गस्यार्थेन सम्बन्धात् लक्षणार्था गुणश्रुतिः ॥२७॥

**व्यवस्था वा**—आग्नेयस्यैव चतुर्धाकरणं नान्यस्येति नियमः, कस्मात्? **अर्थेन**—अग्निदेवतारूपतद्धितार्थेन पुरोडाशस्य **सम्बन्धात्** न सम्बन्धसामान्यबोधकोऽयं तद्धितान्तः शब्दः। अपि तु देवताविशेषसम्बन्धवाचकः। अग्नीषोमादिस्थले तु न केवलाग्नेर्देवतात्वम्। तत्र देवतात्वं व्यासज्जवृत्ति। अत्र त्वव्यासज्जवृत्ति। अतोऽव्यासज्जवृत्तिदेवतात्वप्रकाशनसामर्थ्यरूपलिङ्गस्य तादृशार्थेनात्र सम्बन्धात्, बोधकत्वेनेति शेषः, आग्नेयस्यैव चतुर्धाकरणम्। नाग्नीषोमीयादेरिति। तत्र **गुणश्रुतिः लक्षणार्था**—शक्यसम्बन्धरूपलक्षणया अग्निबोधका, न देवतात्वेनेति भावः। विस्तरस्तु भाष्यादितोऽवगन्तव्यः इत्यलम् ॥२७॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां तृतीयाध्यायस्य प्रथमः पादः ॥ श्रीः ॥

## अथ तृतीयाध्यायस्य द्वितीयः पादः ॥

लवनप्रकाशकमन्त्राणां मुख्ये बर्हिषि
विनियोगाधिकरणम् ॥१॥ ( बर्हिर्न्यायः ) ॥

### अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात् तस्मादुत्पत्तिसम्बन्धोऽर्थेन नित्यसंयोगात् ॥१॥

पूर्वपादे श्रुतिविनियोगो निरूपितः । इह पादे लिङ्गविनियोगो विमृश्यते । मन्त्राधिकरणे विहितकर्मसमवेतार्थस्मारकतया मन्त्राणां क्रत्वङ्गत्वं प्रामाण्यं चेति स्थितम् । तत्र पदानामर्थस्मारकत्वं द्विधा, शक्त्या लक्षणया च । तत्रैवं दर्शपूर्णमासयोः प्रकरणे श्रुतम्—'बर्हिर्देवसदनं दामी'ति लवनप्रकाशकं मन्त्रमुदाहृत्य विचार्यते—किमयं मन्त्रो बर्हिःपदशक्यकुशलवनप्रकाशकत्वेन कर्माङ्गम्, उत तत्सदृशकुशसदृशतृणविशेषप्रकाशकत्वेनेति सन्देहे सिद्धान्तमाह महर्षिर्जैमिनिः **अर्थाभिधानसंयोगादिति**। यस्मात् गुणसम्बन्धमनपेक्ष्यैव शब्दात्प्रथमं प्रतीतस्यैव मुख्यस्य—शक्तिवृत्तिबोध्यस्यार्थस्य कथनद्वारा मन्त्राणां क्रतुभिः साकं सम्बन्धात् तेषु शेषभावः क्रत्वङ्गत्वं स्यादिति स्थितं प्राक् । तस्मात्—**उत्पत्तिसम्बन्धः**—औत्पत्तिकेन स्वाभाविकेन मुख्येनैवार्थेन मन्त्रघटकपदानां सम्बन्धः, स्यात् । कुतः? **नित्यसंयोगात्**—पदपदार्थयोः सम्बन्धो नित्य इति व्यवस्थापितत्वात् । मुख्यार्थाभिधानेनैव मन्त्रस्य क्रत्वर्थत्वे निराकाङ्क्षत्वाच्च न लक्षणया अमुख्यार्थस्मरणाय तस्य प्रवृत्तिरिति भावः ॥१॥

### संस्कारकत्वादचोदिते न स्यात् ॥२॥

नन्वेवं सति पूषानुमन्त्रणमन्त्रस्य प्रकरणाद्विच्छेदापत्तिरित्यत्रेष्टापत्तिमाह—**संस्कारेति** । पूषानुमन्त्रणमन्त्रस्य **संस्कारकत्वात्**—पूषदेवतास्मृतिरूपसंस्कारजनकत्वात् **अचोदिते**—अविहितपूषदेवताके यागे, तस्य मन्त्रस्याङ्गत्वं न स्यात् । यत्र संस्कारस्य सम्भवः तत्रैव तस्याङ्गत्वमिति भावः ॥२॥

अथ बर्हिर्न्यायः ॥

इन्द्रप्रकाशकमन्त्रस्य श्रुत्या गार्हपत्योपस्थानाङ्गत्वाधिकरणम् ॥२॥

## वचनात्त्वयथार्थमैन्द्री स्यात् ॥३॥

अग्निं च 'निवेशनः सङ्गमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रूयते । अत्र गार्हपत्यमिति गार्हपत्यस्याग्नेः द्वितीयान्तपदश्रवणात्कर्मत्वावाचिन्या द्वितीयया श्रुत्या तदुपस्थानाङ्गतया ऐन्द्र्या ऋचः विनियोगः कृत इति व्यक्तमुपलभ्यते । अत इयमिन्द्रदेवताका ऋक् अयथार्थे—मुख्यार्थमतिक्रम्य, लक्षणया उपस्थानद्वारा गार्हपत्याङ्गभूता भवेत् । लिङ्गापेक्षया श्रुतेर्बलीयस्त्वादिति भावः ॥३॥

## गुणाद्वाप्यभिधानं स्यात् सम्बन्धस्य अशास्त्रहेतुत्वात् ॥४॥

न च श्रुतिबलादिन्द्रपदस्य गार्हपत्ये शक्तिः कल्प्येति वाच्यमित्याह—गुणाद्वापीति । लक्षणारूपगौणवृत्त्यैव इन्द्रपदेन गार्हपत्यस्याभिधानं स्यात् । न तु शक्त्या । यतो वाच्यवाचकभावात्मकसम्बन्धस्य शास्त्रादिना नित्यः सः इत्यौत्पत्तिकसूत्रे स्थितत्वात्तादृशशक्तिरूपसम्बन्धस्य अशास्त्रहेतुत्वात्—शास्त्रकारणकत्वासम्भवात् , लोकसिद्धगौणवृत्त्याश्रयणेन गार्हपत्याभिधानोपपत्तौ सत्यां तत्रेन्द्रपदस्य शक्तिकल्पनं जलेन दहेदितिवदशक्यार्थमिति भावः ॥४॥ अयं गार्हपत्यन्यायः ॥

आह्वानप्रकाशकमन्त्राणामाह्वाने विनियोगाधिकरणम् ॥३॥

## तथाऽऽह्वानमपीति चेत् ॥५॥

दर्शपूर्णमासयोः श्रूयते 'हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति' इति । अत्र हविष्कृदेहीति मन्त्रः तथा, यथा ऐन्द्रमन्त्रस्य इन्द्रशब्दः गौणवृत्त्या गार्हपत्यप्रकाशकः, तथा एहीत्याह्वानमन्त्रोऽपि अवघातलक्षकत्वेनैव वृत्त्या । तथा च हे हविष्कृत्, हविःसम्पादक, अवघातत्वमेहि-सम्पन्नो भवेत्यवघाताङ्गत्वं मन्त्रस्य, नाऽऽह्वानाङ्गत्वमिति चेत् ॥५॥

## सिद्धान्तः– न कालविधिश्चोदितत्वात् ॥६॥

न अवहननार्थो मन्त्रः। नापि कालविधानार्थः। तस्य स्वयमेव प्राप्तत्वात्। अपि तु अवघ्नन्-अवहननकाले यदाह्वयति तत्त्रिः इति त्रिरभ्यासमात्रविधिरिति निष्कर्षः ॥६॥

## गुणाभावात् ॥७॥

हविष्कृदेहीति मन्त्रस्यस्य आह्वानवाचक–एहीतिपदस्य अवहननलक्षकत्वे सिंहो माणवक इत्यादाविव उभयसाधारणः कश्चन गुणोऽपेक्षितः। तादृशो गुणो नोपलभ्यते लक्ष्यत्वाभिमते अवहनने मुख्यार्थाह्वानसदृशः। अतो गुणाभावात् न एहीत्यस्य अवहनने विसदृशे लक्षणेत्यर्थः ॥७॥

## इतश्च तथा लिङ्गात् ॥८॥

'वाग्वै हविष्कृत्' इत्यर्थवादरूपात् लिङ्गादपि न हविष्कृदित्यस्य अवहनने तात्पर्यम्। यतो वाक्सदृशत्वोक्तेन वाच्यमवहननन्तु न स्त्रीसदृशमिति भावः ॥८॥

## विधिकोपश्चोपदेशे स्यात् ॥९॥

सादृश्याभावेऽपि गौणवृत्त्यालम्बनेनोक्तमन्त्रस्यावहननाङ्गत्वेनोपदेशे उच्यमाने 'अपहतं रक्ष इत्यवहन्ति, अपहता यातुधाना इत्यवहन्ति' इति नित्यवद्विधेः कोपः-उपरोधो, भवेत्। तस्मान्नावहननाङ्गत्वं मन्त्रस्य। अपि त्वाह्वानशेषत्वमेवेति भावः। तस्य त्रिरभ्यासमात्रविधिरिति पूर्वमुक्तमेव ॥९॥

अग्निविहरणादिप्रकाशकमन्त्राणां तत्रैव विनियोगाधिकरणम् ॥४॥

## तथोत्थानविसर्जने ॥१०॥

ज्योतिष्टोमे श्रूयते — 'उत्तिष्ठन्नन्वाह अग्नीदग्नीन्विहर' इति। तथा— 'व्रतं कृणुतेति वाचं विसृजति' ति। यथा अवघ्नन्निति काललक्षकम्। तथा- उत्थानविसर्जने अपि काललक्षके एव। न विधायके इति ॥१०॥

सूक्तवाकस्य प्रस्तरप्रहरणाङ्गत्वाधिकरणम् ॥५॥ ..

( प्रस्तरप्रहरणन्यायः )

## सूक्तवाके च कालविधिः परार्थत्वात् ॥११॥

दर्शपूर्णमासयोः ' सूक्तवाकेन प्रस्तरं प्रहरति ' इति श्रुतम् । ' इदं द्यावापृथिवी भद्रमभूत् ' इत्यादिको मन्त्रः सूक्तवाकः । प्रस्तरो दर्भमुष्टिः । तस्य प्रहरणमग्नौ प्रक्षेपः । तत्र सूक्तवाकेनेति तृतीयान्तं पदं काललक्षकम् । तत्पठनकाले अध्वर्युणा प्रस्तरप्रहरणं कार्यमित्यर्थः । न प्रहरणाङ्गत्वेन सूक्तवाकस्य विनियोगविधिः । कुतः ? उभयोः परार्थत्वात् । सूक्तवाको देवतास्तुत्यर्थः । प्रस्तरश्च स्रुग्धारणार्थः । इति न तयोरङ्गाङ्गिभावः । मिथोऽसम्बन्धन्यायात् इति भावः ॥११॥

## उपदेशो वा याज्याशब्दो हि नाकस्मात् ॥१२॥

सूक्तवाकेनेति तृतीयाश्रुतिबलात् सूक्तवाकस्य प्रस्तरप्रहरणंप्रति अङ्गत्वेन उपदेशो वा-विनियोग वाच्य । अन्यथा हि अकस्मात् यागानङ्गभूतस्य तस्य ' सूक्तवाको याज्या, प्रस्तरो हविः ' इत्यस्मिन् अर्थवादे याज्यात्वेन स्तुतिरनुपपन्ना स्यात् । यागसाधन एव मन्त्रे याज्याशब्दः प्रवर्तत इति भाव ॥१२॥

## स देवतार्थस्तत्संयोगात् ॥१३॥

सः—सूक्तवाकः, प्रस्तरहविष्के यागे अग्निदेवताकल्पक । तत्संयोगात्—सूक्तवाकेनेति तृतीयया प्रहरण प्रत्यङ्गत्वेन तस्य सम्बन्धबोधनात् । तथा सत्येव सूक्तवाकस्यम् ' अग्निरिदं हविरजुषत ' इत्यग्नि प्रस्तरं हविः स्वीकृतवानिति लिङ्ग समुपपन्न भवति । तस्मा प्रोपसर्गपूर्वको हरतिरत्र यागार्थक आघारमाघारयतीतिवदिति भावः ॥१३॥

## प्रतिपत्तिरिति चेत्स्विष्टकृद्वदुभयसंस्कारः स्यात् ॥१४॥

ननु स्रुग्धारणे विनियुक्तस्य प्रस्तरस्य प्रहरणं प्रतिपत्तिकर्मेति द्वितीयया व्यक्तमवगम्यते । न यागाङ्गत्वम् । अदृष्टद्वयकल्पनाप्रसक्तेः । इति चेत् ।

स्विष्टकृद्वदिष्टापत्तिरित्यवधारय । तथा हि–यथा स्विष्टकृद्याग' प्रक्षेपांशेन उपयुक्तहविर्द्रव्यसंस्कारार्थः 'अपाडग्निरग्नेः प्रियाधामानी' त्यादिमन्त्रांशेन इज्यमानदेवतासंस्कारक', तथाऽयमपि प्रक्षेपांशेन प्रस्तरस्य उद्देशांशेन उपयुक्तदेवतायाश्च संस्कार, इति द्रव्यदेवतोभयसंस्कारार्थ स्यात् । द्वितीया त्वनुवादपरा । तस्य प्रतिपत्तिसंस्कार्यत्वादिति भावः ॥१४॥

## सूक्तवाकानामर्थानुसारेण विनियोगाधिकरणम् ॥६॥

### ( सूक्तवाकन्यायः )

## कृत्स्नोपदेशादुभयत्र सर्ववचनम् ॥१५॥

' सूक्तवाकेन प्रस्तर प्रहरती'ति प्रस्तरप्रहरणाङ्गतया **कृत्स्नोपदेशात्**-कृत्स्नस्य सूक्तवाकस्य विधानात्, दर्शपूर्णमासे च उभयत्रापि **सर्ववचनं**-समग्रस्यैव सूक्तवाकस्य पठन कार्यम् ॥१५॥

## सिद्धान्तः–यथार्थं वा शेषभूतसंस्कारात् ॥१६॥

**यथार्थं वा**—यथालिङ्गमेव विभज्य, विनियोगो दर्शपूर्णमासयोः कार्यः । कस्मात् ' **शेषभूतसंस्कारात्**–दर्शपूर्णमासे च शेषभूतदेवतासंस्कारकत्वात्सूक्तवाकस्य । तत्र तत्रानङ्गभूतदेवतायाः संस्काराकाङ्क्षाविरहादुभयत्र कृत्स्नपाठो निष्फल । देवतास्मृतिरूपदृष्टफलाभावात् । सम्भवति दृष्टफले अदृष्टकल्पनस्यान्याय्यत्वाच्चेति भाव' ॥१६॥

## वचनादिति चेत् ॥१७॥

सूक्तवाकेनेति तृतीयान्तवचनात्कृत्स्नस्य विनियोगः । न तत्र युक्त्यपेक्षेति चेत् ॥१७॥

## प्रकरणाविभागादुभे प्रति कृत्स्नशब्दः ॥१८॥

**प्रकरणाविभागात्**–महाप्रकरणस्य एकत्वात्, **उभे**–दर्शपूर्णमासकर्मणी प्रति, अवयवश प्रयोगेऽपि **कृत्स्नशब्दः**–कृत्स्नसूक्तवाकशब्दार्थ', नानुपपन्न इति लैङ्गिकविनियोगेऽपि न तृतीयाश्रुतिविरोध इति भाव ॥१८॥

सूक्तवाकन्यायोऽयम् ॥

काम्ययाज्यानुवाक्यानां काम्यमात्राङ्गताधिकरणम् ॥७॥

## लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम् ॥१९॥

काम्ययाज्यानुवाक्याकाण्डमिति समाख्याते काण्डे 'इन्द्राग्नी रोचना-दिवः' इति इन्द्राग्न्यादिलिङ्गका ऋचः समाम्नाताः। तासां **लिङ्गक्रम-समाख्यानात्**—लिङ्गक्रमसमाख्येति प्रमाणत्रयानुरोधात्, काम्ययाज्यानु-वाक्याकाण्डमिति समाख्यया **काम्ययुक्तं**—काम्येष्टिकाण्डसमाख्याते काण्डे पठितेषु 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्यादिकाम्यकर्मस्वेव विनियोग। तत्रापि क्रमप्रमाणेन प्रथमेष्टौ प्रथमयाज्यानुवाक्यायुगलमिति रीत्या अङ्गत्वेन सम्बद्धं स्यात् तत्काम्ये याज्यानुवाक्याकाण्डम्। न केवलेन लिङ्गप्रमाणेनेति तात्पर्यम् ॥१९॥

आग्नीध्रोपस्थाने प्राकृतानामेव मन्त्राणां विनियोगाधिकरणम् ॥८॥

## अधिकारेचमन्त्रविधिरतदाख्येषु शिष्टत्वात् ॥२०॥

ज्योतिष्टोमे 'आग्नेय्या आग्नीध्रमुपतिष्ठते, ऐन्द्या सदः, वैष्णव्या हविर्धानम्' इति श्रूयते। अत्र **अधिकारे**—यत्किञ्चित्क्रतुसन्निधौ, य आग्नेया-दिमन्त्रविधिः सः, **अतदाख्येषु**—अप्रकृतेषु प्रकृतेषु च आग्नेयादिमन्त्रेषु, प्रवर्तते। न प्रकृतेष्वेव। कुतः? प्रकृताप्रकृताविशेषेणैवाग्नेयादिपदेनाङ्गतया विहितत्वात्। इति ॥२०॥

## सिद्धान्तः—तदाख्यो वा प्रकरणोपपत्तिभ्याम् ॥२१॥

तस्मिन्प्रकरणे आख्यापाठः यस्य मन्त्रस्य स एव उपस्थाने योज्यः। नाप्रकृतः। प्रकरणेन, सन्निधिपाठेन, वक्ष्यमाणयुक्त्या चेत्यर्थः ॥ २१ ॥

## युक्तिः—अनर्थकश्चोपदेशः स्यात् असम्बन्धा-त्फलवता न ह्युपस्थानं फलवत् ॥२२॥

मन्त्रस्योपस्थानं प्रति साधनतयोपदेशः **अनर्थकः**—व्यर्थः स्यात्। कस्मात्? प्रकरणानादरेण फलवता क्रतुना असम्बन्धात्। उपस्थानं तु न

स्वतः फलवत् इत्यर्थः । प्रकरणाङ्गीकारे तु सामान्यतोऽयं मन्त्रः क्रतुना सम्बद्धस्तत्प्रकरणपाठादिति निश्चये केन साकं सम्बद्धः? इति विशेषजिज्ञासायाम् 'आग्नेय्या आग्नीध्रमुपतिष्ठते' इत्यादिवाक्यं फलवत्क्रतुसम्बन्धेन उपस्थानेन साकं तं तं मन्त्रं सम्बन्धयतीति परंपरया फलवत्त्वादुपपन्ना मन्त्रप्रवृत्तिः । अन्यथा निष्फला, कल्प्यफला वा स्यादिति भावः । प्रकरणपाठानादरदोषोऽस्त्येवेति ध्येयम् ॥ २२ ॥

## सर्वेषां चोपदिष्टत्वात् ॥२३॥

'अग्निनियुक्ता वाचस्तोमे रूप्यन्ते' इति वचनेन सर्वेषामप्रकृतानामाग्नेयादिलिङ्गकमन्त्राणां वाचस्तोमाख्यक्रतुसम्बन्धस्योपदिष्टत्वात्, तद्द्वारा तेषां फलवत्त्वाच्च न काप्यनुपपत्तिरित्यर्थः ॥२३॥

### भक्षमन्त्राणां यथालिङ्गं ग्रहणादौ विनियोगाधिकरणम् ॥९॥

## लिङ्गसमाख्याभ्यां भक्षार्थताऽनुवाकस्य ॥२४॥

ज्योतिष्टोमप्रकरणे 'भक्षेहि मा विश दीर्घायुत्वाय' इत्याद्यारभ्य 'उपहूतो भक्षयामी'त्येवमन्तो भक्षानुवाकः पठितः । तत्र, यथा काम्येष्टियाज्यानुवाक्याकाण्डमिति समाख्यासहितलिङ्गेन मन्त्राणां काम्येष्टयङ्गत्वं निर्णीतम् । तथा, भक्षानुवाकः इति समाख्यासहितभक्षयामीति लिङ्गेन कृत्स्नस्यानुवाकस्य भक्षार्थत्वं, न ग्रहणावेक्षणाद्यर्थत्वम् । तानि लिङ्गान्तराणि लक्षणया भक्षणपराणि वाच्यानीति ॥२४॥

## सिद्धान्तः—तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात् ॥२५॥

न कृत्स्नस्यानुवाकस्य भक्षणार्थता । अपि तु तस्य—तदनुवाकस्थस्य ग्रहणावेक्षणादितत्त्वदंशस्य, अपकर्ष—विच्छेदः, विच्छिद्य च ग्रहणावेक्षणभक्षणजरणेषु निवेशः । कुतः? रूपोपदेशाभ्याम्—रूपं-ग्रहणादिप्रकाशनसामर्थ्यम्, भक्षयन्तीत्युपदेशश्च, ताभ्यां हेतुभ्यामित्यर्थः । ननु भक्षणविधिवद्-

ग्रहणादिविधेरभावात् कथमविहितमर्थं ग्रहणादिलिङ्ग प्रकाशयेत्? कथं वा अप्रकाशितेऽर्थे तत्तन्मन्त्रस्य निवेश ? इत्याशङ्कायामाह—**अर्थस्य**—ग्रहणावेक्षणादिरूपार्थस्य, **चोदितत्वात्**—भक्षणविधिनैव तस्य विहितत्वात। ग्रहणादिकं विना भक्षणानुपपत्तेरित्यर्थः। तथा च 'भक्षे हीति वाहुभ्यां सध्यास' मित्यन्तो मन्त्रो ग्रहणे, 'नृचक्षसन्त्वा देव सोमेति अवख्येष'मित्यन्त अवेक्षणे, 'हिन्वमे गात्रेति मा नाभिमतिगा इत्यन्तो जरणे, 'वसुमद्गणस्येति भक्षयामी' त्यन्तो भक्षणे, विनियोक्तव्य। समाख्यया लिङ्गस्य वाधासम्भवादिति भावः॥२५॥

मन्त्राभिभूतिरित्यादेर्भक्षयामीत्यन्तस्यैकमन्त्रत्वाधिकरणम् ॥१०॥

## गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात् ॥२६॥

तदनुवाकगत' मन्द्राभिभूति' कतुर्यज्ञाना वागुजुषाणा सोमस्य तृप्यत्विति' मन्त्र अग्रिमेण भक्षमन्त्रेण सह **एकमन्त्रः**—एकवाक्यं स्यात्। न पूर्वाधिकरणरीत्या तृप्यत्विति तृप्तिप्रकाशकलिङ्गेन विच्छिद्यतृप्तौ निवेश। भक्षणानुनिष्पन्ना हि तृप्तिर्भक्षणस्य फलमिति स्वर्गवदविधेया सेति गुणस्य भक्षणफलस्य तृप्तेस्तेन मन्त्रेण अभिधानात्तयोर्मन्त्रयोर्विशिष्टैकार्थप्रतिपादकत्वादेकमन्त्रत्वमिति भाव. ॥२६॥

इन्द्रपीतस्येत्यादिमन्त्राणां सर्वेषु भक्षणेषु ऊहेन विनियोगाधिकरणम् ॥११॥

## लिङ्गविशेषनिर्देशात्समानविधानेषु अनैन्द्राणाममन्त्रत्वम् ॥२७॥

उक्तभक्षमन्त्रे 'इन्द्रपीतस्ये' ति लिङ्गविशेषनिर्देशात्, तुल्यप्रमाणोपदिष्टतया प्रकृतिविकृतिभावरहिते। यथ, अनैन्द्रमैत्रावरुणादिग्रहयागसम्बन्धि सोमभक्षणम् **अमंत्रम्**-इन्द्रपीतस्येति -पदघटितभक्षमन्त्ररहितमेव कार्यम्। इति प्र० पूर्वपक्षः ॥२७॥

## यथादैवतं वा तत्प्रकृतित्वं हि दर्शयति ॥२८॥

यथादैवतं वा–यद्देवताको याग तत्तद्देवतायास्तत्र तत्र ऊहेन तन्मन्त्रपाठः कर्तव्यः । कस्मात् ? यस्मात् तत्प्रकृतित्वम्–ऐन्द्रप्रकृतित्वं, सर्वग्रहाणां दर्शयति । 'इन्द्राय त्वा वसुमते रुद्रवते गृह्णामी'ति सोमग्रहणमन्त्रः । अस्मिन्मन्त्रे इन्द्रमुद्दिश्यैव सोमग्रहणं श्रुतम् । अर्थात् निखिलसोमग्रहा. इन्द्रयागमुद्दिश्येति तस्यैव प्रकृतित्वम् । तथा च मैत्रावरुणादिग्रहाणां तद्विकृतित्वात् मित्रावरुणपीतस्येत्यादूहेन भक्षमन्त्रपाठस्तत्र प्राप्नोतीति भाव. ॥२८॥

### अभ्युन्नीतसोमभक्षणे इन्द्रस्याप्युपलक्षणाधिकरणम् ॥१२॥

## पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ॥२९॥

इत्थमवसरसिते एतदधिकरणे अन्तरा ऊहप्रसङ्गाद्विचारान्तरं प्रस्तूयते । कुत्वाचिन्तारूपेण न्यायप्रसङ्गेन । तत्र, प्रातःसवने तृतीयसवने च सन्ति सवनमुख्याः दश चमसा । पात्रविशेषस्थिता सोमाः साधनसा इत्युच्यन्ते । तेषु मध्यतः कारिणां होतृब्रह्मोद्गातृयजमानानां चतुर्णां चत्वारश्चमसा । होत्रकाणां मैत्रावरुण-ब्राह्मणाच्छंसि-पोतृ-नेष्टृ-अच्छावाक्-आग्नीध्राणां षण्णां षट् चमसाः । तत्र मध्यतःकारिणां चमसैर्होतुर्वषट्कारानुवषट्कारयोर्द्विर्द्विर्होतव्यम् । होत्रकाणां चमसैस्तु वषट्कार एव सकृद् होतव्यम् । चमसानमिन्द्राय हुतेषु सर्वेषु होमेषु इन्द्रो देवता । तदनन्तरं होत्रकाणां षट्सु सशेषेषु चमसेषु द्रोणकलशात् सोमं पुनरभ्युन्नीय मित्रावरुणादिभ्यो देवतान्तरेभ्य अनुवषट्कारे होत्रका जुह्वतीति प्रैषवचनादवगम्यते । तथोक्तम्– 'मध्यतःकारिणां चमसाध्वर्यवो वषट्कारे अनुवषट्कारे जुह्वत होत्रकाणां चमसाध्वर्यवः सकृद्धुत्वा शुक्रस्याभ्युन्नीय उपावर्तध्वम्' इति । ततः शेषभक्षणं क्रियते । होत्रकाणां चमसैर्वषट्कारे इन्द्रः सकृद्धुतः । पुनरभ्युन्नीय मित्रावरुणाद्या देवता इष्टाः । अतस्तत्र इन्द्रस्य मित्रावरुणादिदेवतानां च तैः पृथक् पृथक् इष्टानां शेषाः सन्ति । इति पुनरभ्युन्नीतशेषभक्षणेषु इन्द्रमित्रावरुणादिपीतस्येति रीत्या सर्वेषां पूर्वदेवताया उत्तरदेवतायाश्चोपलक्षणं कार्यं, न केवल–

मुक्तत्वेयत्ताया: । यतो द्विशेषत्वात्—द्वयोर्देवतयोः शेषस्य तत्र सत्त्वात् । प्रकृतौ यस्यै देवतायै हुतं तच्छेषस्तत्पीत इत्युक्तम् । अतोऽत्रापि तद्वदेव वक्तव्यम् । इति प्रतिचमसं द्वयोरुपलक्षणं कार्यमिति सिद्धान्तः ॥२९॥

## पूर्वपक्षः—अपनयाद्वा पूर्वस्य अनुपलक्षणम् ॥३०॥

*प्रथमं यदुद्देशेन गृहीत्वा होमः कृतः तस्य पूर्वस्य*—इन्द्रस्य, अनुपलक्षणं-भक्षमन्त्रे योजनं, न विधेयम् । कुतः ? इन्द्रसम्बन्धस्य अपनयात्—विच्छेदादित्यर्थः । मित्रावरुणाद्युद्देशेन पुनर्गृहीते सशेषे तस्मिन्पूर्वसम्बन्धापगम-पूर्वकमित्रावरुणादिदेवतान्तरसम्बन्ध एवोत्पन्नः । अतस्तत्सम्बन्धस्य निरासात् मित्रावरुणादिपीतशेषभक्षणे नेन्द्र उपलक्षयितव्यः इति पूर्वपक्षिणोऽभिप्रायः । आचार्यशेषं भुञ्जानः शिष्यः यदि शेषमन्यस्मै प्रयच्छति । तदा अन्यः शिष्यः ‘ शेषं भुञ्जे ’ इत्येव वक्ति । नाचार्यशेषमिति । तद्वदत्रापीति भावः ॥३०॥

## उत्तरम्—अग्रहणाद्वाऽनपायः स्यात् ॥३१॥

देवतान्तरपीतशेषभक्षणसमये इन्द्रसम्बन्धस्य भक्षमन्त्रे अनपायः-नैव विच्छेदः । कस्मात् ? अग्रहणात्—द्रोणकलशात् मित्रावरुणादिदेवतान्तरोद्देशेन यद्ग्रहणं तद्भिन्नत्वात्पूर्वशेषस्य । ‘ पूर्वशेषे गृह्णाती’त्येव विधिः । तथा च मित्रावरुणादिसम्बन्धिसोमरसस्य पूर्वशेषेण सम्बन्धात्मकः संस्कारो विधीयते । तावन्मात्रेण इन्द्रसम्बन्धस्यापनयो नैव भवितेति सर्वेषामुपलक्षणं सिद्धमेव ॥ दृष्टान्तेऽपि आचार्यशेषं भुञ्जानेन शिष्येणान्यस्मै तस्मादन्येऽशेऽवशिष्टे ‘ आचार्यशेषं भुञ्जे ’ इति यद्यपि स न वदति, तथापि तस्मिन् आचार्यसम्बन्ध अक्षत एवेति भावः ॥३१॥

### पात्नीवतभक्षणे इन्द्रादीनामनुपलक्षणाधिकरणम् ॥ १३ ॥

## पात्नीवते तु पूर्ववत्त्वात् ॥३२॥

प्रातःसवने ऐन्द्रवायवादिद्विदेवत्यग्रहाणां होमशेषस्यार्धमादित्य-स्थाल्यां समवनीय तृतीयसवने आग्रयणस्थाल्यामागच्छति । तेन पात्राऽऽग्रयण-स्थालीस्थः सोमः पात्रान्तरे कृत्वा पुनराग्रयणस्थाल्या गृह्यते । पश्चात्-

' उपांशुपात्रेण पात्नीवतं प्रत्याऽऽग्रयणाद् गृह्णाती'ति श्रुतम्। तत्र पात्नीवते-
पत्नीवद्देवताकहोमशेषभक्षणे, पत्नीवद्देवतया सह इन्द्रवाय्वादयोऽप्युपलक्ष-
णीयाः । पूर्ववत्त्वात्-पूर्वं हुतद्विदैवत्यशेषवत्त्वात् । पूर्वाधिकरणसिद्धान्तवदि-
त्यर्थः ॥३२॥

## ग्रहणाद्वा अपनीतं स्यात् ॥३३॥

ग्रहणाद्वा—'पात्नीवतमाग्रयणाद् गृह्णाति' इत्यपादानपञ्चम्या आग्र-
यणापादानकग्रहणस्य पत्नीवद्देवतार्थतया विधानात्, तस्मात्प्रच्युतस्य सर्व-
स्यैव सोमस्य पत्नीवद्देवतासम्बन्धप्रतीतेः पूर्वदैवतमपनीतं स्यात् । अतस्त-
च्छेषभक्षणे इन्द्रवाय्वादयो नोपलक्षणीया इत्यर्थः ॥३३॥

पात्नीवतशेषभक्षणे त्वष्टुरनुपलक्षणीयत्वाधिकरणम् ॥१४॥

## त्वष्टारं तूपलक्षयेत् पानात् ॥३४॥

तत्रैव होमशेषभक्षणे त्वष्टृपीतस्येति त्वष्टारमुपलक्षयेत् । कस्मात् ?
पानात्—' अग्नाई पत्नीवन्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा ' इति त्वष्ट्रा
सह पानलिङ्गश्रवणादित्यर्थ ॥३४॥

## अतुल्यत्वात्तु नैवं स्यात् ॥३५॥

' पात्नीवतमाग्रयणाद्
गृह्णाती'ति पत्नीवत अग्नेर्देवतात्वं निरपेक्षया तद्धितश्रुत्योपदिष्टमिति ।
अतुल्यत्वात्—तुल्यबलत्वाभावात्, नैवं स्यात्—पत्नीवता सह त्वष्टा नोपल-
क्षणीयः । ' सहैव दशभिः पुत्रैः ' इत्यादिवत् समीपवृत्तित्वमात्रं साहित्यं
मन्त्रलिङ्गेन, त्वष्टुर्देवतात्वं कल्प्यम् ।
लिङ्गेन बोध्यत इति तात्पर्यम् ॥३५॥

पत्नीवतशेषभक्षणे त्रिंशत अनुपलक्षणाधिकरणम् ॥१५॥

## त्रिंशच्च परार्थत्वात् ॥३६॥

तत्रैव पात्नीवतयागीयशेषभक्षमन्त्रे पत्नीवन्नामधारिणस्त्रयस्त्रिंशत् देवा
नोपलक्षणीयाः । कुतः ? तेषां परार्थत्वात्—याज्यामन्त्रे अग्निं सम्बोध्य
' पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्व ' इत्यग्निकर्तृकमादनकर्म-

त्वमेव तेषामुपदिष्टं, न यजमानकर्तृकमादनकर्मत्वम्। तच्चाग्नेरेवेति तस्यैव पात्नीवद्यागदेवतात्वं, न तेषां त्रयस्त्रिंशत्सङ्ख्याकानामिति ते नोपलक्षणीया इति भावः ॥३६॥

### भक्षणे अनुवषट्कारदेवताया अनुपलक्षणाधिकरणम् ॥१६॥

## वषट्कारश्च पूर्ववत् ॥३७॥

'सोमस्याग्ने वीहीत्यनुवषट्कृते जुहोति' इति मान्त्रवर्णिकी कृत्स्नसोमयागीयानुवषट्कारहोमीयाग्निर्देवता भक्षणमन्त्रे नोपलक्षयितव्या। **पूर्ववत्।** यथा पूर्वं प्रकृतिभूते ऐन्द्रयागे प्रथमं होत्रा पीतस्य पश्चादध्वर्युपानार्थं पठितमन्त्रे होतृपीतस्येति न पठितम्। तथा अनुवषट्कारदेवतापाठोऽपि नास्ति। प्रकृतौ हि इन्द्रोद्देशेनैव गृहीत ऐन्द्रग्रहः, नान्यस्य कस्याप्युद्देशेन। अतो मन्त्रे केवलमिन्द्रपीतस्येत्येव पाठः। विकृतावप्यतिदेशात्तथैव पाठ इति भावः ॥३७॥

### अनैन्द्राणाममन्त्रकभक्षणाधिकरणम् ॥१७॥

## छन्दोनिषेधस्तु सर्वगामित्वात् ॥३८॥

कृत्वाचिन्तारूपन्यायपञ्चकात् पूर्वस्मिन् इन्द्रपीताधिकरणे द्वितीयपूर्वपक्षिणोक्तमूहपक्षं प्रथमपूर्वपक्षी अधुना निरस्यति—**छन्दोनिषेधस्त्विति।** अतिरात्रीयतृतीयसवने षोडशिग्रहे 'तृतीयस्य सवनस्य जगतीच्छन्दसः' इति मन्त्रे 'अनुष्टुप्छन्दसः' 'इति भक्षमन्त्रं सन्नमति' इति अनुष्टुप्छन्दःपदस्य ऊहरूपः जगतीच्छन्दःपदस्य प्रतिषेधः ऊहपक्षसाधकत्वेनाभिप्रेतस्तत्र। स ऊहात्मकच्छन्दःप्रतिषेधो वाचनिकस्तावन्मात्रपर एव। न प्रकृतोपयोगी। किं च, अतिरात्रस्याग्निष्टोमविकृतित्वात्तस्य तृतीयसवने अप्राप्तस्यानुष्टुप्छन्दःपदस्य ऊहो यद्यप्युपपद्यते, तथापि प्रकृते अनैन्द्रेषु मैत्रावरुणादिषु तथा न सम्भवति। अनैन्द्राणां तेषां विकृतित्वाभावात्। 'सोमेन यजेत' इति उत्पत्तिवाक्यगतः सोमः कर्मणोऽङ्गम्। न तु कर्मविशेषस्य कस्यचिदेवाङ्गम्। स एव सोमः सर्वप्रदानेषु अभ्यस्यते। इति सर्वाणि समप्रधानानि। तस्माद-

भिषवादिसोमधर्माणां सर्वगामित्वात् — सर्वयागोद्देशेन समानविधानात्, नास्त्यैन्द्राणामनैन्द्राणां च प्रकृतिविकृतिभाव इति भक्षमन्त्रस्य लिङ्गेन ऐन्द्रविषयत्वाच्च, अनैन्द्रेषु अमन्त्रकमेव भक्षणम्। ऊहासम्भवादिति भावः ॥३८॥

### ऐन्द्राग्नभक्षणस्य अमन्त्रकत्वाधिकरणम् ॥१८॥

## ऐन्द्राग्ने तु लिङ्गाभावात्स्यात् ॥ ३९ ॥

ऐन्द्राग्ने—'ऐन्द्राग्नमृतुपात्रेण गृह्णाति' इति वाक्यविहित—ऐन्द्राग्नयागीयशेषभक्षणे इन्द्राग्निभ्यां पीतेऽपि सोमे इन्द्रपीतत्वरूपलिङ्गस्य सत्त्वात् तच्छेषभक्षणं समन्त्रकं स्यादित्यर्थः ॥ ३९ ॥

## सिद्धान्तः—एकस्मिन् वा देवतान्तराद्विभागवत् ॥४०॥

एकमात्रदेवताकयागीयशेषभक्षण एव स मन्त्रः। न ऐन्द्राग्नयागीयशेषभक्षणे। तत्राग्निरूपस्य देवतान्तरस्य सत्त्वात् विभागवत्-'आग्नेयं चतुर्धा करोति' इति चतुर्धाकरणवत्। तत्र यथा तद्धितेन आग्नेयपदेन अग्निपर्याप्तदेवताकत्वस्य प्रतिपादनात् व्यासज्यवृत्तिदेवताके अग्नीषोमीयादौ चतुर्धाकरणं नास्तीति सिद्धम्। तथा अत्रापि इन्द्रपर्याप्तदेवताकयागीयशेषभक्षण एव मन्त्रः। नेन्द्राग्निपर्याप्तदेवताकयागीयशेषभक्षणे इति भावः ॥४०॥

### गायत्रच्छन्दस इत्यादिमन्त्राणामनेकच्छन्दस्के विनियोगाधिकरणम् ॥१९॥

## छन्दश्च देवतावत् ॥४१॥

तस्मिन्नेव भक्षमन्त्रे 'गायत्रच्छन्दसः' इति लिङ्गाद्यत्र स्तोत्रशस्त्रादौ केवलगायत्रच्छन्दस्कैव ऋक्, तत्रैव केवलगायत्रच्छन्दस्कयागे अयं भक्षमन्त्रः। देवतावत्—यथा केवलैन्द्रदेवताकयागे एव इन्द्रपीतस्येति पदं, नान्यदेवताकयागे, तथेत्यर्थः ॥४१॥

## सिद्धान्तः—सर्वेषु वा अभावादेकच्छन्दसः ॥४२॥

**सर्वेषु**—नानाच्छन्दस्केषु यागेषु, भक्षमन्त्रः स्यात् । कुतः ? केवलैकच्छन्दस्कस्य क्रतोरभावात् । केवलेन्द्रयागस्य प्रसिद्धत्वात् दृष्टान्तो विषमः । तदनुसरणे कुत्रापि मन्त्रविनियोगो न स्यादिति भावः ॥४२॥

एकादशाधिकरणोक्तस्योपसंहारः ।

## सर्वेषां वैकमन्त्र्यमैतिशायनस्य भक्तिपावनत्वात्सवनाधिकारो हि ॥४३॥

साम्प्रतं प्रागुपक्रान्तस्य इन्द्रपीताधिकरणस्य सिद्धान्तमाह—**सर्वेषां वेति** । ऐन्द्राणामनैन्द्राणा च यागानाम् **ऐकमन्त्र्यम्**— एक एवाविकृतो यो मन्त्रस्तद्वत्त्वम्, ऐतिशायनस्य महर्षेरनुमतम् । न तु ऊहेन वा अमन्त्रकं वा भक्षणम् । **हि**-यतः, इन्द्रपीतशब्दः **सवनाधिकारः**-इन्द्रेण पीतं यस्मिन् सवने इति बहुव्रीहौ गायत्रच्छन्दस इतिवत्सवनबोधकः । तत्पुरुषे तु पाने अविग्रहवदिन्द्रकर्तृकत्वस्य नयने निरस्यमानत्वात् **भक्तिपानत्वात्**—पाने भक्तिः, लक्षणाप्रसङ्गादिति । उभयत्र भक्तेस्तुल्यत्वेऽपि गायत्रच्छन्दस इत्यस्य सवनविशेषणत्वात् तत्सन्निहितस्य इन्द्रपीतस्येत्यस्यापि सवनविशेषणत्वमेवोचितमित्यैन्द्राणामनैन्द्राणा च समन्त्रकमेव भक्षणमिति भावः ॥४३॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां तृतीयाध्यायस्य द्वितीयः पादः ॥ श्रीः ॥

---

# अथ तृतीयाध्यायस्य तृतीयः पादः ।

### उच्चैस्त्वादीनां वेदधर्मत्वाधिकरणम् ॥ १ ॥

## श्रुतेर्जाताधिकारः स्यात् ॥१॥

ज्योतिष्टोमप्रकरणे–' उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना, उच्चैर्निगदेन ' इत्याम्नाते वाक्ये श्रूयमाणानामुच्चैस्त्वादिधर्माणां **जाताधिकारः स्यात्**-ऋक्त्वादिजातिमुद्दिश्य एते धर्माः प्रवृत्ताः स्युः । ऋक्त्वादिजातीनां धर्मा उच्चैस्त्वादयः, न वेदधर्मा इत्यर्थः । कुतः ? **श्रुतेः**-ऋचेत्यादिशब्दानां जातौ शक्तत्वादिति भावः ॥ १ ॥

## सिद्धान्तः—वेदो वा प्रायदर्शनात् ॥२॥

**वेदो वा**–मन्त्रब्राह्मणसमुदायात्मको ऋग्वेदादिरेवात्र ऋगादिपदस्यार्थो वेदितव्यः । कुत ? **प्रायदर्शनात्**–उपक्रमे वेदशब्ददर्शनात् । 'प्रजापतिरकामयत । प्रजाः सृजेयेति । स तपोऽतप्यत । तस्मात्तेपानात्त्रयो देवा अजायन्त । अग्निर्वायुरादित्य इति । ते तपोऽतप्यन्त । तेभ्यस्तेपानेभ्यस्त्रयो वेदा अजायन्त । अग्नेर्ऋग्वेदः, वायोर्यजुर्वेदः, आदित्यात्सामवेदः '। इति उपक्रमे वेदशब्दश्रवणात् । असञ्जातविरोधित्वेन तस्य प्राबल्यात्, तदनुसारेण उपसंहारनयनस्य न्याय्यत्वात् , वेदधर्म उच्चैस्त्वादिरिति भावः ॥२॥

## लिङ्गाच्च ॥३॥

' ऋग्भिः प्रातर्दिवि देव ईयते यजुर्वेदेन तिष्ठति मध्ये अह्नः, सामवेदेनास्तसमये महीयते वेदैरशून्यैस्त्रिभिरेति सूर्यः ' ।

इत्यत्र प्रथमचरणे ऋग्भिरिति ऋक्शब्दस्य ऋग्वेदोऽर्थ इत्यत्र चतुर्थचरणे वेदैरिति बहुवचनं लिङ्गं बोध्यम् । अन्यथा वेदाभ्यामित्येवोच्येत ॥३॥

## धर्मोपदेशाच्च न हि द्रव्येण सम्बन्धः ॥४॥

उच्चैः साम्नेति साम्नः पृथक् धर्मोपदेशादप्युच्चैस्त्वं वेदधर्म इति सिध्यति। अन्यथा 'ऋच्यध्यूढं साम गायति' इति ऋच्येव गेयत्वात् उच्चैस्त्वसिद्धेः पुनर्विधानं व्यर्थं स्यात्। हि—यतः, सामद्रव्येण उच्चैस्त्वस्य सम्बन्धो न भवति। न हि कश्चित्सामाधारभूतां ऋचमुच्चैरुच्चारयन् सामानि अन्यथागातुं प्रभवतीति दृष्टमिति भावः ॥४॥

## त्रयीविद्याख्या च तद्विदि ॥५॥

**तद्विदि**—ऋग्वेदादिवेदत्रयविदि, **त्रयीविद्याख्या च**—त्रयीविद्यासमाख्या अपि, ऋगादिशब्दानां वेदपरत्वं गमयति। त्रयी विद्या यस्येत्येवं व्युत्पन्नस्त्रयीविद्याशब्दः वेदत्रयाध्यायिनि प्रयुज्यते। न ऋगादिमन्त्रत्रयाध्यायिनीति भावः ॥५॥

## व्यतिक्रमे यथाश्रुतीति चेत् ॥६॥

ननु, एकमेव कर्म ऋग्वेदे यजुर्वेदे च विहितं यदा, तदा तदङ्गभूतमन्त्रे वेदधर्ममतेन उच्चैस्त्वोपांशुत्वयोरेकत्र प्राप्तौ विकल्पापत्तिः। मन्मते तु यदि ऋङ्मन्त्रः, तदा उच्चैस्त्वम्। यदि यजुर्मन्त्रस्तदोपांशुत्वमिति न विकल्प इति शङ्कते। ऋचां यजुर्वेदे, यजुषां च ऋग्वेदे पाठेऽपि **यथाश्रुति**—ऋचि उच्चैस्त्वं, यजुषि उपांशुत्वमिति यथाश्रुतं तथैव पाठः, ऋक्त्वादिधर्मानपायादिति चेत् ॥६॥

## न सर्वस्मिन्निवेशात् ॥७॥

न विकल्पापत्तिः। कुतः? 'ऋचा—ऋग्वेदेन, यजुषा—यजुर्वेदेन, साम्ना—सामवेदेन च यत् क्रियते—विधीयते इति विधानात् **सर्वस्मिन्**—ऋग्वेदादिविहितकर्माङ्गभूते कृत्स्नमन्त्रे एव, उच्चैस्त्वादेर्निवेशः—सम्बन्धः, इति ऋग्वेदीयासु ऋक्षु उच्चैस्त्वम्। याजुर्वेदिकासु उपांशुत्वम्। सामवेदीयासु च उच्चैस्त्वमिति भावः ॥७॥

## वेदसंयोगान्न प्रकरणेन बाध्यते ॥८॥

अर्थविप्रकर्षात्–उत्तरप्रमाणस्य पूर्वप्रमाणकल्पकत्वाद्विनियोगस्यार्थस्य विप्रकर्षात्–विलम्बादिरर्थः। यावदुत्तरं प्रमाणं पूर्वं प्रमाणं प्रकल्प्य तद्द्वारा विनियोक्तुं प्रवर्तते। तावत्तस्मात्प्रागेव प्रवृत्तं पूर्वं प्रमाणमुत्तरप्रमाणानपेक्षं झटित्यन्यत्र विनियोगमनवबोधयन्नीत्युत्तरप्रमाणस्याप्रवृत्ति, तत्प्रवृत्तिप्रतिबन्धो वेत्यप्राप्तबाधोऽयं तार्तीय इति भावः ॥१४॥

द्वादशोपसत्ताया अहीनाङ्गत्वाधिकरणम् ॥८॥

## अहीनो वा प्रकरणाद्गौणः ॥१५॥

ज्योतिष्टोमप्रकरणे 'तिस्र एव सान्हस्योपसदः, द्वादश अहीनस्य' इति वाक्यं श्रूयते। अस्यार्थस्तु–एकेन अन्हा निष्पाद्यः साह्नो, ज्योतिष्टोम एव। साह्नस्य दीक्षादिवसोर्ध्वं सोमाभिषवदिवसात्प्राक्क्रियमाणा होमा उपसदः। साह्नस्य ज्योतिष्टोमस्य त्रय उपसद्धोमाः, अहीनस्य द्वादश इति। तत्र अहीनशब्दो गौणः–न हीनः अहीनः इति व्युत्पत्त्या यौगिकः। तथा च विकृतिर्वैव न केनाप्यङ्गेन रहितः। अपि तु समग्राङ्गोपेतनिखिलक्रतुप्रकृतिभूतज्योतिष्टोमसमर्पकः सः। तत्रैव उपसदां द्वादशत्वं–'द्वादश अहीनस्येति श्रुत्या ज्ञाप्यते। इत्थं प्रकरणानुग्रहः सिध्यति। अन्यथा प्रकरणबाधापत्तेरिति ॥ १५ ॥

## सिध्दान्तः–असंयोगात्तु मुख्यस्य तस्मादपकृष्येत ॥१६॥

मुख्यस्य–अहीनपदरूढ्यर्थस्य यागविशेषस्य, ज्योतिष्टोमे असंयोगात्–अभावात्, प्रकृतात्तस्मादपकृष्येत। अपकृष्य च अहीनपदमुख्यार्थे अहःसमूहसाध्ये द्विरात्रत्रिरात्रादिक्रतुविशेषे उत्कृष्येत। 'अह्नः खः क्रतौ' (वा.) अहर्गणसाध्ये क्रतौ वाच्ये ख. प्रत्ययः स्यात् इति खप्रत्ययान्तस्य तस्याहीनशब्दस्य आवृत्तसोमयागात्मकद्विरात्रादिरहर्गणे शक्तिप्रतिपादनात् रूढ्या प्रकरणं बाधित्वा उत्कर्ष एव तस्य पदस्येति वाच्यम्। किं च, तिस्र एव साह्नस्येत्येवकारेण त्रित्वनिर्धारणात् साह्ने द्वादशत्वस्य निवेशासम्भवेन

तस्माद्द्विरात्रः अहीनः । तत्रैवोपसदां द्वादशत्वमित्यर्थात्सिद्धं भवतीति नाष्टदोषदुष्टस्य विकल्पस्यात्रावकाश इति भावः ॥१६॥

कुलायादौ प्रतिपदोरुत्कर्षाधिकरणम् ॥९॥

## द्वित्वबहुत्वयुक्तं वाऽचोदनात्तस्य ॥१७॥

'युवं हि स्थः स्वर्पती' इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्। 'एते असृग्रमिन्दवः' इति बहुभ्यो यजमानेभ्यः प्रतिपदं कुर्यात्। इति ज्योतिष्टोमप्रकरणपठितवाक्यद्वये विधीयमानौ मन्त्रौ तस्मात्प्रकृताज्ज्योतिष्टोमात् अपकृष्य 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' 'एकविंशतिपरमाः सत्रमासीरन्' 'एको द्वौ बहवो वा अहीने न यजेरन्' इत्यादिश्रुतिविहितेषु द्विबहुयजमानकेषु कुलायादिषु निवेश्येते। कुतः ? द्वित्वबहुत्वयुक्तं तन्मन्त्रद्वयं, प्रकृते च ज्योतिष्टोमे द्विबहुयजमानकत्वस्य **अचोदनात्**— अविधानात्। इति सिद्धान्तोपक्रमपरं सूत्रमिदम् ॥१७॥

## पक्षेणार्थकृतस्येति चेत् ॥१८॥

**पक्षेण**—एकस्य यजमानस्य कस्माच्चिन्निमित्तादागतेन पाक्षिकेण असामर्थ्येन हेतुना, **अर्थकृतस्य**—यथाशक्ति न्यायानुसारात् अर्थात्प्राप्तस्य द्विबहुयजमानकत्वस्य 'वसन्ते वसन्ते ज्योतिषा यजेत' इति वीप्साश्रुतेर्नित्ये ज्योतिष्टोमे सम्भवात् तत्रैव निविशतामुक्तमन्त्रद्वयम्। मास्तु ततो विच्छिद्य अन्यत्र निवेशः। सत्येव प्रकरणप्रामाण्यमप्यनुगृहीतं भवतीति चेत्—॥१८॥

## न प्रकृतेरेकसंयोगात् ॥१९॥

'सोमेन यजेत' इति श्रुतेर्या प्रत्यक्षवचनात् प्रकृतेर्ज्योतिष्टोमस्यैकेनैव कर्त्रा सम्बन्धात् जात्वपि नानेकयजमानकत्वं तत्र। श्रुतिविहितैकत्वस्य आर्थिकाद्वित्वेन नैव बाध इति भावः ॥१९॥

जाघन्याः प्रकरणादनुत्कर्षाधिकरणम् ॥१०॥

## जाघनी चैकदेशत्वात् ॥२०॥

दर्शपूर्णमासयोः—'जाघन्या पत्नीः संयाजयन्ती' ति श्रूयते। जाघनी-पशोः पुच्छम्। 'चत्वारः पत्नीसंयाजाः' इति श्रुतेराहुतिचतुष्टयात्मकस्य कर्मणो नामधेयैकदेशः पत्नीरिति। अयं जाघनीविधिः प्रकरणात् पशुयागे उत्कृष्येत। कुतः? जाघन्याः एकदेशत्वात्-पश्ववयवत्वात्, प्रकरणे पशोरभावाच्चेति ॥२०॥

## सिद्धान्तः—चोदना वा अपूर्वत्वात् ॥२१॥

'पञ्च प्रयाजा इज्यन्ते' 'चत्वारः पत्नीसंयाजाः' इत्यनेन प्राप्तत्वात् पत्नीसंयाजानुद्दिश्य तदङ्गत्वेन जाघन्याश्चोदना वा-विधिरेवायम्। अपूर्वत्वात्-अप्राप्तत्वादित्यर्थः। ततो नोत्कर्षः ॥२१॥

## एकदेश इति चेत् ॥२२॥

एकदेशः—अवयवः, अवयविसापेक्षः। अवयविमन्तरेणावयवो नोपपद्यते। इत्यवयविनमवश्यमाक्षिपेत्सः। प्रकरणे तु तस्याभाव एवेति चेत्—॥२२॥

## न प्रकृतेरशास्त्रनिष्पत्तेः ॥२३॥

नेति। प्रकृतेः—दर्शपूर्णमासस्य, न अवयव्यपेक्षाऽस्ति। तत्सम्बन्धिजाघन्यास्तु अशास्त्रनिष्पत्तेः—क्रयादिना असंस्कृतस्यापि तावन्मात्रस्य निष्पत्तेः। 'उत्तरार्धात्स्विष्टकृते समवद्यति' अत्र कस्योत्तरार्धमित्यवयव्याकाङ्क्षा नियता। जाघनीशब्दश्रवणानन्तरं कस्येत्याकाङ्क्षा नास्ति। यतः पशुपुच्छे रूढोऽयं जाघनीशब्द इति भावः। तस्मान्नोत्कर्ष इति सिद्धम् ॥२३॥

### सन्तर्दनस्य संस्थानिवेशाधिकरणम् ॥११॥

## सन्तर्दनं प्रकृतौ क्रयणवदनर्थलोपात्स्यात् ॥२४॥

ज्योतिष्टोमे अभिषवणफलके प्रकृत्य—'न सन्तृणत्ति असन्तृण्णे हि हनू' 'अथो खलु दीर्घसोमे सन्तृद्यात् धृत्या' इति न सन्तृणत्ति। फलकयोर्मेलनं न कुर्यादित्यर्थः। दीर्घसोमे तु सन्तृद्यात् तयोर्दृढसंश्लेषं कुर्यात् इति पदयोरर्थः। तत्रोत्तरवाक्ये श्रूयमाणसन्तर्दनस्य प्रकृतावेव निवेशः। कस्मात्? दीर्घस्य यजमानस्य सोमः इति षष्ठीतत्पुरुषे यजमानद्वारा दीर्घ-

श्चासौ सोमश्चेति कर्मधारये च इष्ट्याद्यपेक्षया साक्षादेव प्रकृतस्य ज्योतिष्टोमस्य दीर्घत्वं सम्भवतीति दीर्घसोमपदवाच्यस्यार्थस्य तत्र अलोपात् -अबाधाद्विद्यमानत्वादिति यावत्। **क्रयणवत्**—यथा 'गवा क्रीणाति' 'वाससा क्रीणाती'ति श्रुतेः गवा वाससा वेति विकल्पेन सोमक्रयस्य प्रकृतौ निवेशः। तथा मिथो विरुद्धं सन्तर्दनमसन्तर्दनं च प्रकृते ज्योतिष्टोम एव निविशते विकल्पेनेति ज्ञेयम् ॥२४॥

## सिद्धान्तः—उत्कर्षो वा ग्रहणाद्विशेषस्य ॥२५॥

सन्तर्दनस्य प्रकरणादुत्कर्ष एव विकृतिषु। कुतः? दीर्घसोम इति विशेषस्य **ग्रहणात्**—उपादानात्। अन्यथा, विशेषग्रहणं व्यर्थं स्यात्। दीर्घत्वं तु सजातीयसोमापेक्षयैव वाच्यम्। तस्यैव शीघ्रमुपस्थितेः। न तु विजातीयेष्ट्याद्यपेक्षया। तथा च ज्योतिष्टोमापेक्षया दीर्घे विकृतिभूते सोमयागे एव उत्कृष्टस्य सन्तर्दनस्य निवेश इति ॥२५॥

## कर्तृतो वा विशेषस्य तन्निमित्तत्वात् ॥२६॥

'दीर्घसोमे' इत्यस्य विशेषस्य **कर्तृतो वा**—दीर्घस्य सोम इति कर्तृपरतयोपपत्तेः, यजमानदैर्घ्यस्य कादाचित्कत्वेन निमित्तत्वसम्भवात् प्रकरणे एव सन्तर्दनस्य निवेश उपपद्यत इति ॥२६॥

## क्रतुतो वा अर्थवादानुपपत्तेः स्यात् ॥२७॥

क्रतुतो विशेषस्य दीर्घकालसाध्यत्वस्य सन्तर्दननिमित्तत्वम्। न कर्तृतः। **अर्थवादानुपपत्तेः**—यजमानदैर्घ्येण फलकविदारणाप्रसक्तेः, 'धृत्यै' इत्यर्थवादस्य कर्तृविशेषपक्षे असम्भवः। दीर्घकालसाध्यक्रतुविशेषपक्ष एव तस्य सम्भवः। फलकविदारणप्रसक्तेः धृत्यै—तयोर्धारणार्थं सन्तर्दनं कार्यमिति भावः ॥२७॥

## संस्थाश्च कर्तृवद्धारणार्थाविशेषात् ॥२८॥

**संस्थाश्च**—अग्निष्टोमादिसंस्था अपि, न सन्तर्दननिवेशयोग्याः। **कर्तृवत्**-यथा प्रकृतौ कर्तुर्यजमानस्य दैर्घ्यं धारणे अप्रयोजकम्। तथा

यावान् सोमः प्रकृतौ तावानेव संस्थास्वपीति अर्थवादज्ञाप्यधारणरूपार्थस्य संस्थास्वपि **अविशेषात्**—समानत्वात्, अर्थवादप्रतिपाद्यार्थे न स्वारस्यमित्याशयः ॥२८॥

## उक्थ्यादिषु वा अर्थस्य विद्यमानत्वात् ॥२९॥

**उक्थ्यादिषु**–संस्थासु सन्तर्दनस्य उत्कर्षः सम्भवति । तासु तत्साध्यस्य दृढधारणरूपार्थस्य विद्यमानत्वात् । तासु हि यागाभ्यासवृद्धिर्वर्तते । सा च द्रव्याधिक्यं विना न सम्भवति । सोमाधिक्ये अभिषवाधिक्यात् संतर्दनं सफलमिति भावः ॥२९॥

## अविशेषात्स्तुतिर्व्यर्थेति चेत् ॥३०॥

'दशमुष्टीर्मिमीते' इति वचनात् ज्योतिष्टोमे दशमुष्टिपरिमितः सोमे निश्चीयते । उक्थ्यादिष्वपि अतिदेशेन तावानेव सोम आयाति । कुतोऽधिकः इत्यभिषवाधिक्यस्य तत्राप्यसत्त्वात् धृत्या इति स्तुतिः निरर्थिकेत्याह । **अविशेषात्** — सोममानाविशेषात्, अधिकद्रव्यापादकवचनाभावादिति चेत् ॥३०॥

## स्यादनित्यत्वात् ॥३१॥

उक्थ्यादिषु सोमद्रव्यस्याधिक्यं वाचनिकमेव स्यात् । कुतः ? दश मुष्टिपरिमाणस्य **अनित्यत्वात्**– 'प्रजाभ्यस्त्वा इत्यंशिष्ठानंशूनुपसमूहति' इत्याधिकसोमस्यापि विधानात्, अतदानवृद्धौ अभिषवस्यापि वृद्धेर्धृत्या इत्यर्थवादः सफल एव । तस्मात्संस्थासु उत्कर्षः सन्तर्दनस्येति सिद्धम् ॥३१॥

### प्रवर्ग्यनिषेधस्य प्रथमप्रयोगे निषेधाधिकरणम् ॥ १२ ॥

## सङ्ख्यायुक्तं क्रतोः प्रकरणात्स्यात् ॥३२॥

ज्योतिष्टोमे प्रवर्ग्याख्यं कर्म प्रकृत्य–'न प्रथमयज्ञे प्रवृञ्ज्यात्' प्रवर्ग्याख्यं कर्म न कुर्यात् इति श्रूयते । तत्र सङ्ख्यावाचकप्रथमपदयुक्तं प्रथमयज्ञ इति पदं **प्रकरणात्**-प्रकरणानुसारात्, **क्रतोः**-प्रकृतज्योतिष्टोमस्य बोधकं

स्यात्। 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः' इत्यनेन ज्योतिष्टोम-वाचकत्वे सिद्धे प्रथमयज्ञे प्रवर्ग्यनिषेधः इत्यर्थात्सिध्यतीति भावः ॥३२॥

## सि० ॥ नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात् ॥३३॥

वेदेषु चतुर्ष्वपि न प्रथमसंज्ञको यज्ञोऽस्ति। किन्तु, **कर्तृसम्बन्धात्**—आद्यप्रयत्नसम्बन्धात्, प्राथम्यं तन्निष्ठं **नैमित्तिकं**—द्वितीयकृतिमापेक्षम्। कुतः? **लिङ्गस्य**—अर्थनिर्णायकव्यवहारस्य, **तन्निमित्तत्वात्**—द्वितीयादिक्रियासापेक्षत्वं हि लोके दृष्टम्। यथा प्रथममुत्पन्नत्वात्प्रथमः पुत्रः, तदनन्तरमुत्पन्नो द्वितीयः, आदौ पाठ्यत्वात्प्रथमं पुस्तकं, तदनन्तरं पाठ्यं द्वितीयमित्यादि। तथा प्रकृतेऽपि प्रथमशब्दस्य आद्यकृतिप्रयोज्यप्रथमप्रयोगे रूढत्वात् प्रथम-प्रयोग एवायं प्रवर्ग्यकर्मनिषेधो बोध्य इति भावः ॥३३॥

### पौष्णपेषणस्य विकृतौ निवेशाधिकरणम् ॥१३॥

## पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ ॥३४॥

दर्शपूर्णमासयोरेव श्रूयते—'तस्मात्पूषा प्रपिष्टभागः, अदन्तको हि सः' इति। दन्तराहित्यात् पूषोद्देश्यकं द्रव्यं पेषणं कृत्वा देयमित्यर्थः। इदं **पौष्णं**—पूषदेवतोद्देश्यकद्रव्यस्य यत् पेषणं, तत् 'पौष्णं चरुम्' इत्यादिना विहित-विकृतौ प्रतीयेत। कुतः? प्रकृतौ **अचोदनात्**—पूष्णः अङ्गत्वेन विधाना-भावादिति ॥३४॥

### पौष्णपेषणस्य चरावेव निवेशाधिकरणम् ॥१४॥

## तत्सर्वार्थमविशेषात् ॥३५॥

**तत्पेषणं सर्वार्थं**—'पौष्णं चरुम्' पौष्णं श्याममालभेत। पौष्णं द्वादशकपालम्' इति विहितेषु चरुपशुपुरोडाशेषु सर्वेषु स्यात्। **अविशेषात्**—विशेषश्रवणाभावादिति ॥३५॥

## सि० ॥ चरौ वाऽर्थोक्तं पुरोडाशे अर्थविप्रतिषेधात् पशौ न स्यात् ॥३६॥

**चरौ वा**--चरावेव पेषणं नान्यत्र। तथा हि-पुरोडाशे अर्थेन पुरोडाशमिद्धिरूपकार्येणैव पेषणमुक्तम्। पशौ तु अर्थविप्रतिषेधात् न स्यात्। हृदयावदानादिरूपविहितक्रियाणां लोपप्रसङ्गात्। प्रदेयद्रव्यस्य पशोः पेषणे सर्वमेकं पिण्डीभूतं भवेत्। तथा सति हृदयजिह्वावक्ष-इत्यादिभेदासत्त्वात् पृथक् पृथक् अवयवेभ्यः श्रूयमाणमवदानादिकं लुप्येत। तस्माच्चरावेव पेषणम् ॥३६॥

## चरावपीति चेत् ॥३७॥

विशदसिद्धौदने चरुशब्दस्य लोके प्रयोगात् पेषणानन्तरं श्रपणे यवागूरेव स्यात् न चरुरित्याह। चरौ अपि विप्रषेधः पेषणस्य अस्तीति चेत्- ॥३७॥

## न पक्तिनामत्वात् ॥३८॥

चरौ न विरोधः। यतश्चरुपदस्य **पक्तिनामत्वात्**-स्थाल्यधिकरणकपाकविशेषनामत्वात्। अनवस्रावितान्तरूष्मपक्वेनाभिनिर्वर्त्यस्य तण्डुलप्रकृतिकस्य चरुरिति नाम। अत एव मिष्टे ओदने विशदे ओदने च चरुरिति व्यवहारो दृश्यते व्यवहर्तॄणाम्। तस्माच्चरावेव पेषणमिति सिद्धान्तः ॥३८॥

### पौष्णपेषणस्यैकदैवत्ये निवेशाधिकरणम् ॥१५॥

## सि. उ. ॥ एकस्मिन्नेकसंयोगात् ॥३९॥

राजसूयप्रकरणे-'ऐन्द्रापौष्णश्चरुः श्यामो दक्षिणा' इति श्रूयते। पौष्णपेषणं विकृतौ। तदपि चरावेवेति स्थितम्। इदं पेषणं द्विदेवताकेऽपि चरौ स्यात् उत एकदेवत्ये एवेति संदेहे आह- **एकस्मिन्निति**। एकपूषदेवताके चरावेव पेषणम्। न द्विदेवताके। कुतः ? 'पूषा प्रपिष्टभागः' इति एकपूषसम्बन्धात् ॥३९॥

## धर्मविप्रतिषेधाच्च ॥४०॥

**धर्मयोः** इन्द्रस्य अपेषणं पूष्णश्च पेषणमिति तयोर्विरोधादपि द्विदैवत्ये तदसम्भवादेकदेवताके एव तदिति भावः ॥४०॥

## अपि वा सद्वितीये स्यात्, देवता-निमित्तत्वात् ॥४१॥

अपि वेति पक्षान्तरं द्योत्यते । सद्वितीये--इतरसहितपूषदेवताकेऽपि पेषणं स्यात् । देवतानिमित्तत्वात्--पेषणस्य अन्यदेवतासद्भावमात्रानिमित्तत्वात् । द्विदैवत्ये च घटकतया पूषदेवतासद्भावाक्षतेरिति ॥४१॥

## लिङ्गदर्शनाच्च ॥४२॥

' सोमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकामः ' इति वाक्ये नेमपिष्टम्-अर्धपिष्टम्, इति लिङ्गदर्शनाच्च इतरसहितपूषदैवत्येऽपि पेषणं गम्यते । किञ्च, ' अदन्तको हि सः ' इति लिङ्गदर्शनादपि अन्यसहिते पूषणि पेषणं सिध्यति । न ह्यन्यसहितस्य पूष्णो दन्ता जायन्ते ॥४२॥

## वचनात्सर्वपेषणं तं प्रति शास्त्रवत्त्वात् अर्थाभावात् द्विचरावपेषणं भवति ॥४३॥

' नेमपिष्टं पशुकामः ' विधिरयं न लिङ्गमिति चेत्, तथा सति सर्वत्र पशुपुरोडाशचरुषु पेषणं प्रसज्येत । तं प्रति सर्वमुद्दिश्य शास्त्रवत्त्वात्—तच्छास्त्रप्रवृत्तेः । ननु, चरुश्रवणात् कथं सर्वत्र प्रवृत्तिः शास्त्रस्येति चेत् अर्थाभावात्—चरुशब्दार्थस्य विवक्षाया अभावात् , चरौ--चरुमात्रे, अपेषणं—पेषणाभावः, स्यात् । पशुपुरोडाशयोरपि पेषणापत्तेः । अत्रायमभिसन्धिः-किं चरुमुद्दिश्य पेषणविधिरयम्, उत सोमापौष्णमुद्दिश्य ? आद्ये ' ऐन्द्रं चरुम्, आदित्यं चरुम् ' इत्यत्रापि पेषणापत्तेः । द्वितीये ' ऐन्द्रापौष्णे ' पेषणाभावप्रसङ्गः । सोमापौष्णपशावपि पेषणप्रसङ्गश्चेति न पेषणविधिरयम् । अपि तु तदनूद्य पशुफलकयागविधिरेवेति लिङ्गदर्शनमेवेति ॥४३॥

## सि०॥ एकस्मिन्वा अर्थधर्मत्वात् ऐन्द्राग्नवदुभयोर्न स्यात्, अचोदितत्वात् ॥४४॥

**एकस्मिन् वा**–एकपूषदेवताके एव पेषणम् । कस्मात् ? 'पूषा प्रपिष्टभागः '. इत्यत्र **अर्थधर्मत्वात्**–एकपूषदेवतारूपपदार्थोद्देशेन पेषणरूपधर्मस्य विधीयमानत्वात् । उभयोर्देवतात्वस्थले च उभयोरेव चोदनाविषयत्वेन देवतात्वात्, पूष्ण एकमात्रस्य देवतात्वेन **अचोदितत्वात्**-उद्देश्यतावच्छेदककल्पनाक्रान्तत्वात्तत्र पेषणं न स्यात् । ऐन्द्राग्नवत् । यथा 'आग्नेयं' चतुर्धा करोती 'ति श्रुतं चतुर्धाकरणमैन्द्राग्ने पुरोडाशे न भवति । तद्वदत्रापि उभयदेवताके पेषणं न भवतीत्यर्थः ॥४४॥

## हेतुमात्रमदन्तत्वम् ॥४५॥

'अदन्तको हि सः ' इत्यदन्तत्वाम्नानं हेतुवन्निगदरूपमर्थवादमात्रम् । 'तेन ह्यन्नं क्रियते ' इतिवत् पेषणप्रशंसार्थमित्यर्थः ॥४५॥

## वचनं परम् ॥४६॥

**परं**–'नेमपिष्टं 'मिति वचनं तु पशुफलकस्य गुणविशिष्टापूर्वकर्मणो विधायकमेव । आग्नेयं चतुर्धा करोतीतिवदिति न पश्चादौ पेषणप्रसक्तिरिति तात्पर्यम् ॥४६॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां तृतीयाध्यायस्य तृतीयः पादः सम्पूर्णः ॥ श्रीः ॥

# अथ तृतीयाध्यायस्य चतुर्थः पादः ॥

निवीतस्य अर्थवादत्वाधिकरणम् ॥१॥

## निवीतमिति मनुष्यधर्मः, शब्दस्य तत्प्रधानत्वात् ॥१॥

दर्शपूर्णमासप्रकरणे आम्नायते– 'निवीतं मनुष्याणां, प्राचीनावीतं पितॄणाम्, उपवीतं देवानाम्, उपव्ययते देवलक्ष्ममेव तत् कुरुते' इति। अत्र वाक्ये निवीतमित्यर्थवादो विधिर्वेति विशये विधिरयं **मनुष्यधर्मः**--मनुष्यमात्राङ्गम्। कुतः ? **शब्दस्य**—मनुष्याणामिति षष्ठ्यन्तशब्दस्य **तत्प्रधानत्वात्**—मनुष्यप्राधान्यावगमकत्वात्। दध्नेन्द्रियकामाधिकरणोक्तन्यायेनेति भावः ॥१॥

## अपदेशो वा अर्थस्य विद्यमानत्वात् ॥२॥

निवीतमित्यपदेशो **वा**—अनुवाद एव, न विधि। कुतः ? निवीतरूपार्थस्य **विद्यमानत्वात्**-कार्यानुष्ठानसमये सौकर्यार्थत्वेन प्राप्तत्वादित्यर्थः ॥२॥

## विधिस्त्वपूर्वत्वात्स्यात् ॥३॥

निवीतमित्ययं विधिरेव स्यात्, नानुवादः। कुतः ? **अपूर्वत्वात्**—कर्मसौकर्यस्य उपायान्तरेणापि सम्भवात्। पक्षे अप्राप्तया नियमविधेरप्राप्तत्वादित्यर्थः ॥३॥

## स प्रायात् कर्मधर्मः स्यात् ॥४॥

अपरः शङ्कते। **सः**--निवीतमिति विधीयमानः **कर्मधर्मः**--दर्शपूर्णमासस्याङ्गं स्यात्। कुतः ? **प्रायात्**—प्रकरणेन [illegible]ङ्गत्वबोधनादिति भावः ॥४॥

## वाक्यस्य शेषवत्त्वात् ॥५॥

प्रकरणात् क्रत्वङ्गत्वेऽपि न प्रयाजादिवत् [illegible]ऽयम्। अपि तु **वाक्यस्य**—निवीतमिति वाक्यस्य, **शेषवत्त्वात्**- [illegible]समाख्यारूपविशेषवत्त्वात्, क्रतुयुक्ताध्वर्युपुरुषस्यायं धर्मः। तथा [illegible]णवत्समाख्याया अप्यनुग्रहो भवतीति भावः ॥५॥

## तत्प्रकरणे यत् तत्संयुक्तमविप्रतिषेधात् ॥६॥

तत्प्रकरणे—दर्शपूर्णमासप्रकरणे, यत्—मनुष्यप्रधान कर्म अन्वाहार्यदक्षिणादानादिकं, तत्संयुक्तं—तदङ्ग निवीतमित्यस्य वाक्यम् । तथा च मनुष्यप्राधान्यावगमिकाया 'मनुष्याणाम्' इति षष्ठीश्रुते प्रकरणसमाख्याभ्यां सह अविप्रतिषेधात्—विरोधाभावात्, प्राकरणिकमनुष्यप्रधानकर्मधर्मत्वमेव निवीतस्योचितमिति भाव ॥६॥

## तत्प्रधाने वा तुल्यवत्प्रसङ्ख्यानात् इतरस्य तदर्थत्वात् ॥७॥

तत्प्रधाने—मनुष्याणामिति वाक्यसम्बद्धे स्वतन्त्रमनुष्यप्रधानके आतिथ्यादौ कर्मणि एव, निवीत विधीयते । कुत ? निवीत मनुष्याणामिति वाक्यस्य 'प्राचीनावीत पितृणाम्' 'उपवीत देवानाम्' इति च वाक्येन सह तुल्यवत्-सदृशतयैव, प्रसङ्ख्यानात्—आम्नानात् । इतरस्य—प्राचीनावीतस्य उपवीतस्य च, तदर्थत्वात्—पितृदैवत्य—देवदैवत्यकर्मार्थत्वात्, निवीतस्यापि मनुष्यदैवत्याऽऽतिथ्यतर्पणादिकर्माङ्गत्वमेवोचितम् । प्राचीनावीतेत्यादिपदत्रयमभिव्याहाररूपवाक्येन प्रकरणादेर्बाधो युक्त एवेति भाव ॥७॥

## सि० ॥ अर्थवादो वा, अप्रकरणात् ॥८॥

अर्थवादो वा—निवीत मनुष्याणामित्यर्थवाद एव । कुत ? अप्रकरणात्—मनुष्यप्रधानकाऽऽतिथ्यादिकर्मण अप्रकरणत्वात्, तदुपस्थित्यभावेन आतिथ्यादुद्दिश्य निवीतविधेरसम्भव इति यावत् ॥८॥

## विधिना त्वेकवाक्यत्वात् ॥९॥

किं च, विधिना—'उपव्यते देवलक्ष्ममेव तत्कुरुते' इत्युपवीतविधिना, एकवाक्यत्वात्—उपवीतस्तावकत्वेन तदेकवाक्यत्वसम्भवान्न निवीतं मनुष्याणामिति विधि । अन्यथा भिन्नविषयत्वेन वाक्यभेददोषापत्त । पैतृके मानुष्ये च कर्मणि यथा औचित्यात् प्राचीनावीतनिवीते प्रशस्ते । तथा दैवे कर्मणि उपवीतमेव प्रशस्तमिति स्तुतिरवगन्तव्येत्यर्थ ॥९॥

इतः परं षट् सूत्राणि सव्याख्यानि भाष्ये नोपलभ्यन्ते। तन्त्रवार्तिके न्यायमालायांच व्याख्यातानि दृश्यन्ते। तदनुसारेण समासतोऽत्र व्याख्यायन्ते इति ज्ञेयम्।

उपवीतस्य दर्शपूर्णमासाङ्गताधिकरणम् ॥२॥

## उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात् ॥१॥

पूर्वाधिकरणे विधीयमानत्वेनोदाहृतमुपवीतं **सर्वधर्मः स्यात्**–याव-दैवकर्माङ्गं स्यात्। कुतः? **लिङ्गदर्शनात्**–पितृदैवत्ये मृताग्निहोत्रप्रयोग-प्रकरणाम्नाते 'प्राचीनावीती दोहयेत्, यज्ञोपवीती हि देवेभ्यो दोहयति' इति वाक्ये देवेभ्य इति बहुवचनान्न दर्शाङ्गदोहनानुवादः। अपि तु अग्निहोत्रादिकृत्स्नदैवकर्माङ्गदोहनानुवादात्मकलिङ्गस्य दर्शनात् सर्वदैवकर्माङ्ग-मुपवीतं न केवलदर्शाङ्गमिति ॥१॥

## सि० ॥ न वा प्रकरणात्तस्य दर्शनम् ॥२॥

नैव उपवीतं सर्वाङ्गम्। कस्मात्? **प्रकरणात्**–दर्शपूर्णमासप्रकरण-पाठात्तन्मात्राङ्गमेव। तस्य देवेभ्य इत्यनुवादगतबहुवचनलिङ्गस्य दर्शनं तु प्रकृतिविकृतिदेवतापेक्षयोपपद्यत इति दर्शपूर्णमासाङ्गमेवोपवीतम् ॥२॥

उपवीतस्य विधित्वाधिकरणम् ॥३॥

## विधिर्वा स्यादपूर्वत्वात् ॥३॥

पूर्वाधिकरणोदाहृतवचने 'उपव्ययते' इति विधिरेव। नानुवादः। **अपूर्वत्वात्**–'नित्योदकी नित्ययज्ञोपवीती' इति स्मृत्या तस्य प्राप्तत्वेऽपि वासोविन्यासविशेषात्मकोपवीतनियमस्य दर्शपूर्णमासाङ्गत्वेनाप्राप्तत्वात् तदङ्ग-त्वेन तस्य पंचमलकारमाश्रित्य विधित्वमेव युक्तं स्यादिति भावः ॥३॥

उपवीत–उदगग्रत्वयोरनुवादताधिकरणम् ॥४॥

## उदक्त्वं चापूर्वत्वात् ॥४॥

दिष्टगताग्निहोत्रप्रकरणाम्नाने–'ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रांस्तृ-णीयात्' इति वाक्ये 'ये पुरा–जीवदग्निहोत्रे दर्भास्ते उदगग्राः कार्या इति

उदकत्वं च विधिरिति पूर्वसूत्रादनुवर्तते। कुतः? अपूर्वत्वात्-' उदगग्राणि वा ' -इति सामान्यतः स्मृतिप्राप्तत्वेऽपि यजुर्भ्रेषप्रायश्चित्तसिद्ध्यर्थतया अप्राप्तत्वात् इत्यर्थः ॥४॥

## सतो वा लिङ्गदर्शनम् ॥५॥

सतो वा-' अग्रवन्ति प्रागग्राणि वा ' इति स्मृत्या आचारतश्च प्राप्तस्यैव उदक्त्वस्य अस्मिन् वाक्ये अनुवादः । न विधिः। यतोऽत्र लिङ्गदर्शनम्-अनुवादलिङ्गस्य यच्छब्दयोगस्य विधिप्रत्ययराहित्यस्य च दर्शनमास्ति। न खल्वेवं लिङ्गदर्शने सति स्मृत्याचारप्राप्तस्य उदक्त्वस्य विधित्वस्वीकार उचित इति भावः ॥५॥

### समिद्धारणस्य विधित्वाधिकरणम् ॥५॥

## विधिस्तु धारणे अपूर्वत्वात् ॥६॥

मृताग्निहोत्रे एव-' अधस्तात्समिधं धारयन्ननुद्रवेत्। उपरि हि देवेभ्यो धारयति ' इति श्रूयमाणवाक्ये स्रुग्दण्डस्योपरि समिद्धारणं हिशब्दोपेतमपि विधिस्तु-विधिरेव, नानुवादः । कुतः? अपूर्वत्वात्-प्रमाणान्तरेणाप्राप्तत्वात्, इति हिशब्दस्यात्रानुवादलिङ्गत्वासम्भवात् अर्थान्तरपरत्वप्रकल्पनेन पंचमलकारमाश्रित्योपरि धारणं विधिरेवाङ्गीकार्य इति भावः ॥६॥

इति भाष्यादष्टपरसूत्रीव्याख्यानम् ॥ श्रीः ॥

---

### दिग्विभागस्य अनुवादकत्वाधिकरणम् ॥२॥

## दिग्विभागश्च तद्वत्, सम्बन्धस्यार्थहेतुत्वात् ॥१०॥

ज्योतिष्टोमे प्रकृत्य ' प्राचीनवंशं करोति। देवमनुष्या दिशो व्यभजन्त। प्राचीं देवाः, दक्षिणां पितरः, प्रतीचीं मनुष्याः, उदीचीं रुद्राः, । यत्प्राचीनवंशं करोति, । देवलोकमेव यजमान उपावर्तते ' इति श्रुतम्। तत्र देवादीनां कर्मण्यनधिकारात् विधिशङ्का नास्ति। प्रतीचीं मनुष्या इति दिग्विभागवाक्यमपि तद्वत्-निवीतवाक्यवन्न विधिः। अपि तु प्राचीनवंशविधेरर्थवादः।

कुतः ? याद्दच्छिकस्यैव मनुष्यप्रतीचीसम्बन्धस्य प्राचीनवंशमण्डपविध्यैकवाक्यत्वेन तत्स्तुतिहेतुत्वेनैवोपपत्तेरित्यर्थः ॥१०॥

परुषि दितादीनामनुवादताधिकरणम् ॥३॥

## परुषि दितपूर्णघृतविदग्धं च तद्वत् ॥११॥

दर्शपूर्णमासीयपिण्डपितृयज्ञे-'यत्परुषि दितं तद्देवानां, यदन्तरा तन्मनुष्याणां, यत्समूलं तत्पितृणां, समूलं बर्हिर्भवति'। तथा ज्योतिष्टोमे दीक्षार्थाभ्यङ्गे-'घृतं देवानां, मस्तु पितृणां, निष्पक्वं मनुष्याणां, तद्वा एतत्सर्वदैवत्यं यन्नवनीतं, यन्नवनीतेनाभ्यङ्क्ते सर्वा एव देवताः प्रीणाति'। तथा दर्शपूर्णमासीयपुरोडाशश्रपणं प्रस्तुत्य-'यो विदग्धः सः नैर्ऋतः, योऽश्रृतः स रौद्रः, यः श्रृतः स दैवः, तस्मादविदहता श्रपयितव्यः सदेवत्वाय'। एवं-'यत्पूर्णं तन्मनुष्याणां, यदुपर्यधो तद्देवानाम्, अधः पितृणाम्, अथ उपमन्थति, अर्धो हि पितृणाम' इति च पिण्डपितृयज्ञे, दीक्षार्थाभ्यङ्गे, पुरोडाशश्रपणे, अभिवानीदुग्धे पिष्टं प्रक्षिप्य क्रियमाणमन्थने च श्रुतम्। तत्र परुषि दितमित्यादिकं समूलबर्हिर्लवनविधेः, घृतमित्यादिकं नवनीताभ्यङ्गविधेः, विदग्ध इत्यादिकं यथोचितपुरोडाशश्रपणविधेः, पूर्णमित्यादिकं च मन्थनविधेस्तावकमित्येतत्सर्वं तद्वत्-निवीतवत्। स्तुत्यर्थोऽनुवादो यथाप्राप्तस्येति भावः ॥११॥

अनृतवदननिषेधस्य क्रतुधर्मताधिकरणम् ॥४॥

## अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात् ॥१२॥

क्रतुसंयुक्तं-दर्शपूर्णमासप्रकरणाम्नातं-'नानृतं वदेत्' इत्यकर्म नित्यानुवादः स्यात्। कुतः ? संयोगात् उपनयनसमय एव 'सत्यं वद। धर्मं चर'। इत्याद्युपदेशस्य कृत्स्नेन अनृतवदननिषेधस्य प्राप्तत्वात् इति ॥ १२ ॥

## सि० ॥ विधिर्वा, संयोगान्तरात् ॥१३॥

अयमनृतवदननिषेधो विधिरेव। नानुवादः। कुतः ? संयोगान्तरात्-उद्देश्यभेदात् उपनयनकालिको विधिः पुरुषमुद्दिश्य। अर्थात्पुरुषार्थः सः।

अयं तु क्रतुमुद्दिश्येति क्रत्वर्थः । तदतिक्रमे क्रतुवैगुण्यापादक इत्यर्थः ॥१३॥

जञ्जभ्यमानधर्माणां प्रकरणे निवेशाधिकरणम् ॥५॥

## अहीनवत् पुरुषधर्मस्तदर्थत्वात् ॥१४॥

दर्शपूर्णमासप्रकरणे—' जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतावि‍ति प्राणापानावेवात्मन् धत्ते ' इति श्रुतम् । गात्रविनामेन विदारितमुखः पुरुषो जञ्जभ्यमानः । तत्रायं शुद्धपुरुषधर्मः—पुरुषार्थः, तदर्थत्वात्—वाक्येन पुरुषार्थत्वावगमात् । अहीनवत्—यथा अहीनशब्दश्रवणात् द्वादशोपसदा प्रकरणात् विच्छेदः, तथा जञ्जभ्यमानोऽनुब्रूयादिति पुरुषप्राधान्यश्रवणात् प्रकरणाद्विच्छिद्य वाक्येन पुरुषार्थत्वं तस्येति भावः ॥१४॥

## सि० ॥ प्रकरणाविशेषाद्वा तद्युक्तस्य तत्संस्कारो द्रव्यवत् ॥१५॥

प्रयाजादिवत् प्राकरणिकविनियोगस्य अविशेषात्—विशेषाभावात्, प्रकृतदर्शपूर्णमासक्रतुयुक्तस्य तत्कर्तृपुरुषस्य संस्कारः सः मन्त्रपाठः । न केवलपुरुषधर्मः । द्रव्यवत्—यथा व्रीहीन् प्रोक्षतीत्यत्र प्रकृतक्रतुसम्बन्धि व्रीहीणामेव ग्रहणं, न व्रीहिसामान्यस्य । तद्वदित्यर्थः । तथा च वाक्येन श्रूयमाणं पुरुषप्राधान्यं प्रकरणं च अनुगृहीतं भवतीति भावः ॥१५॥

## व्यपदेशादपकृष्येत ॥१६॥

' तिस्र एव साह्नस्योपसदो द्वादश अहीनस्य ' इत्यत्र अप्रकृतस्य अहीनक्रतोरहीनपदेनोपादानात् द्वादशोपसत्त्वं प्रकृतादपकृष्य अप्रकृते अहीने निवेश्येत । प्रकृतादुत्कृष्य तत्र निवेशाभावे अहीनस्येति व्यर्थं स्यादिति भावः ॥१६॥

अवगोरणादीनां पुमर्थताधिकरणम् ॥६॥

## शंयौ च सर्वपरिदानात् ॥१७॥

' देवा वै शंयुं बार्हस्पत्यमब्रुवन् । हव्यं नो वहेति । सोऽब्रवीत् । वरं वृणै । किं मे प्रजाया इति । तेऽब्रुवन् । यो ब्राह्मणायावगुरेत् तं शतेन

यातयात्। यो निहनत्, तं सहस्रेण यातयात्। यो लोहितं करवत्, यावतः प्रस्कन्द्य पांशून् सङ्गृह्णात् तावतः संवत्सरान् पितृलोकं न प्रजानीयात्। इति। तस्मान्न ब्राह्मणायावगुरेत्। न निहन्यात्। न लोहितं कुर्यात्'। इति दर्शपूर्णमासयोः श्रुतम्। तत्र **शंयौ च**--शंयूपरकगवाक्ये श्रुतस्य दण्डोद्यमनादिरूपब्राह्मणावगोरणादिनिषेधस्य पुरुषसामान्यधर्मस्य प्रकरणादुत्कर्षः स्यात्। कुतः? **सर्वपरिदानात्**--प्रजात्वेन सङ्कीर्तितब्राह्मणमात्रस्यैव परिपालनं यत् शंयुना प्रार्थितं तस्यैव यो ब्राह्मणायावगुरेत्त शतेन यातयेदित्यादिना देवैर्दानात्। ब्राह्मणत्वावच्छिन्नविषयकावगोरणनिषेधस्य प्रकरणेन सङ्कोचायोगात्, अवगोरणाभावप्रयोज्ययातनाऽभावरूपफलस्य सिद्धत्वाच्च, तन्निषेधस्य केवलपुरुषार्थत्वेन प्रकरणादुत्कर्ष एवेति भावः ॥१७॥

## मलवद्वासःसंवादनिषेधस्य पुरुषधर्मताधिकरणम् ॥७॥

## प्रागपरोधान्मलवद्वाससः ॥१८॥

दर्शपूर्णमासप्रकरणे--'मलवद्वाससा न संवदेत्' इति श्रुतम्। तत्र **मलवद्वाससा**--रजस्वलया सह, संवादस्य प्रतिषेधः पुरुषार्थ एव। न क्रत्वर्थः। कुतः? रजस्वलायाः **प्रागपरोधात्**। **प्राक्**--क्रतुप्रयोगात्पूर्वमेव 'यस्य व्रते अहनि पत्नी अनालम्भुका स्यात्तामपरुध्य यजेत' इत्यनेन **अपरोधात्**-बहिष्करणात्, क्रतौ तस्या अप्रसक्तत्वेन तया सह संवादस्याप्यप्रसक्तत्वात् तन्निषेधस्य क्रत्वर्थत्वं न सम्भवतीति प्रकरणादुत्कर्ष एवेति भावः ॥१८॥

## अन्नप्रतिषेधाच्च ॥१९॥

'नास्या अन्नमद्यात्, अभ्यञ्जनं वा स्त्रिया अन्नम्' इति तत्प्रकरणस्थेन वाक्येन तस्या अभ्यञ्जनात्मकान्नस्य प्रतिषेधादपि संवादप्रतिषेधोऽयं पुरुषार्थ इति सिध्यति ॥१९॥

## सुवर्णधारणादीनां पुरुषार्थत्वाधिकरणम् ॥८॥

## अप्रकरणे तु तद्धर्मः, ततो विशेषात् ॥२०॥

किमपि प्रकरणमनारभ्येत्थं श्रूयते–' तस्मा सुवर्णं हिरण्यं भार्यम्। सुवर्ण एव भवति। दुर्वर्णोऽस्य भ्रातृव्यो भवति। सुवाससा भवितव्यं रूपमेव बिभर्ति' इति। अथ सुवर्णधारणादिरूपो धर्म तद्धर्मः–पुरुषार्थः, न क्रतुधर्मः। कुतः? अप्रकरणे पठितत्वात्। ततो विशेषात्–प्रकरणपठितादस्य वैलक्षण्यात्। अन्यथा केषाचिद्धर्माणा क्रतुप्रकरणे पठन, केषाचिच्च अनारभ्य पठनमित्येवं वैलक्षण्य न स्यादित्यर्थः॥२०॥ सिद्धान्तोपक्रमसूत्रमिदम्।

## अद्रव्यत्वात्तु शेषः स्यात् ॥२१॥

पूर्वपक्षव्यावर्तकस्तु। अद्रव्यत्वात्–द्रव्यदेवताराहित्येन यजेरभावात्, तच्छून्यधारणस्य स्वर्गादिफलासम्भवात् न पुरुषार्थो विधिः। अपि तु शेषः–अग्निहोत्रादिक्रतुशेष, क्रत्वर्थ स्यात् ॥२१॥

## वेदसंयोगात् ॥२२॥

आध्वर्यवमिति समाख्यासहितयजुर्वेदसंयोगात् अध्वर्यु तद्द्वारेण सस्कुर्यादिति तद्वाक्यस्यार्थः ॥२२॥

## द्रव्यपरत्वाच्च ॥२३॥

'हिरण्यमात्रेयाय ददाति' इति वाक्ये श्रूयमाणहिरण्यपदस्य क्रतुसम्बद्धहिरण्यद्रव्यपरत्वात् क्रतावुपयोक्ष्यमाणसुवर्णं धारणेन संस्कुर्यादिति तदर्थत्वात् क्रत्वर्थोऽयम्–तस्मा सुवर्णं हिरण्यं भार्यमिति विधिः। न पुरुषार्थ इति ॥२३॥

## सि०॥ स्याद्वाऽस्य संयोगवत्फलेन सम्बन्धः, तस्मात् कर्मैतिशायनः ॥२४॥

प्रकरणपाठाभावेन संस्कृतस्य विनियोगाश्रवणेन च कर्तुर्वा द्रव्यस्य वा संस्कारासम्भवात् पर्णमयी वे नियतक्रतुसम्बन्धस्मारकजुहूपदवदत्र तादृशक्रतुसम्बन्धस्मारकपदाभावाच्च न क्रत्वर्थमिदं कर्म। अपि तु 'अथ तस्य व्रतम्' इत्युपक्रम्योपदिष्टानां प्रजापतिव्रतानां ' 'एतावता हैनसा वियुक्तो

भवती ' स्वार्थवादिकफलसंयोगवत् ' दुर्वर्णोऽस्य भ्रातृव्यो भवति ' इत्यर्थवादोक्तफलेन साक्षात्सम्बन्धः स्यादेव । तस्मात्-' सुवर्णं हिरण्यं भार्यम् ' इत्यनारभ्य श्रुतं कर्म पुरुषार्थमेवेति ऐतिशायन आचार्यो निश्चिनोतीति प्रागुपक्रान्तसिद्धान्तस्योपसंहार इति भावः ॥२४॥

### जयादीनां वैदिककर्माङ्गत्वाधिकरणम् ॥९॥

## शेषोऽप्रकरणेऽविशेषात्सर्वकर्मणाम् ॥२५॥

' येन कर्मणेर्त्सेत्तत्र जयान् जुहुयात् । राष्ट्रभृतो जुहोति । अभ्यातानान् जुहोति ' । इति **अप्रकरणे**-प्रकरणविशेषमनारभ्य अधीता. जयादयो होमाः **सर्वकर्मणां**—लौकिकानां कृष्यादीनां, वैदिकानामग्निहोत्रादीनां च कर्मणां, शेषाः स्युः । कुतः ? **अविशेषात्**—अस्य कर्मण एव शेषः नान्यस्येति विशेषाभावादित्यर्थः ॥२५॥

## सि० ॥ होमास्तु व्यवतिष्ठेरन्, आहवनीयसंयोगात् ॥२६॥

उक्तहोमास्तु श्रौत एव कर्मणि **अवतिष्ठेरन्**—शेषत्वेन सम्बध्येरन् । कुतः ? ' यदाहवनीये जुहोति । तेन सोऽस्याभीष्ट प्रीतो भवति ' । इति होमत्वावच्छेदेन **आहवनीयसंयोगात्**—आहवनीयस्य विधानात् । लौकिके कर्मणि तदभावादिति भावः ॥२६॥

## शेषश्च समाख्यानात् ॥२७॥

चकारेण हेत्वन्तरं समुच्चीयते । शेषः—अध्वर्युकर्तृककर्मशेषः, समाख्यानात्-उक्तनामपरक आध्वर्यवमिति समाख्यानात्, कृष्यादावध्वर्योरभावात्समाख्या बाध्येतेति भावः ॥२७॥

### वैदिकाश्वप्रतिग्रहे इष्टेः कर्तव्यत्वाधिकरणम् ॥१०॥

## दोषात्त्विष्टिर्लौकिके स्यात् शास्त्राद्धि वैदिके न दोषः स्यात् ॥२८॥

'वरुणो वा एतं गृह्णाति । योऽश्वं प्रतिगृह्णाति । यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणाश्चतुष्कपालान्निर्वपेत्' । इत्यश्वप्रतिग्रहे इष्टि श्रूयते । सेयमिष्टि 'न केसरिणो ददाति' इति स्मृत्या अश्वदानस्य निषिद्धत्वात् लौकिके स्वेच्छानिमित्तकाश्वदानप्रतिग्रहे स्यात् । कुत ? 'वरुणो वा एतं गृह्णाति । (जलोदररोगग्रस्तो भवति) योऽश्वं प्रतिगृह्णाती'ति दोषश्रवणात् । वैदिके त्वश्वदानप्रतिग्रहे स दोषो न स्यात् । 'पौण्डरीके अश्वसहस्रं दक्षिणा' 'वारुणं यवमयं चरुम् अश्वो दक्षिणा' इति शास्त्रेणाश्वदानविधानात् इति ॥२८॥

## सि०॥ अर्थवादो वाऽनुपपातात्तस्माद्यज्ञे प्रतीयेत॥२९॥

'वरुणो वा एतं गृह्णाति' त्यर्थवाद एव । **अनुपपातात्**-मुख्यस्य उपपातस्य वरुणग्रहग्रहणादिरूपस्य असम्भवात् । न हि वैदिके लौकिके वा अश्वप्रतिग्रहेण रोगनिदानादि श्रूयते । नापि प्रत्यक्षानुमानाभ्यां तथाऽवगम्यते । अतो यज्ञाङ्गाश्वदानप्रतिग्रहे इयमिष्टिरित्येव वक्तव्यम् । तथा च परम्परया क्रत्वपूर्वप्रयोजकतया फलकल्पनाया अभाव इति लाघवम् । अन्यथा तत्कल्पनाप्रयुक्त गौरवमिति भावः ॥२९॥

### दातुर्वारुणीष्ट्यधिकरणम् ॥११॥

## अचोदितं कर्मभेदात् ॥३०॥

**कर्मभेदात्**—ददात्यर्थस्य प्रतिगृह्णात्यर्थस्य च कर्मणो भिन्नत्वात्, प्रकृते प्रतिगृह्णीयादिति श्रवणात् दाननिमित्तत्वेन **अचोदितं**—अविहितमिदं कर्म । अतः प्रतिगृहीतुरेवेयमिष्टि स्यादिति भावः ॥३०॥

## सि० ॥ सा लिङ्गादार्त्विजे स्यात् ॥३१॥

**सा**—इष्टि, **आर्त्विजे**—ऋत्विक्प्रेरके यजमाने अश्वदानार्थे स्यात् । कुतः ? **लिङ्गात्**-'प्रजापतिर्वरुणायाश्वमनयत् । स स्वां देवतामार्च्छत् । स पर्यदीर्यत । स एतं वारुणं चतुष्कपालमपश्यत् । तं निरवपत् । ततो वै स

चरुणपाशादमुच्यत'। इत्युपक्रमे अश्वदातुः पीडाश्रवणलिङ्गात् असञ्जातविरोध्युपक्रमानुसारेण सञ्जातविरोध्युपसंहारस्थ-- 'यावतोऽश्वान् प्रतिगृह्णीयादि-त्यस्य प्रतिग्राहयेदित्यर्थकरणमत्यावश्यकमिति भावोऽनुसन्धेयः ॥३१॥

वैदिकपानव्यापदि सौमेन्द्रचरुविधानाधिकरणम् ॥१२॥

## पानव्यापच्च तद्वत् ॥३२॥

'सौमेन्द्रं चरुं निर्वपेच्छ्यामाकं सोमवामिनः' इति श्रूयते। नत्र **पानव्यापत्**--पानस्य-सोमपानस्य व्यापत्-वमनं, **तद्वत्**--अश्वप्रतिग्रहेष्टिपूर्वपक्षवत् लौकिकपानवमनमित्यर्थः। तथा च लौकिकसोमपानवमने इयं सोमेन्द्रदेवताका श्यामाकचरुद्रव्यका इष्टिः कार्येति भावः ॥३२॥

## सि० ॥ दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न दोषः स्यात् ॥३३॥

'विवा एष इन्द्रियेण वीर्येण व्यृध्यते यः सोमं वमति' इति **दोषात्** वैदिके वमने दोषश्रवणात्, **अर्थात्**--'वमने धातुसाम्यम्' इति वैद्यशास्त्रप्रसिद्धेः, **हि**--यस्मात्, लौकिके वमने न दोषः स्यात्। अतो वैदिकसोमपान एवेयमिष्टिरिति सिद्धम् ॥३३॥

सौमेन्द्रचरोर्यजमानपानव्यापद्विषयत्वाधिकरणम् ॥१३॥

## तत्सर्वत्राविशेषात् ॥३४॥

**तत्**-वमनं, सर्वेषा ऋत्विजां यजमानस्य च इष्टिकरणे निमित्तम्। कुतः ? **अविशेषात्**--उदाहृतवाक्ये विशेषाश्रवणादित्यर्थः ॥३४॥

## सि० ॥ स्वामिनो वा तदर्थत्वात् ॥३५॥

**स्वामिनो वा**--यजमानस्य वमने इयमिष्टिः। क्रतोः **तदर्थत्वात्**-क्रतुजन्यफलभोक्तृत्वस्य यजमान एव सत्त्वात्, वमने क्रतुवैगुण्यम्। इष्ट्या च तत्परिहारः फलम्। यः वमति सः निर्वपेत् इति वमनकर्तुः निर्वापकर्तुश्चैक्यं श्रूयते। अतो यष्टुर्यजमानस्यैवेयमिष्टिरिति भावः ॥३५॥

## लिङ्गदर्शनाच्च ॥३६॥

'सोमपीथेन वा एष व्यृध्यते यः सोमं वमति' इति लिङ्गदर्शनादपि स्वामिन एव इष्टिः । यतः सोमपानेनात्मनः संस्कारो जायते । स च यजमानस्यैव । न ऋत्विजाम् । अयथाकालं वान्तेषां संस्कारो न भवतीति भावः ॥३६॥

### आग्नेयाष्टाकपालचरोर्द्विरवदानमात्रस्य होतव्यत्वाधिकरणम् ॥१४॥

## सर्वप्रदानं हविषस्तदर्थत्वात् ॥३७॥

'यदाग्नेयोऽष्टाकपालः' इत्यनेन विहितस्य पुरोडाशस्य कृत्स्नस्यैव अग्नये प्रदानं कार्यम् । हविषस्तदर्थत्वात्—'अग्नये जुष्टं निर्वपामि' इत्यनेन गृहीतस्य निखिलस्य तदर्थत्वात् । आग्नेय इत्यत्र तद्धितेन सर्वस्यैव अग्निसम्बन्धावगमाच्चेति ॥३७॥

## सि० ॥ निरवदानात्तु शेषः स्यात् ॥३८॥

'द्विर्हविषोऽवद्यति' इति निरवदानात्—निष्कृष्य अवदानश्रवणात्, न सर्वप्रदानं—न सर्वहोमः । किन्तु शेषः स्यात् ॥३८॥

## उपायो वा तदर्थत्वात् ॥३९॥

द्विरवदानम् उपायः हविषः संस्कारः । तथा च कृत्स्नस्य होमः, सर्वस्य तदर्थत्वात्—अग्न्यर्थत्वात् । असकृत् द्विर्द्विरवदाय होतव्यं सर्वम् । तथा सति न कस्यापि वाक्यस्य विरोध इति भावः ॥३९॥

## कृतत्वात्तु कर्मणः सकृत्स्यात्, द्रव्यस्य गुणभूतत्वात् ॥४०॥

उक्तसिद्धान्तं द्रढयति । कर्मणः—यागस्य, सकृत् कृतत्वात् नावृत्तिः स्यात् । द्रव्यस्य यागम्प्रति गुणभूतत्वात् न गुणानुसारेण प्रधानावृत्तिरिति द्रव्यस्य शिष्टेऽपि न तदनुसारेण यागावृत्तिरिति भावः ॥४०॥

## शेषदर्शनाच्च ॥४१॥

'शेषात्स्विष्टकृते समवद्यति' इति शेषविधिदर्शनादपि शेष अवश्यं सिध्यतीति बोध्यम् ॥४१॥

सर्वशेषैः । स्विष्टकृदनुष्ठानाधिकरणम् ॥१५॥

## अप्रयोजकत्वादेकस्मात् क्रियेरन्, शेषस्य गुणभूतत्वात् ॥४२॥

दर्शपूर्णमासे स्विष्टकृद्धोम-इडाप्राशित्र-अवदानात्मकानि शेषकार्याणि सन्ति । तानि एकस्माद्धविर्द्रव्यात् अवदाय अनुष्ठयानि । न शिष्टेभ्यः सर्वेभ्यो हविर्भ्यः । कुतः ? अप्रयोजकत्वात्--प्रधानयागार्थं हि हविः । न शेषकार्यार्थम् । अतः शेषकार्यस्य हविः प्रति प्रयोजकत्वाभावात् एकस्माद्धविषोऽवद्य कृतेऽपि तस्मिन् 'शेषात्स्विष्टकृतेऽवद्यती'ति शास्त्रं चरितार्थम् । अतः शेषकार्यं प्रति हविषो गुणभूतत्वात्--अङ्गत्वात्, एकस्मादवद्य तत्कार्यमिति भावः ॥४२॥

## संस्कृतत्वाच्च ॥४३॥

सकृत् एवंजातीयकेन संस्कारेण प्रधानस्य संस्कृतत्वाच्च न अपरस्मादपि हविष अवदानं कर्तव्यम् ॥४३॥

## सि० ॥ सर्वेभ्यो वा कारणाविशेषात्, संस्कारस्य तदर्थत्वात् ॥४४॥

प्रतिपत्तिसंस्कारात्मकावदानस्य हविरर्थत्वात् हविषः प्राधान्येन संस्काररूपकारणस्य अविशेषात् प्रतिप्रधानमङ्गावृत्तिरिति न्यायेन सर्वेभ्यो हविर्भ्यो अवदानं कर्तव्यम् ॥४४॥

## लिङ्गदर्शनाच्च ॥४५॥

'सकृत्सकृदवद्यति-' इति वीप्सारूपलिङ्गदर्शनादपि सर्वेभ्य अवदानमित्येव सिध्यति ॥४५॥

प्राथमिकशेषात्स्विष्टकृदाद्यनुष्ठानाधिकरणम् ॥१६॥

## एकस्माच्चेद्यथाकाम्यमविशेषात् ॥४६॥

कृत्वाचिन्तेयम् । एकस्मादवदानं चेत्तत्र विशेषाश्रवणात् यथेच्छं यस्मात्कस्माच्चित् शेषादवदानं कर्तव्यमित्यर्थः ॥४६॥

## सि० ॥ मुख्याद्वा पूर्वकालत्वात् ॥४७॥

"मुख्यात्--प्रथमादेवावदानं कार्यं, प्रथमोपस्थितिर्हि सर्वेभ्यः पूर्वकालीना । प्रथमोपस्थितपरित्यागे मानाभावादिति भावः ॥४७॥

पुरोडाशविभागस्य भक्षार्थताधिकरणम् ॥१७॥

## भक्षाश्रवणाद्दानशब्दः परिक्रये ॥४८॥

दर्शपूर्णमासयोः--' आग्नेयं चतुर्धा करोती ' ति चतुर्धाकरणे इदं श्रूयते-' इदं ब्रह्मणः, इदं होतुः, इदमध्वर्योः, इदमाग्नीध्र ' इति । अस्मिन्वाक्ये भक्षपदाश्रवणात् दानशब्दः-- चतुर्थन्तदानशब्देन निर्देशः, परिक्रयार्थ इति ॥४८॥

## तत्संस्तवाच्च ॥४९॥

' एषा वै दर्शपूर्णमासस्य दक्षिणा ' इति तस्य चतुर्थीनिर्देशस्य दक्षिणात्वेन संस्तवात्दक्षिणा तु परिक्रयार्था इति सिद्धमेव । तथा इदमपीति भावः ॥४९॥

## सि० ॥ भक्षार्थो वा द्रव्ये समत्वात् ॥५०॥

**भक्षार्थो वा**--भक्षार्थ एवायं विभाग, न परिक्रयार्थः । कस्मात् ? **द्रव्ये समत्वात्**--देवतार्थं परिगृहीतद्रव्यस्य देवतायै निवेदितत्वेन द्वयोः ऋत्विग्यजमानयोः तस्मिन् द्रव्ये स्वत्वाभावस्य तुल्यत्वादित्यर्थः । भक्षणस्य प्रतिपत्तिकर्मत्वात्तया निर्देशः सम्भवतीति भावः ॥५०॥

## व्यादेशाद्दानसंस्तुतिः ॥५१॥

सम्प्रदाननिर्देशसाम्यात् चतुर्थीनिर्देशो दक्षिणात्वेन स्तूयते इत्यर्थः। अतो न तेन परिक्रयः सिध्यतीति भावः॥५१॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां तृतीयाध्यायस्य चतुर्थः पादः सम्पूर्णः ॥४॥ श्रीः ॥

---

# अथ तृतीयाध्यायस्य पञ्चमः 'पादः ॥

ध्रौवाज्यादिभिः स्विष्टकृदादिशेषकार्याननुष्ठानाधिकरणम् ॥१॥

## आज्याच्च सर्वसंयोगात् ॥१॥

सर्वेभ्यो हविर्भ्यः समवदाय स्विष्टकृदनुष्ठानमित्यतीतपादे स्थितत्वात् ध्रौवाज्यस्य सर्वान्तर्गतत्वात्तस्मादपि शेषकार्यार्थमवदानं कर्तव्यम्। किञ्च, 'सर्वेभ्यो हविर्भ्यः समवद्यती'ति वाक्येनापि तस्मादाज्यादवदानं कार्यमित्येव सिध्यति। ॥१॥

## कारणाच्च ॥२॥

'देवा वै स्विष्टकृतमब्रुवन्, हव्यं नो वह इति। सोऽब्रवीद्, वरं वृणै, भागो मेऽस्त्विति। वृणीष्वेत्यब्रुवन्। सोऽब्रवीदुत्तरार्धादेव मह्यं सकृत्सकृदवद्यात्'। इति तुल्यं कारणं अन्येषां हविषामाज्यस्य च अर्थवादे सङ्कीर्त्यते। अत आज्यादपि अवदातव्यमिति प्राप्नोति ॥२॥

## एकस्मिन् समवत्तशब्दात् ॥३॥

प्रायणीयेष्टयामादित्यचर्वामेकैकस्मिन् हविषि 'अग्नये स्विष्टकृते समवद्यति। आज्यादेकस्माच्च हविषोऽवदानि। मिश्रस्य अन्येन हविषा समवद्यति' इति श्रूयते। तत्र यदि प्रकृताविवाऽऽज्यादपि स्विष्टकृतेऽवदीयेत।

तत्रश्चोदकेन प्रापणीये आज्यावदाने क्रियमाणे समवद्यतीति युक्तं भवति। अन्यथा एकस्माच्चतोरवत्तीतिराभविष्यत्। अत्र एकस्मिन्नपि समवत्तशब्द-श्रवणात् आज्यावदानदानस्यमिति ॥३॥

## आज्ये च दर्शनात्स्विष्टकृदर्थवादस्य ॥४॥

ध्रुवाज्य च स्विष्टकृदवदानं कार्यम्। कुतः ? अर्थवादस्य दर्शनात्। 'अवदायावदाय ध्रुवां प्रत्यभिघारयति। स्विष्टकृतेऽवदाय न ध्रुवां प्रत्यभिघारयति। न हि तत परामाहुति यक्ष्यन्भवति' । इत्यर्थवादेन स्विष्टकृदवदानात्प्राक् ध्रुवायां प्रत्यभिघारणानि स्विष्टकृदर्थानीत्यवगम्यते। अतोऽप्यवदानं ध्रुवा यस्येति ॥४॥

## सि०॥ अशेषत्वात्तु नैवं स्यात्सर्वादानादशेषता ॥५॥

अशेषत्वात्—उपांशुयागशेषस्य अभावात्, पुनरुपांशुयागशेषस्य अवदानं न स्यात्। ननुशेषाभावः कुतः ? सर्वादानात्—'चतुरवत्तं जुहोति' इत्यनेन वाक्येन उपांशुयागायावत्तस्य सर्वस्यैव हवनात् अशेषता—शेषाभावः, सिद्ध इत्यर्थः ॥५॥

## साधारण्यान्न ध्रुवायां स्यात् ॥६॥

'सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यम्' इति सर्वयागसाधारणं ध्रौवाज्यम्। न आग्नेयपुरोडाशवत् नियतम्। अतो न स्विष्टकृदादिप्रतिपत्त्यर्थं तस्मादवदानम्। शेषाभावादेवेति भावः। न होकस्याः स्थाल्या बहूनामर्थे श्रुतस्यौदनस्य एकस्मिन् भुक्ते अन्येष्वभुक्तेषु स्थालीस्थशेषो भृत्याय दीयते, तद्वत् युक्तं वेति रहस्यम् ॥६॥

## अवत्तत्वाच्च जुह्वां तस्य च होमसंयोगात् ॥७॥

ननु, ध्रुवायामुक्तरीत्या शेषाभावेऽपि जुह्वा शिष्टेन शेषकार्यं स्यात्तत्राह—जुह्वां गृहीतस्य दवतोद्देशेन अवत्तत्वात्, तस्य सर्वस्य 'चतुरवत्तं जुहोति' इत्यनेन होमसंयोगात्तत्रापि न शेष इत्यर्थः ॥७॥

## चमसवदिति चेत् ॥८॥

नन्वैन्द्रवायवं गृह्णातीत्यादिना चमसादावेकदेवतोद्देशेन ग्रहणेऽपि तेन अनुवषट्कारे यथा अग्नये हूयते तथा विष्णवाद्यर्थमवत्तेन जुहूस्थेन स्विष्टकृद्धोमोऽस्त्विति चेत्- ॥८॥

## न, चोदनाविरोधात् हविः प्रकल्पनत्वाच्च ॥९॥

नैवं स्यात् । कुतः ? चमसे चोदनाविरोधात्- ' सोमस्याग्नेर्वीहीत्यनुवषट्करोती'ति चोदनाविरोधात्, अन्योद्देशेनावत्तद्रव्येणान्यस्मै होमः क्रियते । उपांशुयागे तु तथा न वचनम् । किञ्च, ऐन्द्रवायवं गृह्णातीति आग्नेयः पुरोडाश इतिवत् केवलहविःप्रकल्पनमात्रपरो विधिः । न ह्यखिलद्रव्यं होमसंयुक्तम् । अल्पं जुहोतीति वचनेन शेषास्तित्वं सिध्यति । उपांशुयागे तु चतुरवत्तं जुहोतीति होमसंयुक्तमिति वैषम्यं ज्ञेयम् ॥९॥

## उत्पन्नाधिकारात्सति सर्ववचनम् ॥१०॥

उत्पन्नं शेषमुद्दिश्य अधिकारात्—पाठात्, शेषवति हविर्द्रव्ये सति ' सर्वेभ्यो हविर्भ्यः समवद्यती' ति सर्ववचनं बोध्यम् । सशेषेभ्यः सर्वेभ्यो हविर्भ्यः समवद्यतीत्यर्थः ॥१०॥

## जातिविशेषात् परम् ॥११॥

प्रायणीयेष्ट्यामेकस्मिन्नेवाऽऽदित्यचरावनवद्यतीत्यनुक्त्वा परं समवद्यतीति लिङ्गं प्रदर्शितम्, तत् आज्यशेषाच्छेषकार्येऽसिद्धे जातिविशेषात्—ओदनजातिमाज्यजातिं चापेक्ष्य प्रकृतिस्थशब्देनानुवादो ज्ञेयः । प्रकृतौ प्रयुक्तशब्द एवात्र प्रयुक्त इति भावः । यथासम्भवमनुवादः कल्प्यः ॥११॥

## अन्त्यमरेकार्थे ॥१२॥

यदन्त्यं प्रत्यभिघारणात्मकमर्थवादस्थं लिङ्गमुक्तम्, तत ध्रुवाया अरिक्तत्वार्थं बोध्यम् । तथा हि-स्विष्टकृदुपस्तरणाभिघारणपर्यन्तं ध्रुवाज्यस्य कार्ये विघ्ने । यदि ध्रुवायाः प्रत्यभिघारणं न कुर्यात् तर्हि ध्रुवा आज्यहीना

इत्युत्तरकार्यं न स्यात् । स्विष्टकृदिदमदानोत्तरमेव कार्यं नास्ति । अतो न पूरणमित्यर्थवादतात्पर्यमिति भावः ॥१२॥

साकंप्रस्थाय्ये शेषकार्याननुष्ठानाधिकरणम् ॥२॥

## साकं प्रस्थाय्ये स्विष्टकृदिडं च तद्वत् ॥१३॥

दर्शपूर्णमासयोः—'साकंप्रस्थायीयेन यजेत पशुकामः' इति विहिते कर्मणि 'आग्नीध्रे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन् जुहोती'ति श्रवणेन शेषाभावात् स्विष्टकृदिडं च तद्वत्—उपांशुयागवत्, लुप्यते इति सिद्धान्तः ॥१३॥

सौत्रामण्यां शेषाननुष्ठानाधिकरणम् ॥३॥

## सौत्रामण्यां च ग्रहेषु ॥१४॥

सौत्रामणीयागे—'उत्तरेऽग्नौ पयोग्रहान् जुहोति । दक्षिणेऽग्नौ सुराग्रहान्'इति निखिलस्य ग्रहस्थितद्रव्यस्य होमसंयोगश्रवणान्न स्विष्टकृदादिकं शेषकार्यमिति सिद्धान्तः ॥१४॥

## तद्वच्च शेषशेषवचनम् ॥१५॥

'उच्छिनष्टि, न सर्वं जुहोति' इति निषेधपूर्वकं शेषवचनं तद्वत्—कुम्भीवत्, सर्वहोमं ज्ञापयति । सर्वहोमप्राप्तावेव शेषवचनं सार्थकम् । शेषवचनं तु न स्विष्टकृदाद्यर्थम् । 'ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारम्' इत्यादिकार्यान्तरश्रवणादिति भावः ॥१५॥

सर्वपृष्ठेष्टौ स्विष्टकृदादीनां सकृदनुष्ठानाधिकरणम् ॥४॥

## द्रव्यैकत्वे कर्मभेदात् प्रतिकर्म क्रियेरन् ॥१६॥

'य इन्द्रियकामो वीर्यकामः स्यात्तमेतया सर्वपृष्ठया याजयेत' इत्यनेन विहितायामिष्टौ षडिन्द्रा एव श्रूयन्ते—'इन्द्राय राथन्तराय, इन्द्राय बार्हताय, इन्द्राय वैराजाय, इन्द्राय शाक्वराय, इन्द्राय वैरूपाय, इन्द्राय रैवताये'ति । इत्येव षड्देवताया इष्टेः निर्वापकाले षण्णां पृथक् पृथक् निर्वापे

विधाय श्रपणं कृत्वा द्वादशकपालमेकं पुरोडाशं कृत्वा होमसमये सम न पृथक् पृथक अवदाय प्रधानयागा षट् क्रियन्ते। तत्र द्रव्यस्यैकत्वेऽपि प्रधानकर्मभेदात् प्रतिप्रधानकर्म स्विष्टकृदवदान पड्वार विधेयमिति ॥१६॥

## सि० ॥ अविभागात्तु शेषस्य सर्वान् प्रत्याविशिष्टत्वात् ॥१७॥

अविभागात्—शेपस्य पुरोडाशस्य एकत्वात्, सर्वप्रधानानि प्रति अविशिष्टत्वात्—एकत्वादेव, सकृत्स्विष्टकृदवदानमित्यर्थः। प्रकृतौ हविष उत्तरार्धे. स्विष्टकृदवदानदेशः क्रम । इहापि हविष ऐक्यात् तथैवावदान सकृदिति भाव ॥१७॥

ऐन्द्रवायवग्रहे द्विःशेपभक्षणाधिकरणम् ॥५॥

## ऐन्द्रवायवे तु वचनात् प्रतिकर्म भक्षः स्यात् ॥१८॥

ऐन्द्रवायवग्रहोमोत्तर सोमरसस्य भक्षण—' द्वि ऐन्द्रवायव भक्षयती ' ति वचनात् प्रतिवषट्कारं भक्ष स्यात्। द्विवार भक्षण भवेदित्यर्थः ॥१८॥

सोमे शेषभक्षास्तित्वाधिकरणम् ॥६॥

## सोमे अवचनात् भक्षो न विद्यते ॥१९॥

सोमे— सोमयागे, भक्षो न विद्यते। कुत ' अवचनात्—वचनाभावात्। ' यद् ग्रहान् जुहोती ' ति श्रवणेन कुम्भीस्थित शेषाभावाच्चेति भाव ॥१९॥

## सि०॥ स्याद्वा अन्यार्थदर्शनात् ॥२०॥

सोमे स्यादेव भक्षणम्। कुत ' अन्यार्थदर्शनात्–' सर्वतः परिहारम भिन, द्विरैन्द्रवायवस्य भदमि भक्षान् भक्षयन्ति ' इति भक्षणाङ्गस्य भ्रमणादेरपूर्वस्य विधानात् भक्षाभावे तदनर्थक स्यात्। ' अन्न जुहोती ' त्यनेन शेषसिद्धेश्चेति भाव ॥२०॥

## वचनानि त्वपूर्वत्वात्तस्माद्यथोपदेशं स्युः ॥२१॥

न प्रत्यक्षो विधिरित्याशङ्कायामाह—' पुरस्तादैन्द्रवायवं भक्षयति । पुरस्तान्मैत्रावरुणम् । सर्वतः परिहारमाश्विनम् ' इति विशिष्टभक्षणस्य अप्राप्तत्वात् तत्तद्गुणविशिष्टभक्षविधायकानि वचनानि यथोपदेशं—यथा-विहितं, भक्षणं स्यादित्यर्थः ॥२१॥

### चमसिनां शेषभक्षणाधिकरणम् ॥७॥

## चमसेषु समाख्यानात् संयोगस्य तन्निमित्तत्वात् ॥२२॥

ज्योतिष्टोमे—' प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्रयजमानस्य प्रयन्तु सदस्यानाम् ' इति होतृचमसादिसंज्ञका दश चमसाः सन्ति। तेषु चमसिनां भक्षणमस्ति । कुतः ? होतृचमस इत्यादिसमाख्यानात् संयोगस्य—होतृचमस इत्यादिसमाख्यासम्बन्धस्य, तन्निमित्तत्वात्—चमसभक्षण-निमित्तत्वात् । होत्रा अनेन पात्रेण चम्यते भक्ष्यते इति होतृचमस इति योगात् भक्षेऽसति उक्तयोगः अनुपपन्नः स्यादिति भावः ॥२२॥

## तस्माच्चाब्राह्मणस्य सोमं प्रतिषेधाति ॥२३॥

तस्मात्—समाख्यया भक्षणस्य सिद्धत्वादेव, यजमानचमस इति समाख्यया यजमानस्य क्षत्रियादेः सोमभक्षणप्राप्तौ ' यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिभीराहृत्य ताः सम्पिष्य दधनि उन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम् ' इति सोमभक्षणनिषेधः सङ्गच्छते । निषेधस्य प्राप्तिपूर्वकत्वादिति ॥२३॥

### उद्गातॄणां सुब्रह्मण्येन सहभक्षणाधिकरणम् ॥८॥

## उद्गातृचमसमेकः श्रुतिसंयोगात् ॥२४॥

पूर्वाधिकरणोदाहृतवाक्ये ' प्रोद्गातॄणाम् ' इत्यत्र उद्गातॄणां चमस इति समाख्यासिद्धमुद्गातृचमसस्थसोमरसपानम् एकः—उद्गातैव कुर्यात् । कुतः ? श्रुतिसंयोगात्—उद्गीथाख्यसामभक्तेरुद्गानं कर्तरि उद्गातृप्राति-

पादिकस्य शक्तत्वात्। बहुवचनं तु प्रयोगभेदेन उद्गातृव्यक्तीनां भेदात्तत्परतया व्याख्येयम्। किञ्च, बहुवचनस्य प्रातिपदिकगतत्वात्प्रातिपदिकार्थस्योद्गातुश्चैकत्वात्तत्र श्रूयमाणमपि एकत्वमुद्गातृभेदं कर्तुं नालम्। अतोऽविवक्षितं तदिति भावः ॥२४॥

## सर्वे वा सर्वसंयोगात् ॥२५॥

'प्रोद्गातृणाम्' इति बहुवचनश्रुतेः 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययः प्राधान्येन' इति नियमात् अप्रधानप्रकृतिभूतोद्गातृशब्दस्य ऋत्विक्त्वसामान्येन ऋत्विक्षु लक्षणा स्वीकृत्य सर्व एव ऋत्विज उद्गातृचमसस्थसोमरसपानं कुर्युः। कुतः? **सर्वसंयोगात्**-सर्वान्वययोग्यबहुवचनसम्बन्धादित्यर्थः। अतस्तदविवक्षितं, प्रयोगभेदेन व्यक्तिभेदपरतया वा तदुपपादनं न युक्तमिति भावः ॥२५॥

## स्तोत्रकारिणो वा तत्संयोगात् बहुत्वश्रुतेः ॥२६॥

उदुपसर्गपूर्वकगायतिधातुवाच्यस्तोत्रसम्बन्धिगानक्रियानिमित्ता उद्गातृशब्दस्य प्रवृत्तिः। तद्गानकर्तारस्तु उद्गाता, प्रतिहर्ता, प्रस्तोता इति त्रय एव। अतो **बहुत्वश्रुतेः**—तत्त्रितयसम्बन्धात्, तेषां ग्रहणे प्रातिपदिकार्थे प्रत्ययार्थेश्च शक्त्यैव सम्भवति। न लक्षणाप्रसङ्ग इति भावः ॥२६॥

## सि० ॥ सर्वे तु वेदसंयोगात् कारणात् एकदेशे स्यात् ॥२७॥

उत्पूर्वकगायतिधातोः न गानमात्रे शक्तिः। अपि तु साम्नो द्वितीयपर्वगाने। तत्रैव उद्गीथशब्दप्रयोगः प्रसिद्धः। तद्गानकर्ता त्वेक एव ऋत्विक्। तस्मिन् बहुत्वासम्भवात् अतः योगो रूढिर्वाऽत्र न सम्भवतीत्यगत्या लक्षणा स्वीकार्या। तथा सत्यन्तरङ्गभूतसामवेदोक्तकर्मकर्तृत्वेन सम्बद्धाः सुब्रह्मण्येन सह सर्वे पूर्वोक्ताश्चत्वारो ऋत्विजः **वेदसंयोगात्**—सामवेदविहितकर्मणा साकं सम्बन्धात्, उद्गातृचमसं भक्षयेयुरिति सिध्यति। **एकदेशे**-

केवलोद्गातारि, कस्मात्—उद्गीथभक्तिगानकर्तृत्वात्, उद्गातेति शब्दप्रयोगः स्यादित्यर्थः ॥२७॥

ग्रावस्तुतोऽपि सोमभक्षणाधिकरणम् ॥९॥

**ग्रावस्तुतो भक्षो न विद्यते अनाम्नानात् ॥२८ ॥**

होतृचमसे ग्रावस्तुतः सोमभक्षो नास्ति। कुतः? अनाम्नानात्-आम्नानाभावादित्यर्थः ॥२८॥

**सि० ॥ हारियोजने वा सर्वसंयोगात् ॥२९॥**

हारियोजनग्रहे ग्रावस्तुतो भक्षोऽस्ति। कुतः? सर्वसंयोगात्—'यथाचमसमन्यांश्चमसान् चमसिनो भक्षयन्ति' 'अथैतस्य हारियोजनस्य सर्वे एव लिप्सन्ते' इति सर्वान्तरगतश्च ग्रावस्तुत् अपीति भावः ॥२९॥

**चमसिनां वा संनिधानात् ॥३०॥**

'सर्वे एव लिप्सन्ते' इत्यत्र सर्वशब्देन चमसिनामेव ग्रहणमुचितम्। कुतः? पूर्ववाक्ये 'चमसिनो भक्षयन्ती'ति चमसिनां संनिधानात्। हारियोजनं सर्वे चमसिनो भक्षयेयुरित्यर्थः। तथा च न ग्रावस्तुतो भक्ष इति भावः ॥३०॥

**सर्वेषां तु विधित्वात् तदर्था चमसश्रुतिः ॥३१॥**

सर्वेषां प्रकृतयागसम्बन्ध्यृत्विङ्मात्रस्यैव सर्वशब्देनात्र ग्रहणम्। कस्मात्? विधित्वात्—सर्वकर्तृकभक्षणस्य अपूर्वस्य विधानात्। तत्र कर्त्राकाङ्क्षायां प्रकरणात् प्रकृत—ऋत्विक्पुरुषैरेव निराकाङ्क्षत्वे अप्रकृतचमसिपुरुषाशकल्पने वाक्यभेदः स्यात्। तदर्था-हारियोजनस्तुत्यर्था चमसश्रुति 'चमसांश्चमसिन एव भक्षयन्ति। हारियोजनं सर्वे भक्षयन्ति। अत श्रेष्ठ तत्' इति। तस्माद्भक्षणं प्रकृतसर्वऋत्विक्कर्तृकमिति सिद्धम् ॥३१॥

वषट्कारस्य भक्षनिमित्तत्वाधिकरणम् ॥१०॥

**वषट्काराच्च भक्षयेत ॥-**

'वषट्कर्तुः प्रथमभक्षः' इति श्रुत्या वषट्कारकर्तारमुद्दिश्य प्रथमत्व-विशिष्टभक्षणविधानात् वषट्कारकर्तृत्वमपि भक्षणे निमित्तम् । न समाख्यैवेत्यर्थः ॥३२॥

होमाभिषवयोरपि तन्निमित्तत्वाधिकरणम् ॥११॥

## होमाभिषवाभ्यां च ॥३३॥

'ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति' । अत्र होमाभिषवयोर्वचनान्तरेण प्राप्तत्वान्निमित्तत्वेनानूद्य य अभिषवहोमकर्ता सः भक्षयेदित्यपूर्वं भक्षणमात्रं विधीयत इति । अत्रे पञ्चमी हेतौ । निमित्तसमुच्चायकश्चकारः । इत्युक्तोभयनिमित्तकं भक्षणमिति भावः ॥३३॥

वषट्कर्त्रादीनां चमसे सोमभक्षणाधिकरणम् ॥१२॥

## प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेषे ॥३४॥

'चमसान् चमसिनो भक्षयन्ती'ति चमसानां भक्षस्य प्रत्यक्षोपदेशात्-भक्षयन्तीति सामान्यवचनेन, अव्यक्तो भक्षकर्ता अत्र शेषे-चमसेतरग्रहादौ, प्राप्तः तत्र होमाभिषवकर्ता भक्षयेत् । न चमसेष्विति ॥३४॥

## स्याद्वा कारणभावात् अनिर्देशश्चमसानां कर्तुस्तद्वचनत्वात् ॥३५॥

'भक्षान् भक्षयन्ती' अनेन भक्षकारणस्य प्राप्तत्वात् चमसेषु इतरेषां भक्षः स्यादेव । समाख्या तु अनिर्देशः—चमसिना प्रापणमात्रकर्त्री । तद्वचनत्वात्—तावन्मात्रबोधकत्वात् । नेतरेषां निवर्तिकेति भावः ॥३५॥

## चमसे चान्यार्थदर्शनात् ॥३६॥

'चमसान् चमसाध्वर्यवे प्रयच्छति । तान् स वषट्कर्त्रे प्रयच्छती'ति अध्वर्युचमसे अन्यस्मै वषट्कर्त्रे दानश्रवणात् दानस्य भक्षणार्थत्वात् अस्तीतरेषां चमसेषु भक्षणमिति भावः ॥३६॥

एकपात्रे होतुः प्रथमभक्षणाधिकरणम् ॥१३॥

## एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत् ॥३७॥

एकस्मिन् पात्रे बहूना पानप्रसक्तौ अध्वर्युः पूर्वं भक्षयेत् । कुतः ? **क्रमात्**—होमद्रव्यस्य अध्वर्युसान्निध्यात्, सन्निधेश्च स्थानक्रमयोः पर्यायत्वादित्यर्थः ॥३७॥

## सि० ॥ होता वा, वर्णमन्त्रात् ॥३८॥

मन्त्रवर्णात्—' होतुश्चित् पूर्वे हविरद्य माशत ' इति मन्त्रलिङ्गात्, होतैव प्रथमः ॥३८॥

## वचनाच्च ॥३९॥

वषट्कर्तुः ' प्रथमभक्षः ' इति वचनादपि होतुः प्राथम्यम् ॥३९॥

## कारणानुपूर्व्याच्च ॥४०॥

प्रथमं वषट्कारः पश्चाद्धोमः इति कारणक्रमः । यथा कारणक्रमः तथैव भक्षणक्रम इति भावः ॥४०॥

भक्षणस्य अनुज्ञापूर्वकत्वाधिकरणम् ॥१४॥

## वचनादनुज्ञातभक्षणम् ॥४१॥

' नानुपहूतेन सोमः पातव्यः ' इति वचनादनुज्ञातस्यैव भक्षणमिति सिद्धान्तः स्पष्टम् ॥४१॥

वैदिकवचनेन अनुज्ञापनाधिकरणम् ॥१५॥

## तदुपहूत उपह्वयस्वेत्यनुज्ञापयेल्लिङ्गात् ॥४२॥

उपहूत उपह्वयस्वेति तत्तल्लिङ्गकमन्त्रत्वात् न लौकिकवाक्येन अनुज्ञापनमिति सिद्धान्तः ॥४२॥

वैदिकवचनेनार्थक्रमानुसारतः प्रतिवचनाधिकरणम् ॥१६॥

## तत्रार्थात्प्रतिवचनम् ॥४३॥

'उपहूत. उपह्वयस्वे' इत्यत्र उत्तररूपस्य वाक्यस्य पूर्वपाठेऽपि 'अग्निहोत्रं जुहोति, यवागूं पचती' त्यत्रेवार्थक्रमेण उत्तरपठित प्रश्नवाक्य पूर्वम्। तदनन्तरमुत्तरवाक्यमिति सिद्धान्त ॥४३॥

एकपात्राणामेवानुज्ञापनाधिकरणम् ॥१७॥

## तदेकपात्राणां समवायात् ॥४४॥

**तत्**–अनुज्ञापन, **समवायात्**–एकस्मिन्पात्रे सर्वेषा भक्षस्य प्राप्तत्वात्, अनुज्ञापनेन तेषामेकमत्येन पाने न्यूनाधिकपानप्रयुक्तकलहस्याभाव सिध्यतीति दृष्टप्रयोजनस्य सत्त्वात एकपात्राणामेवाभ्यनुज्ञानमिति भाव ॥४४॥

याज्यापनये भक्षस्याप्यपनयाधिकरणम् ॥१८॥

## याज्यापनयेन अपनीतो भक्षः प्रवरवत् ॥४५॥

ज्योतिष्टोमे ऋतुयाजनामकयागेष्वेतन्मन्त्र ने– 'यजमानस्य याज्या सोऽभिप्रेष्यति, होत्रेतद्यजेति, स्वय वा निषद्य यजती' ति। अत्र स्वय वा याज्यामन्त्र पठित्वा यजतिपक्षे होतु सकाशात याज्याया अपनयेऽपि तस्य भक्षो न अपैति। **प्रवरवत्**। यथा–'होतार त्वा वृणे' इति विहित ऋतुयाज्यार्थं वरण होतुर्नापैति। तथा भक्षोऽपि नापैतीत्यर्थ ॥४५॥

## सि० ॥ यष्टुर्वा कारणागमात् ॥४६॥

तस्मिन्पक्षे **यष्टुः**–यजमानस्यैव, भक्ष। कुत? **कारणागमात्**— 'अनवानता यष्टव्य' मित्यनेन वषट्कारकर्तृ त्वरूपकारणस्य तस्मिन् प्राप्तत्वात्। होतुर्भक्ष अपनीतो भवतीति भाव ॥४६॥

## प्रवृत्तत्वात् प्रवरस्यानपायः ॥४७॥

विषमो दृष्टान्त। **प्रवरस्य** वरणस्य, **प्रवृत्तत्वात्**–पूर्वमेव कृतत्वात्, तस्य अपनयो न सम्भवति। यत सर्वयाज्यार्थं होतुरन्त्येव वरणम्। तत्र एकयाज्यापनयेऽपि याज्यान्तरार्थं पूर्वं वरणमस्त्यावश्यकमिति भाव ॥४७॥

फलचमसस्य इज्याविकारत्वाधिकरणम् ॥१९॥

## फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् ॥४८॥

ज्योतिष्टोमे राजन्यवैश्यकर्तृके इत्थं श्रूयते । ' यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिभीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम् ' इति । तत्र राजन्यादिकर्तृकत्वरूपनिमित्तप्राप्तोऽयमुक्तप्रकारः **फलचमसः**—भक्षविकार एव । नेज्याविकारः । कुतः ? **श्रुतिसंयोगात्**—बिभक्षयिषेत, तमस्मै भक्षं प्रयच्छेदिति श्रवणात् ॥४८॥

## सि०॥इज्याविकारो वा संस्कारस्य तदर्थत्वात्॥४९॥

इज्याविकारोऽपि फलचमसरूपशिष्टद्रव्यात्मकहोमशेषविकारः । **संस्कारस्य**—होमशेषप्रतिपत्तिसंस्कारस्य, **तदर्थत्वात्**—होमशेषार्थत्वात् । होममन्तरेण होमशेषत्वासम्भवात् बिभक्षयिषेदित्यस्य होमशेषं बिभक्षयिषेदित्यर्थकतया होमार्थमेवेदं द्रव्यमिति भावः ॥४९॥

## होमात् ॥५०॥

होमानुवादात् । तथा हि—' अन्याश्चमसान् जुहोति अथैतस्य दर्भतरुणकेनोपहत्य जुहोति ' इति फलचमसहोममुद्दिश्य दर्भतरुणकस्य गुणत्वेन विधानादपि होमार्थत्वं सिध्यति फलचमसस्येति ज्ञेयम् ॥५०॥

## चमसैश्च तुल्यकालत्वात् ॥५१॥

होमसाधनचमसैश्च **तुल्यकालत्वात्**—एककालत्वात् । तथा हि—' यदा अन्यांश्चमसानुन्नयन्ति । अथैनं चमसमप्युन्नयन्ती ' त्युभयोः सहोन्नयनमपि होमार्थत्वे गमकमित्यर्थः ॥५१॥

## लिङ्गदर्शनाच्च ॥५२॥

' तमस्मै भक्षं प्रयच्छेन्न सोमम् ' इति सोमनिषेधरूपस्य लिङ्गस्य दर्शनादपि होमार्थत्वं तस्य ज्ञेयम् । तदित्थम्—सोमनिषेधपूर्वकोक्तद्रव्य-

विधानेन सोमस्थानीयत्वं तस्य गम्यते । सोमस्य तु हुतशेषस्यैव भक्षणात् अस्यापि हुतशेषत्वं सिध्यतीति भावः ॥५२॥

### ब्राह्मणानामेव राजन्यचमसानुप्रसर्पणाधिकरणम् ॥२०॥

## अनुप्रसर्पिषु सामान्यात् ॥५३॥

राजसूये दशपेयनामके ज्योतिष्टोमविकृतिभूते यागे 'दश दश एकैकं चमसमनुप्रसर्पन्ति' इति श्रूयते । राजसूये तु राजन्यस्यैवाधिकारात् तत्र राजन्ययजमानस्य चमसानुप्रसर्पिणो दश राजन्या एव बाध्याः । कुतः ? **सामान्यात्**—एकजातीयत्वलाभात् । प्रकृतौ यजमानचमसस्य भिन्नजातीयैर्भक्षणं नास्ति । किन्त्वेकजातीयैरेव । अतोऽत्रापि 'प्रकृतिवद्विकृतिः कार्या' इति चोदकेन तथैव प्राप्तम् । न चास्य बाधकं वचनं दृश्यते । तस्माद्राजन्यो यजमान अन्यैर्नवभिः क्षत्रियैः सह स्वीयचमसं भक्षयेदिति ॥५३॥

## सि० ॥ ब्राह्मणा वा, तुल्यशब्दत्वात् ॥५४॥

राजन्यचमसेऽपि दश ब्राह्मणा एव । कुतः ? **तुल्यशब्दत्वात्**—दशस्वपि चमसेषु ब्राह्मणा इत्येकजातीयशब्दवत्त्वात् । प्रकृतितः प्राप्तेषु दशस्वपि चमसेषु पानायानुप्रसर्पतां पुरुषाणां दश दशेति वीप्सया प्रतिचमसं दशसङ्ख्या विधाय अर्थसिद्धां शतसङ्ख्यामनूद्य सङ्ख्येयाना सर्वेषां 'शत ब्राह्मणाः सोमं पिबन्ती' त्यनेन वचनेन ब्राह्मणजातीयत्वं विधीयते । सत्येवं राजन्यस्य यजमानस्यापि यत्र चमसभक्षो नास्ति, तत्र कुत अन्येषा राजन्यानां भक्षः । तस्माद् ब्राह्मणा एव सोमपानकर्तार इति राजन्यचमसानुप्रसर्पिणो दश ब्राह्मणा एव, न राजन्या इति सिद्धम् ॥५४॥

इति जैमिनिसूत्रवृत्तौ भावबोधिन्यां तृतीयाध्यायस्य पञ्चमः पादः सम्पूर्णः ॥ श्रीः ॥

---

# अथ तृतीयाध्यायस्य षष्ठः पादः ॥

स्रुवादिष्वनारभ्याधीतखादिरतादिविधेः प्रकृतिगामिताधिकरणम् ॥१॥

## सर्वार्थमप्रकरणात् ॥१॥

किमपि प्रकरणमनारभ्येत्थं श्रूयते– 'यस्य खादिरः स्रुवो भवति, स छन्दसामेव रसेनावद्यति, सरसा अस्य आहुतयो भवन्ति' 'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति' इत्येवमादि। अत्र यत् स्रुवे खादिरत्वस्य, जुह्वा च पर्णतायाश्च विधानं, तत् सर्वार्थं–प्रकृतिविकृत्यर्थम्। उभयोरपि समानं विधानमित्यर्थः। कुतः ? अप्रकरणात्–अनारभ्याधीतत्वादेतादृशस्य विधिवाक्यस्य। स्रुवादेश्च उभयत्रापि सत्त्वात्। अतः सर्वत्र स्यादेतादृशो विधिरिति भावः ॥१॥

## सि० ॥ प्रकृतौ वा अद्विरुक्तत्वात् ॥२॥

यत्र अतिदेशेन अङ्गप्राप्तिः सा प्रकृतिरित्युक्तलक्षणाया दर्शपूर्णमासादिप्रकृतावेवायं विधिर्बोध्यः। कुतः ? अद्विरुक्तत्वात्–एवं सति द्विरुक्तं न भवति। अन्यथा, सर्वार्थत्वे विकृतावतिदेशशास्त्रेण प्राप्तिः, उक्तवाक्येन च, इति द्विरुक्तता स्यादिति भावः ॥२॥

## तद्वर्जन्तु वचनप्राप्ते ॥३॥

विकृतौ अनारभ्याधीतवचनेन खादिरत्वादौ प्राप्ते तद्वर्जे–खादिरत्वादिभिन्नं प्राकृतधर्मजातमतिदेशशास्त्रं प्रापयतीति न द्विरुक्तिरित्यर्थः ॥३॥

## दर्शनादिति चेत् ॥४॥

यद्यतिदेशशास्त्रादनारभ्यशास्त्रं बलवत् तदा तेनैवारभ्यशास्त्रेण प्रकृताविव विकृतावपि स्रुवादौ खादिरत्वादिधर्मप्राप्तौ सत्यां गृहमेधीयेष्टिवत् विकृतेरतिदेशशास्त्रस्य आकाङ्क्षा न स्यात्। शक्नोति हि तच्छास्त्रप्राप्तं

प्रकृतिविकृतिसाधारणं खादिरत्वादिकं विकृतिमपि निराकाङ्क्षीकर्तुम्। तथा सति क्वचिद्विकृतौ 'प्रयाजे प्रयाजे कृष्णलं जुहोती'ति प्राकृतप्रयाजदर्शनमनुपपन्नं स्यात्। तद्दर्शनमतिदेशशास्त्रस्य ज्यायस्त्वे समुपपद्यते। तस्मादतिदेशरहितायां प्रकृतावेव अनारभ्यशास्त्रस्य निवेशो युक्तः। न विकृतावपि। तत्र त्वतिदेशशास्त्रमस्त्येवेति चेत्—॥४॥

## न, चोदनैकार्थ्यात् ॥५॥

अनारभ्यशास्त्रेण अतिदेशशास्त्रं निराकाङ्क्षं नाम विकृतेस्तस्य आकाङ्क्षा नास्तीति न। अपि त्वस्त्येव। कुतः? चोदनाया **ऐकार्थ्यात्**— 'यस्य खादिरः स्रुवो भवती' त्यादिचोदनया खादिरत्वादिमात्रस्य विधानात्। यदि खादिरत्वं स्रुवं चेदं वाक्यं विदध्यात् तदाऽतिदेशशास्त्रं निराकाङ्क्षं भवेत्। अन्यथा न। इदमनारभ्यशास्त्रं तु लाघवात् अतिदेशप्राप्तं स्रुवमुद्दिश्य खादिरत्वमात्रं विदधाति। अतः स्रुवप्राप्त्यर्थं विकृतेरतिदेशशास्त्रस्यास्त्येवाकाङ्क्षेति भावः ॥५॥

## उत्पत्तिरिति चेत् ॥६॥

प्रकृतौ सङ्क्षेपविस्तराभ्यामङ्गानि विधीयन्ते। यथा 'पञ्च प्रयाजान् यजती' ति समासतः। 'समिधो यजती' त्येवमादिना विस्तरेण। तथा 'यस्य खादिरः स्रुवो भवती' त्यादिर्विस्तरः। यस्यैवं स्रुव' इति सङ्क्षेपः। अनारभ्यविधीनामुत्पत्तिः प्राकृतविधिभिः समाना। तस्मात्—अनारभ्यविधिः प्रकृत्यर्थः। सङ्क्षेपविस्तराभ्यां विधीयमानत्वात्। प्रयाजादिवत्। इति चेत्॥६॥

## न, तुल्यत्वात् ॥७॥

न तावदीदृशे शब्दैकसमधिगम्येऽर्थे सामान्यतो दृष्टस्यानुमानस्य प्रसरोऽस्तीति तर्कपादे प्रत्यक्षसूत्रे—

तस्माददृष्टपूर्वत्वात्केनचिद्वस्तुना सह।
धर्मस्य नानुमेयत्वमसाधारणवस्तुवत् ॥

इत्यादिना श्लोकवार्तिके उक्तम्।

किञ्च, विकृतावपि सङ्क्षेपविस्तराभ्यां विधिरुपलभ्यते । 'तिस्र आहुतीर्जुहोती' ति सङ्क्षेपः । 'आमनमस्यामनस्य देवा ' इति विस्तरः । अतो वैकृतैरपि विधिभिरनारभ्यविधीनांतुल्यत्वात् अनैकान्तिको हेतुर्दुष्ट इति भावः ॥७॥

## सि० ॥ चोदनार्थकात्स्न्यात्तु मुख्यविप्रतिषेधात् प्रकृत्यर्थः ॥८॥

**प्रकृत्यर्थः**—प्रकृतिमात्रार्थ एवायमनारभ्यविधिः । कुतः ? **चोदनार्थकात्स्न्यात्**—विकृतौ कृत्स्नधर्माणामेव अतिदेशशास्त्रेण प्राप्तेः खादिरत्वादेरपि प्राप्तत्वेन **मुख्यस्य**-अनारभ्यपठितशास्त्रस्य, **विप्रतिषेधात्**—आकाङ्क्षाभावात् । यद्यप्यनारभ्यशास्त्रं प्रत्यक्षम् । अतिदेशशास्त्रमानुमानिकं विलम्बेन प्रवर्तते । तथाप्युक्तयुक्त्या स्रुवादिप्राप्त्यर्थं प्रत्यक्षशास्त्रात्पूर्वमेव तस्य प्रवृत्तिराच्या । स्रुवादिप्राप्तिवेलाया खादिरत्वादेरपि प्राप्तौ प्रत्यक्षशास्त्रमेव निराकाङ्क्षमिति बोध्यम् ॥८॥

### सामिधेनीनां सप्तदशसङ्ख्याया विकृतिगामिताधिकरणम् ॥२॥

## प्रकरणविशेषात्तु विकृतौ विरोधि स्यात् ॥९॥

'सप्तदश सामिधेनीरन्वाह ' इत्यनारभ्यश्रुत सामिधेनीनां साप्तदश्य दर्शपूर्णमासप्रकरणे— ' पञ्चदश सामिधेनीरन्वाह ' इति विशेषदर्शनात् तद्विरोधि साप्तदश्यं मित्रविन्दादिविकृतौ स्यात् । प्रकरणसहकृतपाञ्चदश्यस्य विकल्पपक्षेऽपि बाधासम्भवेन तदयुक्तत्वाद्यायाः प्रकृतेर्निराकाङ्क्षत्वादिति भावः ॥९॥

### गोदोहनादीनां प्रकृतिगामिताधिकरणम् ॥३॥

## नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात् ॥१०॥

'चमसेनापः प्रणयेत् गोदोहनेन पशुकामस्य ' इति दर्शपूर्णमासयोः श्रुतम् । तत्र **नैमित्तिकं**-पशुकामनिमित्तप्रयुक्तगोदोहनपात्रं, **प्रकृतावेव**

निविष्टम् । कुतः ? संयोगस्य—गोदोहनेन पशुकाम इति पदसम्बन्धरूपस्य, पूर्वोक्तसामान्यपेक्षया विशेषात् । स च तद्विकारः चमसबाधक इत्यर्थः । तथा हि—चमसः गोदोहनं चेत्युभयस्य दर्शपूर्णमासमसन्निधौ पाठो यद्यपि तुल्यः, तथापि चमसशास्त्रं सामान्य पशुकामेतरप्रयोगे सावकाशम् । विशेषं गोदोहनशास्त्रं निरवकाशम् । सावकाशान्निरवकाशं बलीय इति प्रसिद्धम् । अतश्चमसस्य गोदोहनेन नैमित्तिकेन बाधात् प्रकृतावेव तस्य निवेश इति सिद्धम् ॥१०॥

आधानस्य पवमानेष्ट्यनङ्गताधिकरणम् ॥४॥

## इष्ट्यर्थमग्न्याधेयं प्रकरणात् ॥११॥

'अग्नये पवमानाय अष्टाकपालं निर्वपेत् । अग्नये पावकाय । अग्नये शुचये' । इति पवमानेष्टीर्विधाय तत्प्रकरणे 'वसन्ते ब्राह्मणो अग्निमादधीत' इति श्रुतमग्न्याधानं इष्ट्यर्थम् । कुतः ? प्रकरणात्—इष्टिप्रकरणे श्रुतत्वात् । अतः इष्ट्यङ्गमग्न्याधानमित्यर्थः ॥११॥

## सि० ॥ न वा, तासां तदर्थत्वात् ॥१२॥

**तासां**—पवमानेष्टीनां, **तदर्थत्वात्**—अग्निसंस्कारार्थत्वात्, नैव आधानमिष्ट्यङ्गम् । अग्नीनामिष्ट्यर्थत्व एव अग्निद्वारा आधानं पवमानेष्ट्यङ्गं भवेत् । तदेव नास्ति । कुतः ? इष्टीनां फलाश्रवणेन निष्फलत्वात्तदङ्गमाधानमपि निष्फलं स्यात् । तस्मादाधानपवमानेष्ट्योः आन्यर्थ्यम् । अग्नीनां च निखिलक्रत्वर्थत्वमिति ॥१२॥

## लिङ्गदर्शनाच्च ॥१३॥

'जीर्यति वा एष आहितः पशुर्यदग्निः, संवत्सरस्य परस्तात् तदेतान्येव आग्न्याधेयस्य हवींषि संवत्सरे निर्वपेत् । तेन वा एष न जीर्यति । तेन वा एनं पुनर्नवं करोति' इति लिङ्गदर्शनादप्यष्टीनामग्न्यर्थत्वं बोध्यम् ॥१३॥

आधानस्य सर्वार्थत्वाधिकरणम् ॥५॥

## तत्प्रकृत्यर्थं, यथा अन्ये अनारभ्यवादाः ॥१४॥

तत्—आधानं, प्रकृत्यर्थं—आदिरस्त्वन्यायात् । यथा अन्ये अनारभ्यवादाः प्रकृत्यर्थाः, तद्वदिदमपि क्षेत्रमित्यर्थः ॥१४॥

## सि० ॥ सर्वार्थं वा, आधानस्य स्वकालत्वात् ॥१५॥

सर्वार्थं—अग्निद्वारा सर्वकर्मार्थमेवाऽऽधानम् । न केवलं प्रकृत्यर्थम् । कुतः ? तस्य स्वकालत्वात्—वसंतर्तुरूपस्य स्वकालस्य स्वातन्त्र्येण विधानात् । दर्शपूर्णमासाङ्गत्वे तु प्रधानस्य यः कालो दर्शः पूर्णिमा च, स एव तदङ्गाना कालः । न अङ्गाना स्वतन्त्रः कालोऽस्ति । इह तु स्वतन्त्रः कालः श्रूयते—' वसन्ते अग्नीनादधीत ' इति । अतः आधानं केवलमन्यर्थम् । तेनोत्पन्नानामग्नीनां सर्वक्रत्वर्थत्वम् । ' यदाहवनीये जुहोति ' इति वाक्येनेति भावः ॥१५॥

### पवमानेष्टीनामसंस्कृतेऽग्नौ कर्तव्यताधिकरणम् ॥६॥

## तासामग्निः प्रकृतितः प्रयाजवत् ॥१६॥

तासां—पवमानेष्टीनां, होमार्थे योऽग्निरपेक्षितः सः प्रकृतितः-दर्शपूर्णमासादतिदिश्यते । प्रयाजातिदेशवत्—प्रकृतौ पवमानेष्टिसंस्कृताग्नेः सत्त्वादत्राप्यतिदेशशास्त्रेण तथैवाग्निरतिदिश्यते इति भावः ॥१६॥

## न वा, तासां तदर्थत्वात् ॥१७॥

नैव तत्र पवमानेष्टिसंस्कृतोऽग्निः । कुतः ? इष्टीनां तदर्थत्वात्—अग्न्यर्थत्वात् । यदि पवमानेष्टौ पवमानेष्टिसंस्कृतस्याग्नेरपेक्षा तर्हि पूर्वं पवमानेष्टिः कर्तव्या । तत्राप्यग्न्यपेक्षायां तत्पूर्वमिष्टिरित्यनवस्थादोषापत्त्या कुत्रचिद-संस्कृताग्नौ विश्रामोऽवश्यं कार्यः । सत्येवमग्ने क्रियमाणः प्रथमत एवोचित इति भावः ॥१७॥

### उपाकरणादीनामग्नीषोमीयपशुधर्मत्वाधिकरणम् ॥७॥

## तुल्यः सर्वेषां पशुविधिः, प्रकरणाविशेषात् ॥१८॥

ज्योतिष्टोमे--अग्नीषोमीय, सवनीय, आनुबन्ध्यश्चेति त्रय पशवः समाम्नाता । तत्सन्निधौ च-- ' उपाकरण--उपानयन--अक्षयावन्ध-यूपे नियोजन--पर्यग्निकरण--मज्ञपन--विशसनादयो धर्मा समाम्नाता । तत्र त्रिष्वपि पशुषु ज्योतिष्टोमप्रकरणमाधरणात् पशुविधिः--पश्वङ्गधर्मविधि, सर्वेषा तुल्य एवेति । कुत ? प्रकरणाविशेषादित्यर्थ ॥१८॥

# स्थानाच्च पूर्वस्य ॥१९॥

ननु, महाप्रकरणाविशेषेऽपि ' चतुर्थेऽन्हि आग्नेय सवनीय पशुरग्निष्टोम आलभ्यते ' इति श्रुते सवनीयस्यावान्तरप्रकरणमस्त्यात् अभिक्रमणन्यायेन सवनीयाङ्गत्व पशुधर्माणामिति चेत्-' स एव चतुर्थे औपवसथ्येऽन्हि द्विदैवत्य पशुरालभ्यते ' इति श्रुत्या चतुर्थदिने अग्नीषोमीययाग । तस्य सन्निधौ पशुधर्माणा पाठात् । स्थानक्रमण अग्नीषोमीयपश्वङ्गत्वमपि नैवामित्युभयार्थत्व पशुधर्माणामिति ॥१९॥

# श्वस्त्वेकेषां तत्र प्राक् श्रुतिर्गुणार्था ॥२०॥

उभयार्थत्वव्यावर्तकस्तु । तथा हि--' आश्विन ग्रह गृहीत्वा त्रिवृता यूप परिवीय आग्नेय सवनीय पशुमुपाकरोति ' इत्येकेषा शाखिना श्वः--सुत्याहे--पञ्चमेऽहि सवनीयपशूपाकरणाम्नानमस्ति । तत्र तस्यामेव शाखाया प्राक्--चतुर्थेऽहि ' आग्नेय सवनीय पशुमालभत ' इति श्रुतिस्तु गुणार्था-गुणाविधानार्थाऽवगन्तव्या । नोत्पत्तिश्रुति सा । यत -' आग्नेय पशुरग्निष्टोम आलभ्यते । एन्द्राग्न पशुरुक्थ्ये । ऐन्द्रोवृष्णि षोडशिन्याम् । सारस्वती मेषी अतिरात्रे ' । इत्युत्तरत्रस्थासाधारणपशून् चतुर्थेऽहि सङ्कीर्त्य ' यथा वै म स्योऽविदितो जलमवधुनुते। एवमेते अप्रज्ञायमाना जलमवधुन्वते '। इत्यविज्ञाने दोषमुद्भाव्य ' एभि कथ सवनानि पशुमन्तीति प्रश्ने ' वपया प्रात सवने प्रचरति । पुरोडाशेन माध्यन्दिनसवने । अङ्गैस्तृतीयसवने '। इति वपादिप्रचार, सवगुणविधानार्था सा पुन श्रुति । वपाप्रचारे-

णैकवाक्यत्वावगमात् । अतो न सवनीयार्थत्वं पशुधर्माणाम् । अपि तु स्थानादग्नीषोमीयाङ्गत्वमेवेति नोभयार्थास्ते धर्मा इति भाव. ॥२०॥

## तेनोत्कृष्टस्य कालविधिरिति चेत् ॥२१॥

तेन—' वपया प्रातःसवने प्रचरती ' ति वपाप्रचारेण, उत्कृष्टस्य साङ्गपशोरालंभस्य कालविशेषः ' आश्विनं ग्रहं गृहीत्वे'त्यनया श्रुत्या विधीयते इति पश्वालम्भस्य कालबोधकं तद्वाक्यं, नोत्पत्तिवाक्यम् । तद्वाक्यं तु ' चतुर्थेऽह्नि आग्नेयः सवनीयः पशुरग्निष्टोम आलभ्यते ' इदमेव । अत अवान्तरप्रकरणेन सवनीयार्थत्वं पशुधर्माणां सिध्यतीति चेत्—॥२१॥

## नैकदेशत्वात् ॥२२॥

न वपाप्रचारोत्कर्षेण उत्कृष्टस्य कालविधिः सम्भवति । उत्कर्षस्यैकदेशत्वात् । वपाप्रचारमात्रोत्कर्षादित्यर्थः । अत्रायं भावः—' चतुर्थेऽन्हि आग्नेयः पशुरग्निष्टोम आलभ्यते ' इति चतुर्थदिनपठितं वाक्यं साङ्गसवनीयपशूत्पत्तिपरं चेत्, तत्सन्निधावाम्नातानि उपाकरणादीन्यङ्गान्यपि कालाकाङ्क्षारहितानि । एवं सर्वथा तस्मिन्नहन्यनुष्ठाने प्राप्ते केवलं वपाप्रचारो वचनेन उत्कृष्यते । न च वपाप्रचारोत्कर्षात् उपाकरणादीनामप्युत्कर्ष इति वाच्यम् । ' तदादि वा अभिसम्बन्धात्० ( ५।१।२४ ) इति न्यायात् वपाहोमोत्तरकालानामेव पदार्थानामुत्कर्षः स्यात् । न तत्प्राक् अनुष्ठेयानामुपाकरणादीनाम् । अज्ञातकालानामेव प्रधानकालत्वं, न ज्ञानकालानामङ्गानामिति । अतः पूर्वदिनपठितवाक्यमुत्पत्तिवाक्यं, उत्तरदिनपठितं तु गुणविधायकमिति पक्षे वाक्यभेदापत्तिः । मा आश्विनं ग्रहं गृहीत्वेत्येतस्य वाक्यस्योत्पत्तिविधिपरत्वे नैवास्तीति बोध्यम् ॥२२॥

## अर्थेनेति चेत् ॥२३॥

' मुष्टिना पिधाय वपोद्धरणमासीत आ वपाहोमात् ' इति श्रुतेः पूर्वदिने वपाहोमकालपर्यन्तं स्थातुं पूर्वपोद्धरणं मुष्टिना पिधाय आसीनः उत्तरदिने

न शक्नोति आहारविहारादिरहितः । अतः अर्थसिद्धः पूर्वाङ्गोत्कर्ष इत्याह—**अर्थेनेति** । वपोत्कर्षेण पूर्वाङ्गानामुत्कर्ष अर्थात्सिद्धः इति भावः ॥२३॥

## नाश्रुतिविप्रतिषेधात् ॥२४॥

नैवमङ्गानामुत्कर्षः सम्भवति । कुतः ? **अश्रुतिविप्रतिषेधात्**—श्रुतिविरोधे हि तथा भवेत् । न च श्रुतिविरोधः । तृणमुष्टिना पर्णमुष्टिना वा पिधाने श्रुतिविरोधाभावात् । तस्मादाश्विनं ग्रहं गृहीत्वा सवनीयं पशुमुपाकरोतीत्येतदेव तस्योत्पत्तिविधिवाक्यम् । तत्सन्निधौ अङ्गाम्नानस्याभावात्, नावान्तरप्रकरणेन सवनीयार्थत्वं पशुधर्माणामिति भावः ॥२४॥

## स्थानात्तु पूर्वस्य, संस्कारस्य तदर्थत्वात् ॥२५॥

इत्थं सवनीयस्यावान्तरप्रकरणेऽसिद्धे पूर्वेणैव स्थानेन हेतुना **पूर्वस्य**—अग्नीषोमीयस्य, एते उपाकरणादयो धर्मा भवितुमर्हन्ति । नन्वेवमपि महाप्रकरणस्य प्रबलस्य साकाङ्क्षस्य च सत्त्वात् कथं दुर्बलेन स्थानेन तस्य बाध इत्याशङ्कायामाह—**संस्कारस्य**—उपाकरणादिधर्मजातस्य अग्नीषोमीयपश्वर्थत्वात् । सत्यामप्याकाङ्क्षायां तान् धर्मान् गृहीतुं न शक्नोति ज्योतिष्टोमः । तस्य सोमयागत्वात् । तत्र तेषां बाधात् । तस्मतो निराकाङ्क्षः सः सोमधर्मैः । अतः साकाङ्क्षास्तत्प्रकरणाधीता उपाकरणादयो धर्मा ज्योतिष्टोमाङ्गपशुयागे विश्राम्यन्ति । अतः स्थानसहितप्रकरणस्य प्रबलत्वात् अग्नीषोमीयपश्वर्थत्वमेव तेषां धर्माणामिति भावः ॥२५॥

## लिङ्गदर्शनाच्च ॥२६॥

यद्दैवत्यः पशुयागस्तद्दैवत्यस्तदङ्गपुरोडाशयाग इति नियमात् 'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयेन पुरोडाशेन प्रचरती'ति श्रवणाच्च 'पुरोडाशेन माध्यन्दिनसवने' इति लिङ्गदर्शनादपि अग्नीषोमीयार्थत्वं पशुधर्माणां सिध्यति । न सवनीयार्थत्वम् । तस्य अन्यैकदेवत्यत्वात् द्विदेवत्वाभावाच्चेति तात्पर्यम् ॥२६॥

## अचोदना गुणार्थेन ॥२७॥

'सुषिरो वा एतर्हि पशुर्य पशोरेवच्छिद्रमपि दधाती' ति श्रुतेः वपोद्धरणे यच्छिद्रं तत्पिधानार्थः पुरोडाश इति चेन्न । **गुणार्थेन**–छिद्रपिधानार्थेन, **अचोदना**–विधिर्नास्ति । किं त्वर्थवादः सः पुरोडाशस्तावक इति भावः ॥२७॥

### शाखाहरणादीनामुभयदोहधर्मत्वाधिकरणम् ॥८॥

## दोहयोः कालभेदादसंयुक्तं शृतं स्यात् ॥२८॥

दर्शपूर्णमासप्रकरणे सायंदोहः प्रातर्दोह इति दोहद्वयं वर्तते । दोहधर्माश्च शाखाहरण–वत्सापाकरण–गवा प्रस्थापन–दोहनादयः सन्ति । ते स्थानक्रमेण सायंदोहार्थाः, नोभयार्था इति पूर्वन्यायेन सिध्यति । औपवसथ्ये अहनि ते धर्माः समाम्नाताः । तस्मिन्नेव दिने सायंदोह इति दोहयोः कालभेदात् प्रातर्दोहधर्मेण असंयुक्त एव शृतः स्यादित्यर्थः ॥२८॥

## सि० ॥ प्रकरणाविभागाद्वा संयुक्तस्य कालशास्त्रम् ॥२९॥

दर्शपूर्णमासप्रकरणस्य अविभागात्–उभयोरेकत्वात्, उभयाङ्गत्वं धर्माणाम् । 'ऐन्द्रं दध्यमावास्यायाम् । ऐन्द्रं पयोऽमावास्याया' मिति कालशास्त्रमपि **संयुक्तस्य**-अंगसंयुक्तस्य प्रधानस्यैव । दधि सद्यो न भवतीति सायंदोहः पूर्वेद्युरर्थात्प्राप्तः, न वचनेनेति पूर्वन्यायरैषम्यमिति भावः ॥२९॥

### सादनादीनां सवनत्रयसम्बन्धिग्रहधर्मताधिकरणम् ॥९॥

## तद्वत्सवनान्तरे ग्रहाम्नानम् ॥३०॥

ज्योतिष्टोमे प्रातःसवने ऐन्द्रवायवादयो दश ग्रहाः समाम्नाताः । मरुत्वतीयादयः माध्यन्दिनसवने, सायंसवने आदित्यादयश्च । तत्र सादनसंमार्गादयो धर्माः प्रातःसवनीयग्रहसंनिधावेवमाम्नायन्ते–'उपांशोऽन्ये ग्रहाः साद्यन्ते, अनुपोप्ते ध्रुवाः' इति । 'दशापवित्रेण ग्रहं संमार्ष्टि' इति च । पूर्वाधिकरणे

स्थानं न निश्चितम्। इह तु निश्चितमपि वाक्येन सादनादीनां ग्रहधर्मत्वं प्रकरणेन ज्योतिष्टोमधर्मत्वं चावगम्यते। अतो वाक्यप्रकरणाभ्यां तद्बाधित्वा दोहधर्मवत् सवनान्तरीयग्रहधर्मत्वमपि तेषां सिध्यतीति भावः ॥३०॥

### रशनात्रिवृत्त्वादीनां सर्वपशुधर्मताधिकरणम् ॥१०॥

## रशना च लिङ्गदर्शनात् ॥३१॥

ज्योतिष्टोमे—'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इत्यग्नीषोमीयः पशुः श्रुतः। तत्सन्निधौ 'परिव्ययति। ऊर्जं रशना। त्रिवृद्भवति। दर्भमयी भवति'। इति रशना तद्धर्माश्च श्रूयन्ते। तेत्रयं त्रिवृत्त्वादिधर्मविशिष्टा रशना 'त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति लिङ्गदर्शनात् सर्वपश्वर्था। न सान्निध्यात् अग्नीषोमीयार्थेति। स्थानापेक्षया लिङ्गस्य प्राबल्यात्। त्रिवृत्त्वस्य व्यर्थतापत्तेश्चेति भावः ॥३१॥

### अंशवदाभ्ययोरपि ग्रहयोः सादनादिधर्मवत्त्वाधिकरणम् ॥११॥

## आराच्छिष्टमसंयुक्तमितरैरसान्निधानात् ॥३२॥

ज्योतिष्टोमप्रकरणे तत्सन्निधौ पठिता ऐन्द्रवायवादयो ग्रहाः। औपसदानुवाक्याकाण्डे अनारभ्य पठिता अंशु-अदाभ्यादयो ग्रहाः। तत्र **आराच्छिष्टं**-प्रकरणपठितग्रहसमीपे शिष्टमुपदिष्टं यत् सम्मार्गादिग्रहधर्मजातम्, तत् इतरैः **असंयुक्तम्**—अनारभ्य पठितग्रहैः संयुक्तं न स्यात्। **असान्निधानात्**—दूरवृत्तित्वादित्यर्थः ॥३२॥

## सि० ॥ संयुक्तं वा, तदर्थत्वात्, शेषस्य तन्निमित्तत्वात् ॥३३॥

**संयुक्तं वा**—ग्रहत्वावच्छिन्नेन संयुक्तमेव भवेत्। कुतः? दूरपठितानामपि **तदर्थत्वात्**—ज्योतिष्टोमापूर्वार्थत्वात्। **शेषस्य**—ग्रहधर्मस्यापि, ग्रहद्वारा **तन्निमित्तत्वात्**—ज्योतिष्टोमापूर्वसाधनत्वात्, संमार्गाद्युद्देश्यतावच्छेदकं न केवलं ग्रहत्वम्। अपि तु प्रकृतापूर्वसाधनत्वविशिष्टग्रहत्वमेव। वैशिष्ट्यं च सामानाधिकरण्यसम्बन्धेन दूरस्थेऽपि तदस्तीति भावः ॥३३॥

## निर्देशाद्व्यवतिष्ठेत ॥३४॥

'मैत्रावरुणं पयसा श्रीणाति' इति पयसा श्रयणं तु निर्देशात्—मैत्रावरुणमित्युद्देश्यनिर्देशात्, तत्रैव व्यवतिष्ठेत। न सर्वत्रेति बोध्यम् ॥३४॥

### चित्रिण्यादीष्टकानामग्न्यङ्गताधिकरणम् ॥१२॥

## अग्न्यङ्गमप्रकरणे तद्वत् ॥३५॥

अनारभ्याग्निचयनं 'चित्रिणीरुपदधाति। वज्रिणीरुपदधाति। भूतेष्टका उपदधाति' इति श्रुतम्। महाग्निचयनप्रकरणे—'अखण्डा अकृष्णा इष्टकाः कुर्यात्। भस्मना इष्टकाः संयुज्यात्' इति इष्टकाधर्माः श्रूयन्ते। तत्राप्रकरणे श्रुतमप्येवंजातीयकमग्न्यङ्गमेव। इष्टकानामग्निचयनार्थत्वात् प्रकरणापेक्षया वाक्यस्य बलवत्त्वाच्च। अतः तद्वत्—अनारभ्यपठित-अदाभ्यादिग्रहवत्। अनारभ्य श्रुतानामपीष्टकानामुक्तेष्टकाधर्मवत्त्वं निराबाधमित्यर्थः ॥३५॥

### क्रयाभिषवादीनां सोममात्रधर्मत्वाधिकरणम् ॥१३॥

## नैमित्तिकमतुल्यत्वात् असमानविधानं स्यात् ॥३६॥

ज्योतिष्टोमे 'स यदि राजन्यं याजयेत्, यदि वा वैश्यं, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिभीराहृत्य ताः संपिष्य दधनि उन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्' इति श्रुतम्। तथा तत्र सोमधर्माः- मानं, उपावहरणं, क्रयः, अभिषवः इत्यादयः श्रुताः। सत्येव ते सोमधर्माः फलचमसार्था अपीति युक्तम्। कुतः? प्रकरणैक्यादिति चेन्न। राजन्यादिकर्तृकत्वरूपनिमित्तप्रयुक्तं फलचमसद्रव्यम् असमानविधानं—सोमतुल्यविधानं नैव भवेत् प्रकरणैक्येऽपि। कस्मात्? अतुल्यत्वात्—सोमस्य नित्यत्वेन फलचमसस्य नैमित्तिकत्वेन तुल्यत्वाभावात्। तत्र फलचमसस्य सोमविकृतित्वादतिदेशेन तत्र धर्माणां प्राप्तिरिति न तदर्थेन तेनाभिति भावः ॥३६॥

### प्रतिनिधिष्वपि मुख्यधर्मानुष्ठानाधिकरणम् ॥१४॥

## प्रतिनिधिश्च तद्वत् ॥३७॥

श्रुते द्रव्येऽपचरति प्रतिनिधिनाऽनुष्ठानमिति षाष्ठः सिद्धान्तः । यथा व्रीह्यभावे नीवाराः । तत्र प्रतिनिधिरपि तद्वत्—सोमधर्मवदसमानविधानो बोध्यः । कुतः? श्रुतं द्रव्यं नित्यम् । तदपचारनिमित्तकः प्रतिनिधिरनित्य इत्यतुल्यतेति भावः ॥३७॥

## सि० ॥ न, तद्वत्प्रयोजनैकत्वात् ॥३८॥

न असमानविधानः प्रतिनिधिरिति । अपि तु यद्वत् श्रुतः पदार्थः तद्वदेव समानविधानः स्यात् । कुतः? पुरोडाशनिष्पत्तिरूपप्रयोजनैकत्वात् । व्रीहिपदतात्पर्यविषयत्वस्य मुख्यामुख्ययोः समानत्वादिति भावः ॥३८॥

## अशास्त्रलक्षणत्वाच्च ॥३९॥

'व्रीहिभिः' इति श्रवणात् व्रीहिरूपफलोपधायकाः परमाणवः परम्परया व्रीहीत्वसम्बद्धाः शास्त्रीया यागाङ्गभूताः । ये अन्ये स्वरूपयोग्यास्ते अशास्त्रीयाः । अर्थाद्धि प्रतिनिधीयन्ते नीवाराः । अतो न तयोर्व्रीहिनीवारयोः प्रकृतिविकृतिभाव इति उभयार्थाः प्रोक्षणादयो धर्मा इति भावः ॥३९॥

### श्रुतेष्वपि प्रतिनिधिषु मुख्यधर्मानुष्ठानाधिकरणम् ॥१५॥

## नियमार्था गुणश्रुतिः ॥४०॥

'यदि सोमं न विन्देत पूतिकानभिषुणुयात्' इति सोमाभावे पूतिकायाः शास्त्रविहितत्वेन फलचमसवन्नैमित्तिकत्वान्न सोमाभिषवक्रयादिधर्मवत्त्वम्—तुल्यत्वादिति चेन्न । नीवारवत् प्रतिनिधित्वेन तत्रापि सोमधर्माः कार्याः । अशास्त्रीयत्वं नीवारपूतिकयोः समानम् । सोमाप्राप्तावन्यद्रव्यस्य प्रसङ्गे गुणश्रुतिः । पूतिकाश्रवणं पूतिकामेवेति नियमविध्यर्थं ज्ञेयमिति भाव. ॥४०॥

### दीक्षणीयादिधर्माणामग्निष्टोमाङ्गताधिकरणम् ॥१६॥

## संस्थास्तु समानविधानाः, प्रकरणाविशेषात् ॥४१॥

'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति स्वर्गसाधनत्वेन श्रुतो ज्योतिष्टोमः स्वयमेकोऽपि समाप्तिभेदात् भिन्नो भवति । यज्ञायज्ञीयस्तोत्रेण समाप्तौ

'अग्निष्टोम' इत्यभिधीयते। तदूर्ध्वमुक्थ्यस्तोत्रेण समाप्तौ उक्थ्य इत्युच्यते। एवं षोडश्याप्तोर्यामादयोऽपि तेन तेन साम्ना, समाप्तत्वात् तत्तन्नाम्ना उच्यन्ते। इत्थमग्निष्टोम-अत्यग्निष्टोम-उक्थ्य-षोडश्य-आप्तोर्याम-अतिरात्र-वाजपेय इति सप्तसंस्थावतो ज्योतिष्टोमस्य प्रकरणे दीक्षणीयेष्टि-प्रायणीयेष्ट्यादयोऽङ्गविधयस्तस्य श्रुताः। तेऽङ्गविधयः ज्योतिष्टोमस्य प्रथमसंस्थाविशेषफलवत्यग्निष्टोमे यथा प्रवर्तन्ते, तथेतरास्वपि तस्य संस्थासु प्रवर्तन्ते। कुतः? ज्योतिष्टोमप्रकरणसम्बन्धस्य सर्वास्वपि संस्थास्वविशेषात्। 'पशुकामः उक्थ्यं गृह्णीयात्' 'षोडशिना वीर्यकामः स्तुवीत' 'अतिरात्रेण प्रजाकामं याजयेत्' इत्यादिना तासामपि फलवत्त्वश्रवणेनाङ्गविधिप्रवृत्तेस्तत्रोचितत्वाच्च। अतः समानविधानाः सर्वास्तत्संस्थाः। प्रकरणैक्यादित्यर्थः ॥४१॥

## व्यपदेशश्च तुल्यवत् ॥४२॥

'यद्यग्निष्टोमो जुहोति, यद्युक्थ्यः परिधिमनक्ति, यद्यतिरात्रः एतदेव होमयजुर्जपन् हविर्धानं प्रतिपद्येत' इत्याज्यशेषप्रतिपत्त्यावेदकवचनप्रतिपादितो व्यपदेशोऽपि—अङ्गवैलक्षण्यं, तुल्यवदङ्गानि दर्शयति। 'यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीया' दित्यादिवत्। किं च, 'आग्नेयमजमग्निष्टोम आलभते, ऐन्द्राग्नं द्वितीयमुक्थ्ये, ऐन्द्रं वृष्णिं तृतीयं षोडशिनि' इति द्वितीयतृतीयदर्शनं तुल्यविधानत्व एवोपपद्यते। प्रत्यक्षश्रुतः पूर्वपूर्वो हि उत्तरोत्तरत्र क्रियते इति समानविधानत्वे तद्दर्शनमुपपन्नम्। अन्यथा प्रकृतिविकृतिभावे विहितैन्द्राग्नादिभिराग्नेये बाधिते सर्वत्र एक एव स्यात्। तथा सति द्वितीयतृतीयदर्शनं नितान्तमनुपपन्नमेव भवेत्। तस्मात्सर्वसंस्थोपेतस्य ज्योतिष्टोमस्य दीक्षणीयेष्ट्यादयो धर्माः, न केवलज्योतिष्टोमस्येति ॥४२॥

## सि० ॥ विकारास्तु, कामसंयोगे सति नित्यस्य समत्वात् ॥४३॥

उक्थ्यादयः संस्थाः तास्वनुवृत्ताग्निष्टोमात्मकज्योतिष्टोमस्य विकारभूता एव। तासां हि 'पशुकामः उक्थ्यं गृह्णीयात्। षोडशिना वीर्यकामः स्तुवीत।

अतिरात्रेण प्रजाकामं याजयेत्' इत्यादिना कामसंयोगे सत्येव श्रवणं वर्तते। 'काम्यो गुणो हि नित्यमर्थं विकृत्य निविशते। यथा गोदोहनमिति न्यायात्। किञ्च, अग्निष्टोमात्मकज्योतिष्टोमे उक्थ्यादीनामननुवृत्तिरिति ताः संस्थाः ज्योतिष्टोमं तदवस्थाया व्यभिचरन्ति। तासां त्वन्तर्भावितानिष्टोमस्वा-ज्योतिष्टोमकत्वात् ज्योतिष्टोमात्मकाग्निष्टोमस्तदव्यभिचारीति सः प्रकृतिः। कार्यानुवृत्तः प्रकृतिरिति नियमः। यथा घटानुवृत्तास्तंतवः, घटानुवृत्ता मृद्वेति तासां प्रकृतिभूताग्निष्टोमविकृतित्वमेव। तादृशाग्निष्टोममेवोद्दिश्य दीक्षणी-यादयो धर्माः समाम्नाता इति तदर्था एव ते। न उक्थ्याद्यर्थाः। तेषां कामनायां सत्यामेव प्रवृत्तेः। नित्यसमत्वं अनित्यत्वमिति यावत्। नित्या-नित्यसम्बन्धो विरुद्ध इति भावः ॥४३॥

## अपि वा द्विरुक्तत्वात् प्रकृतेर्भविष्यंतीति ॥४४॥

अग्निष्टोमसंस्थाया अपि काम्यत्वं श्रूयते इति चेत्तत्रैकं नित्यमेकं काम्य-मित्याम्नानद्वयमस्ति। ततः सामर्थ्यात्संयोगपृथक्त्वन्यायेन-नित्यस्यैव काम्यत्व-मित्यग्निष्टोमसंस्थस्य ज्योतिष्टोमस्यैव दीक्षणीयादयो धर्मा भविष्यन्तीति गृहाण ॥४४॥

## वचनात्तु समुच्चयः ॥४५॥

यच्च द्वितीयतृतीयदर्शनं समानविधित्वेऽयकल्प्यत इत्युक्तम्। तत्र ऐन्द्राग्नः उक्थ्ये द्वितीयो गृह्यत इति विधिः ऐन्द्रः षोडशिनि तृतीय इत्यपूर्वः समुच्चयविधिः। न ज्ञापकमिति भावः ॥४५॥

## प्रतिषेधाच्च पूर्वेषाम् ॥४६॥

'यद्यग्निष्टोमः जुहोति। यदि उक्थ्यः परिधिमनक्ति। न जुहोति' इति पूर्वलिङ्गप्राप्तहोमनिषेधपूर्वकापूर्वगुणविधानादपि अग्निष्टोमसंस्थस्य ज्योतिष्टोमस्य विकारा उक्थ्यादय इति निश्चीयते। अन्यथा, प्रकृतिविकृति-भावस्याभावे होमस्यात्यन्तमप्राप्तत्वात् निषेधस्य प्राप्तिपूर्वकत्वात् होमनिषेध-पूर्वकापूर्वगुणविधानमनुपपन्नं स्यादिति भाव. ॥४६॥

## गुणविशेषादेकस्य व्यपदेशः ॥४७॥

नन्वेवञ्चेत् ' यदग्निष्टोमो जुहोती'ति विशेषरूपेण निर्देश कस्मादिति चेत्—एकस्यैव ज्योतिष्टोमाभिधेयस्य **गुणविशेषात्**—फलविशेषरहिताग्निष्टोमसाम्ना समाप्तिरूपगुणविशेषात्तथा व्यपदेश । उक्तानित्यानित्यविरोधरूपदोषात् नित्यस्वरूपाग्निष्टोमार्थ ये दीक्षणीयादिधर्माणा सिद्धे अग्निष्टोम इति निर्देशोऽनुवाद इति तात्पर्यम् ॥४७॥

इति पूर्वमीमासासूत्रवृत्तौ भावबोधिन्या तृतीयाध्यायस्य षष्ठ पाद सम्पूर्ण ॥६॥ श्रीः ॥

---

## अथ तृतीयाध्यायस्य सप्तमः पादः ॥

---

### बर्हिरादीनां दर्शपूर्णमासतदङ्गोभयाङ्गत्वाधिकरणम् ॥१॥

## प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥१॥

दर्शपूर्णमासयो बर्हि तद्धर्माश्च लवनादय, तथा वेदि तद्धर्माश्च खननादय श्रूयते । तदेतत् बर्हिरादिक प्रकरणविशेषात् अङ्गै असंयुक्तं केवल प्रधानार्थम् । नोभयार्थम् । कुत ? प्रधानस्य हि प्रकरण, नाङ्गाना प्रकरणनास्य सम्बन्ध । तस्मात् प्रधानार्थं बर्हिर्वेद्यादिकमिति ॥१॥

## सि० ॥ सर्वेषां वा, शेषत्वस्यातत्प्रयुक्तत्वात् ॥२॥

**सर्वेषाम्**—अङ्गाना प्रधानाना च एते बर्हिर्वेद्यादयो धर्मा स्यु । कुत ? शेषत्वस्य **अतत्प्रयुक्तत्वात्**—प्रकरणप्रयुक्तत्वाभावात् । अपि तु ' वेद्या हवींष्यासादयति । बर्हिषि हवींष्यासादयति ' इति वाक्येनोपदिष्ट यद् अङ्गप्रधानसाधारण हवि त प्रयुक्तत्वात् । प्रकरणापेक्षया वाक्यस्य बलवत्त्वादित्यर्थ ॥२॥

## आरादपीति चेत् ॥३॥

' अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति ' इति आराच्छिष्ट-पिण्डपितृयज्ञस्यापि बर्हिर्वेदिश्च उपकारकं भवेत् । कुतः ? तस्यापि दाते बर्हिषि वर्तमानत्वात् बर्ह्याद्यपेक्षत्वाच्चेति तदङ्गत्वमपि तस्येति चेत्—॥३॥

## न, तद्वाक्यं हि तदर्थत्वात् ॥४॥

परस्पराऽऽकाङ्क्षारूपप्रकरणवशात् ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते 'ति वाक्येनैकवाक्यतामापन्नं **तद्वाक्यं**—बर्हिर्वेद्यादिवाक्यं, दर्शपूर्णमास-प्रकरणपाठेन तदर्थमेव । नाराच्छिष्टस्याप्यनारभ्याधीतस्य पिण्डपितृयज्ञस्य शेषतामाप्नोतीति भावः ॥४॥

## लिङ्गदर्शनाच्च ॥५॥

' स वै ध्रुवायामेवाग्रेऽभिघारयति । ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवति ' इत्यभिघारणस्य यथा उभयार्थत्वं तथा सर्वेषामपि तदितरेषामङ्गानाम् । अन्यथा अग्रेऽभिघारणलिङ्गमनुपपन्नं स्यादिति भावः ॥५॥

### स्वामिसंस्काराणां प्रधानार्थत्वाधिकरणम् ॥२॥

## फलसंयोगात्तु स्वामियुक्तं प्रधानस्य ॥६॥

ज्योतिष्टोमे केशश्मश्रुवपनपयोव्रतादयः स्वामिसंस्काराः श्रूयन्ते । तेऽपि पूर्ववदुभयार्था इति प्राप्ते सिद्धान्तः—स्वामिना संयुक्तं यजमानसंस्काररूपं कर्म तद्द्वारा प्रधानस्य अङ्गम् । **फलसंयोगात्**—फलभोक्तृत्वादिति यावत् । कर्तृत्वं भोक्तृत्वं चेति यजमानस्याऽऽकारद्वयं यत्नेन । तत्राद्ये न शास्त्रापेक्षा । तेन विनापि तत्सिद्धेः । द्वितीयस्त्वदृष्टरूपत्वात् इति शास्त्रैकसमधिगम्यः । अतः शास्त्रोपदिष्टसंस्कारसाध्यः स इति स्वामिद्वारा ते संस्काराः प्रकारिणीति मुख्ये पर्यवस्यन्ति नाङ्गेषु । ततः प्रधानार्थत्वं तेषां संस्काराणामिति भावः ॥६॥

### सौमिकवेद्यादीनामङ्गप्रधानोभयाङ्गताधिकरणम् ॥३॥

## चिकीर्षया च संयोगात् ॥७॥

ज्योतिष्टोमे—' षट्त्रिंशत्प्रक्रमा प्राची । चतुर्विंशतिरग्रेण । त्रिंशज्ज-घनेन इयति शक्ष्यामहे ' इत्युक्तदैर्घ्यादिप्रमाणपरिमितभूप्रदेशे फलवन्तं सोम-

यागं कर्तुं शक्यामह इति चिकीर्षाप्रतिपादकं वाक्यं सौमिकवेदिसन्निधौ श्रूयते। चिकीर्षा च प्रधानविषयिणीति युक्तम्। तस्य फलवत्त्वात्। नाङ्गविषयिणी। फलवत्सन्निधावफलं तदङ्गमिति तेषामफलत्वात्। अतः प्रधानस्यैव चिकीर्षया सह सम्बन्धात् तदर्थत्वमेव सौमिकवेद्यादीनाम्। नाङ्गार्थत्वमिति ॥७॥

## सि०॥ तद्युक्ते तु फलश्रुतिः, तस्मात्सर्वचिकीर्षा स्यात् ॥८॥

तद्युक्ते—अङ्गयुक्ते एव प्रधाने, फलश्रुतिः—फलसाधनत्वश्रवणम्। न केवले। अतः सर्वस्य साङ्गस्य प्रधानस्य चिकीर्षा स्यात्। तस्मादङ्गप्रधानोभयार्थत्वं सौमिकवेद्यादीनामित्यर्थः ॥८॥

### अभिमर्शनस्य अङ्गप्रधानोभयाङ्गत्वाधिकरणम् ॥४॥

## तथाऽभिधानेन ॥९॥

दर्शपूर्णमासयोः—'चतुर्होत्रा पौर्णमासीमभिमृशेत्। पञ्चहोत्रा अमावास्याम्' इत्याभ्यां मन्त्राभ्यां यदभिमर्शनं श्रुतं, तत् प्रधानहविषामेव। नाङ्गहविषाम्। कुतः? पौर्णमासीममावास्यामिति प्रधानकर्मवाचकेन नाम्ना संयोगात्। तयोः शब्दयोः प्रधानकर्मवाचकत्वं द्वितीयाध्यायद्वितीयपादीयतृतीयाधिकरणे स्थितम् ॥९॥

## सि०॥ गुणाभिधानात्सर्वार्थमभिधानम् ॥१०॥

अभिमृशेदिति गुणस्य—अङ्गस्याभिधानात् तदभिधानं सर्वार्थम्—अङ्गप्रधानोभयार्थं स्यात्। कुतः? दर्शपूर्णमासीशब्दयोः प्रयोगविध्यवगतपूर्वोत्तराङ्गविशिष्टप्रधानकर्मवाचकत्वेन प्रधानहविःष्विव अङ्गहविःष्वपि तदभिमर्शनं प्राप्नोतीत्यङ्गप्रधानोभयार्थं तदिति भावः ॥१०॥

### दीक्षादक्षिणयोः प्रधानार्थताधिकरणम् ॥५॥

## दीक्षादक्षिणं तु वचनात् प्रधानस्य ॥११॥

ज्योतिष्टोमे—'दण्डेन दीक्षयति' 'तस्य द्वादशशतं गावो दक्षिणा' इति दीक्षादक्षिणे श्रूयते। तदुभयोपकारकत्वादुभयार्थं तदिति प्राप्ते आह-

दीक्षादक्षिणं तु 'सोमस्य दीक्षा' 'सोमस्य दक्षिणा' इति वचनात् प्रधानस्यैव दीक्षादक्षिणं नाङ्गस्य। किमिव हि वचनं न कुर्यात्। नहि वचनस्यातिभार इति भावः ॥११॥

## निवृत्तिदर्शनाच्च ॥१२॥

निरूढपशौ 'षड्ढोतारं मनसाऽनुद्रुत्य जुहोति सैवास्य दीक्षा' इति स्तुत्या दीक्षाया निवृत्तिदर्शनात् नोभयार्था सा। अन्यथा निवृत्त्ययोगादिति भावः ॥१२॥

अन्तर्वेदेर्यूपानङ्गताधिकरणम् ॥६॥

## तथा यूपस्य वेदिः ॥१३॥

ज्योतिष्टोमे 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इत्यग्नीषोमीयः पशुः श्रुतः। तत्र 'यूपं मिनोति' इति यूपं प्रकृत्येदं श्रूयते-'वज्रो वै यूपो यदन्तर्वेदि मिनुयात्तान्निर्दहेत्। यद् बहिर्वेद्यनवरुद्धः स्यात्। अर्धमन्तर्वेदि मिनोति। अर्धं बहिर्वेदि अवरुद्धो भवति न निर्दहती' ति। तत्र यथा दीक्षादाक्षिणं वचनात् प्रधानार्थं, तथा निर्दिष्टवचनात् यूपस्य नाम यूपावटस्य अर्धमन्तर्वेदीति वेदिः अङ्गमुपदिश्यते इत्यर्थः ॥१३॥

## देशमात्रं वा, शिष्टेनैकवाक्यत्वात् ॥१४॥

असंस्कृतं तावत्परिमाणं देशमात्रं लक्षयित्वा तद्विधीयते। कुतः? शिष्टेन—अर्धं बहिर्वेदीति शिष्टेन, एकवाक्यत्वात्। अन्यथा वाक्यभेदापत्तिः। लक्षणया तादृशो देशविशेष एक एव यूपावटार्थो विधीयत इति न कोऽपि दोष इति भावः ॥१४॥

हविर्धानस्य सामिधेन्यनङ्गताधिकरणम् ॥७॥

## सामिधेनीस्तदन्वाहुरिति हविर्धानयोर्वचनात् सामिधेनीनाम् ॥१५॥

ज्योतिष्टोमे—'उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुः' इति श्रुतम्। हविर्धानमण्डपे दक्षिणोत्तरभागस्थितहविर्धानशकटयोर्मध्ये यस्मिन् शकटे

सोममभिषुण्वन्ति तस्मिन् दक्षिणहविर्धाने सामिधेनीरनुब्रूयुरिति वाक्यार्थः। अत्र यस्मिन् सुन्वन्ति तदन्वाहुरिति श्रुतेः हविर्धानं सामिधेनीनामङ्गं प्रतीयते। न तदुपलक्षितो देशः। लक्षणाप्रसङ्गादिति चेत्— ॥१५॥

## सि०॥ देशमात्रं वा प्रत्यक्षं ह्यर्थकर्म सोमस्य ॥१६॥

सोमयागे विहितसामिधेनीनां देशः तासां प्रवृत्तिः दर्शपूर्णमासेष्टितः प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशवाक्येन प्राप्त इति न तासां स्थानं प्रकृतवाक्येन विधीयते। किन्तु नियम्यते—कुत्र सामिधेनीपाठ इत्याकाङ्क्षायां द्वयोर्हविर्धान-शकटयोर्मध्ये इति। हि—यत, हविर्धारणद्वारा सोमयागस्येदमुपकारकमर्थ-कर्मेति प्रत्यक्षम् ॥१६॥

## समाख्यानं च तद्वत् ॥१७॥

सोमस्य हविर्धानमिति समाख्यानमपि सोमाङ्गमिदं कर्म इत्यर्थं द्रढ-यति। ततो न हविर्धानं सामिधेन्यङ्गमिति भावः ॥१७॥

अङ्गानामन्यद्वाराऽनुष्ठानाधिकरणम् ॥८॥

## शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्, तस्मात् स्वयं प्रयोगे स्यात् ॥१८॥

अस्मिन्नधिकरणे 'अग्निहोत्रं जुहुयात्स्वर्गकामः,' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'चित्रया यजेत पशु-कामः' 'कारीर्या वृष्टिकामो यजेत' इत्यादीनि उदाहरणानि। साङ्गानि तानि तानि कर्माणि तत्तत्फलकामेन यजमानेन स्वयमेव कार्याणि। कुतः? शास्त्रफलं प्रयोक्तरि इति कर्मजन्यफलभोक्तृत्वात्, यः कर्ता स एव फलभोक्ता इति कर्तृत्वभोक्तृत्वयोरेकाधिकरण्यस्य न्यायसिद्धस्य सामञ्जस्यायेति भावः ॥१८॥

## उत्सर्गे तु प्रधानत्वात् शेषकारी प्रधानस्य, तस्मा-दन्यः स्वयं वा स्यात् ॥१९॥

दक्षिणादानेन **उत्सर्गे**—ऋत्विजा परिक्रये, प्रधानत्वात् **शेषकारी**-उत्सर्गातिरिक्तकर्मकारी ऋत्विक्, **प्रधानस्य**—यजमानस्यैव, कर्मकारी । तस्मात् अन्यः स्वयं वा साङ्ग प्रयोग कुर्यात् । द्रव्येण परिक्रीतैः कृते स्वयमेव कृत भवतीति तात्पर्यम् ॥१९॥

## सि० ॥ अन्यो वा स्यात्, परिक्रयाम्नानात् विप्रतिषेधात्प्रत्यगात्मनि ॥२०॥

द्रव्योत्सर्गादन्यत्र कर्मणि **अन्यो वा**—ऋत्विगेव स्यात् । परिक्रयाम्नानात् । अन्यथा तस्य वैयर्थ्यमदृष्टार्थत्वं वा स्यात् । उभयमप्यसमञ्जस, सम्भवति दृष्टार्थत्वे । **प्रत्यगात्मनि**—स्वस्मिन्, परिक्रयस्य **प्रतिषेधात्**—असम्भवादित्यर्थः ॥२०॥

### परिक्रीतानामृत्विजां सङ्ख्याविशेषनियमाधिकरणम् ॥९॥

## तत्रार्थात् कर्तृपरिमाणं स्यादनियमोऽविशेषात् ।२१।

**तत्र**— परिक्रीतैर्ऋत्विजैः कर्तव्येषु कर्मसु, **अर्थात्**—अर्थानुसारत, अनियमेन कर्तृसङ्ख्यापरिमाण स्यात् । कुत ? **अविशेषात्**—न कर्तृसङ्ख्याया विशेष. कश्चित् श्रूयते । अतो लौकिककर्मवच्छ्रौतकर्मण्यप्यर्थसिद्धा सङ्ख्येति भाव ॥२१॥

## सि०॥ अपि वा श्रुतिभेदात्प्रतिनामधेयं स्युः ॥२२॥

यद्यपि सङ्ख्याविशेषो न श्रुत', तथापि कर्तृसयुक्ता कार्यविशेषा इव श्रूयन्ते—' पुरोऽध्वर्युर्विभजति । प्रतिप्रस्थाता मन्थिन जुहोति । नेष्टा पत्नीमभ्युदानयति । उन्नेता चमसानुन्नयति । प्रस्तोता प्रस्तौति । उद्गाता उद्गायति । प्रतिहर्ता प्रतिहरति । सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति । होता प्रातरनुवाकमनुब्रूते । मैत्रावरुण' प्रेष्यति । अच्छावाको यजति । ग्रावस्तुद् ग्रावस्तोत्रीयामन्वाह ' । एव ब्राह्मणाच्छंसि-आग्नीध्र-ब्रह्म-पोतॄणा चतुर्णां कर्माणि उदाहरणीयानि । एवं श्रुतिभेदात् प्रतिकर्तृनामधेय यावन्ति कर्माणि तावन्त ऋत्विजो वरितव्याः स्युः ॥२२॥

## एकस्य कर्मभेदादिति चेत् ॥२३॥

एकस्यैव तत्तत्कर्मभेदनिमित्तं नाम्नोऽनेकत्वं स्यादिति चेत्-॥२३॥

## नोत्पत्तौ हि ॥२४॥

'ब्रह्माणं वृणीते । अध्वर्युं वृणीते । होतारं वृणीते' । इत्यादिषोडश-नामभिः उत्पत्तौ प्रथमेव वरणविधानात् नैकस्यानेकनामसम्बन्ध इत्यर्थः ॥२४॥

### चमसाध्वर्यूणां पृथक्त्वाधिकरणम् ॥१०॥

## चमसाध्वर्यवश्च तैर्व्यपदेशात् ॥२५॥

चमसाध्वर्यवश्च परिगणितेभ्यो ऋत्विग्भ्यः अन्ये एव स्युः । कुतः ? 'मध्यतःकारिणा चमसाध्वर्यवः, होत्रकाणा चमसाध्वर्यवः' इति पूर्वोक्तैर्ऋत्विग्भिः साकं तेषां सम्बन्धकथनात् । किञ्च, 'चमसाध्वर्यून् वृणीते' इत्युत्पत्तिवाक्यादपि तेषां पार्थक्यं सिध्यति ॥२५॥

### चमसाध्वर्यूणां बहुत्वाधिकरणम् ॥११॥

## उत्पत्तौ बहुश्रुतेः ॥२६॥

ते चमसाध्वर्यवः बहव एव भवेयुः । कुतः ? उत्पत्तौ—वरणवाक्ये 'चमसाध्वर्यून् वृणीते' इति बहुश्रुतेरित्यर्थः ॥२६॥

### चमसाध्वर्यूणां दशसङ्ख्यानियमाधिकरणम् ॥१२॥

## दशत्वं लिङ्गदर्शनात् ॥२७॥

'चमसाध्वर्यून्' इति श्रुत्या सिद्धं चमसाध्वर्यूणां बहुत्वं दशत्वे पर्यवस्यति । न तु त्रित्वे । कुतः ? लिङ्गदर्शनात् । दशपेयनामकयागे ज्योतिष्टोमविकारे लिङ्गमित्थं दृश्यते—'दश चमसाध्वर्यवो दश दश एकैकं चमसमनुसर्पन्ति तस्माद्दशपेयो भवति' इति दश चमसाध्वर्यून् दर्शयत्येतल्लिङ्गम् । तत् त्रित्वे अनुपपन्नं स्यात् । किञ्च, दश दश अनुसर्पन्ति शतं ब्राह्मणाः इति ततो न्यूने अधिके वा शतत्वं नितरामनुपपन्नम् । तस्माच्चमसाध्वर्यवो दश एवेति सिद्धम् ॥२७॥

शमितुरपृथक्त्वाधिकरणम् ॥१३॥

## शमिता च शब्दभेदात् ॥२८॥

शमिता अपि पूर्ववत्पृथगेव । कुत ? शब्दभेदात्–नामभेदादित्यर्थः ॥२८॥

## प्रकरणाद्वोत्पत्त्यसंयोगात् ॥२९॥

न शमिता पृथक् । कुत ? उत्पत्त्यसंयोगात्–पृथग्वरणाभावात् । प्रकरणात्— प्रकरणकल्पकाऽऽध्वर्यवसमाख्यावति काण्डे सञ्ज्ञपनादे पाठाच्च अध्वर्युगणान्तर्गत एव कश्चन सञ्ज्ञपनकृत्, न पृथक् शमितेति ध्येयम् ॥२९॥

उपगानामपृथक्त्वाधिकरणम् ॥१४॥

## उपगाश्च लिङ्गदर्शनात् ॥३०॥

उपगाः--उपगातारोऽपि, एतेष्वेव केचन ऋत्विजः । न अन्ये । कुत ? ' नाध्वर्युरुपगायेत् ' इति लिङ्गदर्शनात् । यदि अन्ये स्युस्तर्हि अध्वर्योरत्यन्ताप्राप्त्या प्रतिषेधोऽनुपपन्नो भवेदिति भाव ॥३०॥

सोमविक्रेतुः पृथक्त्वाधिकरणम् ॥१५॥

## विक्रयी त्वन्यः, कर्मणोऽचोदितत्वात् ॥३१॥

विक्रयी–सोमस्य विक्रेता, अन्य एव स्यात् । कुत ? विक्रयस्य अविहितत्वात् । ' सोमं क्रीणाती ' ति क्रय एव विहित । तदन्यथानुपपत्त्या प्राप्तो विक्रयः । न च अविहितं ऋत्विजः कुर्वन्ति । अतस्तेभ्य पृथगेव विक्रेतेति भाव ॥३१॥

ऋत्विगिति नाम्नोऽसर्वगामित्वाधिकरणम् ॥१६॥

( अर्थात्सप्तदशमात्रगामित्वम् )

## कर्मकार्यात् सर्वेषां ऋत्विक्त्वम्, अविशेषात् ॥३२॥

वसन्तादिनर्तुषु यजनमृत्विकशब्दस्य प्रवृत्तिनिमित्तम् । तच्च निमित्त विहितकर्मकार्यात् ब्रह्मादिचमसाध्वर्युपर्यन्तानां सर्वेषामेव समानम् । इमे एव ऋत्विज , इमे न इति विशेषस्याभावात्सर्वे एव ऋत्विज इति ॥३२॥

## सि० ॥ न वा, परिसङ्ख्यानात् ॥३३॥

'तस्मात्सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदश ऋत्विजः' इति सप्तदशाधिके ऋत्विक्त्वस्य **परिसङ्ख्यानात्**—व्यावर्तनात्, सप्तदश एव ऋत्विजः ॥३३॥

## पक्षेणेति चेत् ॥३४॥

'ऋत्विजो वृणीते' इति बहुवचनतः **पक्षेण**—पाक्षिकतया, चमसाध्वर्युभिः सह प्राप्त सप्तविंशतित्वमप्युक्त्या अनूद्यते । कुतः? परिसङ्ख्यानस्य दोषत्रयग्रस्तत्वादिति चेत्—॥३४॥

## न, सर्वेषामनधिकारात् ॥३५॥

न अप्युक्त्यनुवादः । कुतः? '**सर्वेषां**—सप्तविंशानाम्, **अनधिकारात्**-अश्रवणात् । यत्र परा सङ्ख्या कीर्त्यते तत्राप्युक्त्यनुवादो भवति । यथा 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इत्यत्राधिभूतद्वादशसङ्ख्याया श्रुतत्वात् यदष्टाकपालो भवतीत्यादिरप्युक्त्यनुवादः । न चेह परा सप्तविंशतिसङ्ख्या श्रूयते । तस्मान्नाप्युक्त्यनुवादोऽयमिति भावः ॥३५॥

### दीक्षादक्षिणावाक्योक्तानां ब्रह्मादीनामेव सप्तदशर्त्विक्त्वाधिकरणम् ॥१७॥

## नियमस्तु, दक्षिणाभिः श्रुतिसंयोगात् ॥३६॥

एवमृत्विजां सप्तदशत्वे सिद्धे के ते सप्तदश ऋत्विज इत्याकाङ्क्षायां सिद्धान्तं वक्ष्यनेन सूत्रेण—**नियमस्त्विति** । आग्नीध्रादिष्वेव ऋत्विक्त्वमिति नियमः । कुतः? **दक्षिणाभिः** सह **तत्तन्नामश्रुतिसंयोगात्**—'ऋत्विग्भ्यो दक्षिणां ददाति' इत्युक्त्वा आग्नीध्रे प्रथमं ददाति, ततो ब्रह्मणे, ततोऽमुष्मै चामुष्मै चेति तत्तन्नामसंयोगात्, निर्दिष्टास्त एव ऋत्विजः । ततोऽभ्यधिका अन्ये नेति दक्षिणाभिर्नियम इति भावः ॥३६॥

## उक्त्वा च यजमानत्वं तेषां दीक्षाविधानात् ॥३७॥

सत्रे 'ये ऋत्विजस्ते यजमानाः' इति ऋत्विक्षु यजमानत्वमुक्त्वा "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारं, ततो होतारम्' 'ततस्तं प्रतिप्रस्थाता दीक्षयित्वा अर्धिनो दीक्षयति, ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः' 'ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति, आग्नीध्रं ब्रह्मणः, प्रतिहर्तारमुद्गातुः, अच्छावाकं होतुः' 'ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति, पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः' 'ततस्तमन्यो ब्राह्मणो दीक्षयति, ब्रह्मचारी वा आचार्यप्रेषितः" इति तेषां षोडशानामेव दीक्षाविधानात् ब्रह्मादयः सप्तदश एव ऋत्विजः इति सिद्धम् ॥३७॥

ऋत्विजां स्वामिसप्तदशत्वाधिकरणम् ॥१८॥

## स्वामिसप्तदशाः कर्मसामान्यात् ॥३८॥

**कर्मसामान्यात्**—विहितकर्मकर्तृत्वेन सादृश्यात्, **स्वामिसप्तदशाः**—स्वामी एषां सप्तदश इति स्वामिसप्तदशास्ते षोडश एव ऋत्विक्शब्दाभिधेया इत्यर्थः ॥३८॥

आध्वर्यवादिषु एव आध्वर्यवादीनां कर्तृतानियमाधिकरणम् ।

अग्नेः सर्वार्थत्वाधिकरणं च ॥१९॥

## ते सर्वार्थाः प्रयुक्तत्वात्, अग्नयश्च स्वकालत्वात् ॥३९॥

**ते**—स्वामिसप्तदशा ब्रह्मादयःऋत्विक्पदाभिधेयाः पुरुषाः, **सर्वार्थाः**—स्वस्वेच्छानुसारतः सकलक्रियाकर्तारः । कुतः ? **प्रयुक्तत्वात्**—भृतिप्रदानेन नियोजितत्वात् । एवं गार्हपत्यादयोऽग्नयः **सर्वार्थाः**—समस्तक्रत्वर्थाः, **स्वकालत्वात्**—स्वतन्त्राम्नानात् । अप्रकरणाधीनत्वादित्यर्थः ॥३९॥

## तत्संयोगात् कर्मणो व्यवस्था स्यात् ॥४०॥

तत्संयोगात्—आध्वर्यव, हौत्रम्, औद्गात्रमिति समाख्याविशिष्टत्वात्, तेन तेन तत्तत्कर्म कार्यमिति कर्तृत्वे व्यवस्था स्यात् । नानियमः । अमीना सर्वकरत्वमर्थतः समनुमतमेव ॥४०॥

## संयोगस्यार्थवत्त्वात् ॥४०॥

(शङ्कानिरासक. सूत्रशेषः ।)

प्रकरणप्राप्तानामृत्विजां तेनैव प्रमाणेन प्राप्तं सर्वार्थत्वं कथं दुर्बलया समाख्यया बाध्यत इति चेत्तत्राह—संयोगस्य—समाख्यायोगस्य, अर्थवत्त्वात्—फलवत्त्वात् । अन्यथा समाख्यायाः वैयर्थ्यं स्यात् । आनर्थक्यप्रतिहतयोर्विपरीतं बलाबलमिति भावः ॥४०॥

समाख्याप्राप्तकर्तृत्वस्य क्वचिद्बाधाधिकरणम् ॥२०॥

## तस्योपदेशसमाख्यानेन निर्देशः ॥४१॥

तस्य—सर्वं समाख्यातं समाख्यातपुरुषैः कर्तव्यमित्यस्य, 'मैत्रावरुणः प्रेष्यति चानु चाह' इत्युपदेशसहितं हौत्रमिति समाख्यानेन मैत्रावरुणकर्तृकत्वनिर्देशः । व्यवस्थेत्यर्थः ॥४१॥

## तद्वच्च लिङ्गदर्शनम् ॥४२॥

तद्वत्—प्रकरणादिवत्, नियामकलिङ्गदर्शनम् । 'होतुः प्रातरनुवाकमनुब्रुवत उपश्रृणुयात्' इति समाख्यया होतरि प्राप्तप्रातरनुवाकपाठकर्तृत्वं निश्चत्वेनानुवदति ॥४२॥

समुच्चितयोरनुवचनप्रैषयोर्मैत्रावरुणकर्तृकत्वाधिकरणम् ॥२१॥

## प्रैषानुवचनं मैत्रावरुणस्योपदेशात् ॥४३॥

ज्योतिष्टोमे 'अग्नीषोमीयं पशुमालभेत' इत्यत्र 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाह' इति श्रुतम् । तेन सर्वेष्वप्यनुवचनेषु प्रैषेषु च मैत्रावरुणकर्तृकत्वं प्रतीयते । अतः सर्वप्रैषानुवचनं मैत्रावरुणस्य तेनैव कार्यम् । उक्तोपदेशानुसारात् इति ॥४३॥

## सि० ॥ पुरोऽनुवाक्याधिकारो वा प्रैषसन्निधानात् ॥४४॥

पुरोऽनुवाक्यायामेव प्रैषसमुच्चितायामधिकारो मैत्रावरुणस्य, न केवलायामनुवाक्यायां केवले प्रैषे च। कुतः? अनुचाहेत्यस्य प्रैषसन्निधानात्। प्रेष्यति चानु चाहेति चकारद्वयेन समुच्चयो लभ्यते। अतः चसमुच्चितयोरेव प्रैषानुवचनयोर्मैत्रावरुणकर्तृकत्वम्। नेतरत्र। इतरत्र तु हौत्रादिसमाख्यया होत्रादेरेव। अन्यथा वाक्यभेदापत्तेरिति भावः ॥४४॥

## प्रातरनुवाके होतृदर्शनात् ॥४५॥

'होतुः प्रातरनुवाकमनुब्रुवत उपशृणुयात्' इति प्रातरनुवाके होतृकर्तृकत्वदर्शनादपि न सर्वानुवचनादौ मैत्रावरुणस्याधिकारः ॥४५॥

### चमसहोमे अध्वर्योः कर्तृत्वाधिकरणम् ॥२२॥

## चमसांश्चमसाध्वर्यवः समाख्यानात् ॥४६॥

चमसान् चमसाध्वर्यव एव जुहुयुः। कस्मात्? चमसेषु आध्वर्यवं ते कुर्वन्तीति चमसाध्वर्यव इति समाख्यानात्ते प्राप्ता इति ॥४६॥

## सि० ॥ अध्वर्युर्वा तन्न्यायत्वात् ॥४७॥

अध्वर्युरेव चमसान् जुहुयात्। न ते। कुतः? अध्वर्योः इतरकर्मप्राप्तियेन निरपेक्षसमाख्यानेन तन्न्यायत्वादत्रापि तथा। चमसाध्वर्युसमाख्या हि अध्वर्युसमाख्यामुपजीव्य प्रवर्तते। अतो न सा उपजीव्य बाधने समर्थेति भावः ॥४७॥

## चमसे चान्यदर्शनात् ॥४८॥

'चमसान् चमसाध्वर्यवे प्रयच्छति। तान् स वषट्कर्त्रे हरती'ति चमसहोमे चमसाध्वर्युभिन्नस्य दर्शनात् यः प्रयच्छति सः होमकर्ता इति गम्यते ॥४८॥

## अशक्तौ ते प्रतीयेरन् ॥४९॥

ग्रहादिहोमव्यापृतत्वाद्यदा न शक्नोत्यध्वर्युः होतुम् । तदा चमसाध्वर्यवोऽपि चमसहोमे प्रतीयेरन् । चमसहोमं कुर्युरित्यर्थः ॥४९॥

श्येनवाजपेययोरध्वर्य्वादिसर्वगणकर्तृकत्वाधिकरणम् ॥२३॥

## वेदोपदेशात्पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः ॥५०॥

'श्येनेनाभिचरन् यजेत' इति श्येनयागः सामवेदे समाम्नातः । 'वाजपेयेन स्वाराज्यकामो यजेत' इति च वाजपेयो यजुर्वेदे पठितः । तत्र **वेदोपदेशात्**—सामवेदीयौद्गात्रमिति समाख्यानुसारतः, यजुर्वेदीयऽऽध्वर्यवेति समाख्यानुसारतश्च, साङ्गौ श्येनवाजपेयौ उद्गातृप्रभृतिना अध्वर्युप्रभृतिना च **पूर्ववत्**-पूर्वाधिकरणोक्ताऽऽध्वर्यवसमाख्यावशाच्चमसहोमे अध्वर्युकर्तृकत्ववत्, वेदान्यत्वे तथैव कार्यौ । यथा समाख्या तथैव तत्तद्यागानुष्ठानमिति यावत् ॥५०॥

## सि० ॥ तद्ग्रहणाद्वा सधर्मा स्यात्, अधिकारसामर्थ्यात् सहाङ्गैरव्यक्तः शेषे ॥५१॥

श्येनवाजपेयौ ज्योतिष्टोमविकारौ । अतः **तद्ग्रहणात्**—अतिदेशतः प्राप्तप्राकृतधर्मग्रहणात् एव, स च स च **सधर्मा**—तत्तद्धर्मसंयुक्तः स्यात् । **अधिकारसामर्थ्यात्**—बलवच्चोदकशास्त्रसामर्थ्यात्, सहाङ्गैः कुर्यादिति हि श्रूयते । ततः प्रकृतितः प्राप्तदीक्षणीयादिवत् तत्तन्नानर्त्विक्कर्तृकत्वमपि तत्र प्राप्तम् । तस्मात्—श्येने वाजपेये च प्रकृतिवन्नानाविधाः कर्तारः स्वस्वधर्मेषु व्यवतिष्ठन्ते इति संसिद्धम् । **शेषे**—चोदकशास्त्राप्राप्तकर्मणि, **अव्यक्तः**—यौगिकशब्दप्रमाणान्तरम् इति भावः ॥५१॥

इति जैमिनिसूत्रवृत्तौ भावबोधिन्यां तृतीयाध्यायस्य सप्तमः पादः ।

॥ श्रीः ॥

# अथ तृतीयाध्यायस्याष्टमः पादः ॥

परिक्रयस्य स्वामिकर्मत्वाधिकरणम् ॥१॥

## स्वामिकर्म परिक्रयः, कर्मणस्तदर्थत्वात् ॥१॥

'ज्योतिष्टोमे द्वादशशतम्, दर्शपूर्णमासयोरन्वाहार्यम्' इत्यादिना दक्षिणादानादिरूपः परिक्रयः पठितः। स च स्वामिनो यजमानस्यैव कर्म। कुतः? कर्मणः तदर्थत्वात्—फलार्थत्वात्। यो हि यत्कर्म करोति तत्फलं तस्येति लोके गृहनिर्माणादौ दृष्टम्। तद्वदत्रापि स्वर्गादिफलप्राप्तये यजमानेनैव परिक्रयः कार्यः। किञ्च, परिक्रयणोत्तरकालीनानामृत्विजां तत्कर्तृत्वासम्भवान्न तेषां कर्म तत्। अपि तु स्वामिनः एव तत् कर्मेति भावः ॥१॥

## वचनादितरेषां स्यात् ॥२॥

'य एतामिष्टकामुपदध्यात्स त्रीन् वरान् दद्यात्' इति वचनात् इतरेषामृत्विजां क्वचित्स्यात्। किमिव हि वचनं न कुर्यात्। न हि वचनस्यातिभार इति भावः ॥२॥

वपनादिसंस्काराणां याजमानत्वाधिकरणम् ॥२॥

## संस्कारास्तु पुरुषसामर्थ्ये यथावेदं व्यवतिष्ठेरन् ॥३॥

ज्योतिष्टोमे—'केशश्मश्रु वपते। नखानि निकृन्तते। स्नाति।' इत्यादयः श्रुताः संस्काराः यथावेदं—यस्मिन् वेदे पठितास्तद्वेदीयसमाख्ययैव तदितरकर्माभिव्यवस्येरन्। अध्वर्युवेदे पठितत्वात् समाख्यानुसारतः ते संस्कारा अध्वर्युणा कार्याः। तथा सति पुरुषस्य—अध्वर्योः सामर्थ्ये—अनुष्ठानयोग्यताजनने, ते उपयुज्येरन्निति ॥३॥

## सि० ॥ याजमानास्तु, तत्प्रधानत्वात् कर्मवत् ॥४॥

याजमानाः—यजमानस्यैते संस्काराः । न ऋत्विजः । कर्मवत् । यथा प्रधानभूतस्त्यागो यजमानकर्तृकः, संस्कारा अपि तथैव । कुतः ? तत्प्रधानत्वात्—फलभोक्तृत्वजनकत्वात्, यजमाननिष्ठस्वर्गभोक्तृत्वं न ऋत्विड्निष्ठस्वर्गयोग्यतावल्लोकप्रसिद्धम् । किन्तु अलौकिकमेव तत्स्वर्गादिफलभोक्तृत्वम् । अतस्तत्रास्ति कथंभावाकाङ्क्षा, तदर्था एते संस्काराः । प्रकृतैतत्संस्कारसंस्कृतात्मन्येव तत्स्वर्गादिफलभोक्तृत्वं नान्यत्रेति रहस्यम् ॥४॥

## व्यपदेशाच्च ॥५॥

'शरेषीकया नवनीतमभ्यनक्ती'ति परस्मैपदनिर्देशात् अन्यः अध्वर्युः यजमानस्य अभ्यञ्जनं करोतीति गम्यते ॥५॥

## गुणत्वे तस्य निर्देशः ॥६॥

तस्य—वपनादिसंस्कारस्य, निर्देशः गुणत्वे—अप्रधानत्वे, पर्यवस्यतीत्यर्थः । अत्रायं भावः । कर्म द्विविधम् । गुणकर्म प्रधानकर्मेति भेदात् । तत्र येन कर्मणा द्रव्यं संस्कर्तुमिष्यते तद्गुणकर्म वा संनिपत्योपकारकं कर्मेत्युच्यते । येन हि द्रव्यं संस्कर्तुं नेष्यते तत् प्रधानकर्म वा आराद्उपकारकं कर्मेत्युच्यते । तयोर्मध्ये प्रधानकर्मैव समाख्यया व्यवस्थाप्यते । न गुणकर्म । प्रकृते फलभोक्तृत्वसिद्ध्यर्थं वपनादिकर्मणा पुरुषः संस्कर्तुमिष्टः । अतस्तस्य प्राधान्यं, कर्मणश्च गुणत्वमिति नात्र समाख्या नियामिकेति त्यागवत् यजमानस्यैवैते वपनादयः संस्कारा नाध्वर्योरिति बोध्यम् ॥६॥

## चोदनां प्रति भावाच्च ॥७॥

'स्वर्गकामो यजेत' इति चोदनागम्यापूर्वार्थं संस्कारा विधीयन्ते । ते च सन्निकृष्टद्रव्ये एव उपतिष्ठन्ते । न तत्सत्त्वे विप्रकृष्टे तस्मिन् । सन्निकृष्टस्तु यजमानोऽत्र । अतो याजमानास्ते संस्कारा इति ॥७॥

## अतुल्यत्वादसमानविधानाः स्युः ॥८॥

ऋत्विक्षु कर्मजन्यस्वर्गादिफलभोक्तृत्वाभावेन अतुल्यत्वात् ऋत्विग्यजमानयोः संस्कारास्तुल्यविधाना नैव स्युः । तस्मादपि यजमानस्यैव संस्काराः,

न ऋत्विजामेते संस्कारा इति सिद्धम् । क्वचित्तु वचनादृत्विजामपि भवन्तीत्यन्यदेतत् ॥८॥

तपसो याजमानत्वाधिकरणम् ॥३॥

## तपश्च फलसिद्धत्वात् लोकवत् ॥९॥

ज्योतिष्टोमे—'द्व्यहं नाश्नाति, त्र्यहं नाश्नाती' त्यादि तपः श्रुतम् । तदपि यजमानसम्बन्ध्येव । कुतः ? **फलसिद्धत्वात्**—तापक्षयद्वारा फलभोक्तृत्वसिध्यर्थत्वात् । **लोकवत्**—लोके कृच्छ्राद्यनुष्ठाने प्रथमं दुःखं पश्चात्सुखं तद्वत् । तस्माद्वपनादिसंस्कारवत्तपोऽपि यजमानस्यैव ॥९॥

## वाक्यशेषश्च तद्वत् ॥१०॥

अमुमेवार्थं वाक्यशेषः सूचयति । तथा हि—'यदा वै पुरुषे न किञ्चनान्तर्भवति । यदास्य कृष्णं चक्षुषो नश्यति । अथ मेध्यतम इति । पीवा दीक्षते । कृशो यजते । यदा अनशनं तदा मेधार्हः ' इति । मेधो हि यज्ञः । यज्ञश्च त्यागः । त्यागी च यजमानः । तस्माद्यजमानतपः इति ॥१०॥

## वचनादितरेषां स्यात् ॥११॥

यत्र 'सर्वे ऋत्विज उपवसन्ती'ति वचनम्, तत्र ऋत्विजामपि तपः स्यादिति विशेषः ॥११॥

लोहितोष्णीषतादीनां सर्वर्त्विग्धर्मताधिकरणम् ॥४॥

## गुणत्वाच्च न वेदेन व्यवस्था स्यात् ॥१२॥

श्येनयागे— 'लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ती'ति श्रुतम् । तत्र लोहितोष्णीषत्वादेर्धर्मस्य **गुणत्वात्**—ऋत्विक्संस्काररूपत्वात्, सामवेदे श्रुतस्यापि औद्गात्रेति समाख्यया **व्यवस्था**—ऋत्विक्पदसङ्कोचो नैव स्यात् । अपि तु तदपेक्षया प्रबलेन सान्निध्येन सर्वर्त्विजामेव धर्मः सः । पुरुषप्राधान्यात् । प्रतिप्रधानं गुणावृत्तिरिति न्यायस्यैवात्र प्रवृत्तिरिति भावः ॥१२॥

वृष्टिकामनाया याजमानताधिकरणम् ॥५॥

## तथा कामोऽर्थसंयोगात् ॥१३॥

ज्योतिष्टोमे—' यदि कामयेत वर्षेत् पर्जन्यः इति नीचैः सदो मिनुयात् ' इति श्रुता कामनापि तथा—नयोगवत् यजमानस्यैव । न समाख्यया यः कामयेत स मिनुयात् इति योजनया वा अध्वर्योः । कुतः ? अर्थेन—साङ्गयागफलेन यजमानस्य सम्बन्धात, सर्वं फलं यजमानस्यैवेति । ' सः कामोऽपि तस्यैवेति भावः ॥१३॥

## व्यपदेशादितरेषां स्यात् ॥१४॥

यत्र तु ' उद्गाता आत्मने वा यजमानाय वा यं कामं कामयते तमागायती ' त्यादिर्व्यपदेशो-निर्देशोऽस्ति । तत्र इतरेषामृत्विजामपि कामः स्यात् ॥१४॥

आयुर्दादिमन्त्रपाठस्य याजमानत्वाधिकरणम् ॥६॥

## मन्त्राश्चाकर्मकरणास्तद्वत् ॥१५॥

' आयुर्दा अग्ने अस्यायुर्मे देहि ' त्यादयः अकर्मकरणाः—अनुष्ठेयस्य क्रियाविशेषस्य अस्मारकाः, मन्त्रा अपि तद्वत्—कामवत्, याजमाना एवेति निर्णयः ॥१५॥

## विप्रयोगे दर्शनाच्च ॥१६॥

विप्रयोगे—प्रवासे, दर्शनात् । चकारः साधकान्तरसमुच्चायकः । ' इहैव सन् तत्र सन्तं त्वा अग्ने ' इति प्रवासे लिङ्गेन विनियोगः श्रूयते । न हि तत्राध्वर्युरस्ति । अतो यजमानस्यैवेति निश्चये तन्न्यायेन सर्वेऽपीदृशा मन्त्रा यजमानस्यैवेति सिध्यति ॥१६॥

द्व्याम्नातस्य उभयप्रयोज्यत्वाधिकरणम् ॥७॥

## द्व्याम्नातेषु उभौ द्व्याम्नानस्यार्थवत्त्वात् ॥१७॥

दर्शपूर्णमासप्रकरणे—' स्रुचौ व्यूहति वाजस्य मा प्रसवेन ' इत्यादयो मन्त्रा द्विवार—अध्वर्युकाण्डे याजमानकाण्डे च पठिता । अतस्ते द्वाभ्याम-

ध्वर्युयजमानाभ्यां पठनीयाः। कुतः? आम्नानस्यार्थवत्त्वायेति। अन्यथा आम्नानस्य वैयर्थ्यं स्यात्। तत्प्रयोजनं तु एतन्मन्त्रस्मारितं पदार्थमनुष्ठास्यामीत्यध्वर्युर्मनुते। अत्र न प्रमदिष्यामीति च यजमान इति ॥१७॥

आभिज्ञस्यैव वाचयितव्यत्वाधिकरणम् ॥८॥

## ज्ञाते च वाचनम्, न ह्यविद्वान् विहितोऽस्ति ॥१८॥

वाजपेये—'क्लृप्तीर्यजमानं वाचयती' ति श्रुतम्। 'आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पताम्' इत्यादयो मन्त्राः क्लृप्तयः। तत्र विदुष्येव यजमाने इदं क्लृप्तिवाचनं कार्यम। न अविदुषि। कुतः? यत अविद्वान् यजमानो न विहितोऽस्ति। अपि तु 'अर्थी समर्थो विद्वान् यजेत' इति विद्वानेव विहितः। इत्येदं क्लृप्तिवाचनमदृष्टार्थं भविष्यतीत्यभिप्रायः ॥१८॥

द्वादशद्वन्द्वानामाध्वर्यवत्वाधिकरणम् ॥९॥

## याजमाने समाख्यानात् कर्माणि याजमानं स्युः ॥१९॥

दर्शपूर्णमासप्रकरणे इत्थं द्वादशकर्माणि पठितानि—'वत्सं चोपावसृजति। उखां चाधिश्रयति। अव च हन्ति। दृषदुपले च समाहन्ति। अधि च वपते। कपालानि चोपदधाति। पुरोडाशं चाधिश्रयति। आज्यं च। स्तम्बयजुश्च हरति अभि च गृह्णाति। वेदिं परिगृह्णाति। पत्नीं च सन्नह्यति। प्रोक्षणीश्चासादयति आज्यं च। तान्येतानि द्वादश द्वन्द्वानि दर्शपूर्णमासयोः' इति। इमानि कर्माणि याजमानकाण्डे समाम्नातानीति तत्समाख्यावशात् यजमानकर्तृकाण्येवैतानीति प्राप्ते आह निर्णयम्—॥१९॥

## सि० ॥ अध्वर्युर्वा तदर्थो हि, न्यायपूर्वं समाख्यानम् ॥२०॥

एतानि कर्माणि अध्वर्युरेव कुर्यात्। न यजमानः। कुतः? तदर्थमेव तेन अध्वर्युः क्रीतः। किञ्च, अग्न्यारम्भमिदं याजमानकाण्डम्। महाभा-

ण्ठन्तु आध्वर्यवमेव । तत्रैवैते वत्सापाकरणादयो धर्माः पठिताः । तस्मादध्वर्युरेव तान् पदार्थान् कुर्यात् । याजमानकाण्डे तु परिगणनया तेषां छन्दता-सम्पादनमेव समाम्नातम् । अनुष्ठानप्रकारस्तु नोपदिष्टः । इति यजमानस्तामानुपूर्वीमनुमन्धाय अध्वर्युकर्तृकतदनुष्ठाने अप्रमादमनुमन्धातुं शक्नोति । ननु, व्याख्यया अत एव निरवकाशया याजमानसमाख्यया व्यापकाऽऽध्वर्यवसमाख्याप्राप्तमध्वर्युकर्तृकत्वं बाध्येतेति चेन्न । यतो न्यायपूर्वं—न्यायाविरुद्धं, समाख्यानमेव वस्तूनि प्रापयति । प्रकृते तु 'अङ्गगुणविरोधे च तादर्थ्यात्' इति द्वादशाध्यायस्य द्वितीयपादस्थनवमाधिकरणोक्तन्यायविरोधात् न त्वदीप्सितसिद्धिर्जायत इति भावः ॥२०॥

*होतुराध्वर्यवकरणमन्त्रानुष्ठावत्त्वाधिकरणम् ॥१०॥*

## विप्रतिषेधे करणं, समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात् ॥२१॥

अशेषयज्ञप्रकृतौ ज्योतिष्टोमे अग्नीषोमीयपशौ—' परिवीरसि ' इति मन्त्रेणाध्वर्युः रशनया यूपस्य परिव्याणं करोति । क्रियमाणं परिव्याणं 'युवा सुवासा ' इति मन्त्रेण होता अनुवदति । तौ द्वावपि मन्त्रौ विकृतौ कुण्डपायिनामयने अतिदेशेन ' प्रकृतिवद्विकृतिः कर्तव्या'नेन प्राप्तौ । तत्र ' यो होता सोऽध्वर्युः ' इति होतरि अध्वर्युत्वस्य विधानात् होत्रैव अध्वर्युकार्यं परिव्याणं कर्तव्यम् । परिवीरसीति मन्त्रेण युवासुवासेति मन्त्रेण च स्वीयमनुवदनमपि विधेयम् । किन्तु तदुभयमेकेन युगपत् कर्तुमशक्यमेवेति विप्रतिषेधे असम्भवादन्यतरस्मिन् कर्तव्ये अध्वर्युकार्यं परिवीरसीति मन्त्रकरणकं यूपपरिव्याणमेव होत्रा विधेयम् । कुतः ? समवायविशेषात्—यो होता सोऽध्वर्युरिति प्रत्यक्षवचनविहिताध्वर्युत्वसम्बन्धविशेषात् । आनुमानिकातिदेशशास्त्रप्राप्तहोतृत्वसम्बन्धापेक्षया तस्य प्रबलत्वात् । किञ्च, सिद्धान्ते आनुमानिकशास्त्रस्य न सर्वथा बाधः । किन्तु अन्य होतृगणान्तर्गतस्तम्भनीयस्य, द्वितीयः अच्छावाकादिभ्यो विशिष्टो मैत्रावरुणः इतरमानुमानि-

कत्वाक्यप्राप्तं सुवा सुवासेति मन्त्रं पठेत् । सत्येवं न किमप्यसामञ्जस्यमिति भावः ॥२१॥

प्रैषप्रैषार्थयोः पृथक्कर्तृकत्वाधिकरणम् ॥११॥

## प्रैषे च पराधिकारात् ॥२२॥

दर्शपूर्णमासे– ' प्रोक्षणीरासादय । इध्मा बर्हिरुपसादय । स्रुचः संमृड्ढि । पत्नीं संनह्याज्येनोदेही ' ति प्रैषः श्रूयते । तत्र प्रैषकर्ता तदर्थकर्तुः पृथक्—अन्य एव स्यात् । कुतः ? **पराधिकारात्**–परविषयत्वं मध्यमपुरुषघटितमेवेत्यव्यभिचारिनियमसिद्धत्वात्तस्येत्यर्थः ॥२२॥

प्रैषप्रैषार्थयोः यथाक्रममाध्वर्यवाऽऽग्नीध्रताधिकरणम् ॥१२॥

## अध्वर्युस्तथा लिङ्गदर्शनात् ॥२३॥

एवं प्रैषतदर्थयोः कर्तृभेदे सिद्धे प्रैषार्थकर्ता अध्वर्युरेव स्यात् । नाऽऽग्नीध्रः । कुतः ? **तथा लिङ्गदर्शनात्**–'वज्रो वै स्फ्यः तिर्यञ्चं धारयेत् यदन्वञ्चं धारयेत् वज्रेणाध्वर्युं क्षिणुयात् इति ' यस्य हस्ते स्फ्य स प्रैषकर्तेति गम्यते ॥२३॥

## सि० ॥ गौणो वा, कर्मसामान्यात् ॥२४॥

**गौणो वा**–प्रैषार्थकर्तरि आग्नीध्रे अध्वर्युशब्दो गौणः । यजुर्वेदविहितप्रैषार्थकर्तृत्वात् प्रैषे अध्वर्योः साक्षात्कर्तृत्वम् । तत्कर्तृकप्रैषप्रेरिताऽऽग्नीध्रकृतप्रैषार्थे च प्रयोजककर्तृत्वमिति कर्मसामान्यकर्तृत्वमाध्वर्यवसमाख्याप्राप्तमबाधितम् । इति **कर्मसामान्यात्**–प्रयोजककर्तृत्वेनोभयसाधारणकर्तृत्वद्योतकाऽऽध्वर्यवसमाख्योपपत्तेः, अध्वर्युः प्रैषकर्ता, आग्नीध्रश्च प्रैषार्थकर्तेति सिध्यतीति भावः ॥२४॥

करणमन्त्रेषु स्वामिफलस्य आशासितव्यत्वाधिकरणम् ॥१३॥

## ऋत्विक्फलं करणेष्वर्थवत्त्वात् ॥२५॥

दर्शपूर्णमासप्रकरणे आहवनीयाग्नेराधानकाले तत्करणभूतो ' ममाग्ने वर्चो विहवेष्वस्तु ' इत्यादिर्मन्त्रः अध्वर्युणा पठ्यते । तेन मन्त्रेण प्रार्थ्यमानं फलमपि ऋत्विजः–अध्वर्योरेव वाच्यम् । न स्वामिनः । कुतः ? **करणेषु**–मन्त्रेषु,

अर्थवत्त्वात्-मम इत्यस्य शक्त्या अर्थवत्त्वात् । अन्यथा लक्षणाप्रसङ्गः । किञ्च, 'अहं वर्चस्वी भूयासम्' इत्युत्तरत्राध्वर्योर्वचनं दृश्यते । ततोऽध्वर्यो फलमिति चेत्—॥२५॥

## सि०॥ स्वामिनो वा, तदर्थत्वात् ॥२६॥

**स्वामिनो वा**—यजमानस्यैव, तन्ममेति वचनं तदुक्तं फलं च । कुतः ? कर्मणः **तदर्थत्वात्**-यजमानार्थत्वात् । यजमानार्थं हि साङ्गमिदं कर्म ऋत्विग्भिः क्रियते, नात्मार्थम् । ते तु दक्षिणया कृतार्थाः । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र आत्मनेपदश्रुत्या च साङ्गप्रधानजन्यफलस्य यजमानगामित्वं प्रतीयते । तस्मात्—यजमानस्यैव तत्फलम् । नाध्वर्योरिति सिद्धम् ॥२६॥

## लिङ्गदर्शनाच्च ॥२७॥

'या काञ्चन यज्ञे ऋत्विज आशिषमाशासते यजमानस्यैव तत्' इति लिङ्गदर्शनादपि स्वामिन एव फलमित्यायाति ॥२७॥

### करणमन्त्रेषु कर्मार्थफलस्य ऋत्विग्धर्मताधिकरणम् ॥१४॥

## कर्मार्थं तु फलं तेषां स्वामिनं प्रत्यर्थवत्त्वात् ॥२८॥

क्वचिदृत्विजामपि फलं यजमानः इच्छतीत्याह—**कर्मार्थमिति** । 'अग्नाविष्णू मा वक्रमिव विजिहाथां मा मा सन्ताप्तम्' इति । अत्र सन्तापाभावरूप **तेषाम्**-ऋत्विजां, फलं **कर्मार्थं**—यजमानकर्मसिद्ध्यर्थमपि स्वामिनं प्रति परम्परया अर्थवत्त्वात् न ऋत्विगर्थं तं हीयते । ततः ऋत्विक्फलमेव तत् ॥२८॥

## व्यपदेशाच्च ॥२९॥

क्वचित् **व्यपदेशात्**—निर्देशात्, ऋत्विजां फलम् । यथा उपरवेषु अध्वर्युयजमानयोर्वाङ्गनवरासाने 'मित्र ? । भद्रम् । तन्नौ सह' । इति निर्देशात् अध्वर्योरपि फलं प्रसिध्यति ॥२९॥

### द्रव्यसंस्कारस्य अङ्गप्रधानार्थत्वाधिकरणम् ॥१५॥

## द्रव्यसंस्कारः प्रकरणाविशेषात् सर्वकर्मणाम् ॥३०॥

व्रीह्यादिद्रव्यस्य बर्हिषश्च संस्काराः सर्वकर्मणामङ्गप्रधानार्था इत्यर्थः । कुतः ? **प्रकरणाविशेषात्**–उभयत्र समानत्वादिति । प्राक् सिद्धमपीदं उत्तराधिकरणविवक्षया पुनरुक्तम् ॥३०॥

अपूर्वप्राकृतधर्माणां विकृतावसम्बन्धाधिकरणम् ॥१६॥

## निर्देशात्तु विकृतावपूर्वस्यानधिकारः ॥३१॥

ज्योतिष्टोमे–' यो दीक्षितो यदग्नीषोमीयं पशुमालभते ' इत्यस्ति अग्नीषोमः । तत्र ' बर्हिषा यूपावटमवस्तृणाती'ति श्रुतम् । तत्र विकृतौ स्तरणसाधनबर्हिर्धर्मा लवनादयो न कार्याः । कुतः ? **निर्देशात्**–प्रकृतौ बर्हिषः कार्यस्य–' बर्हिषा वेदिं स्तृणाती'ति स्तरणकार्यस्य निर्देशात् । विकृतौ तु अपूर्वस्य प्रकृतिकार्यरहितस्य यूपावटस्तरणसाधनस्य बर्हिषो नाधिकारः । नोद्देश्यत्वम् । धर्माणां स्वकार्यद्वारैव प्रकृतितः प्राप्तिरिति भावः ॥३१॥

पवित्रादेः परिभोजनीयबर्हिषा कर्तव्यत्वाधिकरणम् ॥१७॥

## विरोधे च श्रुतिविरोधादव्यक्तः शेषः ॥३२॥

दर्शपूर्णमासयोः–' समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति ' इत्याम्नातम् । तत्र ' बर्हिषा वेदिं स्तृणाती'ति लवनादिसंस्कारसंस्कृतस्य बर्हिषः वेदिस्तरणे विनियोजकश्रुतिविरोधात्, विरोधे संस्कृतबर्हिषा पवित्रादिकरणासम्भवे शेषः–पवित्रादिः, अव्यक्तः– असंस्कृतः– संस्काररहितपरिभोजनीयनामकदर्भैः कार्य इत्यर्थः ॥३२॥

प्राकृतपुरोडाशशकलस्य निधानाधिकरणम् ॥१८॥

## अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ॥३३॥

ज्योतिष्टोमे–' पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधाती'ति श्रूयते । तत्रेदं निदधानं प्रकृतसवनीयपुरोडाशैकदेशभूतस्य शकलस्यैव । न तदन्यपुरोडाशशकलस्य । कुतः ? **विद्यमानस्य**–प्रकृतस्य, **संयोगात्**–विधिना

साकं सम्बन्धादित्यर्थः । पुरोडाशशकलमिति द्वितीयाश्रुत्या अवशिष्टपुरोडाशसंस्कारप्रतीतेः कल्पस्यैव शकले नान्यस्येति भावः ॥३३॥

## काम्येष्टिषु उपांशुत्वधर्मस्य प्रधानार्थत्वाधिकरणम् ॥१९॥

## विकृतौ सर्वार्थः शेषः प्रकृतिवत् ॥३४॥

काम्येष्टौः प्रकृत्येदं श्रूयते—' यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु यष्टव्याः ' इति । **विकृतौ**—विकृतीष्टिषु श्रूयमाणः **शेषः**—उपांशुत्वधर्मः, **सर्वार्थः**—अङ्गप्रधानोभयार्थः । न केवलं प्रधानार्थः । **प्रकृतिवत्** । यथा प्रकृतौ दर्शपूर्णमासे वेदिधर्मा बर्हिर्धर्मा आज्यधर्माश्च अङ्गप्रधानार्थाः, तद्वद्विकृतावपीति भावः ॥३४॥

## सि० ॥ मुख्यार्थो वा, अङ्गस्याचोदितत्वात् ॥३५॥

**मुख्यार्थो वा**—केवलप्रधानार्थ एवोपांशुत्वधर्मः । नाङ्गयागार्थः । कुतः ? **अङ्गस्य विकृतावचोदितत्वात्** । ता इति सर्वनाम्ना काम्येष्टयः परामृश्यन्ते । तासां सन्निधौ च नाङ्गपाठः । अतो नाङ्गपरामर्शः । यस्य परामर्शस्तत्रैवोपांशुत्वम् । किञ्च, काम्यत्वमेवात्र नियामकम् । तच्च प्रधानयागस्यैव । नाङ्गानाम् । तेषां तु करणार्थत्वेन फले साक्षात्सम्बन्धो नास्ति । अतः साक्षात्फलसाधने प्रधाने एव उपांशुत्वम् । अङ्गानां तु तत्तद्वेदानुसारेण स्वरविशेषो बोध्यः ॥३५॥

## श्येनाङ्गानां दृतिनवनीताज्यत्वाधिकरणम् ॥२०॥

## सन्निधानविशेषादसम्भवे तदङ्गानाम् ॥३६॥

श्येने ' दृतिनवनीतमाज्यं भवती'ति श्रूयते । दृती—चर्मपुटके, निहितं नवनीतं तस्यैवभूतमाज्यमिति तदर्थः । अत्र श्येनस्य सोमयागविकारत्वेनातिदेशशास्त्रप्राप्तसोमद्रव्येण प्रशान्तद्रव्याकाङ्क्षत्वात्, अपूर्वगुणविशिष्टाज्यविधाने गौरवाच्च तस्मिन् तद्विधानासम्भवेन आज्यपदसंनिधानविशेषात् येषु तदङ्गेषु आज्यमस्ति तदनूद्य तत्रोक्तगुणविधाने लाघवात् श्येनाङ्गेषु तादृशमाज्यं स्यादिति भावः ॥३६॥

## आधानेऽपि तथेति चेत् ॥३७॥

नन्वेवञ्चेत्, आधाने पवमानेष्ट्या च तादृशमाज्यं प्राप्नुयात्। कुतः ? तस्य तस्याश्च अग्निद्वारा श्येनाङ्गत्वादिति चेत्—॥३७॥

## नाप्रकरणत्वात् अङ्गस्यातन्निमित्तत्वात् ॥३८॥

न—आधाने पवमानेष्ट्या वा नोक्तमाज्यं प्राप्नोति । कुतः ? तयोः श्येनप्रकरणे पाठाभावेन असन्निहितत्वात् । अङ्गस्य—आधानपवमानेष्ट्योः अतन्निमित्तत्वात्—श्येनोद्देश्यकत्वाभावादित्यर्थः ॥३८॥

### सर्वेषामेव श्येनाङ्गानां दृतिनवनीताज्यत्वाधिकरणम् ॥२१॥

## तत्काले लिङ्गदर्शनात् ॥३९॥

तत्काल इति । दृतिनवनीताज्यं श्येनाङ्गेष्विति स्थितम् । तच्च सुत्याकालीनेषु सवनीयपशुतत्पुरोडाशात्मकेष्वङ्गेष्वेव ज्ञेयम् । नान्यकालीनेषु दीक्षणीयाद्यङ्गेषु । कुतः ? लिङ्गदर्शनात्—तद्विप्रतिपन्नमाज्यं सुत्याकालीनाङ्गमात्रगम, सोमविकृतिधर्मत्वात् पशुमादित्यवदिति अनुमानसम्भवात् । यथा सोमविकृतिविशेषे साद्यस्के क्रतौ 'सह पशूनालभते' इति श्रुतं साहित्यं सुत्याकालीनसवनीयपशौ स्थितं तद्वत्प्रकृतमाज्यमपि सुत्याकालीनाङ्गसम्बद्धमेवेति भावः ॥३९॥

## सि०॥ सर्वेषां वा, अविशेषात् ॥४०॥

सर्वेषामेवाङ्गानां साधनं तदाज्यं, नाङ्गविशेषाणाम् । कुतः ? अविशेषात्—विशेषशास्त्राभावात् । श्रूयमाणस्याज्यपदस्य सुत्याकालीनाज्यपरत्वेन सङ्कोचनं तु निष्प्रमाणकमिति भावः ॥४०॥

## न्यायोक्ते लिङ्गदर्शनम् ॥४१॥

'यदाज्यं तद्दृतिनवनीतम्' इति वाक्येनोक्तेऽर्थे तद्विरुद्धं लिङ्गदर्शनम्—अनुमानं, कालात्ययापदिष्टम् । अप्रमाणमित्यर्थः ॥४१॥

### सवनीयानां मांसमयत्वाधिकरणम् ॥२२॥

## मांसं तु सवनीयानां चोदनाविशेषात् ॥४२॥

षट्त्रिंशत्संवत्सरसाध्य शाक्यानामयनम्। तत्रेत्थ श्रूयते–' संस्थिते संस्थितेऽहनि गृहपतिर्मृगया याति । स तत्र यान् मृगान् हन्ति, तेषां तरसा सवनीया पुरोडाशा भवन्ति' इति । तत्र ये सवनीयास्ते तरसा इति सन्निध्यनुगृहीतेन वाक्येन मांसस्य सवनीयपुरोडाशेष्वेव ज्ञेयम् । न सर्वेषु पुरोडाशेष्विति ॥४२॥

## भक्तिरसन्निधावन्याय्येति चेत् ॥४३॥

' पुरोडाशपदस्य विशेषे सवनीयपुरोडाशे वृत्तिं स्वीकृत्य सवनीयस्यैव तरसत्वमभिहितं चेत्–धानादिषु तरसत्वं न स्यात् । तस्य तद्वाचकत्वात् । भक्तिः–लक्षणा, अन्याय्या । सम्भवति मुख्येऽर्थे इति चेत्–॥४३॥

## स्यात् प्रकृतिलिङ्गत्वात् वैराजवत् ॥४४॥

प्रकृतौ ज्योतिष्टोमे सन्निहितधानादिष्वेव पुरोडाशशब्दो भाक्तो दृष्टः । अत्र विकृतावपि चोदकेन तथैव प्राप्तः । सवनीयशब्देन च धानादीनां सन्निहितत्वात्तेष्वपि भाक्त एव स्यात् । प्रकृतिलिङ्गत्वात्–सामशब्देन प्रकृतिलिङ्गेन विकृतौ वैराजपृष्ठग्रहणवदित्यर्थः ॥४४॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां तृतीयाध्यायस्याष्टमः पादः ॥

सम्पूर्णश्च तृतीयोऽध्यायः ॥३॥

॥ श्रीः ॥

॥ श्रीः ॥

# अथ चतुर्थाध्यायस्य प्रथमः पादः ॥

तत्रादौ क्रत्वर्थपुरुषार्थविचारप्रतिज्ञाधिकरणम् ॥१॥

## अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ॥१॥

**अथ**—तृतीयाध्याये श्रुतिलिङ्गादिभिरङ्गत्वबोधकप्रमाणैः कः शेषः ? कश्च शेषी ? इति शेषशेषिभावनिरूपणानन्तरम्, **अतः**—तस्य वक्ष्यमाणार्थ-निरूपणे कारणतया हेतुहेतुमद्भावसङ्गतेः कः क्रतुशेषः ? कश्च पुरुषशेषः ? इति क्रत्वर्थपुरुषार्थविषयिणी **जिज्ञासा**—तत्प्रयोज्यविचारः, क्रियत इत्यर्थः ॥१॥

क्रत्वर्थपुरुषार्थयोर्लक्षणाधिकरणम् ॥२॥

## यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात् ॥२॥

*यस्मिन्* पदार्थे कृते *पुरुषस्य प्रीतिः*—सुखविशेषो भवति । स पुरुषार्थः । यतस्तस्य **लिप्सा**—इच्छा, **अर्थलक्षणा**—अर्थतः शास्त्रमन्तरेण स्वयमेव लक्षणमुत्पत्तिर्यस्या एतादृशी सा । कुतः ? **अविभक्तत्वात्**—तादृशेच्छाविषयस्य फलेन सह यः साध्यसाधनभावः तस्याव्यभिचारात्—अभावाभावादिति । तथा च शास्त्राजन्यज्ञानाजन्येच्छाविषयसाधनत्वं पुरुषार्थत्वमिति तस्य लक्षणं पर्यवस्यति । अस्ति चेदं लक्षणं स्वर्गादिसुखसाधनयागादौ । स्वर्गादीच्छायाः शास्त्राजन्यज्ञानाजन्यत्वेन तादृशेच्छाविषयस्वर्गादिसाधनत्वस्य यागादौ प्रमाणसिद्धत्वात् । एतल्लक्षणलक्षितविपरीतो यः स क्रत्वर्थ इति तस्यापि लक्षणमर्थात्सिध्यतीति बोध्यम । इदं सौत्रं पुरुषार्थलक्षणं गोदोहन-द्रव्यार्जननियमादिष्वव्याप्तमिति तेऽपि पुरुषार्था एवेत्यवगन्तव्यम् ॥२॥

प्रजापतिव्रतानां पुरुषार्थताधिकरणम् ॥३॥

## तदुत्सर्गे कर्माणि पुरुषार्थाय शास्त्रस्यानतिशङ्क्यत्वान्न च द्रव्यं चिकीर्ष्यते तेनार्थेनाभिसम्बन्धात् क्रियायां पुरुषश्रुतिः ॥३॥

किमपि प्रकरणमनारभ्य 'अथ तस्य व्रतम्' इत्युपक्रम्य 'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन' इत्यादिना वाक्यजातेन प्रजापतिव्रतान्यभिधीयन्ते। तानि **कर्माणि**-एतद्वाक्यजातविहितकर्माणि तदुत्सर्गेऽपि प्रीतेरनुपलब्धावपि द्रव्यार्जनवत् **पुरुषार्थाय**-पुरुषार्थानि, भवेयुः । कुतः ? **शास्त्रस्य**-प्रकृतवचनस्य, **अनतिशङ्क्यत्वात्**-वैयर्थ्यप्रसङ्गात्तर्केण निराकर्तुमशक्यत्वात् । अनारभ्यपाठेन तेन वाक्येन क्रत्वङ्गभूतं द्रव्यं संस्कर्तुं नेष्यते। अत **अर्थेन**-पुरुषार्थेन फलेनाभिसम्बन्धात्, **क्रियायां पुरुषश्रुतिः**-पुरुषस्य कर्तृत्वात्मना क्रियाङ्गत्वेनाप्राधान्याच्च पुरुषार्थान्येवेमानि प्रजापतिव्रतानि न क्रत्वर्थानीति सिद्धम् ॥३॥

## शङ्का—अविशेषात्तु शास्त्रस्य यथाश्रुति फलानि स्युः ॥४॥

एवं चेत्—'समिधो यजति, तनूनपातं यजती' त्यादिशास्त्रस्य 'नेक्षेतोद्यन्तमादित्य' मित्यस्य च **अविशेषात्**—कर्तृत्वेनोक्तकर्मण्यङ्गत्वेनान्वयसम्भवात्, **यथाश्रुति**—'वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य' 'एतावता हैनसा वियुक्तो भवती' ति तत्तद्विधिसन्निधौ श्रूयमाणार्थवादोक्तानि फलानि स्युः । अतः समिधो यजतीत्यादीन्यपि कर्माणि प्रजापतिव्रतवत्पुरुषार्थानि भवेयुरिति ॥४॥

## अपि वा कारणाग्रहणे तदर्थमर्थस्यानभिसम्बन्धात् ॥५॥

अपि वेति शङ्काव्यावृत्तिः । अङ्गत्वबोधकश्रुतिलिङ्गादिप्रमाणानां मध्ये कस्यापि **कारणस्य**—शेषशेषित्वप्रमाणस्य, **अग्रहणे**—अनुपलम्भे सति,

तदर्थे—पुरुषार्थे, नेक्षेतोद्यन्तमादित्यमिति विहित कर्मेति स्थितम् । अर्थस्य—पुरुषार्थस्य तस्य कर्मणः, अनारभ्याधीतत्वेन केनापि कर्मणा अभिसम्बन्धाभावात्—एकाधिकारपठितत्वरूपसम्बन्धाभावात्, प्रकरणादिप्रमाणेन फलवद्यागशेषता गंतव्य आरादुपकारकेभ्यः समिधादिभ्योऽस्ति महद्वैलक्षण्यमिति भावः ॥५॥

## तथा च लोकभूतेषु ॥६॥

लोकभूतेषु—जनसामान्येष्वपि 'स्नान कुरु, पाक कुरु' इत्युक्ते स्नानं पाकार्थमिति जानाति । केवलं स्नानं कुर्वित्युक्ते तु स्वतन्त्रफलकमेव तज्जानातीत्येतादृशोऽनुभवोऽस्ति । तस्मात्प्रजापतिव्रतानि पुरुषार्थानि । न समिधादीनि तथा । अपि तु कर्माङ्गानि तानीत्यवगन्तव्यम् ॥६॥

### यज्ञायुधानामनुवादत्वाधिकरणम् ॥४॥

## द्रव्याणि त्वविशेषेणानर्थक्यात्प्रदीयेरन् ॥७॥

दर्शपूर्णमासप्रकरणे-'स्फयश्च कपालानि च अग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या च उलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि' इति श्रुतम् । अस्मिन् वाक्ये श्रुतानि स्फ्यादिद्रव्याणि अविशेषेण श्रुतान्यपि प्रकरणप्रमाणेन प्रधानयागीयदेवतोद्देशेन प्रदीयेरन्—त्यज्येरन् । कुतः ? अनुवादत्वे आनर्थक्यात्—अप्रवृत्तिकरत्वेन वाक्यवैयर्थ्यापातात् । यज्ञायुधानीति यज्ञशब्दस्य प्रधाने रूढत्वाच्च प्रधानाङ्गत्वेन विधिरयमिति भावः ॥७॥

## सि०॥ स्वेन त्वर्थेन सम्बन्धो द्रव्याणां पृथगर्थत्वात्, तस्मात् यथाश्रुति स्युः ॥८॥

तुना पूर्वोक्तिव्यावृत्तिः । न विधिः । अपि त्वनुवादः । प्रमाणान्तरात् । "स्फ्येनोद्धन्ति । कपालेषु श्रपयति । अग्निहोत्रहवण्या निर्वपति । शूर्पेण विविनक्ति । कृष्णाजिनमधस्तादुलूखलस्यावस्तृणाति । शम्यया दृषदमुपदधाति"

## तद्वच्च लिङ्गदर्शनम् ॥१६॥

'तेषामैन्द्राग्नो दशम' इति निर्णीतानुरूप लिङ्गदर्शनमपि त्रित्वविवक्षायामेवोपपद्यते । नान्यथेत्यास्ति सङ्ख्याया विवक्षितत्वम् ॥१६॥

### लिङ्गस्य विवक्षाधिकरणम् ॥६॥

## तथा च लिङ्गम् ॥१७॥

यथा संङ्ख्याविवक्षिता तथा समानश्रुतिक पुंस्त्वादिलिङ्गमपि विवक्षितमेवेति बोध्यम् ॥१७॥

### आश्रयिणामदृष्टार्थताधिकरणम् ॥७॥

## सि० ॥ आश्रयिष्व विशेषेण भावोऽर्थः प्रतीयेत ॥१८॥

**आश्रयिषु**-अंशेन संस्कारद्वारा परकीयद्रव्यदेवतमाश्रयत्सु उत्तमप्रयाजपशुपुरोडाशस्विष्टकृद्यागेषु, **अविशेषेण**- यजति- ददाति--जुहोतीत्यादिभिः पूर्वप्रयोजनैर्वैलक्षण्याभावहेतुना, **भावोऽर्थः**—अपूर्वं, **प्रतीयेत**—कल्प्येतेत्यर्थ । यागो नाम मन्त्रोच्चारणपूर्वकाग्न्यधिकरणकद्रव्यसंयोगकालीनदेवतोद्देशेन द्रव्यत्याग । तत्र मन्त्रोच्चारणस्य देवतास्मरण, हवि प्रक्षेपस्यावशिष्टद्रव्यविनियोग इति दृष्टफलेऽपि त्यागस्य न किमपि दृष्ट फलमिति तस्यापूर्वं फल सिध्यतीति भाव ॥१८॥

## आक्षेपः । चोदनायां त्वनारम्भोऽविभक्तत्वान्न ह्यन्येन विधीयते ॥१९॥

**चोदनायां**—विधिवचने, **अनारम्भः**—अपूर्वाविध्यभाव । कुत ? अविभक्तत्वात् । विधिना यथा विषयाभूतविशिष्टार्थस्यैकत्वात् । अन्येन विशिष्टकार्यविधायकशब्दातिरिक्तेन, यस्मादंशो न विधीयते ततो नोक्तवचन अपूर्वं प्रतीयत इति भाव ॥१९॥

## स्याद्वा द्रव्यचिकीर्षायां भावोऽर्थे च गुणभूतताऽऽश्रयाद्धि गुणीभावः ॥२०॥

द्रव्यादिसंस्कारचिकीर्षायां-संस्कारे विधितात्पर्यसत्वेऽपि यागतः **भावः**-अपूर्वं स्यात् । हि-यतः, **आश्रयात्**-स्वप्रधानात्, स्वस्य **गुणीभावः**-अङ्गत्वम् । ततः संस्काररूपार्थे परं गुणीभावः । त्यागांशस्य तत्र गुणत्वमसम्भवीत्यगत्या तत्रादृष्टमेव कल्प्यमिति भावः । अंशांशिनोरभेदेनांशे विधितात्पर्यमस्तीति ज्ञेयम् ॥२०॥

प्रयोज्यप्रयोजकभावनिरूपणप्रतिज्ञाधिकरणम् ॥८॥

## अर्थेन समवैषम्यतो द्रव्यकर्मणाम् ॥२१॥

एतावता ग्रन्थेन शेषशेषिभावं निरूप्येतःपरमेतदध्यायप्रतिपाद्यप्रयोज्यप्रयोजकभावनिरूपणप्रतिज्ञेयम् । अर्थेनेति । **अर्थेन**-फलेन, सम्बन्धवेलाया द्रव्यकर्मणा मैत्रावरुणदण्डदध्यानयनरूपाणां समवैषम्यं निरूप्यत इत्यर्थः॥२१॥

दध्यानयनस्य आमिक्षाप्रयोज्यत्वाधिकरणम् ॥९॥

## एकनिष्पत्तेः सर्वं समं स्यात् ॥२२॥

चातुर्मास्ययागीयवैश्वदेवपर्वणि—'तप्ते पयसि दध्यानयति सा वैश्वदेव्याऽऽमिक्षा वाजिभ्यो वाजिनम्' इति श्रुतम् । अत्र यस्मिन् कृते यन्निष्पद्यते प्रयोजनवद् तत्तस्य प्रयोजकमिति प्रतीतेः दध्यानयनेन एकनिष्पत्तेः द्वयोः आमिक्षावाजिनयोरेकदैवोत्पत्तेः **सर्वम्**-आमिक्षावाजिनं, च **समं**-तुल्यमेव, दध्यानयनस्य प्रयोजकं स्यात् । द्वयोर्युगपन्निष्पन्नत्वेनेदमेवप्रयोजकमिदं नेति नियन्तुमशक्यमिति भावः ॥२२॥

## संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात् ॥२३॥

संसर्गेण-दधिसंसर्गेण आमिक्षाया रसोत्पत्तेर्विनिगमकत्वात् आमिक्षैव **प्रधानं**—दध्यानयनप्रवृत्त्युद्देश्यं स्यात् । न तु वाजिनम् । तत्र दधिपयसो रसानुपलम्भादिति भावः ॥२३॥

## मुख्यशब्दसंस्तवाच्च ॥२४॥

'मिथुनं वै दधि च शृतं च अथ यन्मिथुनं मध्यमेव मस्त्विव च परिददृशे गर्भ एव सः' इति गर्भसादृश्यप्रतिपादनेन तच्छब्देन अर्थान्मुख्य-

शब्देन आमिक्षायाः संस्तवादपि सैव मुख्येतिगम्यते । मिथुनीभावस्य मुख्यं कार्यं गर्भः, स एव च तस्य प्रयोजकः, न गर्भोदकम् । तद्वदामिक्षैव दध्यानयनस्य प्रयोजिका, न वाजिनमिति भावः ॥२४॥

गवाऽऽनयनस्य पदकर्माप्रयोज्यत्वाधिकरणम् ॥१०॥

## पदकर्माप्रयोजकं नयनस्य परार्थत्वात् ॥२५॥

ज्योतिष्टोमे—'अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणाति' इत्युक्त्वा 'षट्पदान्यनुनिष्क्रामति । सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति । यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यात्' इति श्रुतम् । अत्रोक्तं पद-कर्म-अध्वर्युकर्तृकं सप्तमपदग्रहणं, न प्रयोजकं नयनस्य । कुतः ? तस्य एक-हायनीनयनस्य परार्थत्वात्—सोमक्रयार्थत्वात् । एकहायन्या क्रीणातीति तृतीयाश्रुत्या तस्याः क्रयाङ्गत्वात्तन्नयनमपि क्रयाङ्गमेव । अतः क्रय एव प्रयो-जकः, पदकर्म आनुषङ्गिकम् । तेन यदि प्राचणि पदनिक्षेपस्तर्हि पुनः षट्पदान्यनुनिष्क्रमणं नेति फलितम् ॥२५॥

कपालानां तुषोपवापाप्रयोज्यत्वाधिकरणम् ॥११॥

## अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात्तदर्थो हि विधीयते ॥२६॥

दर्शपूर्णमासप्रकरणे—' कपालेषु पुरोडाशं श्रपयति । तथा पुरोडाश-कपालेन तुषानुपवपति' इति श्रुतम् । तत्र अर्थेन—पुरोडाशश्रपणात्मककार्येण सह, अभिधानं—कथनं, यस्य, तादृशेन कपालेन साध्यं यत् तुषोपवापकार्यं तत्तस्य अप्रयोजकम् । प्रयोजकं न भवतीत्यर्थः । एतज्ज्ञापनायैव पुरोडाश-कपालेनेति पदप्रयोगस्तद्वाक्ये सन्दृश्यते । तुषोपवापसमये तस्मिन् पुरोडाश-सम्बन्धाभावेऽपि भविष्यता पुरोडाशेन यः सम्बन्धस्तस्यैव तन्निमित्तत्वात्-पुरोडाशकपालेनेति व्याहारकारणत्वात्, भावि पुरोडाशसंयोगविशिष्ट एव कपालस्तृतीयया तुषोपवापसाधनत्वेनात्र वाक्ये विधीयते इति न तुषोपवापः कपालसम्पादनस्य प्रयोजकः । अपि तु पुरोडाशश्रपणमेवेति सिध्यति ॥२६॥

शकृल्लोहितयोः पशावप्रयोजकत्वाधिकरणम् ॥ १२ ॥

## पशावनालम्भाल्लोहितशकृतोरकर्मत्वम् ॥२७॥

ज्योतिष्टोमे-' अग्नीषोमीयं पशुमालभते ' इत्यस्य सन्निधौ-' हृदयस्याग्रे अवद्यति । अथ जिव्हायाः अथ वक्षसः तथा लोहितं निरस्यति । शकृत्संप्रविध्यति ' इति श्रूयते । तत्र पशौ हृदयाद्यवदानैः पशुयागे लोहितशकृन्निरासस्य अप्रयोजकत्वम् । न हि तदर्थं पशुरालभ्यते । अपि तु यागार्थम् । उत्पत्तिवाक्ये पशोर्यागार्थत्वेन विधानात् । लोहितशकृन्निरासोद्देशेन **अनालम्भात्**-संज्ञपनाभावात्, तस्याप्रयोजकत्वमिति भावः ॥२७॥

पुरोडाशस्य स्विष्टकृद्यागाप्रयुक्तत्वाधिकरणम् ॥१३॥

## एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात् ॥२८॥

दर्शपूर्णमासयोः-' उत्तरार्धात्स्विष्टकृते समवद्यती'ति श्रुतम् । तथा ' यदाग्नेयोऽष्टाकपाल ' इत्यादिना प्रधानयागोऽपि विहितः । अत **एकदेशद्रव्यः**-आग्नेयपुरोडाशस्य एकदेशः—उत्तरार्धरूपं द्रव्यं यस्य सः स्विष्टकृद्यागः पुरोडाशनिर्माणस्य प्रयोजको न भवति । कुतः ? **उत्पत्तौ**-उत्पत्तिवाक्ये, **विद्यमानसंयोगात्**-अग्निदेवतया क्लृप्तसम्बन्धादित्यर्थः । यत अन्यार्थपुरोडाशस्य उत्तरार्धादवद्य स्विष्टकृद्यागो भवति । अतः सः तस्याप्रयोजक इति भावः ॥२८॥

## आशङ्काः-निर्देशात्तस्यान्यदर्थादिति चेत् ॥२९॥

**तस्य**-आग्नेयपुरोडाशस्य, **निर्देशात्**—इदमग्नेरिति क्लृप्तत्वात, तस्य देवतान्तरोद्देशेन दानासम्भवात् **अर्थात्**—स्विष्टकृद्यागान्यथानुपपत्त्या, **अन्यत्**—स्वतन्त्रं, पुरोडाशनिर्माणं कार्यमिति चेत् ॥२९॥

## न, शेषसन्निधानात् ॥३०॥

**न**-नैव कार्यम् । कुतः ? **शेषसन्निधानात्**-आग्नेयादिशेषस्य सन्निधानात्-स्विष्टकृदर्थे विद्यमानत्वान्न विध्यनुपपत्तिरिति बोध्यम् ॥३०॥

## कर्मकार्यात् ॥३१॥

'देवा वै स्विष्टकृतमब्रुवन् हव्यं नो वहेति। सोऽब्रवीत् वरं वृणै भागोमेऽस्त्विति। वृणीष्वेत्यब्रुवन् सोऽब्रवीदुत्तरार्धादेव मह्यं सकृत्सकृदवद्यादिति' इत्येवं कर्मणः—स्वेसवागः, कार्यात्—फलरूपत्वेनाऽऽग्नेयोत्तरार्धस्तुतेरपि, न कस्यापि प्रयोजकः स्विष्टकृद्यागः। लोके स्वसेवकाय स्वभुक्तशेषादेव दीयते इति प्रसिद्धम् ॥३१॥

## लिङ्गदर्शनाच्च ॥३२॥

'तयत्सर्वेभ्यो हविर्भ्यः समवद्यति तस्मादिदमुदरे विश्वरूपमन्नं समवधीयते', तथा 'शेषादिडामवद्यति शेषात्स्विष्टकृतं यजती'ति लिङ्गदर्शनादपि अप्रयोजकः सः। अन्यथेदं लिङ्गदर्शनमनुपपन्नं स्यादिति भावः ॥३२॥

### अभिघारणे शेषधारणतत्पात्रयोरननुष्ठानाधिकरणम् ॥१४॥

## अभिघारणे विप्रकर्षादनूयाजवत्पात्रभेदः स्यात् ॥३३॥

प्रकृतौ 'प्रयाजशेषेण हवींष्यभिघारयती'ति श्रुतम्। तदेतच्चोदकेन विकृतौ प्राप्तम्। विकृतयश्च 'वाजपेयेन स्वाराज्यकामो यजेत' इति विहितवाजपेयगताः—'आग्नेयं पशुमालभेत' इत्यादिना विहिताः क्रतुपशवः—'सप्तदश प्राजापत्यान् पशूनालभेत' इति विहिताः प्राजापत्यपशवश्च। त एत उभयविधाः पशवः 'तीर्थे वै प्रातःसवनम्, यत् प्रातःसवने पशव आलभ्यन्ते तीर्थे एवैतानालभते' इति वचनात्प्रातःसवने सहैवोपक्रम्यन्ते। ततः सर्वेषामुपक्रान्तानां पशूनामर्थे सकृदेव प्रयाजा अनुष्ठीयन्ते। तत्र क्रतुपशूनां प्रातःसवन एवालब्धव्यत्वात् तदीयहविषां प्रयाजशेषेणाभिघारणं निष्प्रत्यूहमेव भवति। प्राजापत्य पशूनां तु पर्यग्निकरणपर्यन्तमेव तदानीमनुष्ठानम्। तेषामालम्भस्तु 'ब्रह्मसाम्न्यालभेत' इति विधानान्माध्यंदिनसवने

भवति । प्रयाजशेषेण हविषामभिघारणेऽवश्यं कर्तव्ये प्राजापत्यहविषां विप्रकर्षात्--दूरवर्तित्वात्, तदर्थं प्रातःकालीन प्रयाजशेषो निधाय धारयितव्यः । जुह्वां तद्धारणमसम्भवि । तस्याः ऋतुपशुअनुष्ठानव्यापृतत्वात् । अतः अनूयाजवत्पात्रभेदः स्यात् । यथा अनूयाजसाधनपृषदाज्यधारणार्थं पात्रान्तरम् । तथा प्राजापत्यहविषामभिघारणार्थं प्रयाजशेषः पात्रान्तरे संस्थापनीय इति ॥३३॥

## न वा, अपात्रत्वात् अपात्रत्वं त्वेकदेशत्वात् ॥३४॥

**न वा**-- नैव पात्रान्तरं तस्मिंश्च शेषधारणं विधेयम् । कुतः ? **अपात्रत्वात्**-धारणपात्रस्य अविहितत्वात् । न चाभिघारणस्यानुष्ठेयत्वेनार्थसिद्धं पात्रान्तरमिति वाच्यम् । **एकदेशत्वात्** । यतः प्रयाजार्थं विनियुक्तस्याऽऽज्यस्यैकदेशः सः । तदभिघारणं प्रतिपत्तिकर्मेत्यर्थः । न च तृतीयाश्रुत्या तस्याङ्गत्वं वाच्यम् । सक्तुन्यायेन शेषं हविःषु क्षारयेदिति तदर्थं । तथा च तत्कालोपस्थिततत्क्षारणेनैव जुह्वारिक्तीकरणरूपदृष्टप्रयोजनसिद्धेः न तदर्थमनुपस्थितहविराकाङ्क्षा । पृषदाज्यस्यानूयाजाङ्गत्वेन तद्धारणमावश्यकमिति भावः ॥३४॥

## हेतुत्वाच्च सह प्रयोगस्य ॥३५॥

'तीर्थे वै प्रातःसवनं यत् प्रातःसवने सह पशुं आलभ्यन्ते । तीर्थ एवैतानालभते अथो यपानामभिधृत याप' इति सहप्रयोगस्य **हेतुत्वात्**-अर्थवादे संस्तवात्, उपायान्तरेण हविषामभिघृतत्वप्रदर्शनाच्च न सिध्यति *प्रयाजशेषस्य हविरभिघारणार्थं संस्थापनम्, तदर्थं पात्रान्तरान्वेषणं चेति* भावः ॥३५॥

## अभावदर्शनाच्च ॥३६॥

'सव्या वा एतर्हि वपायथर्मनभिघृता यत्प्रातःसवनेऽस्तसामसाम्यालभते । तेनासव्या तेनाभिघृता इति' अस्यां श्रुतौ सव्या इत्यनेन वपायाः अभि-

घाराभावप्रयुक्तं रूक्षत्वं दर्शयति । अभिघारस्याभिप्रेतत्वे तत्सव्यत्वमनुपपन्नं स्यात् । तस्मादभिघारस्य अभावदर्शनादपि नास्ति प्रयाजशेषस्याऽऽवश्यकतेति भावः ॥३६॥

## सति सव्यवचनम् ॥३७॥

अत्राभिघाराभावे सति वपाया रूक्षत्वमेव सिध्यतीति सव्यवचनं वास्तवार्थबोधन एव लिङ्गं स्यादिति चेन्न । 'उपस्तृणात्याज्यम् हिरण्यशकलम् वपांहिरण्यशकलं ततोऽभिघारयति' इत्युपस्तरणाभिघारयोः सत्त्वात् अवास्तवार्थकं तल्लिङ्गदर्शनं केवलं स्तुतिरेवेति चेत्--॥३७॥

## न तस्येति चेत् ॥३८॥

## स्यात्तस्य मुख्यत्वात् ॥३९॥

तस्य—प्रयाजशेषाभिघारस्याभावाभिधायकं सव्यवचनं नेत्यर्थः। तस्य-प्रयाजशेषाभिघारणस्य, अभावद्योतकमेवैतत् सव्यवचनं मुख्यत्वात् ब्रह्मसाम्यालम्भनेनाभिघृतत्वसिद्धिपुरःसरा सव्यत्वस्य रूक्षत्वाभावस्य अर्थात्स्निग्धत्वस्य प्रतिपादनादिति भावः ॥३८।३९॥

### समानयनस्य आज्यधर्मप्रयोजकताधिकरणम् ॥ १५ ॥

## समानयनं तु मुख्यं स्याल्लिङ्गदर्शनात् ॥४०॥

दर्शपूर्णमासयोः—'अतिहायेडो बर्हिः प्रति समानयति जुह्वामौपभृतम्' इति श्रुतम् । तत्र यदिदमुपभृत्पात्रादाज्यस्य जुह्वां समानयनं तत्प्रयजाद्यर्थमेव । न अनुयाजद्रव्यसंस्कारार्थम् । अर्थात् मुख्यं कर्म स्यात् । कुतः? लिङ्गदर्शनात् आतिथ्येष्टिप्रकरणे—'चतुर्गृहीतानि आज्यानि भवन्ति । न ह्यत्र अनूयाजन् यक्ष्यन् भवति' इति श्रूयते । अत आतिथ्येष्टावनुयाजाभावात्तदर्थचतुर्गृहीताज्यस्याभावेऽपि प्रयाजद्वयार्थे चतुर्गृहीतस्यतस्य सत्त्वात् तदेकं चतुर्गृहीतम् । प्रयाजत्रयार्थं जुह्वा गृहीतं द्वितीयं चतुर्गृहीतम् । तृतीयं च ध्रुवायां गृहीतं तदिति श्रूयमाणं चतुर्गृहीतान्याज्यानीति बहु-

वचनं समुपपद्यते तस्य प्रयाजार्थत्वे । अन्यथा चतुर्गृहीतद्वयमेव तस्या जौहव श्रौवश्चेति । तथा सति श्रूयमाण बहुवचनमनुपपन्नं स्यादिति भावः ॥४०॥

## वचने हि हेत्वसामर्थ्यम् ॥४१॥

आतिथ्यायां—'चतुर्गृहीतानि आज्यानि भवन्ती'ति वचने विधिरङ्गीकृतश्चेदपूर्वायाष्टावुपभृतीत्येतदप्युपपन्नं स्यादिति चेत्तदा हेत्वसामर्थ्यं—हेतुप्रतिपादकस्य 'न ह्यत्रानूयाजान्यक्ष्यन् भवती'त्यस्य, असामर्थ्यं—अस्वारस्यंस्वारस्याभावः, प्रसज्येत । सिद्धान्ते तु अष्टावुपभृति गृह्णाति । प्रयाजानुयाजोभयार्थमन्यत्र प्रकृत्यादौ । अत्र आतिथ्यायां तु अनूयाजाभावात् चतुर्गृहीतान्येव सर्वाणि न कचिदष्टाविति सार्थकं हेतुवचनमिति बोध्यम् ॥४१॥

### औपभृतजौहवयोः क्रमेणोभयानुभयार्थत्वाधिकरणम् ॥१६॥

## तत्रोत्पत्तिरविभक्ता स्यात् ॥४२॥

'चतुर्जुह्वा गृह्णात्यष्टावुपभृती' त्यत्र उत्पत्तिः—ग्रहणोत्पत्तिप्रतिपादिका श्रुतिः, अविभक्ता-कार्यविशेषेणासंयुक्ता । अतः सर्वजौहवमौपभृतं चाज्यं सर्वार्थं स्यात् । यद्यदाज्येन क्रियते तस्मै तद्भवितुमर्हति विशेषाभावादित्यर्थः ॥४२॥

## सि० ॥ तत्र जौहवमनूयाजप्रतिषेधार्थम् ॥४३॥

न सर्वार्थं सर्वम् । यतस्तत्र 'यज्जुह्वा गृह्णाति प्रयाजेभ्यस्तत्' इति जौहववचनमनूयाजप्रतिषेधार्थम् ।'चतुर्जुह्वां गृह्णाती' त्युपादिष्टग्रहणस्य फलाकाङ्क्षायां 'प्रयाजेभ्यस्तदित्यनेन प्रयाजार्थत्वे सिद्धे आर्थिकी अनूयाजनिवृत्तिरिति भावः ॥४३॥

## औपभृतं तथेति चेत् ॥४४॥

'यदुपभृति गृह्णाति अनुयाजेभ्यस्तत् ' इति शाखान्तरे श्रुतत्वात् औपभृतमपि तथा अर्थात्प्रयाजसम्बन्धनिवर्तकमिति चेत्—॥४४॥

घाराभावप्रयुक्तं रूक्षत्वं दर्शयति । अभिघारस्याभिप्रेतत्वे तत्सव्यत्वमनुपपन्नं स्यात् । तस्मादभिघारस्य अभावदर्शनादपि नास्ति प्रयाजशेषस्याऽऽवश्यकतेति-भावः ॥३६॥

## सति सव्यवचनम् ॥३७॥

अत्राभिघाराभावे सति वपाया रूक्षत्वमेव सिध्यतीति सव्यवचनं वास्तवार्थबोधन एव लिङ्गं स्यादिति चेन्न । 'उपस्तृणात्याज्यम् हिरण्यशकलम् वपाहिरण्यशकलं ततोऽभिघारयति' इत्युपस्तरणाभिघारयोः सत्वात् अवास्तवार्थकं तल्लिङ्गदर्शनं केवलं स्तुतिरेवेति चेत्--॥३७॥

## न तस्येति चेत् ॥३८॥

## स्यात्तस्य मुख्यत्वात् ॥३९॥

तस्य--प्रयाजशेषाभिघारस्यभावाभिधायकं सव्यवचनं नेत्यर्थः । तस्य-प्रयाजशेषाभिघारणस्य, अभावद्योतकमेवेतत् सव्यवचनं मुख्यत्वात् अन्न-साम्याधभनेनाभिघृतत्वसिद्धिपुरःसरा सव्यत्वस्य रूक्षत्वाभावस्य अर्थात्स्नि-ग्धत्वस्य प्रतिपादनादिति भावः ॥३८।३९॥

### समानयनस्य आज्यधर्मप्रयोजकताधिकरणम् ॥ १५ ॥

## समानयनं तु मुख्यं स्याल्लिङ्गदर्शनात् ॥४०॥

दर्शपूर्णमासयोः--'अतिहायेडो बर्हिः प्रति समानयति जुह्वामौपभृतम्' इति श्रुतम् । तत्र यदिदमुपभृत्पात्रादाज्यस्य जुह्वां समानयनं तत्प्रयजाद्यर्थमेव । न अनुयाजद्रव्यसंस्कारार्थम् । अर्थात् मुख्यं कर्म स्यात् । कुतः? लिङ्गदर्शनात् आतिथ्येष्टिप्रकरणे--'चतुर्गृहीतानि आज्यानि भवन्ति । न ह्यत्र अनूयाजन् यक्ष्यन् भवति' इति श्रूयते । अत आतिथ्येष्टावनुयाजाभावात्तदर्थचतुर्गृहीतान्तरस्याभावेऽपि प्रयाजद्वयार्थं चतुर्गृहीतस्यान्तस्य सत्त्वात् तदेकं चतुर्गृहीतम् । प्रयाजत्रयार्थं जुह्वां गृहीतं द्वितीयं चतुर्गृहीतम् । तृतीयं च ध्रुवाया गृहीतं तदिति श्रूयमाणं चतुर्गृहीतान्याज्यानीति बहु-

वचनं समुपपद्यते तस्य प्रयाजार्थत्वे । अन्यथा चतुर्गृहीतद्वयमेव तस्यां जौहव
ध्रौवञ्चेति । तथा सति श्रूयमाण बहुवचनमनुपपन्नं स्यादिति भावः ॥४०॥

## वचने हि हेत्वसामर्थ्यम् ॥४१॥

आतिथ्यायाम्—'चतुर्गृहीतानि आज्यानि भवन्ती'ति वचने विधिरङ्गी-
कृतश्चेदपूर्वायामष्टावुपभृतीत्येतदप्युपपन्नं स्यादिति चेत्तदा **हेत्वसामर्थ्य**—हेतु-
प्रतिपादकस्य 'न ह्यत्रानूयाजान्यक्ष्यन् भवती'त्यस्य, **असामर्थ्य**—अस्वारस्य-
स्वारस्याभावः, प्रसज्येत । सिद्धान्ते तु अष्टावुपभृति गृह्णाति । प्रयाजानुयाजो-
भयार्थमन्यत्र प्रकृत्यादौ । अत्र आतिथ्याया तु अनूयाजाभावात् चतुर्गृहीता-
न्येव सर्वाणि न कचिदष्टाविति सार्थकं हेतुवचनमिति बोध्यम् ॥४१॥

### औपभृतजौहवयोः क्रमेणोभयानुभयार्थत्वाधिकरणम् ॥१६॥

## तत्रोत्पत्तिरविभक्ता स्यात् ॥४२॥

'चतुर्जुह्वां गृह्णात्यष्टावुपभृती' त्यत्र **उत्पत्तिः**—ग्रहणोत्पत्तिप्रति-
पादिका श्रुतिः, **अविभक्ता**-कार्यविशेषेणासंयुक्ता । अतः सर्वजौहवमौपभृतं
चाज्यं सर्वार्थं स्यात् । यद्यदाज्येन क्रियते तस्मै तद्भवितुमर्हति विशेषाभावा-
दित्यर्थः ॥४२॥

## सि० ॥ तत्र जौहवमनूयाजप्रतिषेधार्थम् ॥४३॥

न सर्वार्थं सर्वम् । यतस्तत्र 'यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्'
इति जौहववचनमनूयाजप्रतिषेधार्थम् ।'चतुर्जुह्वां गृह्णाती' त्युपदिष्टग्रहणस्य
फलाकाङ्क्षायां 'प्रयाजेभ्यस्तदित्यनेन प्रयाजार्थत्वे सिद्धे आर्थिकी अनूयाज-
निवृत्तिरिति भावः ॥४३॥

## औपभृतं तथेति चेत् ॥४४॥

'यदुपभृति गृह्णाति अनुयाजेभ्यस्तत्' इति शाखान्तरे श्रुतत्वात्
औपभृतमपि तथा अर्थात्प्रयाजसम्बन्धनिवर्तकमिति चेत्—॥४४॥

## स्याज्जुहूप्रतिषेधान्नित्यानुवादः ॥४५॥

'यज्जुह्वा गृह्णाति प्रयाजेभ्यस्तदि'त्यनेन जौह्वस्य अनूयाजसम्बन्धे अर्थान्निरस्ते ' यदष्टावुपभृति प्रयाजानुयाजेभ्यस्तत् ' इत्यनेन चौपभृतस्यो-भयार्थत्वे सिद्धे तस्याऽऽज्यस्य नित्यसिद्धौपभृतसम्बन्धानुवादकमुक्तशाखान्तर-वाक्यं स्यादित्यवगन्तव्यम् ॥४५॥

उपभृति द्विचतुर्गृहीताचरणाधिकरणम् ॥१७॥

## तदष्टसङ्ख्यं श्रवणात् ॥४६॥

' अष्टावुपभृती'ति श्रुतम् । अत्र त्रिधेयमाज्यद्रव्यमष्टसङ्ख्यम् । न चतुर्गृहीतद्वयम् । कुतः ? श्रवणात्-उक्तवाक्ये श्रुतत्वादित्यर्थः । अन्यथा लक्षणापत्तिरिति भावः ॥४६॥

## अनुग्रहाच्च जौह्वस्य ॥४७॥

' चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य त्रिरितः प्राचीनं प्रयाजान् यजति समानयते चतुर्गृहीतत्वाय ' इति ' चतुर्जुह्वा गृह्णाती'ति चतुर्गृहीतेन जौह्वेन प्रयाजत्रितये आघारे चानुष्ठिते अवशिष्टप्रयाजहोमाय तच्चतुर्गृहीत-मुर्वरितं न पर्याप्तम् । अल्पमेव तत् । अतस्तत्पूर्त्यर्थमौपभृतस्याज्यस्य समान-यनं श्रूयते । अल्पत्व हि स्वापेक्षयाऽधिकपरिमाणावधिकं भवति । तच्च 'अष्टा-वुपभृतीति सन्निहिताष्टत्वसङ्ख्यापेक्षम् । तस्मादल्पस्य जौह्वस्य समानीते-नौपभृतेनाज्येनानुग्रहस्य श्रवत्वात् अष्टसङ्ख्यमौपभृतं, न चतुर्गृहीतद्वय-मित्यर्थः ॥४७॥

## सि० ॥ द्वयोस्तु हेतुसामर्थ्यं श्रवणं च समानयने ॥४८॥

तुशब्दः पूर्वपक्षव्यावर्तकः । द्वयोश्चतुर्गृहीतयोरयं विधिरष्टावुपभृतीति । न अष्टत्वसङ्ख्याविशिष्टैकस्याज्यस्य । यस्मादातिथ्याया ' चतुर्गृहीतान्याज्यानि भवन्ति । न ह्यत्रानुयाजान् यक्ष्यन् भवती'ति चतुर्गृहीताज्यानेकत्वे अनूयाजा-

भावस्य हेतुत्वकथनं समर्थितं भवति। चतुर्गृहीतद्वयस्य पृथग्विधौ एकचतुर्गृहीतस्यानूयाजानिवृत्त्या निवृत्तौ सत्या चतुर्गृहीतं सर्वत्र समानमिति चतुर्गृहीतान्याज्यानीति बहुवचनमुपपन्नम्। अप्यत्वश्रवणं च समानयने—ग्रहणे पात्रान्तराभावद्योतकम्। एकस्मिन्नेव पात्रे द्वयोर्ग्रहणमिति भावः ॥४८॥

इति पूर्वमीमांसासूत्रवृत्तौ भाववोधिन्या
चतुर्थाध्यायस्य प्रथमः पादः ॥ श्रीः ॥

## अथ चतुर्थाध्यायस्य द्वितीयः पादः ॥

स्वरोश्छेदनाद्यप्रयोजकत्वाधिकरणम् ॥१॥

### स्वरुस्त्वनेकनिष्पत्तिः, स्वकर्मशब्दत्वात् ॥१॥

ज्योतिष्टोमे अग्नीषोमीयपशुमुपक्रम्य 'खादिरे तं बध्नाति' इत्युक्त्वा 'यूपस्य स्वरुं करोति। स्वरुणा पशुमनक्ती'ति श्रुतम्। तत्र पशोरञ्जनसाधनं काष्ठशकलं स्वरुरिति ज्ञेयम्। स च अनेकनिष्पत्तिः—यूपकरणक्रियानः पृथक्क्रियया निष्पत्तिरुत्पत्तिर्यस्यैवंभूत एव। न यूपानुनिष्पादी। कुतः? स्वकर्मशब्दत्वात्—स्वरुं करोतीति स्वीयोत्पत्तिज्ञापकपृथग्वाक्यश्रवणादित्यर्थः ॥१॥

### जात्यन्तराच्च शङ्कते ॥२॥

'नान्यस्य स्वरुं कुर्यात्, यदन्यस्य वृक्षस्य स्वरुं कुर्यादन्येऽस्य लोकमन्वारोहेयुर्यूपस्य स्वरुं करोति' इति स्वरुप्रकरणे तदर्थार्थवादवाक्ये यूपप्रकृतिवृक्षभिन्न वृक्षप्रकृतिकत्वशङ्काया दर्शनात्। यदि यूपानुनिष्पन्नः शकलः स्वरुः, तदेयं शङ्कैव नोदेति। सा चोद्भाव्य निरस्तेत्यन्येदृतत्। अतो जात्यन्तरशङ्कादर्शनादपि स्वतन्त्रक्रियानिष्पाद्यः स्वरुः, न यूपक्रियानुनिष्पाद्यः शकल इति ॥ २ ॥

## स्याज्जुहूप्रतिषेधान्नित्यानुवादः ॥४५॥

'यज्जुह्वा गृह्णाति प्रयाजेभ्यस्तदि'त्यनेन जौहवस्य अनूयाजसम्बन्धे अर्थान्निरस्ते ' यदष्टावुपभृति प्रयाजानुयाजेभ्यस्तत् ' इत्यनेन चौपभृतस्यो-भयार्थत्वे सिद्धे तस्याऽऽज्यस्य नित्यसिद्धौपभृतसम्बन्धानुवादकमुक्तशाखान्तर-वाक्यं स्यादित्यवगन्तव्यम् ॥४५॥

### उपभृति द्विचतुर्गृहीताचरणाधिकरणम् ॥१७॥

## तदष्टसङ्ख्यं श्रवणात् ॥४६॥

' अष्टावुपभृती'ति श्रुतम् । अत्र विधेयमाज्यद्रव्यमष्टसङ्ख्यम् । न चतुर्गृहीतद्वयम् । कुतः ' श्रवणात्-उक्तवाक्ये श्रुतत्वादित्यर्थः । अन्यथा लक्षणापत्तिरिति भावः ॥४६॥

## अनुग्रहाच्च जौहवस्य ॥४७॥

' चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्यं त्रिरिति प्राचीनं प्रयाजान् यजति समानयते चतुर्गृहीतत्वाय ' इति ' चतुर्जुह्वा गृह्णाती'ति चतुर्गृहीतेन जौहवेन प्रयाजत्रितये आघारे चानुष्ठिते अवशिष्टप्रयाजहोमाय तच्चतुर्गृहीत-मुर्वरितं न पर्याप्तम् । अल्पमेव तत् । अतस्तत्पूर्त्यर्थमौपभृतस्याज्यस्य समान-यनं श्रूयते । अल्पत्वं हि स्वापेक्षयाऽधिकपरिमाणावधिकं भवति । तच्च 'अष्टा-वुपभृती'ति सन्निहिताष्टत्वसङ्ख्यापेक्षम् । तस्मादल्पस्य जौहवस्य समानीते-नौपभृतेनाज्येनानुग्रहस्य श्रुतत्वात् अष्टसङ्ख्यमौपभृतं, न चतुर्गृहीतद्वय-मित्यर्थः ॥४७॥

## सि० ॥ द्वयोस्तु हेतुसामर्थ्यं श्रवणं च समानयने ॥४८॥

तुशब्दः पूर्वपक्षव्यावर्तकः । द्वयोश्चतुर्गृहीतयोरयं विधिरष्टावुपभृतीति । न अष्टत्वसङ्ख्याविशिष्टैकस्याज्यस्य । यस्मादातिथ्यायां 'चतुर्गृहीतान्याज्यानि भवन्ति । न ह्यत्रानुयाजान् यक्ष्यन् भवती'ति चतुर्गृहीताज्यानेकत्वे अनूयाजा-

भावस्य हेतुत्वकथनं समर्थितं भवति। चतुर्गृहीतद्वयस्य पृथग्विधौ एकचतुर्गृहीतस्यानूयाजानिवृत्त्या निवृत्तौ सत्या चतुर्गृहीतं सर्वत्र समानमिति चतुर्गृहीतान्याज्यानीति बहुवचनमुपपन्नम्। अष्टत्वश्रवणं च समानयने—ग्रहणे पात्रान्तराभावद्योतकम्। एकस्मिन्नेव पात्रे द्वयोर्ग्रहणमिति भावः ॥४८॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां
चतुर्थाध्यायस्य प्रथमः पादः ॥ श्रीः ॥

---

# अथ चतुर्थाध्यायस्य द्वितीयः पादः ॥

स्वरोश्छेदनाद्यप्रयोजकत्वाधिकरणम् ॥१॥

## स्वरुस्त्वनेकनिष्पत्तिः, स्वकर्मशब्दत्वात् ॥१॥

ज्योतिष्टोमे अग्नीषोमीयपशुमुपक्रम्य 'खादिरे तं बध्नाति' इत्युक्त्वा 'यूपस्य स्वरुं करोति। स्वरुणा पशुमनक्ती'ति श्रुतम्। तत्र पशोरञ्जनसाधनं काष्ठशकलं स्वरुरिति ज्ञेयम्। स च **अनेकनिष्पत्तिः**—यूपकरणक्रियातः पृथक्क्रिययानिष्पत्तिरुत्पत्तिर्यस्यैवंभूत एव। न यूपानुनिष्पादी। कुतः? **स्वकर्मशब्दत्वात्**—स्वरुं करोतीति स्वीयोत्पत्तिज्ञापकपृथग्वाक्यश्रवणादित्यर्थः ॥१॥

## जात्यन्तराच्च शङ्कते ॥२॥

'नान्यस्य स्वरुं कुर्यात्, यद्यन्यस्य वृक्षस्य स्वरुं कुर्यादन्येऽस्य लोकमन्वारोहेयुर्यूपस्य स्वरुं करोति' इति स्वरुप्रकरणे तदीयार्थवादवाक्ये यूपप्रकृतिवृक्षभिन्न वृक्षप्रकृतिकत्वशङ्काया दर्शनात्। यदि यूपानुनिष्पन्नः शकलः स्वरुः, तदेयं शङ्कैव नोदेति। सा चोद्भाव्यनिरस्येत्यन्येद्तत्। अतो जात्यन्तरशङ्कादर्शनादपि स्वतन्त्रक्रियानिष्पाद्यः स्वरुः, न यूपक्रियानुनिष्पाद्यः शकल इति ॥ २ ॥

## सि०॥ तदेकदेशो वा, स्वरुत्वस्य तन्निमित्तत्वात् ।३॥

वेत्यनेन पक्षव्यावृत्तिः । तदेकदेशः–यूपस्यैकदेशः–शकलं स्वरुः । कुतः ? स्वरुत्वस्य– स्वरुपदवाच्यस्य तन्निमित्तत्वात्– यूपनिमित्तत्वात् । 'स्वरुणा पशुमनक्ती' ति विध्यन्यथानुपपत्त्या 'यूपस्य स्वरुं करोती' त्यत्र धात्वर्थेन सिध्दस्वरुक्रियामनूद्य स्वरौ यूपप्रकृतिकत्वं यूपशब्देन विधीयत इति यूपप्रकृतिकः– यूपक्रियानुनिष्पन्नः शकलः स्वरुः । तथा च स्वकर्मशब्दत्वादिति हेतुरसिध्द इति भावः ॥३॥

## शकलश्रुतेः ॥४॥

'यः प्रथमः शकलः परापतेत्स स्वरुः' इति श्रुतेः यूपार्थं छिद्यमानात्काष्ठात् यः प्रथमः शकलः पतेत् सः स्वरुः कर्तव्य इति तस्य यूपानुनिष्पत्तिः सुस्पष्टा प्रतीयत इत्युदाहृतार्थवादस्नेन निरस्त इति भावः ॥४॥

## प्रतियूपं च दर्शनात् ॥५॥

'यथानुपूर्व्यं स्वरुभिः पशून् समज्य स्वे स्वे मध्यमे रशनागुणे स्वं स्वं यूपशकलमुपगूहति' इति यूपैकादशिन्या प्रतियूप स्वरुदर्शनादपि न पृथक्प्रयत्नसाध्यः स्वरुः ॥५॥

## आदाने कर्मशब्दः ॥६॥

यूपच्छेदनेन स्वरोर्निष्पन्नत्वात् 'स्वरुं करोती' ति न स्वरूत्पत्त्यर्थकः कृञ्धातुः । अपि तु आदाने–स्वरोरुपसङ्ग्रहे, कर्मशब्दः–कृञ्धातुः । सङ्ग्रहस्य असिद्धत्वात्तस्मिन् धातोरुपचार इति भावः ॥६॥

### शाखाया आहार्यत्वाधिकरणम् ॥२॥

## शाखायां तत्प्रधानत्वात् ॥७॥

दर्शपूर्णमासयोः शाखामुद्दिश्य– 'प्राचीमाहरति । उदीचीमाहरती' त्यादि श्रूयते । तत्र प्राच्यादिशब्दः शाखायां–शाखावाची । न दिग्वाची । कुतः ? तस्या आहर्तुमशक्यत्वात् ।'शाखाया उद्देश्यत्वेन प्राधान्यात्, प्रधानस्यानुवादत्वेन न तत्र लक्षणा दोषावहेति भावः ॥७॥

छेदनस्य शाखाप्रयुक्ताधिकरणम् ॥३॥

## शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्यात् वैषम्यं तत् ॥८॥

दर्शपूर्णमासप्रकरणे- ' मूलतः शाखां परिवास्य उपवेषं करोति ' इति श्रुतम् । तत्र **शाखायाम्**–शाखाच्छेदनप्रतिपादकवाक्ये, उपवेषेणच्छेदनस्य विभागः--साध्यसाधनसम्बन्धो, न स्यात् । कुतः ? **तत्प्रधानत्वात्**–तस्याः शाखायाः शाखामिति द्वितीयाश्रुत्या प्राधान्यस्य प्रतिपादितत्वात् । यद्यपि उपवेषमिति तत्रापि द्वितीयाश्रुतिरस्ति । तथापि उपवेषस्य न छेदनक्रियाकर्मत्वं, किन्तु करोतिकर्मत्वमेवेति वैषम्यम् । अतश्छेदनं न तदर्थम् । अपि तु शाखार्थमिति सैव छेदनस्य प्रयोजिका, नोपवेष इति भावः ॥८॥

## श्रुत्यपायाच्च ॥९॥

' शाखया वत्सानपाकरोती'त्यादौ यच्छाखाग्रहणं तत्र न मूलस्य व्यापारोऽस्ति । अतः **श्रुतेः**--शाखापदशक्यार्थस्य, तत्र **अपायः**--अभावः । न हि शाखा तदवयवरूपं मूलं चेत्युभयं शक्यार्थः शाखाशब्दस्येति भावः ॥९॥

शाखाप्रहरणस्य प्रतिपत्तिकर्मत्वाधिकरणम् ॥४॥

## हरणे तु जुहोतिर्योगसामान्याद्द्रव्याणां चार्थशेषत्वात् ॥१०॥

**हरणे तु जुहोतिः**– ' सूक्तवाकेन प्रस्तरं प्रहरती ' त्यत्र प्रस्तरस्य मान्त्रवर्णिकदेवतासम्बन्धात् प्रपूर्वकहरति धातुर्यागार्थक इति तृतीये स्थितम् । तथा च तत्रैव श्रुते- ' सह शाखया प्रस्तरं प्रहरतीति वाक्ये **योगसामान्यात्**–यथा प्रस्तरस्य धात्वर्थः यागसाधनत्वादर्थकर्मत्वं तथा शाखाया अपि तृतीयया तत्साधनत्वश्रवणात्, द्रव्याणां च **अर्थशेषत्वात्**–यागे शेषत्वस्य सिद्धत्वात्, शाखाप्रहरणमर्थकर्मैव, न प्रतिपत्तिरिति ॥१०॥

## सि०॥ प्रतिपत्तिर्वा, शब्दस्य तत्प्रधानत्वात् ॥११॥

शाखाप्रहरणं प्रतिपत्तिकर्मैव । कुतः ? ' शाखया वत्सानपाकरोतीति वत्सापाकरणादौ शाखाया उपयुक्तत्वेन तस्याः प्रतिपत्त्यपेक्षत्वात् शब्दस्य तत्प्रधानत्वाच्च । प्रस्तरमिति द्वितीयया प्रस्तरस्येव तुल्यक्रियान्वयित्वार्थबोधक-सहयोगेन शाखाया अपि कर्मत्वं सिध्यतीति द्वितीयाविभक्त्यभावेऽपि शब्दस्य—शाखाशब्दस्य, तत्प्रधानत्वात्—शाखाप्राधान्यज्ञापकत्वादपि तत्प्रह-रणस्य प्रतिपत्तित्वं सिध्यतीति भाव ॥११॥

## अर्थेऽपीति चेत् ॥१२॥

ननु, ' सक्तून् जुहोती ' त्यत्र अर्थे—परार्थे, गुणभावेऽपि द्वितीया श्रूयते । तद्वदत्रापि गुणत्वं स्यादिति चेत् ॥१२॥

## न तस्यानधिकारात् अर्थस्य च कृतत्वात् ॥१३॥

नात्र सक्तुवद्गुणत्वम् । कुत ? तस्य-सक्तो , अनधिकारात्-अन्यत्रा-नुपयुक्तत्वात । शाखया तु अर्थस्य— वत्सापाकरणस्य, कृतत्वात् प्रतिपत्ति-मात्रापेक्षा तस्या इति भावः ॥ १३ ॥

प्रणीतानि नयनस्य प्रतिपत्तिकर्मत्वाधिकरणम् ॥ ५ ॥

## उत्पत्त्यसंयोगात्प्रणीतानामाज्यवद्विभागः स्यात् ॥१४॥

दर्शपूर्णमासयो. ' अपः प्रणयति । प्रणीताभिर्हवींषि संयौति । अन्त-र्वेदि प्रणीतानि नयति ' इत्याम्नायते । तत्र हवि· संयवन- पुरोडाशार्थस्य पिष्टस्य पिण्डीकरण, वेद्या निनयं चेत्युभयमपि प्रणयनस्य प्रयोजकम् । तदर्थंतदर्थे चापाप्रणयनं कार्यमिति यावत् । न निनयन प्रतिपत्तिः । कुत ? उत्पत्त्यसंयोगात्— ' अप. प्रणयतीत्युत्पत्तिवाक्ये प्रणीतानामपामसंयोगात्-कार्यविशेषस्याश्रवणात्, तासा ' सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम् '

इति यद्विभज्य समं हविः संयवने अन्तर्वेदि निनयने च विनियोगः स्यात् इति ॥१४॥

## सि० ॥ संयवनार्थानां वा प्रतिपत्तिरितरासां तत्प्रधानत्वात् ॥१५॥

प्रणीताभिरिति तृतीयया संयवनमेव प्रणीतानामपां प्रधानं प्रयोजनमिति निःसन्दिग्धमवगम्यते । प्रणीता इति द्वितीयया च कर्मत्वं संस्कार्यत्वं प्रतीयते । अतः **संयवनार्थानां**—संयवनमुख्यकार्यशेषभूतानामितरासां तासामपां तत्रान्तर्वेदिनिनयने कर्मत्वात् निनयनं तत्प्रतिपत्तिरेवेति भावः ॥१५॥

दण्डदानस्यार्थककर्मत्वाधिकरणम् ॥६॥

## प्रासनवन्मैत्रावरुणस्य दण्डप्रदानं कृतार्थत्वात्॥१६॥

'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति' इति ज्योतिष्टोमे श्रुतं मैत्रावरुणाय दण्डप्रदानं 'चात्वाले कृष्णविषाणं प्रास्यती' ति कण्डूयनोपयुक्तस्य कृष्णविषाणस्य चात्वाले प्रासनवत्' दण्डेन दीक्षयती' ति दीक्षायामुपयुक्तस्यार्थात्तच्छेषभूतस्य दण्डस्य कृतार्थत्वेन प्रतिपत्तिरेवेति पूर्वः पक्षः ॥१६॥

## सि०॥ अर्थकर्म वा कर्तृसंयोगात् स्रग्वत् ॥१७॥

**अर्थकर्म वा**—प्रधानकर्मैवेदं दण्डप्रदानम् । न प्रतिपत्तिः । कुतः ? **कर्तृसंयोगात्** । दण्डी प्रैषानन्वाह ' इति प्रैषादिकर्मकर्तुः पुरुषस्य मैत्रावरुणस्योक्तवाक्ये मैत्रावरुणायेति चतुर्थ्यर्थसम्प्रदानत्वेन श्रवणात् । सम्प्रदानत्वं च क्रियोद्देश्यत्वम् । उद्देश्यत्वप्रधानत्वयोः समनैय्यत्यं सुप्रसिद्धमेवेति दण्डदानं मैत्रावरुणांग-तच्छेषभूतमित्यर्थः । दण्डमिति द्वितीया तु' तथायुक्तंचानीप्सितम् इति सूत्रानुसारेण विज्ञेयेति भावः ॥१७॥

## कर्मयुक्ते च दर्शनात् ॥१८॥

'दण्डी प्रैषानन्वाह' इति प्रैषादिकर्मयुक्ते मैत्रावरुणे दण्डस्य दर्शनादपिदण्डप्रदानमर्थकर्म । न प्रतिपत्तिः । तथात्वे कर्मान्तराङ्गभावेन तस्य श्रवणं न स्यात् । तदत्रास्तीति सम्प्रदर्शितमेवेति भावः ॥१८॥

प्रासनस्य प्रतिपत्तिकर्मत्वाधिकरणम् ॥७॥

## उत्पत्तौ येन संयुक्तं तदर्थं तच्छ्रुतिहेतुत्वात् तस्यार्थान्तरगमने अशेषत्वात्प्रतिपत्तिः स्यात् ॥१९॥

'कृष्णविषाणया कण्डूयते' इत्युत्पत्तिवाक्ये कृष्णविषाणं तृतीयाश्रुत्या येन पदार्थेन साधनतया संयुक्तं तदर्थं तदङ्गमेव तत् । कुतः ? श्रुतिहेतुत्वात्- श्रुतिप्रमाणकत्वात्तदङ्गत्वस्य । तस्यैव पुनर्वाक्यान्तरेण पदार्थान्तरसम्बन्धे ज्ञातेऽपि अशेषत्वात्- पुनरङ्गत्वासम्भवात्, प्रतिपत्तिरेव स्यादित्यर्थः ॥ १९ ॥

अवभृथगमनस्य प्रतिपत्तिकर्मत्वाधिकरणम् ॥ ८ ॥

## सौमिके च कृतार्थत्वात् ॥ २० ॥

ज्योतिष्टोमे 'वारुणेनैककपालेन अवभृतमभ्यवयन्ति' इत्यवभृतेष्टिः श्रूयते । तत्सन्निधौ 'वरुणगृहीतं वा एतद् यज्ञस्य यदृजीषं यद् ग्रावाणः यदौदुम्बरी यदधिषवणफलके तस्माद्यत्किञ्चित्सोमलिप्तं द्रव्यं तेनावभृथं यन्ति' इत्याम्नायते । तत्र यदिदं सौमिके अवभृथे सोमलिप्तपात्राणां नयनम् । तत् प्रतिपत्तिकर्म । कुतः ? कृतार्थत्वात्-सञ्जातकार्यत्वात् इति ॥ २० ॥

## पूर्वपक्षः॥ अर्थकर्म वा अभिधानसंयोगात् ॥२१॥

अर्थकर्म वा-प्रधानकर्मैव । कुतः ? अभिधानसंयोगात्-' तेनावभृथं यन्ती' ति अङ्गत्वबोधकतृतीयायुक्तत्वात् ॥२१॥

## पू० नि० ॥ प्रतिपत्तिर्वा तन्न्यायत्वात् देशार्थाऽवभृथश्रुतिः ॥२२॥

सोमलिप्तपात्रनयने प्रतिपत्तिरेव । नार्थकर्म । **तन्न्यायत्वात्**—पूर्वोक्तन्यायेनेत्यर्थः । अवभृथश्रुतिस्तु **देशार्था**—देशलक्षका । ' सहयुक्त इति तृतीयाश्रुतिरिति भावः ॥२२॥

**कर्तृदेशकालविधीनां नियमार्थत्वाधिकरणम् ॥९॥**

## कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात् ॥२३॥

" पशुबन्धस्य यज्ञक्रतोः षड् ऋत्विजः । दर्शपूर्णमासयोश्चत्वार ऋत्विजः । चातुर्मास्यानां क्रतूनां पञ्च ऋत्विजः । अग्निहोत्रस्यैको ऋत्विक् । सौम्यस्याध्वरस्य सप्तदश ऋत्विजः । सत्रस्यैकविंशतिपरमा ऋत्विजः । तथा समे दर्शपूर्णमासाभ्यां यजेत । प्राचीनप्रवणे वैश्वदेवेन यजेत । एवं पौर्णमास्यां पौर्णमास्यया यजेत । अमावास्यायाममावास्यया यजेत । वसन्ते ज्योतिषा यजेत " इत्याम्नायते । तत्र देशकालर्त्विजाम् **अचोदनम्**—न विधिः । कुतः ? **प्रयोगे**—अनुष्ठाने, तेषां **नित्यसमवायात्**—तैर्विना कर्मानुष्ठानासम्भवेन नित्यमेव प्राप्तत्वात् इति ॥२३॥

## सि० ॥ नियमार्था वा पुनः श्रुतिः ॥२४॥

विशेषतो नियमार्थं पुनः विधौ **श्रुतिः**—विधिश्रवणमित्यर्थः । तेषां तत्र तत्र नियमविधिरिति भावः ॥२४॥

**द्रव्ये गुणविधानस्य नियमार्थत्वाधिकरणम् ॥१०॥**

## तथा द्रव्येषु गुणश्रुतिरुत्पत्तिसंयोगात् ॥२५॥

' वायव्यं श्वेतमालभेत भूतिकामः । सोमारौद्रं घृते चरुं निर्वपेत् शुक्लानां व्रीहीणां ब्रह्मवर्चसकामः । नैर्ऋतं चरुं निर्वपेत् कृष्णानां व्रीहीणाम् ' इत्याम्नायते । तत्र **द्रव्येषु**—पश्वादिषु, **गुणश्रुतिः**—श्वेतादिश्रुतिः, **तथा**—नियमविध्यर्था । कुतः ? **उत्पत्तिसंयोगात्**—क्रियोत्पादकद्रव्येण सम्बन्धात्, तत्परिच्छेदनियमइति भावः ॥२५॥

अवघातादिसंस्कारविधानस्य नियमार्थताधिकरणम् ॥११॥

## संस्कारे च तत्प्रधानत्वात् ॥ २६ ॥

दर्शपूर्णमासयोः-' व्रीहीनवहन्ति । तण्डुलान् पिनष्टी' ति दृष्टफलक-द्रव्यसंस्कारेऽपि तथानियमविधिरेव । तत्प्रधानत्वात्—द्रव्यप्रधाननियमविधेः सम्भवात् ॥ २६ ॥

यागपदार्थनिरूपणाधिकरणम् ॥ १२ ॥

## यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ॥ २७ ॥

द्रव्यदेवते, तयोः सम्बन्धश्च यजतिचोदना । यागपदार्थ इत्यर्थः । कुतः ? एतत्समुदाये कृतार्थत्वात्—वृद्धव्यवहारे ज्ञातशक्तित्वात्, देवतोद्देश्यक-द्रव्यत्यागरूपा क्रिया यजतिधात्वर्थ इति तात्पर्यम् ॥२७॥

होमपदार्थनिरूपणाधिकरणम् ॥ १३ ॥

## तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात् ॥ २८ ॥

तदुक्ते— प्रागुक्ते यजतिधात्वोः शक्यार्थे, द्रव्यप्रतियोगिकाग्नि-संयोगाधिके ' श्रवणात्-व्यवहारात्, शक्यतावच्छेदकमासेचनमधिकं यस्मिन् इत्थंभूतः स एव जुहोतिः– जुहोतिधात्वर्थः स्यात् । द्रव्यदेवतासम्बन्धविशिष्ट-द्रव्यप्रतियोगिकाग्निसंयोगात्मको व्यापारो जुहोत्यर्थ इति भावः ॥२८॥

क्षेपकं— दानपदार्थनिरूपणाधिकरणम् ॥ १४ ॥

## ददातिरुत्सर्गपूर्वकः परस्वत्वेन सम्बन्धः ॥२९॥

स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनं ददातिः-दानपदार्थ इत्यर्थः ॥२९॥

बर्हिष आतिथ्यादिसाधारण्याधिकरणम् ॥१५॥

## विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात् ॥३०॥

ज्योतिष्टोमे—गवादिना क्रीतस्य हविर्धानशकटसंस्थापितस्य सोमस्य प्राचीनवंशमण्डपप्रत्यानयनसमये तदभिमुखं या इष्टिः क्रियते सा आतिथ्येष्टिरित्युच्यते । तस्यामिष्टौ आश्वबालाख्यस्य तृणविशेषस्य प्रस्तरो विहितः । तत्रेदं श्रूयते–' यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य ' इति । अतिथ्येष्ट्यनन्तरं त्रिषु दिनेषु क्रियमाणा उपसद्धोमाः । चतुर्थे औपवसथ्येऽह्नि अग्नीषोमीयः समनुष्ठीयते । एवं स्थिते ' यदातिथ्याया बर्हिस्तदुपसदाम् '– इत्यत्र तच्छब्दार्थो लक्षणया तत्सदृश इत्येव वाच्यः । न तदेवेति । कुतः ? विधेः–विधिबोधितातिथ्याश्वबालसम्बन्धस्य, कर्मापवर्गित्वात्–कर्मसमाप्तिपर्यन्तं स्थायित्वात्, अर्थान्तरे–क्रियान्तरसम्बन्धविधौ सति, विधिप्रदेशः–पूर्वविधिविहितस्य अश्वबालादेः प्रदेशः–अतिदेशः, इत्येवार्थो ग्राह्यः । किञ्च, आतिथ्याविहितं बर्हिरन्यत्रोपसदादौ विधीयते चेत्तस्या विधानमनर्थकं स्यात् । तस्यामुपयुक्तमन्यत्र विधीयेत चेद्विनियुक्तविनियोगरूपो विरोधः प्रतिपत्तिर्वा प्रसज्येत । तस्मात्तत्सदृशमित्येवार्थो लक्षणया वाच्य इति भावः ॥३०॥

## सि०॥ अपि वोत्पत्तिसंयोगादर्थसम्बन्धोऽविशिष्टानां प्रयोगैकत्वहेतुः स्यात् ॥३१॥

अपि वेति पक्षव्यावृत्तिः । उत्पत्तिसंयोगात्–उत्पत्तिवाक्ये श्रुतस्यैव बर्हिषः अर्थसम्बन्धः–तत्तत्कर्मसम्बन्धः अयं, अविशिष्टानां–सर्वेषां वाक्यानामर्थः प्रयोगस्य—अनुष्ठानस्य, एकत्वे—बर्हिस्तरणादिकं सकृदनुष्ठेयमित्यत्र, हेतुः स्यात् । तत्सदृशमित्यर्थे तु न विधाविति लक्षणादोषप्रसक्तिः । अतस्तदित्यनेनोक्तसर्वसाधारण्यमेवात्र विधेयम् । तथा च यदातिथ्यायां बर्हिर्विधीयते तन्न केवलमातिथ्येष्ट्यर्थम् । अपि तूपसद्धोमार्थमग्नीषोमीयार्थं च तदेवेति विधिवाक्यस्यार्थ इति भावः ॥३१॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्या
चतुर्थाध्यायस्य द्वितीयः पादः ॥श्रीः॥

# अथ चतुर्थाध्यायस्य तृतीयः पादः ॥

## द्रव्यसंस्कारकर्मणां क्रत्वर्थत्वाधिकरणम् ॥१॥

## द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात् ॥१॥

इदमाम्नायते । 'यस्य खादिरः स्रुवो भवति स छन्दसामेव रसेनावद्यति सरसा अस्य आहुतयो भवन्ति । यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति । यस्याश्वत्थी उपभृद्भवति ब्रह्मणैवास्यान्नमवरुन्धे । यस्य वैकङ्कती ध्रुवा भवति प्रत्येवास्याऽऽहुतयस्तिष्ठन्ति । अथो प्रैव जायते यस्यैवंरूपाः स्रुचो भवन्ति । सर्वाण्येवैनं रूपाणि पशूनामुपतिष्ठन्ते । नास्य अपरूपमात्मन् जायत इति । तथा ज्योतिष्टोमसंस्कारे फलश्रुतिः—'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' । तथा—'केशश्मश्रू वपते । दतो धावते । नखानि निकृन्तते । स्नाति । मृता वा एषा त्वगमेध्या वाऽस्यैतदात्मनि शमलं तदेवोपहते मेध्य एव मेधमेवमुपैति' । कर्मणि श्रूयते—'अभीपू वा एतौ यज्ञस्य यदाघारौ । चक्षुषी वा एतौ यज्ञस्य यदाज्यभागौ । यत् प्रयाजानुयाजा इज्यन्ते । वर्म वा एतद्यज्ञस्य क्रियते । वर्म यजमानस्य भ्रातृव्याभिभूत्यै' इति । अत्र द्रव्यसंस्कारकर्मसु—'यस्य पर्णमयी०, यदाङ्क्ते, यत्प्रया०' इत्यादिषु द्रव्यसंस्कारप्रधानकर्मविधायकवाक्येषु **फलश्रुतिः**—अपापश्लोकादिफलश्रवणम्, **अर्थवादः**—प्ररोचनार्था स्तुतिः; न विधिरित्यर्थः । कुतः ? तेषां द्रव्यसंस्कारकर्मणां **परार्थत्वात्**—वाक्येन प्रकरणेन च यथायथं क्रत्वङ्गत्वनिश्चयात् ॥१॥

## उत्पत्तेश्चातत्प्रधानत्वात् ॥२॥

उत्पत्तेः—उत्पत्तिवाक्यस्य, अतत्प्रधानत्वात्—पुरुषप्रधानत्वाभावादपि फलश्रवणमर्थवाद एव । न चात्र 'न स पापं श्लोकं शृणोति'ति पुरुषमुद्दिश्य फलश्रवणात् कथमर्थवाद इति वाच्यम् । यतः—

कुर्यात् क्रियेत कर्तव्यं भवेत् स्यादिति पञ्चमम् ।
एतत्स्यात्सर्ववेदेषु नियतं विधिलक्षणम् ॥

इत्युक्तान्यतमविधिलक्षणस्य यस्य पर्णमयीति वाक्ये अभावात् भवति शृणोतीति वर्तमानार्थकलट्प्रत्ययान्तपदश्रुतेरर्थवाद एवेति भावः ॥२॥

## फलं तु तत्प्रधानायाम् ॥३॥

'खादिरं वीर्यकामस्य यूपं कुर्यात्' इत्यादौ तु विधिश्रुतेः वीर्यादि-फलस्य विधानं युक्तमेव कुर्यादिति विधिप्रधानायां श्रुताविलर्थः ॥३॥

### नैमित्तिकानामनित्यार्थत्वाधिकरणम् ॥२॥

## नैमित्तिके विकारत्वात् क्रतुप्रधानमन्यत्स्यात् ॥४॥

ज्योतिष्टोमे 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्' इत्यादि नैमित्तिकं साम श्रुतम् । तथा दर्शपूर्णमासयोः—'गोदोहनेन पशुकामस्य प्रणयेत्, कांस्येन ब्रह्मवर्चसकामस्य, मार्त्तिकेन प्रतिष्ठाकामस्य' इति नैमित्तिकानि अपां प्रणयनानि श्रुतानि । तत्र बार्हद्गिरसामगोदोहनादौ नैमित्तिके अनित्यत्वेन विधीयमाने सति **क्रतुप्रधानं**—क्रतुः प्रधानं यस्येति व्युत्पत्त्या क्रत्वङ्गं नित्यमन्यदेव स्यात् चमसादि । कुत ? गोदोहनादेर्**विकारत्वात्**—अनित्यत्वादित्यर्थः ॥४॥

### दध्यादेर्नित्यनैमित्तिकोभयार्थत्वाधिकरणम् ॥३॥
### ( संयोगपृथक्त्वन्यायः । )

## एकस्य तूभयत्वे संयोगपृथक्त्वम् ॥५॥

'दध्ना जुहोति । दध्नेन्द्रियकामस्य जुहुयात्' इत्यग्निहोत्रप्रकरणे, 'खादिरे पशुं बध्नाति । खादिरं वीर्यकामस्य यूपं कुर्यात्' इत्यग्नीषोमीयपशौ चाम्नायते । तत्रैकद्रव्यस्योभयत्वे-नित्यत्वे काम्यत्वे च **संयोगपृथक्त्वं**—संयुज्यते अनेनेति व्युत्पत्त्या संयोगस्य विधिवाक्यस्य पार्थक्यं कारणमित्यर्थः । दध्ना जुहोतीत्येकम् । दध्नेन्द्रियकामस्येत्यपरम् ॥५॥

## शेष इति चेत् ॥६॥

ननु, दध्ना जुहोतीति होमसाधनत्वेन विहितस्य दध्नः इन्द्रियफलबोधकमपरं वाक्यं तच्छेषः। तथा चैकमेतद्वाक्यं, न तद्भिन्नमिति चेत्-॥६॥

## नार्थपृथक्त्वात् ॥७॥

न एकमिदं वाक्यम्। अपि तु भिन्नमेव। कुतः? अर्थपृथक्त्वात्। एकस्मिन् होम उद्देश्यादृष्टफलकः, अपरस्मिन् दृष्टफलमिन्द्रियमुद्देश्यम्। एवमुद्देश्यभेदेनार्थैकत्वाभावान्नैकं वाक्यमिदमपि तु भिन्नं वाक्यद्वितयमेवेति भावः ॥७॥

पयोव्रतादीनां क्रतुधर्मताधिकरणम् ॥४॥

## द्रव्याणां तु क्रियार्थानां संस्कारः क्रतुधर्मः स्यात् ॥८॥

ज्योतिष्टोमे 'पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति आम्नातम्। तत्रेदं पयोभक्षणादिव्रतं क्रत्वर्थम्। न पुरुषार्थम्। कुतः? यतः क्रियार्थानां—ज्योतिष्टोमादिष्वधिकृताना पुरुषादिद्रव्याणां, संस्कारोऽयं क्रतुसन्निधिपाठेन प्रयोगविधिपरिगृहीतः। अतः क्रतुधर्मः—क्रत्वर्थः स्यादिति भावः ॥८॥

## पृथक्त्वाद् व्यवतिष्ठेत ॥९॥

ब्राह्मणादिप्रयोगाणां पृथक्त्वात् ब्राह्मणस्येत्यादि व्यवतिष्ठेत। ब्राह्मणकर्तृके पय एवेत्यादिर्नियम इति भावः ॥९॥

( अथाधिकरणत्रयं विश्वजिन्न्यायः। )

विश्वजिदादीनां सफलत्वाधिकरणम् ॥५॥

## चोदनायां फलाश्रुतेः कर्ममात्रं विधीयेत, न ह्यशब्दं प्रतीयते ॥१०॥

'सर्वेभ्यो वा एष देवेभ्यः सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्यः आत्मानमागुरते, यः सत्रायागुरते, स विश्वजिता अतिरात्रेण सर्वपृष्ठेन सर्वस्तोमेन सर्ववेदसदक्षिणेन यजेत' इत्यामनन्ति । तत्र **चोदनायाम्**--उक्तविधिवाक्ये, फलस्याश्रवणात् **कर्ममात्रं**--केवलं कर्मैव, **विधीयेत**--उपदिश्यते इत्यर्थः । **हि**--यतः, **अशब्दं**--शब्दागम्यम्, अस्मिन् शास्त्रे न प्रतीयते-शिष्टैर्नाङ्गीक्रियत इति भावः ॥१०॥

## सि०॥ अपि वाऽऽम्नानसामर्थ्याच्चोदनार्थेन गम्येत, अर्थानामर्थवत्त्वेन वचनानि प्रतीयन्तेऽर्थतोऽसमर्थानामानन्तर्येण सम्बन्धस्तमाच्छ्रुत्येकदेशः सः ॥११॥

अपि वेति पूर्वसूत्रोक्तार्थव्यावृत्तिः । **आम्नानसामर्थ्यात्**--यजेतेति लिङ्प्रत्ययान्तपदघटितवाक्यपाठात्, **चोदनार्थेन**--आख्यातवाच्यभावनया पुरुषप्रवृत्तिरूपया, **गम्येत**--फलं कल्पनीयमित्यर्थः । यतः, **अर्थानां**--लिङ्वाच्यशब्दभावनानां पुरुषप्रवृत्तिरूपार्थवत्त्वमितरवचनेषु व्यक्तं **प्रतीयते** । अतोऽर्थतः **असमर्थानां**--फलवाचकपदस्याभावात् फलबोधासमर्थानां वाक्यानाम्, **आनन्तर्येण**--स्वसमीपवृत्तिवाक्यघटकफलवाचकपदेन प्रकृतवाक्यस्य सम्बन्धः कार्यः । अत एव वेदघटकपदस्यैव योजनात् श्रुत्येकदेशः सः । न लौकिकवाक्यत्वशङ्काऽत्र कार्येति भावः ॥११॥

## वाक्यार्थश्च गुणार्थवत् ॥१२॥

'इन्द्राय राज्ञे सूकर' इति यथा वाक्यान्तरस्थविधिशब्देन गुणविधानं भवति । तथा फलविधानमपि भवितुमर्हति । यथा वा यावतोऽश्वान् प्रतिगृह्णीयादित्यस्य प्रतिग्राहयेदित्येवं वाक्यान्यथात्वकरणरूपव्यवधारणकल्पनमाश्रितं, तद्वदिहापि द्रष्टव्यमिति भावः ॥१२॥

विश्वजिदादेरेकफलत्वाधिकरणम् ॥६॥

## तत्सर्वार्थमनादेशात् ॥१३॥

तत्–विश्वजिद्यागाख्यं कर्म, सर्वफलार्थं स्यात् । कुतः ? अनादेशात्–फलविशेषस्य अश्रवणादित्यर्थः ॥१३॥

## एकं वा चोदनैकत्वात् ॥१४॥

एकमेव फलं स्यात् । न सर्वम् । कुतः ? चोदनैकत्वात् एको विधिरेकं फलमपेक्षत इति भावः ॥१४॥

विश्वजिदादेः स्वर्गफलकत्वाधिकरणम् ॥७॥

## सः स्वर्गः स्यात्सर्वान् प्रत्यविशिष्टत्वात् ॥१५॥

सः–निरतिशयसुखस्वरूपः शास्त्रलोकप्रसिद्धः स्वर्ग एवास्य विश्वजिद्यागस्य फलं स्यात् । कुतः ? सर्वान् प्रति अविशिष्टत्वात्—साधारणत्वात्, सर्वाभिलषणीयत्वादिति यावत् ॥१५॥

## प्रत्ययाच्च ॥१६॥

तस्य सर्वाभिलषणीयत्वेन प्रत्ययात्–लोकानुभवादपि, स्वर्ग एवास्य यागस्य फलमिति प्रसिध्यति ॥१६॥

रात्रिसत्रस्यार्थवादिकफलकत्वाधिकरणम् ॥८॥

( रात्रिसत्रन्यायः । )

## क्रतौ फलार्थवादमङ्गवत् कार्ष्णाजिनिः ॥१७॥

रात्रिसत्राणि प्रकृत्य 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इति श्रूयते । तत्र क्रतौ–रात्रिरूपक्रतुप्रतिपादकवाक्ये, प्रतिष्ठादफलबोधकं वाक्यमर्थवाद-स्तावकमित्यर्थः । न फलविधिः । 'यस्य खादिरः स्रुवो भवति सच्छन्दसामेव रसेनावद्यति' 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती'ति स्रुवादेः क्रत्वङ्गत्वबोधकवाक्यवदिति कार्ष्णाजिनिर्मन्यते ॥१७॥

## सि०॥फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात् १८॥

आत्रेयस्त्वाचार्यः फलमभिधीयतएवंजातीयकैरिति मेने । न फलार्थवादः । कुतः ? **निर्देशात्**—फलत्वेन निर्देशाहिंगात्, विधिश्रुतौ तस्यानुमानमप्याहारः स्यात् । कार्य इत्यर्थः । अथवा रात्रीणा विधायिका या श्रुतिः सैव प्रतिष्ठाफलेन सह तासां विधात्री स्यादिति भावः ॥१८॥

## अङ्गेषु स्तुतिः परार्थत्वात् ॥१९॥

'यस्य पर्णमयी' त्यादौ तु जुह्वाद्यङ्गेषु स्तुतिः अर्थवाद एव। कुतः? **परार्थत्वात्**—जुह्वादेः प्रकरणप्रमाणेन यागाङ्गत्वस्य सिद्धत्वात् 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादित्यनुसन्धेयमत्रेति भावः ॥१९॥

### काम्यानां यथोक्तकाम्यफलकत्वाधिकरणम् ॥९॥

## काम्ये कर्मणि नित्यः स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः ॥२०॥

'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' 'गोदोहनेन पशुकामस्य प्रणयेत्' 'कारीर्या वृष्टिकामो यजेत्' इत्यादौ काम्ये कर्मणि नित्यः स्वर्ग एव मुख्यं फलं, पशुवृष्ट्यादिकं तु ग्रामं गच्छान्नितिवदानुषङ्गिकम् । यथा **यज्ञाङ्गे**—प्रस्तरप्रहरणे, आयुराशास्ते इति मन्त्रगम्यं फलम् । यथा वा **यज्ञाङ्गे**—यज्ञोपकारके गोदोहनेऽनुष्ठिते तस्मिन् पात्रे क्रत्वर्थः अप्प्रणयनरूपो 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्युपदिश्यते आनुषङ्गिकाङ्गप्राप्यपश्वादिफलार्थं, मुख्य फलं तु सर्वत्र स्वर्ग एवेति ॥२०॥

## वीते कारणे च नियमात् ॥२१॥

**वीते**—गते, च कारणे पश्वादीच्छायाङ्गताया प्राप्ते वा फले आरब्धस्य समाप्तिनियमदर्शनादपि स्वर्गः फलम् । अन्यथा समाप्तिनियमो निष्फल इति भावः ॥२१॥

## सि०॥ कामो वा तत्संयोगेन चोद्यते ॥२२॥

**कामः**—कामपदसमभिव्याहृतोऽर्थः पश्वादिरेव काम्य इति व्युत्पत्त्या कामपदार्थः **तत्संयोगेन**—पश्वादिरूपकामसाधनत्वेन चोदने । विधिर्दृश्यते । न स्वर्गसंयोगेन । अतः काम एव फलं न स्वर्गः ॥२२॥

## अङ्गे गुणत्वात् ॥२३॥

गोदोहनादावङ्गे **गुणत्वात्**--गोदोहनेन पशुकामस्येति पशुफलमुद्दिश्य वाक्येन तस्य गुणत्वेन विधानात्, प्रस्तरप्रहरणादपि मन्त्रलिङ्गेन गुणत्वस्य सिद्धत्वात् वैषम्यं दृष्टान्तेऽस्तीत्यर्थः ॥२३॥

## वीते च नियमस्तदर्थम् ॥२४॥

वीते--इच्छाया निवृत्तौ, आप्ते वा कामे यः समाप्तिनियमः सः **तदर्थे**--प्रत्यवायपरिहारार्थं बोध्यः । यो यक्ष्य इत्युक्त्वा न यजत इति प्रायश्चित्तस्य श्रुतत्वात् । तस्मात् काम्यानां कर्मणां काम एव फलं, न स्वर्ग इति बोध्यम् ॥२४॥

दर्शपूर्णमासन्यायः ।

दर्शपूर्णमासादीनां सर्वकामार्थताधिकरणम् ॥१०॥

## सार्वकाम्यमङ्गकामैः प्रकरणात् ॥२५॥

इदमाम्नायते—' एकस्मै वा कामाय अन्या इष्टय आह्रियन्ते, सर्वेभ्यो दर्शपूर्णमासौ, एकस्मै वा कामाय अन्ये क्रतव आह्रियन्ते, सर्वेभ्यो ज्योतिष्टोमः ' इति । अत्र श्रूयमाणं सार्वकाम्यं अङ्गादिफलैः सहैव प्राप्तं, न प्रधानफलैरेव । कुतः ? अङ्गादिकामाना विहितत्वेन प्रकरणोपस्थितत्वात् प्रमाणप्राप्तानामुपेक्षा अन्याय्येति भावः ॥२५॥

## सि०॥ फलोपदेशो वा प्रधानशब्दसम्प्रयोगात् ॥२६॥

' सर्वेभ्यो दर्शपूर्णमासौ, सर्वेभ्यो ज्योतिष्टोमः ' इति वाक्याभ्यां प्रधानजन्यफलस्यैवोपदेशः—विधिरिति यावत् । कस्मात् ? प्रधानवाचकशब्देन **सम्प्रयोगात्**—समभिव्याहारात् । अतः सार्वकाम्यं प्रधानफलैरेव ज्ञेयम् । नाङ्गादिफलैरिति भावः ॥२६॥

## दर्शपूर्णमासादीनां प्रतिफलं पृथगनुष्ठानाधिकरणम् ॥११॥

## तत्र सर्वेऽविशेषात् ॥२७॥

' सर्वेभ्यो दर्शपूर्णमासौ ' इत्यादिषु सकृत्प्रयोगे एकेनैव प्रयोगेण सर्वे अर्थाः कामा **सिद्धेयुः** । कुत ? अयं सिध्यति अयं नेति विशेषस्य अश्रवणात् । सति निमित्ते यावन्नैमित्तिकेन भाव्यमिति नियमाच्चेति ॥२७॥

## सि० ॥ योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात्॥२८॥

**योगसिद्धिर्वा**--योगेन प्रत्येकप्रयोगसम्बन्धेनैव अर्थस्य तत्तत्फलस्योत्पत्ति क्रमेण स्यादित्यर्थः । कुत ? कामाना मिथो वैलक्षण्येन युगपदुत्पत्त्यसम्भवात् । तत्तत्फलकामोत्पत्त्यनुसारेण प्रयोगावृत्तिरिति भाव ॥२८॥

## सौत्रामण्यादीनां चयनाद्यङ्गताधिकरणम् ॥१२॥

## समवाये चोदना संयोगस्यार्थवत्त्वात् ॥२९॥

' अग्निं चित्वा सौत्रामण्या यजेत । ' वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत ' इत्याम्नायते । तत्र **समवाये**-अङ्गाङ्गिभावात्मकसम्बन्धे, इयं चोदना स्यात् । सौत्रामण्यादेरपूर्वाङ्गत्वबोधक उक्तविधिरित्यर्थः । न वाक्यान्तरप्राप्तस्य तस्य चयनाद्युत्तरकालमात्रविधि । कुत ? **संयोगस्य**—वाक्ये अग्निचयनादिसंयोगस्य, अर्थवत्त्वात्—सफलत्वात् । अन्यथा कालमात्रविधाने तस्य वैयर्थ्यं लक्षणापत्तिश्चेति भाव ॥२९॥

## कालश्रुतौ काल इति चेत् ॥३०॥

*कालवाचक'त्वा' प्रत्ययस्य **श्रुतौ**—श्रवणे सति कालविधिरेव तु स्याल्लाघवादिति चेत्*-॥३०॥

## नासमवायात्प्रयोजनेन ॥३१॥

न कालविधि । तथा सति **प्रयोजनेन**—शब्दार्थेन चयनादिना, सौत्रामण्यादे **असमवायात्**—असम्बन्ध स्यात् । किञ्च, चयनादिप्रकरणे श्रूयमाण सौत्रामण्यादिश्चयनादेर्धर्म प्रकरणाज्ज्ञायते । अन्यप्रकरणे अन्यस्य

धर्म इत्यपि च स्यात् । अथवा प्रयोजनेन-फलेन, असमवायात्-असम्बन्धात्, फलवतश्च प्राधान्यात्, इह अफलः सौत्रामण्यादिः तस्य तस्य अङ्गमेवेति भावः ॥३१॥

वैमृधादेः पौर्णमास्याद्यङ्गताधिकरणम् ॥१३॥

## उभयार्थमिति चेत् ॥३२॥

दर्शपूर्णमासयोः 'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपती'ति श्रुतम् । तत्रेदं वैमृधेष्ट्याख्यं कर्म प्रयाजाद्यङ्गजातवद्दर्शपूर्णमासयोरुभयोरङ्गम् । न केवलं पूर्णमासस्येति चेत्- ॥३२॥

## सि०॥ न शब्दैकत्वात् ॥३३॥

न उभयार्थम् । कुतः ? अनुनिर्वपतीति विधिशब्दस्य एकत्वात् । एको 'विधि' दर्शपूर्णमाससम्बन्धं तदुत्तरकालं, च विधातुमसमर्थ इति भावः ॥३३॥

## प्रकरणादिति चेत् ॥३४॥

प्रकरणादुभयसम्बन्धः स्यादिति चेत्—॥३४॥

## नोत्पत्तिसंयोगात् ॥३५॥

न प्रकरणादप्युभयाङ्गत्वं वैमृधस्य । तदुत्पत्तिवाक्ये तस्य पौर्णमासी-सम्बन्धात् । तस्योभयार्थत्वं प्रकरणानुमितवाक्ये न बाध्यम् । प्रत्यक्षवाक्येन च अनुमितवाक्यानुमापकप्रकरणस्य बाध इति भावः ॥३५॥

अनुयाजादीनामाग्निमारुतोर्ध्वकालताधिकरणम् ॥१४॥

## अनुत्पत्तौ तु कालः स्यात्प्रयोजनेन सम्बन्धात् ३६।

ज्योतिष्टोमे—' आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति, प्रहृत्य परिधीन् हारि-योजनं जुहोती'ति श्रूयते । तत्र अनुत्पत्तौ—अनुत्पत्तिवाक्ये, लक्षणया कालः-कालमात्रविधानं स्यात् । कुतः ? प्रकरणेन प्रयोजनवज्ज्योतिष्टोमेन सम्बन्धात्फलाकाङ्क्षाया अभावेन तन्मात्रस्य विधित्सितत्वात् । आग्निमारुतं

सोमाङ्गम् । अनुयाजाः पश्वङ्गम् । तथा परिधयः । पश्वङ्गम् । हारियोजनं तु अन्यदेव प्रधानं कर्म । [ अग्निमारुतं अनूयाजाः हारियोजनः परिधयश्च ] इति न तयोस्तयोश्च परस्परसम्बन्धः । तथा तत्सर्वं वाक्यान्तरैः प्राप्तम् । आनन्तर्यमेव तेषामप्राप्तमिति तदेव विधित्सितम् । अतः कालमात्रविधानमत्रेति भावः ॥ ३६ ॥

सोमादीनां दर्शपूर्णमासकालोत्तरत्वाधिकरणम् ॥१५॥

## उत्पत्तिकालविशये कालः स्याद्वाक्यस्य तत्प्रधानत्वात् ॥ ३७ ॥

'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यत्र **उत्पत्तिकालविशये**—किं दर्शपूर्णमासाङ्गत्वेन सोमस्य विधिः उत सोमे तदुत्तरकालत्वस्य विधिरिति संशये, **कालः**— तदुत्तरकालविधिः स्यात् । कुतः ? **वाक्यस्य**—उदाहृतवाक्यस्य, **तत्प्रधानत्वात्**—कालविधौ मुख्यतात्पर्यात् । सोमस्य ज्योतिष्टोमेन स्वर्गकामो यजेतेति वाक्येन फलवत्त्वस्य निश्चयात्, फलवत्सन्निधावफलं तदङ्गमिति नियमात्, अन्यप्रकरणाभावाच्च न तस्य विधिः । नापि दर्शपूर्णमासविधिः । तत्सन्निधौ विधिशब्दस्याभावात् । अर्थात् कालविधिरेवेति भावः ॥३७॥

( अथाधिकरणद्वयं जातेष्टिन्यायः । )

वैश्वानरेष्टेः पुत्रगतफलकत्वाधिकरणम् ॥१६॥

## फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात् ॥३८॥

काम्येष्टिकाण्डे 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति प्रकृत्य-'यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव स तेजस्वी अन्नाद इन्द्रियावी पशुमान् भवती'ति श्रूयते । तत्रोक्तः पूतत्वादिफलसम्बन्धः **अचोदिते**—शास्त्रतात्पर्याविषये पितरि न स्यात् । कुतः ? तस्य **अशेषभूतत्वात्**—फलशेषत्वाभावात्, फलानङ्गत्वादित्यर्थः । यस्मिन् जाते निर्वपति स पूतत्वादि-

फलभाग् भवतीति यत्तदोर्नित्यसम्बन्धेन पुत्रमुद्दिश्यैव फलश्रवणम् । न पितरमुद्दिश्य । पुत्रनिष्ठपूतत्वादेरीप्सितत्वात्स्वफलमेव तदिति बुद्ध्या तस्य तत्साधनकर्मणि प्रवृत्तिः स्यादेवेति भावः ॥३८॥

वैश्वानरेष्टेः जातकर्मोत्तरकालत्वाधिकरणम् ॥१७॥

## अङ्गानां तूपघातसंयोगो निमित्तार्थः ॥३९॥

अङ्गानां—पूतत्वादिफलसिद्धिं प्रति साधनभूताना वैश्वानरेष्ट्यादीनां पुत्रे जाते इति श्रुतः पुत्रजन्मरूपोपघातसम्बन्धः निमित्तत्वद्योतकः । तच्च पुत्रजन्मरूपं निमित्तं कृतेऽपि जातकर्मणि, नापैति । तस्माज्जातकर्मानन्तर-जननाशौचापगमे स्वकाले इयमिष्टिः कार्या । अन्यथा जातकर्मानन्तरमेव स्तन्यप्राशनस्य विहितत्वेन तत्प्राक् उक्तेष्टिश्चेत् उपघातप्रसक्तया इष्टिविधानं व्यर्थं स्यादिति भावः ॥३९॥

सौत्रामण्यादीनां स्वकालकर्तव्यत्वाधिकरणम् ॥१८॥

## प्रधानेनाभिसंयोगादङ्गानां मुख्यकालत्वम् ॥४०॥

'अग्निं चित्वा सौत्रामण्या यजेत, वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इत्यत्र सौत्रामण्यादीनां चयनाद्यङ्गत्वं प्रागभिहितम् । अत्र अङ्गानां सौत्रामण्यादीनां मुख्यकालत्वं 'यः प्रधानकालः सोऽङ्गानाम्' इति वक्ष्यमाण-त्वात् मुख्यस्य चयनादेर्यः कालो वसन्तादिः स एव सौत्रामण्याद्यङ्गानां ग्राह्यः । न स्वकालः । कुतः ? तेषां प्रधानेन—प्रधानकालेन, अभिसम्ब-न्धात् । मुख्यस्य चयनादेः कालत्वं तेषां सौत्रामण्याद्यङ्गानां स्यादिति॥४०॥

## सि० ॥ अप्रवृत्ते तु चोदनात् तत्सामान्यात् स्वकाले स्यात् ॥४१॥

चित्वा इष्ट्वेति पूर्वकालवाचिना क्त्वाप्रत्ययेन अप्रवृत्ते—तत्प्रयोग-समाप्तौ सत्या, चोदनात्-स्वभिन्नाङ्गकलापसहितप्रधानानुष्ठानानन्तरं विधा-नात्, अस्य सौत्रामण्याद्यङ्गस्य प्रधानबहिर्भूतत्वम् । अतस्तत्सामान्यात्—

अङ्गसामान्यात्, स्वप्रकृतिभूतपर्वादिकालत्वं सौत्रामण्यादेरङ्गस्य स्यात् । स्वपूर्वकालीनाङ्गसहितप्रधानजन्यफलपूर्वस्य प्राबल्यापादकत्वेन नोत्तर-कालीनस्याङ्गस्य निष्फलत्वमिति भावः ॥ ४१ ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां चतुर्थाध्यायस्य तृतीयः पादः ॥ ३ ॥ श्रीः ॥

---

# अथ चतुर्थाध्यायस्य चतुर्थः पादः ॥

---

राजसूये इज्यानां विदेवनाद्यङ्गकत्वाधिकरणम् ॥१॥

## प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम् ॥१॥

राजसूययज्ञप्रकरणे—' अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति, नैर्ऋत-मेककपालम् । आदित्यं चरुं निर्वपति । आग्नावैष्णवमेकादशकपालम् ' तथा आदित्यां मल्हां गर्भिणीमालभते । मारुतीं पृश्नीम् । प्रष्ठौहीमाश्विभ्याम् '। एवं ' अभिषिच्यते ' इति अभिषेचनीयदशपेयादयः सोमयागाः । तथा वल्मीकवपायां होमः ' इत्यादयो दर्विहोमाः । इति इष्टिपशुसोमदर्विहोमान् यागरूपानाम्नाय ' प्रष्ठौहीर्दीव्यति । अक्षैर्दीव्यति । राजन्यं जिनाति । शौनःशेपमाख्यापयति ' इत्ययागरूपाणि देवनादीनि कर्माण्याम्नातानि । एतेषां सन्निधौ ' राजा राजसूयेन स्वाराज्यकामो यजेत ' इति श्रुतम् । तत्र स्वाराज्यकामो राजसूयेनेति प्रकरणवाचिशब्दस्य यागेषु तद्भिन्नकर्मसु च **सामान्यात्**— तुल्यत्वात्, **चोदनानां**— विधिबोध्यार्थानां सर्वेषामे-वानङ्गत्वम्—समप्राधान्यं । न केषांचित्प्राधान्यं, केषाचिच्चाङ्गत्वमिति ॥१॥

## सि० अपि वा अङ्गमनिज्याः स्युस्ततो विशिष्टत्वात् ॥ २ ॥

अपि वेति पक्षव्यावृत्तिः । **आनेज्याः**— यागभिन्नाः क्रियाः, प्रकरणे श्रुता अपि अङ्गमेव स्युः । कुतः ? **ततो**—यागक्रियातः **विशिष्टत्वात्**—विशेषवत्त्वात् । राजसूयशब्दो यद्यपि प्रकरणेन सर्वसाधारणः, अथापि स्वाराज्यकामो यजेतेति प्रत्ययवाच्यभावनाया धात्वर्थस्य यागस्य करणत्वेनान्वयात्, तस्मिंश्च राजसूयस्य सामानाधिकरण्येन सम्बन्धात्, फलवत्त्वेन यागस्यैव प्राधान्यात्, अनुमत्यादीनां यागत्वाच्च राजसूयप्रकरणपठितानां तेषामेव बोधको राजसूयशब्दः । तस्माद्यागानामेवात्र फलवत्त्वात्प्राधान्यम् । यागभिन्नानां विदेवनादीनां तदङ्गत्वमेवेति भावः ॥२॥

विदेवनादीनां कृत्स्नराजसूयाङ्गताधिकरणम् ॥२॥

## मध्यस्थं यस्य तन्मध्ये ॥३॥

राजसूये अभिषेचनीयेष्ट्याख्यसोमयागमध्ये तत्सन्निधौ पठिता विदेवनादयः अपकर्षेण प्राप्ताः । अतस्ते यस्य मध्यस्थाः तस्यैवाङ्गं स्युः । तन्मध्ये स्थितत्वादित्यर्थः । यद् यन्मध्यस्थं तत्तदङ्गमभिक्रमणवदिति भावः ॥३॥

## सि०॥ सर्वासां वा समत्वात् चोदनातः स्यान्न हि तस्य प्रकरणं देशार्थमुच्यते मध्ये ॥४॥

सर्वासामेव इज्यानां विदेवनादिकमङ्गं स्यात् । न केवलमभिषेचनीयेष्टेः । कुतः ? अनुमत्यादीनां सर्वेषामेव महाप्रकरणपठितानां यागानां **चोदनातः**- फलसम्बन्धबोधकविधितः, तुल्यत्वात् - प्राधान्याविशेषात् । न हि तस्य अभिषेचनीयसोमयागस्यावान्तर प्रकरणं विद्यते । येन तदङ्गमेव तत्स्यात् । अभिक्रमणवदुभयतः सन्देशाभावात् । सन्निधेश्च प्रकरणापेक्षया दुर्बलत्वात् । वस्तुमात्रस्य देशं विना स्थितेरसम्भवात् यत्र कुत्रचित्पठितव्यमिति देशार्थं तन्मध्ये उक्तमिति भावः ॥ ४ ॥

सौम्यादीनामुपसत्कालत्वाधिकरणम् ॥ ३ ॥

## प्रकरणाविभागे च विप्रतिषिद्धं ह्युभयम् ॥५॥

राजसूये उपसदः प्रकृत्य 'पुरस्तादुपसदां सौम्येन प्रचरन्ति । अन्तरा त्वाष्ट्रेण । उपरिष्टाद्वैष्णवेन' इति । तत्र **प्रकरणाविभागे**—प्रकरणस्य अविभागे-ऐक्येऽपि, सोम्यादीनामुपसदङ्गत्वं तत्पुरस्तादिकालविधानं चैतत् प्राप्तमुभयम् । **हि**—यतो, **विप्रतिषिद्धं**—वाक्यभेदग्रस्तम् । ततः षष्ठीश्रुत्या उपसदां प्राधान्यम् । तृतीयाश्रुत्या च सौम्यादिचरूणां तदङ्गत्वमेति उपसदङ्गत्वमेव सौम्यादीनां, न कालविधानमिति ॥५॥

## सि०॥ अपि वा काल-मात्रं स्याददर्शना-द्विशेषस्य ॥६॥

नोपसदङ्गत्वपरमुक्तवाक्यत्रयम् । अपि तु कालमात्रस्य विधायकमेव स्यात् । कस्मात् ? 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ती' ति संप्रतिपन्नकाल-मात्रविधायकवचनादत्र वाक्ये विशेषस्य अदर्शनात् । अतो न कस्याप्यङ्गं सौम्यादिकं, किन्त्वनुमत्यादिवत् प्रधानमिति भावः ॥६॥

### आमनहोमानां साङ्ग्रहण्यङ्गत्वाधिकरणम् ॥४॥

## फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् ॥७॥

काम्येष्टिकाण्डे 'वैश्वदेवीं साङ्ग्रहणीं निर्वपेत् ग्रामकामः' इत्युक्त्वा तत्र—'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोती'ति श्रूयते । तत्र **फलवत्**—ग्रामफलसम्बद्धा साङ्ग्रहायणीष्टिः, इतरस्य आमनहोमस्य प्रधानम् । फलवत्त्वात् । अतः प्रागुक्तहेतुत्वात् अफला आमनहोमाः तस्या अङ्गमित्यर्थः । नोभयं प्रधानमिति भावः ॥७॥

### दधिग्रहस्य नित्यत्वाधिकरणम् ॥५॥

## दधिग्रहो नैमित्तिकः श्रुतिसंयोगात् ॥८॥

ज्योतिष्टोमे—'या वै काश्चिदध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्चेत, यत् प्राजापत्यं दधिग्रहं गृह्णाति, शमयत्यैवैना' मिति श्रूयते । तत्रायं दधिग्रहो नैमित्तिक एव । कुतः ? देवतान्तरायरूपनिमित्ते सति तद्ग्रहणस्य श्रुतत्वात् । न चान्तरायो नित्यः । तस्मान्नैमित्तिको दधिग्रहः ॥८॥

## नित्यश्च ज्येष्ठशब्दत्वात् ॥ ९ ॥

' ज्येष्ठो वा एष ग्रहाणा ' मिति श्रुतं ज्येष्ठत्वं नित्यत्वं विनाऽनुपपन्नमतो नित्यः सः । चकारान्नैमित्तिकोऽपीत्युभयात्मक इति प्राप्तम् ॥९॥

## सार्वरूप्याच्च ॥ १० ॥

' सर्वासां वा देवतानामेतद्रूपं यदेष ग्रहः यस्य एष गृह्यते सर्वाण्येवैनं रूपाणि पशूनामुपतिष्ठन्ते ' न हि नित्यत्वादन्यत् देवतारूपं किञ्चित्प्रत्यक्षम्। अतोऽपि नित्यो नैमित्तिकश्च स इति ॥ १० ॥

## सि० ॥ नित्यो वा स्यादर्थवादः तयोः कर्मण्यसम्बन्धात् भक्तित्वाच्चान्तरायस्य ॥ ११ ॥

नित्य एव दधिग्रहः । न नैमित्तिकः । कस्मात् ? कर्मणि तयोः–अध्वर्युयजमानयोः, अन्तरायेण सम्बन्धाभावात् देवतान्तरायश्रवणस्य भक्तित्वात् दधिग्रहस्तावकत्वादर्थवादः । ' यदि रथन्तरनामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् ' ' भिन्ने जुहोति स्कन्ने जुहोति ' ' यो वै संवत्सरमुख्यमभृत्वा अग्निं चिनुते ' इत्यादिसम्प्रतिपन्ननैमित्तिकवचनेषु यदि शब्दोपबन्धसप्तमीश्रवणकर्तुर्यच्छब्दसामानाधिकरण्यं वा दृष्टं निमित्तत्वद्योतकम् । तदन्यतमस्य प्रकृतवाक्ये अभावात् नान्तरायस्यात्र निमित्तत्वम् । केवलं देवताक्षोभतत्समाधानोपन्यासः विधेयदधिग्रहस्तुत्यर्थोऽर्थवाद इति भावः ॥११॥

### वैश्वानरस्य नैमित्तिकत्वाधिकरणम् ॥६॥

## वैश्वानरश्च नित्यः स्यान्नित्यैः समानसङ्ख्यत्वात् १२।

' य एवं विद्वानग्निं चिनुते ' इत्यग्निचयनं विधीयते श्रूयते तत्र–' यो वै संवत्सरमुख्यमभृत्वाग्निं चिनुते । यथा सामिगर्भो विपद्यते ' तादृगेव तदार्तिमार्च्छेत् । वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत् । संवत्सरो वा अग्निर्वैश्वानरो यथा संवत्सरमाप्त्वा काले आगते विजायते । एवमेव संवत्सरमाप्त्वा काले आगते अग्निं चिनुते । नार्तिमार्च्छेत् । एषा वा अग्नेः प्रिया तनुर्यद्

वैश्वानरः । प्रियामेवास्य तनूमवरुन्धे' इति । अत्र संवत्सरं यावत् उख्याग्न्यभरणप्रयुक्तदोषनिबर्हको द्वादशकपालसंस्कृतपुरोडाशद्रव्यकवैश्वानरो यागः नित्य एव स्यान्न नैमित्तिकः । कस्मात्? **नित्यैः समानसङ्ख्यत्वात् ।** ' त्रीण्येतानि हवींषि भवन्ति । त्रय इमे लोकाः एषां लोकानामारोहाय ' इति नित्यैस्त्रिभिर्लोकैः साकं हविषामपि त्रित्वेन समानसङ्ख्यत्वात्मकं सादृश्यमत्र वाक्ये स्पष्टं प्रतीयते । तच्च नित्यत्व एवोपपद्यते नानित्यत्वे । किञ्च, प्राक् निमित्तसंयोगरहितं ' आदित्यो भवति आग्नावैष्णव एकादशकपालश्चे'ति द्वयमुक्त्वा पश्चात्-' यो वै संवत्सरेत्यारभ्य वैश्वानरं द्वादशकपालं निर्वपे ' दित्येतदंतं च ' त्रीण्येतानी ' ति त्रयाणामादित्याग्नावैष्णववैश्वानरहविषां मेलनं श्रुतम् । तन्नित्यनैमित्तिकयोरसम्भवीति वैश्वानरस्य नित्यत्वं सूचयतीति नित्योऽयं वैश्वानरयाग इति पूर्वपक्षिण अभिप्रायः ॥१२॥

## सि० ॥ पक्षे वोत्पन्नसंयोगात् ॥१३॥

**पक्षे वा**– नैमित्तिकमेवेद कर्म, न नित्यम् । कुतः ? यो वै संवत्सरमुख्यमभृत्वेत्युत्पन्ने निमित्ते कर्तुः कर्मणा साकं सम्बन्धाभिधानात् । दधिग्रहे त्वध्वर्युयजमानयोरन्तरायेण सम्बन्धः । न कर्मणा ज्योतिष्टोमेन । अत्र तु यः अभृत्वा, अग्निं चिनुत ' इति कर्तुः कर्मणा सम्बन्ध इति वैषम्यान्नैमित्तिकत्वमेवेति भावः ॥ १३ ॥

### षष्ठ्याश्चितेर्नैमित्तिकत्वाधिकरणम् ॥ ७ ॥

## षड्चितिः पूर्ववत्स्यात् ॥१४॥

अग्निचयन एवेत्थं श्रूयते–' संवत्सरो वा एनं प्रतिष्ठायै नुदति । योऽग्निं चित्वा न प्रतितिष्ठति । पञ्च पूर्वाश्चितयो भवन्ति । अथ षष्ठीं चिनुते ' इति । अत्र येयं षष्ठीचितिः सा **पूर्ववत्**– पञ्चचितिवत्, नित्यैव स्यात् ! न नैमित्तिकी । कुतः ? षण्णां पूरणी षष्ठीति षष्ठीशब्दश्रुतेरित्यर्थः ॥१४॥

## ताभिश्च तुल्यसङ्ख्यत्वात् ॥१५॥

तत्रैव साधकान्तरसमुच्चायकश्चः । ताभिः-पूर्वाभिर्नित्याभिः पञ्चचितिभिः सह, अस्याः तुल्यसङ्ख्यानात्—तुल्यत्वेन परिगणनात् । तथेत्थम्-' इयं वाव प्रथमा चितिः, ओषधयः पुरीषम् । अन्तरिक्षं वाव द्वितीया चितिः, वयांसि पुरीषम् । असौ वाव तृतीया चितिः, नक्षत्राणि पुरीषम् । यज्ञो वाव चतुर्थी चितिः, दक्षिणा पुरीषम् । यजमानो वाव पञ्चमी चितिः, प्रजाः पुरीषम् । संवत्सरो वाव षष्ठी चितिः, ऋतवः पुरीषम् ' इति तुल्यानां हि तुल्यत्वेनानुक्रमणं भवति । अतो नित्येयं षष्ठीचितिरिति ॥ १५ ॥

## अर्थवादोपपत्तेश्च ॥ १६ ॥

' षट्चितयो भवन्ति, षट् पुरीषाणि । तानि द्वादश सम्पद्यन्ते । द्वादश मासाः संवत्सरः । संवत्सर एव प्रतितिष्ठति ' इत्यर्थवादोऽपि षट्चितिके समुपपद्यते । न पृथगेकस्यां चितावित्यपि नित्येति प्राप्तिः ॥ १६ ॥

## सि० ॥ एकचितिर्वा स्यादपवृक्ते हि चोद्यते निमित्तेन ॥ १७ ॥

एकचितिर्वा नैमित्तिक एव स्यात् । न नित्यः । हि- यस्मात्, पूर्वे पञ्चचितिकयागे अपवृक्ते—समाप्ते ' यो न प्रतितिष्ठति ' अथ षष्ठीं चिनुते ' इति अप्रतिष्ठानिमित्तेन तत्परिहारार्थमियं षष्ठीचितिश्चोद्यते- विधीयते, इति नैमित्तिकी सेति निर्णय ॥ १७॥

## विप्रतिषेधात्ताभिः समानसङ्ख्यत्वम् ॥१८॥

अप्रतिष्ठानिमित्तप्रयुक्ता या षष्ठीचितिः सा एका । तस्याः षट्त्वस्य द्वादशत्वस्य च विप्रतिषेधात्-विरोधात्, ताभिः—प्रागनुष्ठितपञ्चचितिभिः, पञ्चपुरीषैश्च गृहीते. समानसङ्ख्यत्वं सम्भवति । इत्थं सति निमित्ते एतत्कर्तृकाः षट्चितयः षट्पुरीषाणि च सम्पन्नानीति पूर्वकाद्युपन्यस्तार्थवादद्वयस्योपपत्तिरिति भाव. ॥१८॥

पिण्डपितृयज्ञस्य दर्शयागानङ्गत्वाधिकरणम् ॥८॥

## पितृयज्ञः स्वकालत्वादनङ्गं स्यात् ॥१९॥

' अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति ' इति श्रुतम्। तत्रायं पिण्डपितृयज्ञः **अनङ्गम्**—न दर्शेष्ट्यङ्गभूतः। अपि तु पृथक् स्वतन्त्रकर्म। कुतः? **स्वकालत्वात्**—स्वस्य पितृयज्ञस्य यः कालः तद्वाचकत्वादमावास्यापदस्येत्यर्थः। कर्मपरत्वे तु लक्षणा स्यात्। सा च विधावन्याय्येति भावः ॥१९॥

## तुल्यवच्च प्रसङ्ख्यानात् ॥ २० ॥

**तुल्यवत्**— ' चत्वारो वै महायज्ञाः, अग्निहोत्र, दर्शपूर्णमासौ, अग्निष्टोमः, पिण्डपितृयज्ञश्च ' इति महायज्ञतुल्यत्वेन **प्रसङ्ख्यानात्**—परिगणनादपि नाङ्गमित्यर्थः। महायज्ञत्वं च फलवत्त्वेनार्थादनङ्गत्वेन ज्ञेयमिति भावः ॥ २० ॥

## प्रतिषिद्धे च दर्शनात् ॥ २१ ॥

' पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्याम्, पिण्डपितृयज्ञेनैवामावास्याया प्रीणाती ' ति प्रतिषिद्धेऽपि दर्शयागे पिण्डपितृयज्ञस्य **दर्शनात्**—विधानादनङ्गः स इति सिद्धम् ॥ २१ ॥

रशनाया यूपाङ्गत्वाधिकरणम् ॥ ९ ॥

## पश्वङ्गं रशना स्यात्तदागमे विधानात् ॥२२॥

ज्योतिष्टोमे श्रूयते—' आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोती' ति। तत्र त्रिवृतेत्यनेन श्रूयमाणा रशना पश्वङ्गं स्यात्। कुतः? तदागमे **विधानात्**—' परिव्याणं कृत्वा उपाकरोति पशुं नान्यथा ' इत्युत्पत्तिवाक्यश्रुतपशुसम्बन्धस्यागमे सति पशूपाकरणस्य विधानात्, पश्वङ्गं सा रशनेत्यर्थः ॥२२॥

## सि०॥ यूपाङ्गं वा तत्संस्कारात् ॥२३॥

त्रिवृतेति तृतीयया यूपमिति द्वितीयया च यूपरशनयोः शेषशेषिभावावगमादव्यवहितान्वयलाभाच्च यूपस्य दार्ढ्यरूपदृष्टप्रयोजनसिद्धेः यूपाङ्गमेव सा रशना। न पश्वङ्गम्। श्रुत्या वाक्यस्य बाध इति भावः॥२३॥

## अर्थवादश्च तदर्थवत् ॥२४॥

'युवा सुवासाः परिवीत आगा' दिति मन्त्रार्थवादोऽपि यूपान्वितः सन् यूपः दृष्टदार्ढ्यफलकसंस्कारवानिति परिवीत इत्यनेन ज्ञापयति ॥२४॥

### स्वरोः पश्वङ्गताधिकरणम् ॥१०॥

## स्वरुश्चाप्येकदेशत्वात् ॥२५॥

ज्योतिष्टोमे अग्नीषोमीयपशौ—'स्वरुणा स्वधितिना च पशुमनक्ति' इति श्रुतम्। तत्र स्वरुः यूपाङ्गमेव। न पश्वङ्गम्। कुतः? एकदेशत्वात्—'यूपस्य स्वरुं करोति' इति स्वरोर्यूपैकदेशत्वं षष्ठ्या च यूपस्य प्राधान्यं श्रूयते। तस्मादित्यर्थः ॥२५॥

## निष्क्रयश्च तदङ्गवत् ॥२६॥

'ते प्रस्तरं स्रुचां निष्क्रयमपश्यन् स्वरुं यूपस्य' इत्यत्र स्वरुं यूपस्य निष्क्रयमपश्यन्नित्यर्थवादस्तस्य यूपाङ्गत्वं द्रढयतीत्यर्थः ॥२६॥

## सि०॥ पश्वङ्गं वा अर्थकर्मत्वात् ॥ २७ ॥

स्वरुणेति तृतीयया पश्वङ्गमेव स्वरुरिति ज्ञाप्यते । अर्थकर्मत्वात्—दृष्टफलत्वात्, पश्वञ्जनं दृष्टं फलम् । यूपाङ्गत्वे त्वदृष्टकल्पनापत्तिरिति भावः ॥ २७ ॥

## भक्त्या निष्क्रयवादः स्यात् ॥ २८ ॥

लक्षणया स्तावकत्वेन निष्क्रयवादस्योपपत्तिः स्यात् । अग्नौ यूपः प्रक्षेप्तव्यः किल । स्वरोर्यूपावयवत्वेन स्वरुप्रक्षेपे यूप एव प्रक्षिप्तो भवतीति निष्क्रयवादेन यूपः स्तूयते इत्यर्थः ॥ २८ ॥

आधारादीनामाग्नेयाद्यङ्गताधिकरणम् ॥ ११ ॥

## दर्शपूर्णमासयोरिज्याः प्रधानान्यविशेषात् ॥२९॥

दर्शपूर्णमाससम्बन्धिन इज्याः विहिताः सर्वे यागाः प्रधानभूता एव। **अविशेषात्**— इदमङ्गमिदं प्रधानमिति विशेषस्याभावादिति ॥ २९ ॥

## सि० ॥ अपि वाऽङ्गानि कानिचिद्येष्वङ्गत्वेन संस्तुतिः सामान्यादभिसंस्तवः ॥३०॥

अपि वेति पक्षव्यावृत्तिः। कानिचिदङ्गान्येव स्युः। येष्वङ्गत्वेन स्तुतिर्दृश्यते। यथा-‘ अभीघू वा एतौ यज्ञस्य यदाघारौ। चक्षुषी वा एते यज्ञस्य यदाज्यभागौ। यत्प्रयाजानुयाजा इज्यन्ते वर्मैव तद्यज्ञस्य क्रियते। वर्म यजमानस्य भ्रातृव्याभिभूत्यै ’ इति। तानिअङ्गानि **सामान्यात्**—चक्षुरादीनामिव आघाराज्यभागादीनामप्यङ्गत्वसाजात्यात्, संस्तव उपपन्नः। अन्यथा कर्मण्यङ्गत्वाभावेन तथा स्तवोऽनुपपन्नः स्यादिति भावः ॥३०॥

## तथा चान्यार्थदर्शनम् ॥३१॥

**तथा**—अङ्गत्वेन स्तुतत्वात्प्रयाजादीनामङ्गत्वे सिद्धे **अन्यार्थदर्शनम्**— ‘ नव प्रयाजा इज्यन्ते ’ इति प्राकृतप्रयाजानुवादेन नवत्वविधानमप्युपपन्नं भवति। सर्वेषां प्रधानत्वे तु प्रधानस्यातिदेशाभावात्तदनुपपन्नं स्यादिति भावः ॥३१॥

## अविशिष्टं तु कारणं प्रधानेषु गुणस्य विद्यमानत्वात् ॥३२॥

‘ शिरो वा एतद्यज्ञस्य यदाग्नेयः, हृदयमुपांशुयाजः, पादावग्नीषोमीयः’ इत्येवमङ्गत्वेन संस्तवात्मकगुणस्योभयत्र विद्यमानत्वात् अङ्गत्वसिध्यर्थमुपन्यस्तं तत्कारणम् **अविशिष्टम्**—आग्नेयादौ प्रयाजादिषु च तुल्यम्। इत्यनैकान्तिकत्वान्न तदङ्गत्वसाधकमित्याशयः शङ्कितुः ॥३२॥

**नानुक्तेऽन्यार्थदर्शनं परार्थत्वात् ॥३३॥**

यच्च नव प्रयाजा इज्यन्त इत्यन्यार्थदर्शनमङ्गत्वद्वाद्यायोपन्यस्तम्, तस्य **परार्थत्वात्**—नवसङ्ख्यारूपगुणप्राप्त्यर्थत्वात्, **अनुक्ते**—प्रयाजप्रापणात्मककार्यशून्ये तस्मिन्नाङ्गत्वसाधकत्वमस्तीत्यर्थः ॥३३॥

**सि° २० ॥ पृथक्त्वे त्वभिधानयोर्निवेशः श्रुतितो व्यपदेशाच्च तत्पुनर्मुख्यलक्षणं यत्फलवत्त्वं, तत्सान्निधावसंयुक्तं तदङ्गं स्याद् भागित्वात्कारणस्याश्रुतेश्चान्यसम्बन्धः ॥ ३४ ॥**

पक्षव्यावर्तकस्तुः । न सर्वाणि समप्रधानानीत्यर्थः । कस्मात्? 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति **श्रुतितः** द्विवचनव्यपदेशात्—निर्देशाच्च दर्शसंज्ञकमेकं त्रिकं पूर्णमासीसंज्ञकं चापरमिति द्वयोस्त्रिकयोस्तदभिधानयोश्च पृथक्त्वे सिद्धे पृथक्शब्दवाच्ययोस्तयोस्त्रिकयोरेव **निवेशः**—स्वर्गफलेन साकं सम्बन्धः । तथा च **यत्फलवत्त्वं**—फलसम्बन्धित्वेन श्रवणं, तदेव **मुख्यस्य**—प्रधानस्य, लक्षणम् । तच्च द्वयोस्त्रिकयोरस्तीति त्रिकद्वयमेव प्रधानम् । **तत्सान्निधौ**—उक्तलक्षणोपेतकर्मसन्निधौ, **असंयुक्तं**—फलसम्बन्धरहितं यत् समिधो यजतीत्यादिकं श्रुतं **तत्तदङ्गम्**—प्रधानस्याङ्गं स्यात् । **कारणस्य**—प्रधानोपकारकस्य, **भागित्वात् अश्रुतेः**—तत्र भाव्याकाङ्क्षापूरकशब्दाश्रवणात्, **अन्येन सम्बन्धः**—किं भावयेदित्याकाङ्क्षायां प्रधानं भावयेदिति प्रधानेन सम्बन्धो वाच्य इति भावः ॥३४॥

**गुणाश्च नामसंयुक्ता विधीयन्ते नाङ्गेषूपपद्यन्ते ३५।**

**अङ्गेषु**—अभिमर्शनादिषु 'चतुर्होत्रा पूर्णमासीमभिमृशेत्, पञ्चहोत्रा अमावास्या'मिति तत्तन्नामसंयुक्ताश्च **गुणाः**—चतुर्होत्रादिमन्त्राः विधीयन्ते । तन्नामनिर्देशपूर्वकं विधानमपि त्रिभागाभावे नोपपद्यते। अतस्तदपि त्रिकद्वयपृथक्त्वे साधकमिति भाव. ॥३५॥

## तुल्या च कारणश्रुतिरन्यैरङ्गाङ्गिसम्बन्धः ॥३६॥

आग्नेयादावङ्गत्वेन संस्तवरूपा **कारणश्रुतिः**— अङ्गत्वज्ञापकश्रुतिस्तुल्यैव प्रयाजादिभिरन्यैः । ततः प्रधानेष्वाऽऽग्नेयादिष्वप्यङ्गाङ्गिसम्बन्धः- प्रयाजादिवदङ्गत्वप्रसक्तिरित्युक्तेरुत्तरमाह-॥ ३६ ॥

## उत्पत्तावभिसम्बन्धस्तस्मादङ्गोपदेशः स्यात् ॥३७॥

**उत्पत्तौ**—जायमानस्य पुंसः प्रथमं शिरो जायते ततो मध्यं ततः पादौ **एवमभिसम्बन्धः**—क्रमः । तथैवाऽऽग्नेयादीनां प्रधानानामनुष्ठानमिति स्तुत्यर्थं शिरआदीनामङ्गानामुपदेशो भविष्यति । अग्निर्माणवक इतिवत् ॥ ३७ ॥

## तथा चान्यार्थदर्शनम् ॥३८॥

' चतुर्दश पौर्णमास्यामाहुतयः, त्रयोदशामावास्यायां ' मित्यन्यार्थदर्शनं प्रागुक्तयुक्तिभिर्द्वयोस्त्रिक्रयोः पार्थक्ये सत्येवोपपद्यत इत्याग्नेयादीनि प्रधानानि आघारादीन्यङ्गानीति सिद्धम् ॥३८॥

### ज्योतिष्टोमे दीक्षणीयादीनामङ्गताधिकरणम् ॥१२॥

## ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् ॥३९॥

' ज्योतिष्टोमेन स्वर्गकामो यजेत ' इत्यस्य प्रकरणे ऐन्द्रवायवादयो ग्रहाः, सोमयागाः, दीक्षणीयाद्या इष्टय, अग्नीषोमीयादिपशुयागाश्च समाम्नाताः । तत्र सर्वाण्यप्येतानि कर्माणि सोमयागतुल्यान्येव । यागत्वाविशेषात् । अतो राजसूयनामवज्ज्योतिष्टोमनाम्न प्रकृतसर्वयागसाधारणत्वात्, फलसम्बन्धरूपस्य प्राधान्यकारणस्य सर्वेष्वविशिष्टत्वाच्च सर्वेषां मुख्यत्वमेव । न केषांचिन्मुख्यत्वं, केषांचित्तदङ्गत्वमिति ॥३९॥

## सि०॥ गुणानां तूत्पत्तिवाक्येन सम्बन्धात्कारणश्रुतिः, तस्मात्सोमः प्रधानं स्यात् ॥४०॥

' ज्योतिष्टोमेन स्वर्गकामो यजेत ' इत्युत्पत्तिवाक्येन साकं ' कतमानि वा एतानि ज्योतींषि, ये एते तस्य स्तोमास्त्रिवृत्पञ्चदशसप्तदशैक_

विराः । एतानि च ज्योतींषि । तान्येतस्य स्तोमा अङ्गम् ' इति त्रिवृदादिस्तोमानां गुणत्वेन सम्बन्धात् **कारणश्रुतिः**—विशेषकारणश्रुतिरस्तीत्यतो ज्योतिष्टोमाख्यः सोमयाग एव प्रधानम् । तदङ्गभूता दीक्षणीयादयः ज्योतिषां स्तोमा यत्रेति व्युत्पत्त्या धात्वर्थे तस्यैव विशेषणत्वादितरयागव्यावृत्तिरित्याशयः ॥४०॥

## तथा चान्यार्थदर्शनम् ॥४१॥

तथा—' शिरो वा एतद्यज्ञस्य यद्दीक्षणीया' इति अङ्गशब्देन **अन्यार्थदर्शनात्**—स्तुतेर्दर्शनादपि सोमयागः प्रधानमिति सिध्यति ॥४१॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां चतुर्थाध्यायस्य चतुर्थः पादः॥४॥

समाप्तश्चतुर्थोऽध्यायः ॥ श्रीः ॥

---

## ॥ श्रीः ॥

# अथ पञ्चमाध्यायस्य प्रथमः पादः ।

क्रमनियमाधिकरणम् ॥१॥ ( श्रुतिबलीयस्त्वन्यायः । )

## श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् ॥१॥

कः प्रयोज्यः ? कश्च प्रयोजकः ? इति प्रयोज्यप्रयोजकभावश्चतुर्थे निर्णीतः । अथ प्रयोगविधिपरिगृहीतानुष्ठेयपदार्थानामनेकत्वात्कर्तुश्चैकत्वात् तत्क्रमाकाङ्क्षायां तन्निर्णयायायं पञ्चमाध्यायारम्भः । स च क्रमः श्रुत्यर्थपाठप्रवृत्तिकाण्डमुख्यादिभेदैरनेकविधः । तत्रादौ ज्यायस्त्वात् श्रुतिक्रमं निरूपयति **श्रुतिलक्षणमिति** । निरपेक्षरवरूपा श्रुतिः लक्षणं ज्ञापकं मानं यस्य तत् आनुपूर्व्यं श्रौतक्रम इत्यर्थः । तच ज्याय. । ' अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति । ततं उद्गातारम् । ततो होतारं ' मित्यादिवाक्यघटकक्त्वाप्रत्ययादिश्रुतिप्रमाणकत्वात्तस्य । श्रुतिप्रमाणका हि वैदिकाः पदार्थाः, न प्रमाणान्तरप्रसरस्तेष्वित्युक्तं खलु प्रमाणाध्याय इति ॥१॥

क्रमस्य क्वचिदार्थिकत्वाधिकरणम् ॥२॥

## अर्थाच्च ॥२॥

**अर्थात्**—सामर्थ्यादपि, कुत्रचित् क्रमो निश्चितो भवति। यो हि यस्य निर्वर्त्यमानस्योपकरोति स एव तस्य गुणभूतः। यस्मिंस्त्वाश्रीयमाणे पदार्थ एव न सम्पद्यते, तत्र तं विहाय सामर्थ्यादार्थ एव क्रम आश्रयितव्यः। यथा-'अग्निहोत्रं जुहोति, यवागूं पचती' इत्यत्र क्त्वाप्रत्ययादीनामभावात्पाठनमाश्रयणे द्रव्याभावाद्धोम एव न सिध्येदतोऽर्थात्पूर्वं होमसाधनं यवागूपाकं सम्पाद्यानन्तरं होमो विधेय इत्यार्थक्रमाङ्गीकारः ॥२॥

क्रमस्य क्वचिदनियमाधिकरणम् ॥ ३ ॥

## अनियमोऽन्यत्र ॥ ३ ॥

**अन्यत्र**— क्रमनियामकत्वेनोक्तवक्ष्यमाणषट्प्रमाणाभावे यत्र तत्र **अनियमः**—यथेच्छमनुष्ठानम्। यथा प्रयाजानुमन्त्रणे नानाशाखापठितानां-'वसन्तमृतूनां प्रीणामी' इत्यादिमन्त्राणां समुच्चयेन पाठे स्वेच्छाक्रमः ॥३॥

क्रमस्य क्वचित्पाठानुसारित्वाधिकरणम् ॥ ४ ॥

## क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात् ॥४॥

दर्शपूर्णमासयोः पञ्चप्रयाजानुष्ठानस्य **क्रत्वैकत्वे**-एकक्रतुगतत्वात्, **क्रमेण**-पाठक्रमेण, अनुष्ठानक्रमो **नियम्येत**। क्रमस्य **तद्गुणत्वात्**—अनुष्ठानाङ्गत्वादित्यर्थः ॥४॥

## आ० ॥ अशाब्द इति चेत्स्याद्वाक्यशब्दत्वात् ॥५॥

शब्दगम्यस्यैव पदार्थत्वमिति सिद्धान्तात् अशाब्दः क्रमः शब्दगम्यो न भवति, तद्वाचकशब्दस्याभावात्। अथ पदसमूहात्मकवाक्यस्यापि शब्दत्वात् तद्गम्यत्वेन स्यात्क्रमस्य शाब्दत्वमित्युच्येत चेत्तादृशशाब्दत्वस्य तद्भूताधिकरणे निरस्तत्वात्तथा वक्तुं सुतरामशक्यमिति ॥५॥

## आ० समा० ॥ अर्थकृते वाऽनुमानं स्यात्, क्रत्वेकत्वे परार्थत्वात्स्वेन त्वर्थेन सम्बन्धस्तस्मात्स्वशब्दमुच्येत ॥६॥

बहूनां कर्मणां क्रत्वेकत्वे–एककार्यार्थत्वे एककर्तृकत्वे च युगपदनुष्ठानासम्भवात्ः कश्चन क्रमो यद्यप्यर्थसिद्धः तथाप्यर्थकृते तस्मिन् स्वाध्यायाध्ययनविधिभाव्यप्रयोजनानुसार्यनुमानं स्यादेव। यतः ‘स्वाध्यायोऽध्येतव्यः’ इत्यस्य विधेः न केवलं वेदार्थज्ञानमेव दृष्टं फलम्। अपि तु यद्यदृष्टं सम्भवति तदपि तस्य प्रयोजनमेव। सत्येवं यथा अर्थज्ञानं, तथा तद्द्वारा प्रयोगकालीनानुष्ठेयार्थस्मरणमपि तस्य भाव्यं फलमेव। तच्च स्मरणं यथापाठक्रममेव स्यादिति पाठक्रमस्य स्वाध्यायाध्ययनविधितात्पर्यगोचरत्वान्नाशाब्दत्वमित्याशयः। नन्वेतादृशतत्तात्पर्यकल्पने किं गमकमिति चेत्—वेदस्य **परार्थत्वात्**–यद्यदनेन शक्यते कर्तुं तावदर्थं समाम्नातत्वात्, **स्वेन**–स्वसाध्यार्थज्ञानवत् स्वसाध्यानुष्ठानकालीनार्थस्मरणेनाप्यस्य सम्बन्धोऽस्ति। **तस्मात्स्वशब्दमुच्येत**–स्वस्य पाठक्रमस्य प्रापकं मानं शब्दः सम्भवतीति भावः ॥६॥

## तथा चान्यार्थदर्शनम् ॥७॥

**तथा च**– उक्तविधया पाठक्रमस्य शाब्दत्वे सिद्धे ‘व्यत्यस्तमृतव्या उपदधाति। व्यत्यस्त षोडशिनं गृह्णाति। आश्विनो दशमो गृह्यते। अतिहायेडो बर्हिःप्रति समानयती’त्याद्यन्यार्थदर्शनं सङ्गच्छते। पाठक्रमस्याशाब्दत्वे तु तस्य प्राप्त्यभावात् व्यत्यस्तम्। दशम इत्यादीनां पाठक्रमबाधकत्वं निरवकाशं स्यादिति भावः ॥७॥

### क्रमस्य क्वचित्प्रथमप्रवृत्त्यनुसारिताधिकरणम् ॥५॥
### (प्रवृत्तिक्रमनियमः।)

## सि० ॥ प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् ॥८॥

वाजपेये–' सप्तदश प्राजापत्यान् पशूनालभते ' इति श्रुतम् । तत्र तेषु पशुषु **तुल्यकालानां गुणानां**–एककालप्राप्तानामुपाकरणनियोजनादि-संस्काराणा, **प्रवृत्त्या**–प्रथमसंस्कारप्रवृत्तिक्रमेणैव, द्वितीयादिसंस्कारक्रमः कर्तव्यः । नानियमेन । कुतः ? **तदुपक्रमात्**–तस्मादेव प्रथमं प्रारम्भात् । अत्रोपाकरणनियोजनाद्यङ्गानामव्यवधानेनानुष्ठानमावश्यकमपि तत्र विधिप्राप्तं व्यवधानं सहत एवाङ्गान्तरमिति प्रथमपशूपाकरण स्त्रीयनियोजनमध्ये षोडश-पश्वन्तरोपाकरणव्यवधानं विधिप्राप्तं सहत एव । न ततोऽधिकम् । प्रथमो-पाकृतपशौ चरमं नियोजने क्रियमाणे तु चरममुपाकृतपशौ नियोजनमव्यव-हितम् । प्रथमोपाकृतपशौ जातमुपाकरणं षोडशभिरुपाकरणैः षोडशभिर्नियोज-नैश्चेति द्वात्रिंशद्भिरविहितैः क्षणैर्व्यवहितमिति वैरूप्य स्यात् । प्रथमप्रवृत्ति-क्रमेणानुष्ठाने सर्वेषा षोडशभिरेव क्षणैर्व्यवधानमिति तुल्यमङ्गाना सान्निध्यम् । अतः प्रथमप्रवृत्तिक्रमः उत्तरानुष्ठाने नियामकः । एवं प्रधानसन्निकर्षोऽपि समान इति भावः ॥८॥

## आ०॥ सर्वमिति चेत् ॥९॥

सर्वं तस्य तस्याङ्गजातं काण्डानुसमयेन स्यादिति चेत्—॥९॥

## नाकृतत्वात् ॥१०॥

न तथा भविष्यति । कुतः ? **अकृतत्वात्**—तथा अविहितत्वा-दित्यर्थः ॥१०॥

## क्रत्वन्तरवदिति चेत् ॥११॥

सौर्ययागादिवदत्रापि काण्डानुसमये ऽस्त्विति चेत्—॥११॥

## नासमवायात् ॥१२॥

न तत्र **असमवायात्**–यागान्तरेण साहित्याभावात् । अत्र तु ' वैश्व-देवीं कृत्वा प्राजापत्यैश्चरन्ती ' ति साहित्यस्य श्रुतत्वात् काण्डानुसमयो न सम्भवति । वैषम्यादेवेति भावः ॥१२॥

क्रमस्य क्वचित्स्थानानुसारित्वाधिकरणम् ॥६॥

## स्थानाच्चोत्पत्तिसंयोगात् ॥१३॥

साद्यस्क्रनामके विकृतिभूते सोमयागे ' सह पशूनालभते ' इति अग्नीषोमीयाऽऽनुबन्ध्यसवनीयपशूनां सहानुष्ठानं श्रुतम् । तच्च सहानुष्ठानं प्रधानयागप्रत्यासत्तेर्लाभात् सवनीयस्थाने भवतीति सिद्धम् । तत्र कस्य पशोः प्रथममुपाकरणमित्याकांक्षायाम् ' आश्विनं ग्रहं गृहीत्वाऽऽग्नेयं सवनीयं पशुमुपाकरोति ' इत्युत्पत्तिवाक्ये आश्विनग्रहग्रहणोत्तरं सवनीयस्थानस्य श्रुतत्वात्प्रयोगविधिना तस्यैवोपस्थितत्वादुपस्थितस्य परित्यागे प्रमाणाभावाच्च स्थानप्रमाणेन सवनीयपशोरेव प्रथममुपाकरणं कार्यम् । नाग्नीषोमीयस्येति सिद्धम् ॥१३॥

अङ्गक्रमस्य मुख्यक्रमानुसारित्वाधिकरणम् ॥७॥

## मुख्यक्रमेण चाङ्गानां तदर्थत्वात् ॥१४॥

' चित्रया यजेत पशुकामः ' इति विहितचित्रायागे सप्तानां हविषां मध्ये चतुर्थपञ्चमे हविषी इत्यमाम्नायेते—' सारस्वतौ भवतः, एतद्वै दैव्यं मिथुनम् ' इति । सरस्वती च सरस्वांश्चेति विगृह्य समासे कृते पुमान् स्त्रियेति सूत्रेणैकशेषात् सारस्वताविति सिध्यति । तौ देवते ययोस्तौ सारस्वतौ यागाविस्येतद्वै दैव्यं मिथुनमिति वाक्यशेषादवगम्यते । समस्तपदप्रयोगेण च तन्त्रेण तयोरनुष्ठानं सिद्धम् । तत्रैच्छिकाङ्गानामनुष्ठानक्रम इति प्राप्ते आह—मुख्यक्रमेणेति । यद्यप्युत्पत्तिवाक्ये मुख्यस्य क्रमो नास्ति । तथापि हौत्रकाण्डे ' प्रणो देवी सरस्वती'ति स्त्रीदेवताया मन्त्रः प्रथममाम्नातः, पश्चात्पुंदेवतायाः—' पीपिवांसं सरस्वत ' इति । तेन मन्त्रपाठक्रमेण मुख्ययोः क्रमो निश्चितो भवति । तस्मान्मुख्यक्रमानुसारेणाङ्गानामनुष्ठानक्रमोऽत्रावगन्तव्यः । तदर्थत्वादङ्गानां—मुख्यार्थत्वादित्यर्थः । एवं सति सर्वेषामङ्गानां स्वस्वप्रधानसन्निकर्षस्तुल्यो भवतीत्यभिप्रायः ॥१४॥

अङ्गेषु मुख्यक्रमापेक्षया पाठस्य बलीयस्त्वाधिकरणम् ॥८॥

## प्रकृतौ तु स्वशब्दत्वाद्यथाक्रमं प्रतीयेत ॥१५॥

**प्रकृतौ**—पूर्णमासयागे, अङ्गानामनुष्ठानं **यथाक्रमं**—यथा मन्त्रपाठस्तथा **प्रतीयेत**—ज्ञातव्यम् । कार्यमिति यावत् । न पूर्वन्यायेन प्रथमप्रवृत्तवनादीना-मुपांशुयागीयाज्यधर्माणां पश्चादग्नीषोमीयाणां निर्वापादीपधिधर्माणामिति । कुतः ? **स्वशब्दत्वात्**—मन्त्रपाठस्याङ्गप्रतिपादकशब्दधर्मत्वात् । प्रबलेन पाठक्रमेण कल्प्यः क्रमो बाध्यत इति भावः ॥१५॥

ब्राह्मणपाठापेक्षया मन्त्रपाठस्य प्राबल्याधिकरणम् ॥९॥

## मन्त्रतस्तु विरोधे स्यात् प्रयोगरूप-सामर्थ्यात् तस्मादुत्पत्तिदेशः सः ॥१६॥

दर्शपूर्णमासयोः आग्नेययागस्य पूर्वं मन्त्रपाठः, पश्चादग्नीषोमीयस्य । ब्राह्मणपाठस्तु पूर्वमग्नीषोमीयस्य यागस्य, पश्चादाग्नेयस्येति **मन्त्रतः**—मन्त्र-पाठेन सह, ब्राह्मणपाठस्य विरोधे सति मन्त्रपाठ एव प्रबलः स्यात् । न ब्राह्मणपाठः । कुतः? **प्रयोगरूपसामर्थ्यात्**—प्रयोगरूपक्रियोत्पत्तौ कारणत्वा-न्मन्त्रपाठक्रमस्य । न ह्यनुष्ठीयमानक्रियास्मरणं विनाऽनुष्ठानं सम्भवति । तत्स्म-रणं तु मन्त्राधीनम् । तस्मान्मन्त्रपाठक्रमो बलीयः । ब्राह्मणपाठस्य उत्पत्ति-देशत्वात् कर्मस्वरूपबोधकत्वेन अनुष्ठाने विप्रकृष्टत्वाद्दौर्बल्यमिति भावः ॥१६॥

प्रयोगवचनाचोदकस्य बलवत्त्वाधिकरणम् ॥१०॥

## तद्वचनाद्विकृतौ यथाप्रधानं स्यात् ॥१७॥

अध्वरकल्पाभिधायां विकृतीष्टौ हविषा त्रयं श्रूयते—' आग्नावैष्णव-मेकादशकपालं निर्वपेदभिचरन् । सरस्वत्याज्यभागा स्यात् । बार्हस्पत्यश्चरुः इति । तत्र **विकृतौ**—उक्तविकृतीष्टौ, **यथाप्रधानं**—प्रधानयागानुक्रमानुसार-मेवाङ्गानामनुष्ठानं स्यात् । न प्राकृताङ्गानुष्ठानक्रमानुसारम् । कुतः ? **तद्वचनात्**—प्रधानक्रमबोधकप्रधानवचनपाठबलादित्यर्थः ॥१७॥

## सि०॥ विप्रतिपत्तौ वा प्रकृत्यन्वयाद्यथाप्रकृति ॥१८॥

विप्रतिपत्तौ—मुख्यक्रमाङ्गक्रमयोर्विरोधे, **यथाप्रकृति**—प्रकृतौ य क्रमोऽङ्गानुष्ठाने निश्चितः, स एव विकृतौ तदनुष्ठाने ज्ञेय । कुत ? **प्रकृत्यन्वयात्**—प्रकृतौ क्रमस्य क्लृप्तत्वात् । प्रकृतित अतिदिश्यमानानामङ्गानां क्रमसहितानामेव प्राप्त्या न क्रमाकाङ्क्षा तेषां विकृताविति भाव ॥१८॥

विकृतौ क्वचित्प्रकृतिधर्मानतिदेशाधिकरणम् ॥११॥
( साकमेधीयन्यायः । )

## विकृतिः प्रकृतिधर्मत्वात्तत्काला स्याद्यथाशिष्टम् ॥१९॥

चतु पर्वात्मकचातुर्मास्ययागीयसाकमेधाभिधतृतीयपर्वणि 'अग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेत् । मरुद्भ्य सान्तपनेभ्यो मध्यन्दिने चरुम् । मरुद्भ्यो गृहमेधिभ्य सर्वासां दुग्धे सायमोदनमिति' श्रुतम् । तत्रैतास्तिस्रो विकृतीष्टय **तत्कालाः**—प्रकृतिवत् व्यहकाला, न सद्यस्काला इत्यर्थ । कुत ? प्रकृतिधर्मत्वाद्विकृतेरिति शेष । प्रकृतौ ये धर्मा त एवातिदिश्यन्ते विकृतौ चोदकेन । तस्माद्यथा**शिष्टं**—विहितं व्यहकालत्व प्रकृतौ, तथाऽत्रापि व्यहकालत्व प्राप्तमित्यर्थ ॥१९॥

## सि०॥ अपि वा क्रमकालसंयुक्ता सद्यः क्रियेत तत्र विधिरनुमानात्प्रकृतिधर्मलोपः स्यात् ॥२०॥

क्रमेण दिनावयवात्मककालेन च संयुक्ता प्रात, मध्यन्दिने, सायमिति सा सद्य कर्तव्या स्यात् । न व्यहकाला । कुत ? विकृत्युत्पत्ति । अत. सा सद्य काला स्यात् । यथा देवदत्त प्रातरपूप भक्षयति 'मध्याह्नेऽन्नम्, रात्रौ मोदकानित्यत्रैकदिनत्व शब्दात्प्रतीयते तद्वदत्रापीत्यर्थ. । तत्र सद्य कालत्वस्य शब्दादेव प्रतीति । विकृतौ प्राकृतिक व्यहकालत्वमनुमानात् प्राप्तम् । त प्रत्यक्षेण शब्देन सद्यस्कालत्वेन बाध्यते इति तस्य लोप इति भाव ॥२०॥

## कालोत्कर्ष इति चेत् ॥२१॥

नन्वत्र प्रातरादिशब्दः कालोत्कर्षबोधकः । तथा च पूर्वदिने कालत्रये त्रयाणामन्वाधानं परेद्युस्त्रिषु कालेषु यागत्रयं स्यादिति चेत्—॥२१॥

## न तत्सम्बन्धात् ॥२२॥

उत्पत्तिवाक्यसम्बन्धात् उत्पत्तिवाक्यसम्बन्धान्न नोत्कर्षप्रापकत्वमिति ॥२२॥

अनुयाजाद्युत्कर्षप्रयाजान्तापकर्षाधिकरणम् ॥१२॥
( तदादितदन्तन्यायः । )

## पू० ॥ अङ्गानां मुख्यकालत्वाद्यथोक्तमुत्कर्षे स्यात् ॥२३॥

*ज्योतिष्टोमे सवनीयपशौ अनुयाजानामुत्कर्षः श्रुतः—' आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ती'ति* । तथा अग्नीषोमीयपशौ प्रयाजानामपकर्षः श्रुतः—' तिष्ठन्तं पशुं प्रयजन्ति ' इति । प्रकृतौ वेद्या हविरासादनानन्तरं प्रयाजा इज्यन्ते । इहापि पशुसंज्ञपनादूर्ध्वं हविष्यासादिते पश्चादेव चोदकेन प्रयाजाः प्राप्ताः । ते चात्र वचनाज्जीवत्येव पशौ अपकृष्यन्ते । तत्र अनुयाजमात्रस्य प्रयाजमात्रस्य च उत्कर्षापकर्षौ ज्ञेयौ । न अनुयाजाद्यङ्गजातस्य प्रयाजान्ताङ्गकलापस्य चोत्कर्षापकर्षौ । कुतः ? **अङ्गानाम्**—अनुयाजप्रयाजातिरिक्ताङ्गानां, **मुख्यकालत्वात्**—मुख्यसमीपकालसम्बन्धित्वात्, **यथोक्तम्**—यावच्छ्रुतं तावदेवोत्कर्षापकर्षौ स्याताम्, न ततोऽधिकानामिति ॥ २३ ॥

## सि०॥ तदादि वा अभिसम्बन्धात्तदन्तमपकर्षे स्यात् ॥२४॥

वेति पक्षव्यावृत्तिः । **तदादि**—अनुयाजादि सर्वमङ्गजातमुत्कृष्टं स्यात् । प्रयाजान्तं चाङ्गजातमपकृष्टं स्यात् । न पुनस्तन्मात्रं च । कस्मात् ? **अभिसम्बन्धात्**—प्रयोगविधिनाऽभिसम्बन्धात् । प्रकृतौ पदार्थानुष्ठानक्रमस्य

रूपत्वात् समकमाणामेव तेषां चोदकेनानिदिष्टत्वात् व्युत्क्रमे पूर्वेणोत्तरस्य बुद्धावनुपस्थितत्वादनुष्ठानस्यैव लोपप्रसङ्गः स्यात् । अतस्तदादेस्तदन्तस्य चाङ्गकलापस्य उत्कर्षापकर्षौ स्यातामिति भावः ॥२४॥

## प्रवृत्त्या प्रोक्षणादीनां सौमिकपूर्वभावित्वाधिकरणम् ॥१३॥

## प्रवृत्त्या कृतकालानाम् ॥२५॥

ज्योतिष्टोमे सुत्यादिनेऽनुष्ठेयः प्रातरनुवाकः प्रथमं पठितः । ततः प्रचरणीहोमादयः पठिताः । ततः सवनीयपुरोडाशादयः । ते तु चोदकप्राप्तनिर्वापादियुक्ताः । ततो बहिष्पवमानस्तोत्रं पठितम् । तत्र अध्वर्युः होत्रे प्रातरनुवाकप्रैषं दत्त्वा तदानीमेव प्रतिप्रस्थातारमेवं प्रेष्यति —' प्रतिप्रस्थातः, सवनीयान्निर्वपस्व ' इति । ततः पाठक्रमेण प्रचरणीहोमादिभ्य ऊर्ध्वं प्राप्तोऽपि सवनीयपुरोडाशनिर्वापः प्रैषवशात्प्रातरनुवाकसमये अपकृष्टः । सवनीयपुरोडाशानामलङ्कारप्रैषोत्कर्षोऽस्त्वत्यमाम्नातः— ' बहिष्पवमाने स्तुते ' आह ' अग्नीदग्नीन् विहर । बर्हिस्तृणीहि । पुरोडाशानलंकुरु ' इति। स्थिते चैवं प्रकृतौ निर्वापोत्तरभाविनः प्रागलङ्करणाद्भाविनः प्रोक्षणादयो ये पदार्थास्तेऽत्र चोदकप्राप्ताः । तेषां निर्वापवदपकर्षस्यालङ्करणवदुत्कर्षस्याश्रुतत्वात् उभयार्मध्यकाल एवानुष्ठानं प्राप्तम् । सत्येवं प्रचरणीहोमादिभिः सौमिकपदार्थैः सह ऐष्टिकानां चोदकप्राप्तानां प्रोक्षणादिपदार्थानामेककालानुष्ठेयाना पौर्वापर्यक्रमनिश्चये नियामकमाह--प्रवृत्त्येति । कृतकालानां--प्रकृतौ प्रवृत्त्या ज्ञातकालाना निर्वापानन्तरं स्मृतानां प्रोक्षणादीनामलङ्करणपर्यन्तानां पदार्थानामनुष्ठानम् । ततः सौमिकानां प्रचरणीहोमादीनामिति सिद्धान्तः । निर्वापोत्तरं स्मृतप्रोक्षणादिपरित्यागे मानाभाव इति भावः ॥२५॥

## शब्दविप्रतिषेधाच्च ॥२६॥

प्रावृत्तिकक्रमानङ्गीकारे ' पुरोडाशानलंकुरु ' इत्यध्वर्युणा दत्तप्रैष आग्नीध्रः अलङ्करणात्पूर्वभाविनां प्रोक्षणादिपदार्थानामजातत्वात्तत्प्रतीक्षा

कुर्यात् । तथा सति प्राप्तकालवचनो छोडन्तशब्दप्रयोगो विरुध्येत । स दोषो सिद्धान्ते नास्तीत्यतः शब्दविप्रतिषेधप्रसक्तेरपि प्रावृत्तिकक्रम एवात्राङ्गीकार्य इति सिद्धम् ॥२६॥

## वैकृतयूपकर्ममात्रापकर्षाधिकरणम् ॥१४॥

## ( यूपकर्मन्यायः । )

# असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत ॥२७॥

ज्योतिष्टोमे वैसर्जनहोमानन्तरं प्राचीनवंशमण्डपगतवह्नेः दर्शपूर्णमासप्रकृतिकाऽऽग्नीषोमीयपशुयागार्थं, तथा तत्रैव प्रागवस्थापितसोमस्य च अभिषवार्थं हविर्धानमण्डपे प्रणयनं कार्यमस्ति । तदूर्ध्वं पश्वर्थं यूपच्छेद आम्नातः । तदेतत्सर्वं सुत्यादिनात्पूर्वस्मिन्नौपवसथ्येऽह्नि प्राप्तम् । तत्र यूपच्छेदः 'दीक्षासु यूपं छिनत्ती'ति श्रुत्या दिनत्रयात्प्राग् दीक्षाकाले अपकृष्टः । तस्मिन्नपकृष्टे तदन्ताङ्गसमूहस्य प्रणयनादेरपि प्रयाजन्यायेनापकर्षः कार्य इत्याशङ्कायामाह–असंयोगादिति । वैकृतं–स्वप्रकृतिभूतदर्शेष्टावविद्यमानमग्नीषोमीयपश्वर्थं विकृतौ यद्यूपच्छेदनं श्रुतं, तदेव–तन्मात्रमेवापकृष्टं स्यात् । न तदन्तमङ्गजातम् । कुतः ? वैषम्यात्–प्रयाजाधारादीनामङ्गानामेकप्रधानाङ्गत्वेनैकप्रयोगान्तःपातित्वात् परस्परक्रमस्तत्रावश्यंभावीति प्रयाजापकर्षे तदन्ताङ्गजातस्यापकर्षस्तत्र युक्त एव । प्रकृते तु प्रणयनं सोमयागस्याङ्गम् । यूपच्छेदस्तु अग्नीषोमीयपशोरङ्गमिति वैषम्यम् । अतस्तयोः असंयोगात् -मिथः क्रमापेक्षाया अभावात्, यूपच्छेदमात्रस्यापकर्षः, न प्रणयनादेरिति ध्येयम् ॥२७॥

## दाक्षिणाग्निकहोमानपकर्षाधिकरणम् ॥१५॥

# प्रासङ्गिकं च नोत्कर्षेदसंयोगात् ॥२८॥

ज्योतिष्टोमे सवनीयपुरोडाशे पिष्टलेपफलीकरणहोमौ चोदकेन प्राप्तौ । तौ दक्षिणाग्नौ कार्याविति दाक्षिणाग्निकहोमावित्युच्येते । प्रकृतावनुयाजोत्तरकालीनौ तौ । अनुयाजाश्चात्र– ' आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ती 'ति

श्रुत्या ' आग्निमारुतादूर्ध्वमुत्कृष्टाः । एवं स्थिते तदादिन्यायेन सूक्तवाक्यवदेतावपि होमा उत्कृष्टव्याविति चेदाह–**प्रासङ्गिकमिति** । अत्र अनुयाजाः पश्वर्थाः, न पुरोडाशार्थाः । प्रसक्तस्तत्तयोपकारका इत्येव । पिष्टलेपफलीकरणहोमौ तु पुरोडाशार्थौ । पशौ पिष्टलेपाद्यभावान्न तयोः प्रसङ्गतः सिद्धिस्तत्र । तस्मात्–पश्वर्थं सत् प्रसङ्गतः ' ग्रामगमनतृणस्पर्शन्यायेन ' पुरोडाशोपकारकमपि अनुयाजकर्म दक्षिणाग्निकहोमद्वयं **नोत्कर्षेत्**–स्वस्थानाच्च्यावयितुमसमर्थं तत्कर्मेत्यर्थः । कुतः ? **असंयोगात्**–प्रासङ्गिकत्वाप्रासङ्गिकत्वरूपविरुद्धधर्मवत्त्वेनोभयोः पिष्टलेपफलीकरणहोमानुयाजकर्मणोः प्रयोगभेदाच्चेति भावः ॥२८॥

## पुरोडाशाभिवासनांतस्य दर्शेऽनपकर्षाधिकरणम् ॥१६॥

# तथाऽपूर्वम् ॥२९॥

दर्शपूर्णमासयोः–'भस्मना अभिवासयती'ति कपालेषु स्थापितस्य पुरोडाशस्य आच्छादनमाम्नातम् । तत ऊर्ध्वं वेदिराम्नाता । तेनैव पाठक्रमेण पौर्णमासीयागे अनुष्ठानं क्रियते । दर्शयागे तु ' पूर्वेद्युरमावास्याया वेदिं करोती'ति वेदेरपकर्षः श्रुतः । एवं सति तदन्तन्यायेन वेदिपूर्वभाविन अभिवासनान्ताङ्गकलापस्याप्यपकर्षः कार्य इति चेत्तत्राह–**तथेति** । यथा प्रासङ्गिकं तदादित्वेन पिष्टलेपादिहोमं नापकर्षति । तथा अपूर्वमपि श्रुत तदन्तं नापकर्षति । अत्रायमभिसन्धिः–दर्शः न पौर्णमासीविकारः, येन पौर्णमास्या क्लृप्तः क्रमोऽत्रातिदिश्येत । अपि तु पौर्णमासीवत् स्वतन्त्रा प्रकृतिः । अतोऽत्र स्वातन्त्र्येण क्रमोऽत्रगन्तव्यः । स च ' पूर्वेद्युरमावास्याया वेदिं करोती'ति श्रुत्या निश्चितः । तथा सत्यभिवासनवेद्योः पाठेन क्रमबोधनात्प्रागेव प्रबलया श्रुत्या दार्शिकवेदेः पूर्वदिनसम्बन्धावगमात्तदेव तस्याः स्थानमिति वेदेरपि नापकर्षः । सत्येवं कुत अभिवासनान्तस्याङ्गजातस्येति ॥२९॥

## सान्तपनीयाया अग्निहोत्रानुत्कर्षकत्वाधिकरणम् ॥१७॥

## सान्तपनीया तूत्कर्षेत् अग्निहोत्रं सवनवद्वैगुण्यात् ॥३०॥

चातुर्मास्यीयसाकमेधीयपर्वणि सान्तपनीयेति नामिकेष्टिरित्थमाम्नाता- 'मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं निर्वपती'ति । तामिष्टिं समाप्य सायंसमये अग्निहोत्रं हूयते । स्थिते चैवं मध्यन्दिने उपक्रान्ता सेष्टिर्यदि केनचिद्दैवादिप्रतिबन्धेन अग्निहोत्रकालपर्यन्तमुत्कृष्टा चेत्तदा सा अग्निहोत्रमपि समुत्कर्षेदेव । इष्ट्यग्निहोत्रयोः पौर्वापर्यसद्भावेनेष्टिं समाप्यैवाग्निहोत्रमनुष्ठेयम् । न तत्प्रयोगमध्ये । सवनवत् । यथा प्रातःसवनमुत्कृष्यमाणं माध्यन्दिनसवनमुत्कर्षति । तथेयमप्युत्कर्षेदग्निहोत्रम् । अन्यथा सान्तपनीयार्थं प्रणीतस्याग्नेः पुनः प्रणयनासम्भवेन मन्त्रवत्प्रणयनलोपेन वैगुण्यमपि स्यादित्याशयः ॥३०॥

## अन्यवायाच्च ॥३१॥

सान्तपनीयाङ्गप्रधानयोर्मध्ये अग्निहोत्रेण व्यवधानाभावोऽप्येवं सिध्यति । 'अप वा एतद्यज्ञाच्छिद्यते, यदन्यस्य तन्त्रे विततेऽन्यस्य तन्त्रं प्रतीयते' इति क्रमभेदे दोषोऽपि श्रुतः । अतोऽप्यग्निहोत्रस्योत्कर्ष इति ॥३१॥

## सि० ॥ असम्बन्धात्तु नोत्कर्षेत् ॥३२॥

सान्तपनीयेष्टिर्नाग्निहोत्रस्याङ्गम् । तद्वा तस्याः । अतः असम्बन्धात्-एकप्रयोगान्तर्गतत्वाभावान्नाग्निहोत्रमुत्कर्षेत् ॥३२॥

## प्रापणाच्च निमित्तस्य ॥३३॥

'सायं जुहोती' त्यादिना विहितहोमकाले जीवनरूपनिमित्तस्य प्राप्तत्वात्, सति निमित्ते नैमित्तिकमवश्यमनुष्ठेयमिति नियमात्, विहितकाले अग्निहोत्रमनुष्ठेयमेवेति भावः ॥३३॥

## सम्बन्धात्सवनोत्कर्षः ॥३४॥

एककाल्यन्तर्गतत्वेन सम्बद्धं सवनं सवनेनेति प्रयोगविधिपरिगृहीतत्वाचदुत्कर्षो न्याय्यः । भिन्नप्रयोगविधिपरिगृहीते प्रकृते तद्वैषम्यमिति भावः ॥३४॥

उक्थ्यानुरोधेन षोडश्युत्कर्षाधिकरणम् ॥१८॥

## षोडशी उक्थ्यसंयोगात् ॥३५॥

ज्योतिष्टोमे षोडशीग्रहः प्रकृत्येत्थं श्रूयते- 'तं पराचमुक्थ्येभ्यो गृह्णाति' इति । तृतीयसवने सूर्यास्तमयात्प्रागेवोक्थ्यग्रहास्त्रयो गृह्यन्ते । तेभ्यः परस्तात्तावत् षोडशी उक्तश्रुत्या विहितः । तत्र कदाचिद्यद्युक्थ्यग्रहाणामस्तमयादूर्ध्वमुत्कर्षे सत्यपि षोडशीग्रहोऽपि सस्तोत्र उत्कृष्यः । न 'समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोती'ति स्तोत्रकालानुसारेण प्रधानकालमुपेक्ष्य स अनुत्कृष्यः । कुतः 'उक्थ्यसंयोगात्—' तमुक्थ्येभ्यः पराचं गृह्णाती'ति उक्थ्योत्तरकाले विधानात् । अङ्गकालानुरोधेन प्रधानकालविरोधो न युक्त इति भावः ॥३५॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां पञ्चमाध्यायस्य प्रथमः पादः सम्पूर्णः ॥१॥ श्रीः ॥

---

# अथ पञ्चमाध्यायस्य द्वितीयः पादः ॥

वाजपेयपशूनां सर्वेषां एकदोपाकरणादिपदार्थानुष्ठानाधिकरणम् ॥१॥
( पदार्थानुसमयन्यायः । )

## सन्निपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात् ॥१॥

वाजपेये—' वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति । सप्तदश प्राजापत्यान् पशूनालभते ' इति श्रूयते । प्रकृतावग्नीषोमीये पशौ पशुधर्मा उपाकरण-

नियोजनादयः समाम्नाताश्चोदकेनात्र प्राप्ताः, ते काण्डानुसमयेनानुष्ठेयाः । न पदार्थानुसमयेनेत्याह—**सन्निपात** इति । संस्कार्याणां बहूनां प्रधानानामेकस्मिन् प्रयोगे सन्निपाते प्रत्येकस्मिन् एकैकगुणानां सर्वं—समग्रं कर्म निःशेषमनुष्ठितं स्यात् । एवं कृते प्रकृतौ यदुपाकरणनियोजनयोरानन्तर्यं क्लृप्तं तदनुग्रहो भविष्यति । अन्यथा उपाकृतायपशोर्नियोजनं तदितरपशूनामुपाकरणैर्व्यवहितं स्यात् प्रकृतिविरुद्धम् । चोदको हि प्रकृतिवद्विकृतिः कार्येति प्राकृतिकधर्मान् विकृतावतिदिशति । तस्मात्काण्डानुसमयोऽत्र ज्ञेयः । न पदार्थानुसमय इति प्राप्ते आह सिद्धान्तं भगवान् सूत्रकारः— ॥१॥

## सि०॥ सर्वेषां वैकजातीयं कृतानुपूर्व्यत्वात् ॥२॥

**सर्वेषां**—पशूनाम्, **एकजातीयम्**—उपाकरणत्वादिना सजातीयं पदार्थं कृत्वा तथैवान्योऽप्यनुष्ठेयः । यतः ' सप्तदश प्राजापत्यान् पशूनालभते । वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती' ति पशूनां साहित्यं प्रत्यक्षतः श्रुतम् । धर्मसाहित्यं तु प्रयोगवचनादिना परिकल्पितम् । तत्प्रत्यक्षाद्दुर्बलम् । अतः प्रत्यक्षश्रुते पशुसाहित्येऽनुष्ठीयत्वेन निश्चिते सति सप्तदशक्रियाणामेककर्तृकाणां युगपदसम्भवात् क्षणभेदमात्रस्यापेक्षितत्वेनैकसंस्कारस्यैव कृतानुपूर्व्यत्वात् पदार्थानुसमय एवात्रानुसर्तव्यः, न काण्डानुसमय इति भावः ॥२॥

**सहस्राश्वप्रतिग्रहस्थले एकैकस्यैकदा सर्वधर्मानुष्ठानाधिकरणम् ॥२॥**

**( काण्डानुसमयन्यायः । )**

## कारणादभ्यावृत्तिः ॥३॥

' यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणाश्चतुष्कपालान्निर्वपेत् ' इत्यत्र शतसङ्ख्याद्युपेताश्वप्रतिग्रहस्थले बहुषु पुरोडाशेषु प्रत्यक्षतः साहित्यं सिद्धम् । अतस्तत्रापि पूर्वन्यायपदार्थानुसमये प्राप्ते आह—**कारणा**दिति। प्रधानबाधरूपकारणात् **अभ्यावृत्तिः**- एकैकस्मिन् पुरोडाशे सर्वसंस्कारकरणम्, काण्डानुसमय इत्यर्थः । पदार्थानुसमयाङ्गीकारे तु प्रथमपुरोडाशस्य सप्ततमकपालाधिश्रितस्य भस्मीभावापत्तिरुत्तरत्राप्येवमिति यागासिद्धिरिति भावः ॥३॥

## मुष्टिकपालादीनां समुदायानुसमयाधिकरणम् ॥३॥

## मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन ॥४॥

दर्शपूर्णमासप्रकरणे आग्नेयाग्नीषोमनिर्वापं प्रकृत्य 'चतुरो मुष्टीन्निर्वपती'ति श्रुतम्। तत्रैकैको मुष्टिर्मुष्ट्यन्तरनैरपेक्ष्येण स्थित इत्येकैकस्य मुष्टेर्निर्वापाङ्गभूतपदार्थत्वमिति द्वयोर्निर्वापयोः क्रमेणैकैकमुष्टिं निरूप्य ततो द्वितीयादिमुष्टिरित्येवं पदार्थानुसमयः कर्तव्यः। न पूर्वाधिकरणवत्काण्डानुसमयः। एवं कपालोपधानेऽप्याग्नेयस्यैकं कपालमुपधाय तत अग्नीषोमीयस्यैकम्। तथा आग्नेयस्यैकमवदानं कृत्वा तदनन्तरमग्नीषोमीयस्यैकमवदानं कार्यम्। तथा दीक्षितसंस्कारे 'त्रिराङ्क्ते' इत्यत्रैकचक्षुष एकमञ्जनं कृत्वाऽपरचक्षुष एकमेवं त्रिः कार्यम्। दीक्षितसंस्काररूपमभ्यञ्जनमपि तथैवानुष्ठेयम्। अतिदिष्टे त्रिस्त्रिर्वपतीत्यत्राप्येकैकवपनक्रमेण त्रित्वं सम्पादयेत्। तथा 'चित्पतिस्त्वा पुनातु' इति सप्तभिर्मुखम्। 'वाक्पतिस्त्वा पुनातु' इति सप्तभिर्मुखाधो नाभिपर्यन्तम्। 'देवस्त्वा सविता पुनातु' इति नाभिमारभ्य पादपर्यन्तं सप्तभिरिति प्रकृतौ विहितम्। तत् कुलायनामके सत्रे अतिदेशेन प्राप्तम्। तत्र सर्वेषां यजमानानां प्रथमं मुखस्य पश्चान्नाभिपर्यन्तस्य तदनन्तरं पादपर्यन्तस्य विधेयम् इति। सर्वत्रैकेन मुष्ट्यादि नानिर्वापादिर्विधेयः पदार्थानुसमयेन। न काण्डानुसमयेनेति पूर्वः पक्षः ॥४॥

## सि०॥ सर्वाणि त्वेककार्यत्वादेषां तद्गुणत्वात् ॥५॥

सर्वाणि—मुष्ट्यादिपावनान्तानि, एककार्यत्वात्—एकापूर्वे अन्वयात् तत्तत्सङ्ख्यामुष्ट्याद्युभयविशिष्टनिर्वापादेरपूर्वोद्देशेन विधानात्, एषां मुष्ट्यादीनां तत्तत्सङ्ख्याविशिष्टानामेव, तद्गुणत्वात्—अपूर्वाङ्गत्वात्, विशिष्ट एव पदार्थः। न केवलो मुष्ट्यादिः। स तु पदार्थैकदेशः। न पदार्थैकदेश-

स्यानुसमयः । अपि तु पदार्थस्यैव । निर्वापादिस्वरूपभेदस्य लोकतोऽवगमेऽपि अङ्गत्वापरपर्यायपदार्थभेदस्य शास्त्रैकगम्यत्वात् चतुःसङ्ख्याविशिष्टमुष्टे., अष्टसङ्ख्याविशिष्टाऽऽग्नेयकपालस्य, एकादशसङ्ख्यायुताग्नीषोमीयकपालस्य, द्वित्वविशिष्टहविरवदानस्य, त्रित्वविशिष्टाजनस्य, त्रित्वोपेताभ्यञ्जनस्य, त्रिंशत्सङ्ख्योपेतवपनस्य, एकविंशतिसङ्ख्याविशिष्टपावनस्य च, पदार्थत्वात् समुदायानुसमय एवात्र । नांशानुसमय इति भावः ॥५॥

अवदानस्य प्रदानांतानुसमयाधिकरणम् ॥४॥

## संयुक्ते तु प्रक्रमात्तदन्तं स्यादितरस्य तदर्थत्वात् ॥६॥

दर्शपूर्णमासयोः 'द्विर्हविषोऽवद्यति' इत्येकेन विधिना विहितं द्वित्वसङ्ख्याविशिष्टमवदानमेकः पदार्थः । ततस्तेन मात्रेणानुसमयः कार्यः, न प्रदानान्तेन तेन । तथा च आग्नेयस्य द्विरवदानं कृत्वा तद्धोमात्प्रागेव आग्नीषोमीयस्यावदानं विधेयम् । इति प्राप्ते आह सिद्धान्तम्-

**संयुक्ते त्विति** । 'चतुरवत्तं जुहोती' ति चतुरवत्तसम्बन्धे होमे विधीयमाने **प्रक्रमात्**- चतुरवत्तेनोपक्रमात् **इतरस्य**- चतुरवत्तस्य हविषः, **तदर्थत्वात्**- होमार्थत्वात्, **तदन्तं**-होमान्तमेकः पदार्थः स्यात् । अवदान तु 'उपस्तृणाति, द्विर्हविषोऽवद्यति, सकृदभिघारयति' इति विधेः चतुरवत्तावयवं तदिति नैकः पदार्थः । तस्मादवदाय हुत्वा पश्चादग्नीषोमीयस्यावदानादीति सिद्धम् ॥६॥

अञ्जनादेः परिव्याणान्तानुसमयाधिकरणम् ॥५॥

## वचनात्तु परिव्याणान्तमञ्जनादि स्यात् ॥७॥

ज्योतिष्टोमे आग्नीषोमीयपशौ यूपस्य घृतेनाञ्जनाभ्यञ्जनम्, उच्छ्रयणम्, अवटस्य पर्यूहणं, यूपमूलस्य परिबृंहणं, मध्ये रशनया परिव्याणमित्यादयः पदार्थाः यूपसंस्कारतया समाम्नाताः । ते चैकयूपपक्षे यथाम्नातास्तथैव कार्याः क्रियन्ते च । एवं 'एकादशिनी याऽन्वेषा यज्ञानां यूपा

भवन्ति । एकविंशत्यश्वमेधस्य ' इति बहुयूपपक्षेऽपि ' अञ्जनादिपरिव्याणान्तं ' यजमानो यूपं नावसृजति ' इति वचनेन यजमानस्य यूपत्याग-प्रतिषेधात् तदन्यारम्भस्याप्यङ्गत्वेन पदार्थानुसमये तस्यासम्भवात्काण्डानु-समय एवात्र समुपपद्यत इति ज्ञेयम् ॥७॥

## आ० कारणाद्वानवसर्गः स्याद्यथा पात्रवृद्धिः ॥८॥

प्रकृतौ संयोगाभावाभावरूपसंयोगाख्यः अनवसर्गः अध्वर्युसाहाय्यरूप-कारणादर्थात्स्यादित्यपि सम्भवति । न चार्थिकं चोदकः प्रापयति । अपि तु विहितमेव । तस्माद्यूपान्तरस्योच्छ्रयणार्थं यूपमवसृजेद्यजमानः । यथा ' पृष-दाज्येन अनुयाजान् यजती ' त्यर्थात्पात्रवृद्धिः, तथात्रार्थादवसर्गः कार्य इति ॥८॥

## आ० नि० ॥ न वा शब्दकृतत्वान्न्यायमात्र-मितरदर्थात् पात्रवृद्धिः ॥९॥

**न वेति** । प्रकृतौ यूपस्यार्थादनवसर्ग इत्यस्य व्यावृत्तिः । ' अञ्जनादिपरिव्याणान्तं यजमानो यूपं नावसृजेत् ' इति **शब्दकृतत्वात्**—प्रत्यक्ष-श्रुतिविहितत्वात्तस्य । **इतरत्**—प्रयोगविधिपरिगृहीतप्रयोगप्राशुभावस्तु **न्यायमात्र**— केवलानुमानगम्य इत्यर्थः । ततस्तस्य तथा बाधः । पात्रवृद्धि-स्त्वर्थादेव । यतः ' अष्टावुपभृतीत्युपभृतमुद्दिश्यैवाष्टत्वसङ्ख्यायाः ग्रहणं विहितम् । न त्वेकत्वविशिष्टमुपभृतमुद्दिश्य । उद्देश्यगतसङ्ख्यायाः संमार्ग-न्यायेनाविवक्षितत्वात् । अतस्तत्रत्यमेकत्वमार्थिकम् । आर्थिकस्यानङ्गत्वता यत्र ' पृषदाज्येनानुयाजान् यजती'ति श्रुतम्, तत्र बाधकाभावात्पात्रवृद्धिरिति दृष्टान्तवैषम्यं प्रकृते । तस्माद्यूपानेकत्वे अञ्जनादिपरिव्याणान्तमेकस्मिन् यूपे कृत्वा तत अन्यस्मिन् यूपे तथा कार्यमिति काण्डानुसमय एवात्रानुष्ठेयः, न पदार्थानुसमय इति निष्कृष्टोऽर्थः ॥९॥

दैवताद्यवदानेषु पदार्थानुसमयाधिकरणम् ॥६॥

## पशुगणे तस्य तस्यापवर्जयेत् ॥१०॥

ज्योतिष्टोमे अग्नीषोमीयपशौ 'दैवतान्यवदाय न तावत्येव होतव्यम्। सौविष्टकृतान्यवद्यति। सौविष्टकृतान्यवदाय न तावत्येव होतव्यम्। ऐडान्यवद्यती' त्यवदानत्रयं प्रथमं कृत्वा पश्चाद्धोमः अग्नीषोमीयपशौ क्रमशः सिद्धः। प्रकृतावेकस्मिन् पशौ अवदानत्रयस्य काण्डानुसमयो यथा तथा वाजपेये प्राजापत्यपशुगणेऽपि तस्य तस्य—अवदानस्य होमस्य च एकैकस्मिन् पशौ अपवर्जनं—समापनं कार्यम्। पश्वेकत्वात्— प्रत्येकस्मिन् पशौ प्रकृतिवत्पश्वेकत्वस्य तुल्यत्वात्। तथा सति प्रकृत्यनुग्रहः सिध्यतीति॥१०॥

## सि०॥ दैवतैर्वैककर्म्यात् ॥ ११ ॥

अत्र पशुगणे दैवतैरवदानैरनुसमयः कार्यः, पश्चात्सौविष्टकृतैरवदानैरनुसमयः, तदनन्तरमैडैरवदानैस्ततो होम इति क्रमः। कुतः? ऐककर्म्यात्-उपाकरणादिपशुसंस्कारवदेककर्मत्वात्। प्रकृतौ पश्वेकत्वेन पदार्थानुसमयप्रसक्त्यभावादास्तां नाम काण्डानुसमयः। अत्र तु पश्वनेकत्वात् पदार्थानुसमय एव युज्यत इति भावः॥ ११ ॥

## यु० ॥ मन्त्रस्य चार्थवत्त्वात् ॥१२॥

'त्वं ह्यग्ने प्रथमो मनोते'ति मन्त्रस्यार्थवत्त्वात्तन्त्रसम्भवाल्लाघवम्। अन्यथा पर्यायेणैवेति गौरवापत्तिरिति भावः॥ १२ ॥

### नानाबीजेष्टौ उलूखलादीनां तन्त्रताधिकरणम् ॥७॥

## नानाबीजे एकमुलूखलं विभवात् ॥१३॥

राजसूये 'अग्नये पुरोडाशमष्टाकपालं निर्वपेत् कृष्णानां व्रीहीणाम्। सोमाय वनस्पतये श्यामाकं चरुम्' इति नानाबीजेष्टिर्विहिता। तस्या प्रकृतितश्चोदकेन प्राप्तमुलूखलादिकं तन्त्रेणैकमेव स्यात्। न प्रतिबीजजातिं पृथक्। कुतः? विभवात्—तन्त्रेण एकेनैव अवहननादिक्रियासम्भवात्॥१३॥

## पू० प० ॥ विवृद्धिर्वा नियमादानुपूर्व्यस्य तदर्थत्वात् ॥१४॥

**विवृद्धिर्वा** — उलूखलादीनां विवृद्धिरेव स्यात् । तन्त्रतः समुपपत्तौ सत्यां कस्मात्तेषां विवृद्धिराशङ्क्यत इति चेत् — **आनुपूर्व्यस्य नियमात्** — कृष्णाजिनास्तरण — उलूखलाधिवर्तन — बीजावाप — अवघात — परावपन — विवेचन — फलीकरण — पात्र्यां तण्डुलप्रक्षालनादयः " कृष्णाजिनमधस्तादुलूखलस्यावस्तृणाति तदुपर्युलूखलमवस्थापयति । तत्र व्रीजानावपति । मुसलेनावहन्ति । शूर्पेण परापुनाति । कणेभ्यस्तण्डुलान् विविनक्ति । पात्र्यां प्रक्षालयति " इत्यादि पृथक् पृथक् विधिभिस्ते कृष्णाजिनास्तरणादिप्रक्षालनान्ताः क्रमशो विहिताः पदार्थाः, इति प्रकृतौ तेषामानुपूर्व्यस्य— पाठक्रमस्य नियमात् —क्लृप्तत्वात् इह विकृतावपि तथैव ते अतिदिष्टाः कर्तव्या आवपनावहन्त्यादयः पदार्था इत्युलूखलादीनां विवृद्धिरेव । तेषां **तदर्थत्वात्**— अवघातादिशेषत्वात् इति ॥१४॥

## सि० सू० ॥ एकं वा तण्डुलभावाद्धन्तेस्तदर्थत्वात् ॥१५॥

एकमेव उलूखलादिकं पर्यायेण स्यात् । **तण्डुलभावात्** — तण्डुलनिष्पत्तिपर्यन्तं तेन सम्पाद्य पश्चात्तेनैवापरबीजस्य तथानुष्ठानं विधेयम् । कस्मात् ? अवपूर्वकहन्तेः **तदर्थत्वात्** — तण्डुलनिष्पादकोलूखलाधिश्रयणमारभ्य तण्डुलनिष्पत्तिपर्यन्तक्रियासमूहार्थत्वात् । तावत्क्रियासमूह एकः पदार्थः । अतस्तेनैवानुसमयः । आस्तरणाऽऽवपनादिस्तु तदवयव इति भावः ॥१५॥

अग्नीषोमीयपशौ प्रयाजानुयाजयोः पात्रभेदाधिकरणम् ॥८॥

## विकारे त्वनुयाजानां पात्रभेदोऽर्थभेदात् ॥१६॥

ज्योतिष्टोमान्तर्गताऽग्नीषोमीयपशौ 'पृषदाज्येनानुयाजान् यजती'ति श्रुतम् । तत्र **विकारे**—विकृतौ, अनुयाजार्थं पात्रभेदः स्यात् । **अर्थभेदात्**—

द्रव्यभेदादित्यर्थः । दधिमिश्रमाज्यं हि शुद्धाऽऽज्याद्भिन्नमेव । अत एकपात्रे उपभृति तस्य ग्रहणासम्भवः । न कर्मणि कर्मान्तरारम्भ इति भावः ॥१६॥

नारिष्टहोमानामुपहोमपूर्वत्वाधिकरणम् ॥९॥

## प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यान्न ह्यचोदितस्य शेषाम्नानम् ॥१७॥

काम्येष्टिकाण्डे 'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत्' इत्यग्न्यादिदेवतायुक्तकृत्तिकादिनक्षत्रेष्टयो विहिताः । तत्र 'अग्निर्नः पातु कृत्तिकाः । नक्षत्रं देवमिन्द्रियम् । इदमासां विचक्षणम् । हविरासंजुहोति न' इत्यादियाज्यानुवाक्यापुरस्सरं प्रधानहोमाः श्रूयन्ते । तत्सन्निधौ 'सोऽत्र जुहोति । अग्नये स्वाहा । कृत्तिकाभ्य स्वाहा । अम्बायै स्वाहा । दुलायै स्वाहा'इत्यादय उपहोमाः समाम्नाताः । प्रकृतौ प्रधानहोमस्विष्टकृतोर्मध्ये 'दश ते तनुवो यज्ञयज्ञिया०' इत्यादिभिर्मन्त्रैराज्याहुतिसञ्ज्ञका नारिष्टहोमा विहिताः । ते चात्र नक्षत्रेष्टौ चोदकेन प्राप्ताः । तेषामुपहोमाना च समुच्चयोऽत्र विकृताविस्युत्तरत्र वक्ष्यति ; सत्येवं तेषां तेषां च पूर्वापरभावविशये सिद्धान्तमाह — **प्रकृतेरिति** । प्राकृतधर्माणां नारिष्टहोमानां **पूर्वोक्तत्वात्**— उत्पत्तिवाक्यश्रवणवेलाया विकृतेः कथंभावाकाङ्क्षापूरकतया विकृतिः प्रकृतिवदनुष्ठेयेति चोदकेन तेषामध्याह्नतत्वात्पूर्वमनुष्ठानम् । अपूर्वं वैकृतमङ्गमन्ते स्यात् । **हि**—यतः, **अचोदितस्य**— अनुत्पन्नकर्मणः, **शेषाम्नानम्**— अङ्गपाठः, इति न सम्भवति । तस्मादुत्पत्त्यनन्तरमुत्पन्नकर्मणः सन्निधिपाठादङ्गत्वमहः पाश्चात्यः, प्राकृतधर्माणामङ्गत्वग्रहस्तूत्पत्तिवेलायामेवेति तेषां पूर्वत्वम् । वैकृतानां तदानन्तर्यमिति भावः ॥१७॥

## पू०प०॥ मुख्यानन्तर्यमात्रेयस्तेन तुल्यश्रुतित्वाद— शब्दत्वात् प्रकृतानां व्यवायः स्यात् ॥१८॥

**आत्रेय आचार्यः** वैकृतानामङ्गाना **मुख्यानन्तर्यं**— प्रधानानन्तर्यं प्राकृतात्पूर्वत्वमेव मनुते । **तेन**—प्रधानेन तुल्यश्रुतित्वात् यथा

प्रधानस्य प्रत्यक्षश्रवणम्, तथा वैकृतानां प्रत्यक्षश्रुतत्वात् प्राथम्यम्। प्राकृतानां नारिष्ठहोमानां तु अशाब्दत्वात्–आनुमानिकत्वेन विलम्बोपस्थितत्वात्, प्रधानेन साकं व्यवायः –व्यवधानं स्यात्। पश्चादनुष्ठितिरित्यर्थः फलितः ॥१८॥

## अन्ते तु बादरायणः तेषां प्रधानशब्दत्वात् ॥१९॥

बादरायण आचार्यः अन्ते–प्राकृतधर्माणामन्ते, वैकृतान् धर्मान् मनुते। तेषां–प्राकृतानां धर्माणां, प्रधानशब्दत्वात्– प्रधानविषयशाब्दबोधविषयत्वात्। पूर्वोक्तदिशा उत्पत्तिवाक्यगम्यत्वादिति भावः। इति बादरायणमतेन सिद्धान्तदृढीकरणम् ॥१९॥

## तथा चान्यार्थदर्शनम् ॥२०॥

तथा च पूर्वज्ञातस्य पूर्वमनुष्ठानमिति सिद्धौ च, अन्यार्थस्य दर्शनमुपोद्बलकं दर्शयति। 'आग्नेयं प्रथमम्, अग्निर्हि प्रथममवगतः' इति॥२०॥

### विदेवनादीनामभिषेकपूर्वत्वाधिकरणम् ॥१०॥

## कृतदेशात्तु पूर्वेषां सदेशः स्यात्तेन प्रत्यक्षसंयोगात् न्यायमात्रमितरत् ॥२१॥

राजसूये अभिषेचनीयाख्यसोमयागानन्तरं प्राग् दशपेयात् 'अक्षैर्दीव्यति, राजन्यं जिनाति, शौनःशेपमाख्यापयति, अभिषिच्यते' इति विदेवनादयोऽभिषेकान्ता राजसूयधर्माः क्रमश आम्नाताः। तेष्वभिषेको 'माहेन्द्रस्तोत्रं प्रत्यभिषिच्यते' इति श्रुत्या अभिषेचनीयसोमयागीयमाहेन्द्रस्तोत्रकाले अपकृष्टः। एवं तदपकर्षे सति तत्पूर्वभाविनां विदेवनादीनामप्यपकर्षः स्यात्। नानपकर्षः। कुतः? कृतदेशात् –अभिषेचनीयसोमयागाङ्गभूतमाहेन्द्रस्तोत्रसामीप्यरूपदेशसंयोक्तश्रुत्या क्लृप्तत्वात् अभिषेकपूर्वभाविनां तेषां स एव देशः स्यात्। तेन – अभिषेकेण सह, तेषां पाठक्रमेण प्रत्यक्षसंयोगात्। अभिषेचनीयाङ्गोत्तरत्वन्तु तदङ्गानां तत्पूर्वं पाठाभावात् न्यायमात्रं–काल्पनिकमिति दुर्बलं तत्, प्रत्यक्षपाठक्रमेण बाध्यत इति भावः ॥२१॥

### सावित्रहोमादीनां दीक्षणीयापूर्वत्वाधिकरणम् ॥११॥

## प्राकृताच्च पुरस्ताद्यत् ॥२२॥

'य एवं विद्वान् अग्निं चिनुते' इति विहिताग्निचयने 'सावित्राणि जुहोति' इति सावित्रहोमानाम्नाय ततो महता प्रबन्धेन उखासम्भरणम् । 'स्वयमातृण्णा उपदधाति, प्राणभृत उपदधाति, चित्रिणीरुपदधाति, वज्रिणीरुपदधाति' इतीष्टकाः पशुश्चेत्येतदाम्नाय पश्चात् 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः' इति दीक्षणीयेष्ट्यादिकमाम्नातम् । तत्र दीक्षणीयेष्ट्यादिकं प्रकृतौ क्लृप्तोपकारकतया शीघ्रं बुध्यमानत्वात् सावित्रहोमादिभ्यः पूर्वमनुष्ठेयमित्याशङ्कायामाह सिद्धान्तं प्राकृतादिति । यद्वैकृतं सावित्रहोम उखासम्भरणादिकं, तत् प्राकृताद्दीक्षणीयेष्ट्यादितः पुरस्तात्--पूर्वं, प्रत्यक्षतः पठितमिति तस्य स एव देशः । चोदकप्राप्तस्यापि दीक्षणीयादेः अग्निकाण्डे सावित्रहोमादिभ्य ऊर्ध्वं पुनः प्रत्यक्षपाठात् सावित्रहोमादिकं कृत्वा पश्चाद्दीक्षणीयादिकं कार्यमिति भावः ॥२२॥

### याजमानसंस्काराणां रुक्मप्रतिमोकात् पूर्वभावित्वाधिकरणम् ॥१२॥

## सन्निपातश्चेद्यथोक्तमन्ते स्यात् ॥२३॥

अग्निचयने 'केशश्मश्रू वपते, नखानि निकृन्तति, स्नाति' इत्यादयः प्रकृतौ विहिता यजमानसंस्काराश्चोदकतः प्राप्ताः । तथा 'रुक्मन्तरं प्रतिमुञ्चते अमृतमेव मृत्योरन्तर्धत्ते' इति प्रत्यक्षवचनेन रुक्मधारणं च प्राप्तम् । तत्र प्राकृतवैकृतयोः सन्निपातः-- युगपत्प्राप्तिश्चेत् यथोक्तम्--प्रत्यक्षश्रुतमपि रुग्धारणमन्ते स्यात् । कुतः ? यजमानसंस्काराणां दीक्षणीयानन्तर्यस्य प्रकृतौ क्लृप्तस्यैवेह चोदकेन प्राप्तिः । रुग्धारणस्य तदानन्तर्यन्तु पाठात्कल्प्यमिति संस्काराः क्लृप्तानन्तर्याः पूर्वभाविनः । कल्प्यानन्तर्यं रुग्धारणं तु पश्चात् विधेयमिति भावः ॥२३॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां पञ्चमाध्यायस्य द्वितीयः पादः सम्पूर्णः ॥ श्रीः ॥

---

# ॥ अथ पञ्चमाध्यायस्य तृतीयः पादः ॥

प्रयाजादीनामेकादशादिसङ्ख्यायाः सर्वसम्पाद्यताधिकरणम् ॥१॥

## विवृद्धिः कर्मभेदात् पृषदाज्यवत्तस्य तस्योपदिश्येत ॥१॥

अग्नीषोमीयपशुयागे 'एकादश प्रयाजान् यजति, एकादशानुयाजान् यजती' ति श्रूयते। तथा चातुर्मास्येषु— 'नवप्रयाजान् नवानुयाजान् यजती' ति श्रुतम्। एवं 'षडुपसद' इत्यग्निचयने आम्नातम्। प्रकृतौ समिदादयः स्वाहाकारान्ताः पञ्चैव प्रयाजास्त्रयोऽनुयाजाश्च विहिताः सन्ति। ते चात्र चोदकेन प्राप्ताः। तान् मिथो विभिन्नानुद्दिश्यैकादशसङ्ख्यारूपो गुणोऽत्र विधीयते। तथा च प्रत्येकं कर्मभेदात् प्रतिप्रधानं गुणावृत्तिरिति न्यायेनेयं सङ्ख्याविवृद्धिः स्यात्। पृषदाज्यवत्— यथा 'पृषदाज्येन अनुयाजान् यजती'त्यत्र प्रत्यनुयाजं पृषदाज्यं गुणो भिद्यते। तद्वदत्रापि तस्य याजस्यैकादशसङ्ख्या स्यात्। एवं विवृद्ध्या पञ्चपञ्चाशत् प्रयाजाः स्युरित्यर्थः ॥१॥

## सि० ॥ अपि वा सर्वसङ्ख्यत्वाद्विकारः प्रतीयेत ॥ २ ॥

अपि वेति पक्षव्यावृत्तिः। एकादशत्वसङ्ख्यायाः सर्वसङ्ख्यत्वात्— समुदायवृत्तिसङ्ख्यारूपत्वात्, समुदायस्य विकारः—आवृत्तिः प्रतीयेत। यथा पृषदाज्यस्येतरनैरपेक्ष्येण प्रत्येकस्मिन्ननुयाजेऽन्वयः सम्भवति। तथा एकादशसङ्ख्याया अन्वयो न सम्भवति। प्रत्येकस्मिन् प्रयाजे स्वानन्त्र्येणैकादशत्वान्वयासम्भवात्। दृष्टान्तदार्ष्टान्तियोरिदमेव वैषम्यम्। तस्मात्—पञ्चप्रयाजान् द्विरावृत्योत्तमस्य सकृदावृत्त्यैवैकादशत्वं सङ्ख्याया अत्रावगन्तव्यमिति भावः। यथासम्भवमितरत्राप्येवमेव ज्ञेयम् ॥२॥

### प्रथमादीनां तिसृणामुपसदां स्वस्थानावृत्त्यधिकरणम् ॥२॥

## स्वस्थानात्तु विवृद्धयेरन् कृतानुपूर्व्यत्वात् ॥३॥

'षडुपसदः' इत्यग्निचयने श्रुतम् । तत्र चोदकप्राप्ताना तिसृणामुपसदां पूर्वन्यायेनाऽऽवृत्त्या षट्सङ्ख्या पूरणीयेति प्राप्तम् । सा च पूर्तिः प्राकृतक्रममनुसृत्य प्रथमाया द्विरावृत्तिः, ततो द्वितीयायाः, ततस्तृतीयायाः इतिप्रत्येकस्या उपसदः स्वस्थानावृत्त्यैव कार्या । न तु दण्डकलितवत्समुदायस्य आवृत्त्या । कुतः ? **कृतानुपूर्व्यत्वात्**—प्रकृतौ क्लृप्तक्रमत्वात् । प्रकृतौ हि दीक्षोत्तरदिने प्रथमोपसद् हूयते । तत ऊर्ध्वदिने द्वितीया । ततोऽप्यूर्ध्वदिने तृतीयेति क्रमः क्लृप्तः । चोदकेन सक्रमा एव ता अतिदिष्टाः । समुदायावृत्त्या विवृद्धौ सम्पादितायां तु प्रमाणप्राप्तप्राकृतक्रमबाधप्रसङ्गः । असति विशेषे स नैव युक्त इति भावः ॥३॥

### सामिधेनीषु आगन्तूनामन्ते निवेशाधिकरणम् ॥३॥

## समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युर्द्यावापृथिव्योरन्तराले समर्हणात् ॥४॥

दर्शपूर्णमासयोः 'सामिधेनीरन्वाह' इति नित्या पञ्चदश सामिधेनीरभिधाय 'एकविंशतिरनुब्रूयात्प्रतिष्ठाकामस्य' इति काम्यसामिधेनीकल्पः श्रूयते । तत्र पठिताः सामिधेनीऋचस्त्वेकादशैव । 'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्' इति विधेरावृत्त्या पञ्चदश भवन्ति ता ऋचः । अवशिष्टाना षण्णामृचां दशतयीपठितानामागमेन सङ्ख्यापूरणं कार्यमिति वक्ष्यति । तत्र आगन्तूनामृचां समावेशः केति प्रश्ने आह—**समिध्यमानवतीं समिद्धवतीं चान्तरेणेति** । प्रकृतौ पठितास्वेकादशसु सामिधेनीऋक्षु मध्ये 'समिध्यमानो अध्वरे' इत्यष्टमी ऋक् समिध्यमानवती । 'समिद्धो अग्न आहुतेति नवमी ऋक् समिद्धवती । तयोर्मध्ये 'यदन्तरा तत् धाय्याः' धीयन्ते इति धाय्या इति व्युत्पत्त्या धाय्यापदवाच्यानां षण्णामागन्तूनामृचां समावेशः स्यात् ।

कुतः? द्यावापृथिव्योरन्तराले समर्हणात्—'इयं वै समिद्धवमानवती, असौ समिद्धवती, यदन्तरा तद्धाय्याः' इति स्तुतिवाक्येन सर्वासां धाय्यापदवाच्यानामागन्तूनामृचां द्यावापृथिवीमध्यवर्तित्वेन स्तुतत्वादिति भावः ॥४॥

## सि० ॥ तच्छन्दा वा ॥५॥

'पृथुपाजवत्यौ धाय्ये' इति विशेषाभिधानात् रूढिर्योगमपहरतीति न्यायाच्च— 'पृथुपाजा अमर्त्यो०' इत्यादिऋग्द्वयमेव धाय्याशब्दस्य मुख्योऽर्थः। तस्यैव मध्ये निवेशः। इतरासामागन्तूनामृचां तन्मध्यनिवेशे प्रमाणाभावात् पठितसामिधेनीक्रमभङ्गापत्तिप्रसङ्गाच्चान्त एव निवेश इति भावः ॥५॥

## उष्णिक्ककुभोरन्ते दर्शनात् ॥६॥

'उष्णिक्ककुभौ धाय्ये' इति उष्णिक्छन्दस्कायाः 'प्रसो अग्ने०' इति ऋचः ककुप्छन्दस्कायाश्च 'प्रहोत्रे पूर्व्यं वचः०' इति ऋचः धाय्यात्वं दर्शयित्वापि तयोरन्ते प्रयोगदर्शनाल्लिङ्गात् पृथुपाजवतीभिन्नानामागन्तूनामृचामन्ते निवेशः इत्येव सिध्यति ॥६॥

बहिष्पवमाने आगन्तूनां पर्यासोत्तरकालताधिकरणम् ॥४॥

## स्तोमविवृद्धौ पुरस्तात्पर्यासादागन्तवः स्युः, तथा हि दृष्टं द्वादशाहे ॥७॥

ज्योतिष्टोमे बहिष्पवमानस्तोत्रे त्रयस्तृचाः सन्ति। 'उपास्मै गायता नरः' इत्यादिरेकः, 'दविद्युतत्या रुचेत्यादिर्द्वितीयः, 'पवमानस्य ते कवेत्यादिस्तृतीयः। तेषां नामानि च स्तोत्रीयः अनुरूपः पर्यासश्चेति। तेषु त्रिषु तृचेषु उर्ध्वगानेन त्रिवृत्स्तोमो भवति। स च 'एकत्रिंशेनातिरात्रेण प्रजाकामं याजयेत्' इति बहिष्पवमानविशेषे अतिरात्रे चोदकेन प्राप्तः। तत्र त्रिवृत्स्तोमं बाधितुं निर्दिष्टश्रुत्या एकत्रिंशस्तोमो विहितः। अत्र बहिष्पवमाने पञ्चदशादिस्तोमवदावृत्तगानस्याभावात् त्रिषु तृचेष्ववस्थिताभिर्नवभिर्ऋग्भिरेकत्रिंशस्तोमपूरणासम्भवात्तत्पूरणाय चत्वारस्तृचा आगम-

यितव्याः । क्रमागमनं च वक्ष्यति । तत्र आगन्तूना तृचां कुत्र समावेश इति जिज्ञासायामाह—**स्तोमविवृद्धाविति** । स्तोमस्य विवृद्धौ सत्यां **पुरस्तात्पर्यासात्**—अनुरूपपर्यासयोस्तृचयोर्मध्ये तेषां तृचां समावेशः स्यात् । **हि**-यतः, **द्वादशाहे तथा दृष्टम्**--द्वादशाहे स्तोत्रीयानुरूपयोरनन्तरमागन्तुका वृषण्वत्य ऋचः पठिताः, ततः पाठक्रमेण अनुरूपानन्तरं पर्यासाच्च प्राक् तासां स्थानं क्लृप्तम् । तथैव क्लृप्तरीत्या अत्राप्यागन्तूनां तृचां पर्यासात् प्राक् अनुरूपानन्तरं च समावेशो युक्त इत्युत्तरस्याशः ॥ ७ ॥

## पर्यास इति चांताख्या ॥ ८ ॥

अन्तस्य तृचस्य पर्यास इत्याख्या । तृतीयतृचस्य नाम पर्यास इत्यर्थः ॥८॥

## सि० ॥ अन्ते वा तदुक्तम् ॥९॥

आगन्तूनामन्त एव निवेश इत्युक्तम् 'अन्ते तु बादरायणः०' (५।२।१९) इति सूत्रेण ॥९॥

## वचनात्तु द्वादशाहे ॥१०॥

यत्तु द्वादशाहे मध्ये निवेश इत्युक्तं तत् 'स्तोत्रीयानुरूपयोरनन्तरमागन्तुका ऋचः पण्णवत्यः' इति वचनात्तथोक्तम् । तत्सन्निधिपठितं तत्रैव ज्ञेयमिति भावः ॥१०॥

## अतद्विकारश्च ॥११॥

'एकविंशेन प्रतिष्ठाकामं याजयेदित्ययं न द्वादशाहस्य विकारस्तस्मात्तत्र तस्य नातिदेश इत्यर्थः ॥११॥

## तद्विकारेऽप्यपूर्वत्वात् ॥१२॥

ननु द्वादशाहाप्रकृतिके आगन्तूनामन्ते निवेशोऽस्तु नाम । किन्तु तत्प्रकृतिके मध्ये निवेशः स्यादेव सर्वेषामित्याशङ्कायामाह—**तदिति** । तद्विकारेऽप्यहीनसत्रादौ वृषण्वत्यातीरिक्तानामृचामन्त एव निवेशः । कुतः ? **अपूर्वत्वात्**—

अक्लृप्तस्थानत्वात् । बृषण्वतीनां पाठक्रमेण पर्यासप्रागुदेशात्मकस्थानस्य क्लृप्तत्वात् तत्स्थानविशिष्टानां तासामेवातिदेशस्तत्र । तद्भिन्नानामपूर्वाणामागन्तूनामृचां तत्स्थाननिवेशे मानाभावादन्त एव निवेश इति भावः ॥१२॥

बहिष्पवमाने आगन्तूनां साम्नां मध्ये निवेशाधिकरणम् ॥५॥

## अन्ते तूत्तरयोर्दध्यात् ॥१३॥

पूर्वोदाहृतातिरात्रे माध्यन्दिनीयाऽऽर्भवपवमानयोः सामागमेन विवृद्धस्तोमपूरणमिति वक्ष्यत्युत्तरत्र दशमे । तत्र **उत्तरयोः**—माध्यन्दिनीयाऽऽर्भवपवमानयोः स्तोमपूरणायामन्तूनां साम्नां पूर्वोक्तऋचामिव अन्त एव निवेशः, न मध्य इति ॥१३॥

## सि० ॥ अपि वा गायत्री बृहती अनुष्टुप्सु वचनात् ॥१४॥

'त्रीणि ह वै यज्ञस्योदराणि गायत्रीबृहत्यनुष्टुप्, चात्र ह्येवावपन्ति, अत एवोद्वपन्ति' इति आवापोद्वापाऽऽवेदकविशेषवचनात् गायत्र्यादिष्वेव आवापादिः । 'उच्चाते जातमन्धस०' इति माध्यन्दिनपवमानस्य गायत्रीच्छन्दस्क आद्यस्तृचः 'स्वादिष्ठयेत्येष आर्भवपवमानस्य च तथैव तृचः । अतस्तयोरेवाऽऽगन्तूनां साम्नां निवेशः । न त्वन्ते त्रिष्टुब्जगतीच्छन्दस्कयोस्तृचयोरिति सिद्धम् ॥१४॥

ग्रहेष्टकादीनां क्रत्वविशेषत्वाधिकरणम् ॥६॥

## ग्रहेष्टकमौपानुवाक्यं सवनचितिशेषः स्यात् ॥१५॥

अनारभ्यपठितवाक्यकाण्डोक्तं—'एष वै हविषा हविर्यजते, योऽदाभ्यं गृहीत्वा सोमाय यजते' । तथा 'चित्रिणीरुपदधाति, वज्रिणीरुपदधाति, भूतेष्टका उपदधाति' इत्यादिवाक्यपठितं ग्रहेष्टकं सवनशेषं चितिशेषं च स्यात् । तस्य सवनचितिनिष्पादकत्वं यतः प्रत्यक्षसिद्धमतः न क्रत्वविशेषत्वमिति ॥१५॥

## सि० ॥ क्रत्वग्निशेषो वा चोदितत्वादचोदनानुपूर्वस्य ॥ १६ ॥

तदुक्तं ग्रहेष्टके क्रतुशेषः अग्निशेषश्चैव स्यात्। कस्मात् 'योऽदाभ्यं गृहीत्वा सोमाय यजते' इति यागाङ्गत्वस्य 'इष्टकाभिरग्निं चिनुते' इति द्वितीयया इष्टकासामान्यं प्रति अग्नेः प्राधान्यस्य च चोदितत्वात्। **पूर्वस्य**–पूर्वोक्तसवनाचिल्यङ्गत्वस्य, **अचोदना**–प्रमाणगम्यत्वाभाव इति निष्कर्षः ॥१६॥

**चित्रिण्यादीनां मध्यमायां चितावुपधानाधिकरणम् ॥ ७ ॥**

## अन्ते स्युरव्यवायात् ॥१७॥

अनारभ्याधीतानां चित्रिण्यादीनामिष्टकानामग्न्यङ्गत्वं समधिगतम्। तासामुपधानं त्वन्ते उत्तमाया चितावेव स्यान्न मध्यमायाम्। तथा सति क्लृप्तक्रमाणां प्राकरणिकानामिष्टकानां परस्परं व्यवधानं न भवेत् इति ॥१७॥

## लिङ्गदर्शनाच्च ॥१८॥

'आवपनं वा उत्तमा चितिः अन्या उपदधाति' इति लिङ्गदर्शनादपि तथैव सिध्यति। आवपनं–निराश्रितानां निवासस्थानम्। उत्तमा-पञ्चमी। अन्या अनारभ्याधीता इत्यर्थः ॥१८॥

## सि० ॥ मध्यमायां तु वचनाद् ब्राह्मणवत्यः ॥१९॥

'*या काश्चन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायामुपदध्यात्*' इत्यनारभ्याधीतब्राह्मणवचनेन विहितानां लिङ्गक्रमादिभिरक्लृप्तस्थानानामिष्टकानां मध्यमायां चितावेव निवेशः, नोत्तमायामिति भावः ॥१९॥

**लोकम्पृणातः पूर्वं चित्रिण्याद्युपधानाधिकरणम् ॥८॥**

## प्राग्लोकम्पृणायास्तस्याः सम्पूरणार्थत्वात् ॥२०॥

आस्तां नामानारभ्याधीतानामिष्टकानां मध्यमाया चितावुपधानम्। तत्रापि सर्वान्त एव स्यादव्यधानायेति चेन्न। लोकम्पृणायाः प्रागेव तत्स्यात्। कुतः? 'यदेवास्योनं, यच्छिद्रं, तदेतया परिपूरयति, लोकम्पृणा। छिद्रम्पृण'।

इति वचनात् तस्याः—लोकम्पृणायाः सम्पूरणार्थत्वात्—छिद्रपूरणार्थत्वात्। लोकम्पृणानन्तरमुपधाने आसां छिद्रपूरकाभावेन सच्छिद्रमेव स्यादतस्तस्याः प्रागेवोपधानं तासामिति भावः ॥२०॥

इष्टिसंस्कृताग्नावग्निहोत्राद्यनुष्ठानाधिकरणम् ॥९॥

## संस्कृते कर्म संस्काराणान्तदर्थत्वात् ॥२१॥

आधानानन्तर 'द्वादशसु रात्रिष्वनुनिर्वपेत्' इति पवमानेष्टिकालविधानात् ताभ्यः पुरा द्वादशसु दिनेष्वग्निहोत्रमनुष्ठेयम्। आधानेनाहवनीयाग्नेरुत्पन्नत्वादित्याशङ्कायामाह-पवमानेष्टिनिरपेक्षेणाऽऽधानेनाहवनीयाद्यग्निर्नोत्पद्यते। तथा चेत्तस्या इष्टेर्वैयर्थ्यप्रसङ्गात्। तस्मादाधानपवमानेष्टिभ्यां संस्काराभ्यां संस्कृते वन्हौ कर्म—अग्निहोत्रादिरूपम्, अनुष्ठेयम्। संस्काराणाम्-आधानादीना, तदर्थत्वात्—आहवनीयाद्यर्थत्वात्। तत्र कस्यचित्संस्कारस्याभावे उक्तसंस्कारनिमित्तकमाहवनीयत्वमेव न सिध्येदिति भावः ॥२१॥

## अनन्तरं च व्रतं तद्भूतत्वात् ॥२२॥

यच्च 'आहिताग्निर्न किञ्च दारौदध्यादित्याहिताग्नेर्व्रतादिकं तत् अनन्तरम्—आधानानन्तरमेव प्रवर्तते। कुतः तद्भूतत्वात्—आधानस्योत्पन्नत्वात्। आहित आधानसंस्कृत अग्निर्यस्येति व्रतनिमित्तत्वेन आधानस्यैव ग्रहणादिति भावः ॥ २२ ॥

## शं. सू. ॥ पूर्वं च लिङ्गदर्शनात् ॥२३॥

'अग्निं वैसृष्टमग्निहोत्रेणानुद्रवन्ती' त्यर्थवादगतलिङ्गदर्शनात् पवमानेष्टेः पूर्वमेवाग्निहोत्रं स्यादिति चेन्न ॥२३॥

## अर्थवादो वा अर्थस्य विद्यमानत्वात् ॥२४॥

अर्थस्य—आधानाङ्गभूतस्य तूष्णीं विहिताग्निहोत्रस्य विद्यमानत्वात् तस्यार्थवादः स । न नित्याग्निहोत्रप्रापक इत्यर्थः ॥२४॥

## न्यायविप्रतिषेधाच्च ॥२५॥

'अथ ब्रह्मवादिनो वदन्ति। होतव्यमग्निहोत्रं न वा होतव्यमिति। यद्यजुषा जुहुयादयथापूर्वमाहुती जुहुयात्। यन्न जुहुयात् अग्निः पराभवेत्।

तूष्णीमेव होतव्यम्' इत्याधानाङ्गभूताग्निहोत्रार्थवादस्यमीमांसारूपन्यायस्य विप्रतिषेधाद्–विरोधादपि नेष्टः प्राक् नित्याग्निहोत्रानुष्ठानम्। अपि तु तदनन्तरमेव तत्संस्कृताग्नाविति भावः ।।२५।।

अग्निचिद्वर्षणादिव्रतानां क्रत्वन्तेऽनुष्ठानाधिकरणम् ।।१०।।

## सञ्चिते त्वग्निचिद्युक्तं प्रापणान्निमित्तस्य ।।२६।।

'अग्निचिद्वर्षति नधावेन्न स्त्रियमुपेया' दित्यादयः अग्निचितो नियमाः श्रूयन्ते। ते चित्युत्तरमेवानुष्ठेयाः, न चितावनुष्ठितक्रतूत्तरम्। कुतः? अग्निचित्पदघटितवाक्यविहितं व्रतं सञ्चिते–चयनमात्रनिष्पत्त्यनन्तरं कार्यम्। निमित्तस्य–चयनानुष्ठानरूपस्य, प्रापणात्–प्राप्तत्वात्। 'सति निमित्ते नैमित्तिकमिति नियमादिति भावः ।।२६।।

## सि० ।। क्रत्वन्ते वा प्रयोगवचनाभावात् ।।२७।।

प्रयोगविधिगृहीतत्वाभावान्नैषां व्रतानां क्रत्वर्थत्वम्। इति क्रत्वन्त एव तेषां प्रवृत्तिः। यतः श्रुत्यादिभिः प्रमाणैः क्रत्वर्थानेव पदार्थान् प्रयोगविधिः क्रतौ प्रापयति। न च वर्षतिधावनादीना क्रतौ प्रसक्तिरस्ति। येन तेषां निषेधः क्रतुपकारकः स्यात्। अग्निचित्पुरुषमुद्दिश्य तन्निषेधश्रवणात् पुरुषार्थत्वमेतेषां व्रतानां सिध्यति। ननु, पुरुषार्थत्वेऽपि अग्निः चितो येनेत्यग्निपदेन चितवतः श्रवणाच्चयनानन्तरमेव तेषां व्रतानां प्रवृत्तिः प्राप्नोतीति चेदाह–।।२७।।

## अग्नेः कर्मत्वनिर्देशात् ।।२८।।

'य एव विद्वानग्निं चिनुते' इति द्वितीयया श्रुत्या 'कर्तुरीप्सिततमं कर्म'इति सूत्रात् (पा. सू. १।४।४९।) ईप्सिततममग्निमुद्दिश्य चयनं विधीयते। तत्र न केवलोऽग्निस्तेनोत्पन्न ईप्सिततमः। अपि तु फलवत्क्रतुनिष्पादकः सः तादृशः। अनिष्पन्ने क्रतौ तन्न सिध्यतीति तदर्थं क्रत्वनुष्ठानमावश्यकम्। सत्येवं चयनसंस्कृताग्न्यधिकरणकक्रत्वनुष्ठाने कृत एव तत्कर्ता अग्निचिच्छब्देनाभि-

धातुं योग्य', न चयनमात्रकर्ता । इत्यग्नेः कर्मत्वनिर्देशात्सिध्यतीति कृतन्त एव तेषां बनाना प्रवृत्तिरिति निष्कर्षः ॥२८॥

### दीक्षाया इष्टिसिद्धत्वाधिकरणम् ॥११॥

## परेणावेदनाद्दीक्षितः स्यात्सर्वैर्दीक्षाभिः सम्बन्धात् ॥२९॥

ज्योतिष्टोमे 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः' तथा 'दण्डेन दीक्षयति, मेखलया दीक्षयति, कृष्णाजिनेन दीक्षयति' इत्यादि श्रूयते। तत्र इष्ट्यादीनां सर्वेषामेव दीक्षासाधनत्वश्रवणात् 'अदीक्षिष्टायं ब्राह्मणः' इति परेण–अध्वर्युणा, आवेदनात्– निर्देशादूर्ध्वं यतो दीक्षितः स्यात् तत. सर्वैरेवोक्तैः साधनैर्दीक्षितो भवेत्, नेष्टिमात्रेणेति ॥२९॥

## सि०॥ इष्ट्यन्ते वा तदर्था ह्यविशेषार्थसम्बन्धात् ॥ ३० ॥

दीक्षणीयेष्ट्यनन्तरमेव दीक्षितो भवेत् । हि–यतः,तदर्था–दीक्षितत्वसम्पादनार्था,सा इष्टि । क्रियारूपत्वादिति भावः। दण्डेन दीक्षयतीत्यादौ अविशेषेण–क्रियाविशेषशून्येनार्थेन द्रव्यरूपेण सम्बन्धात् । न ते दण्डादयः पुरुषं संस्कर्तुं प्रभवन्ति। नापि तेषां वैयर्थ्यम् । दीक्षितत्वाभिव्यक्तिरूपस्य दृष्टप्रयोजनस्य सद्भावादिति भावः ॥ ३० ॥

## समाख्यानं च तद्वत् ॥ ३१ ॥

दीक्षणीयेष्टिरिति समाख्यानमपि तद्वत्– दीक्षितत्वसाधकमित्यर्थः ॥३१॥

### काम्येष्टीनामनियमेनानुष्ठानाधिकरणम् ॥ १२ ॥

## अङ्गवत् क्रतूनामानुपूर्व्यम् ॥ ३२ ॥

काम्येष्टिकाण्डे 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम ' इत्यादयः काम्येष्टयः, तथा 'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमास्यां वाऽतिपादयेत् ' दिति नैमित्तिका

यागाश्च क्रमेण आम्नाताः। तेषां काम्यनैमित्तिकानां क्रतूनाम् आनुपूर्व्यं-पाठक्रममनुसृत्यैव अनुष्ठानं कार्यम्। प्रयाजाद्यङ्गवत्। न यथेच्छमिति॥३२॥

## सि० ॥ न वा असम्बन्धात् ॥३३॥

न पाठक्रमेणानुष्ठानम्। असम्बन्धात्—तेषां परस्परं सम्बन्धाभावात्। प्रयोगभेदादित्यर्थः॥३३॥

## काम्यत्वाच्च ॥३४॥

यथा पाठस्तेनैव क्रमेण तत्तत्कामना जायते इत्यत्र प्रमाणाभावादपि न पाठक्रमानुसरणमिति भावः॥३४॥

## आनर्थक्यान्नेति चेत् ॥३५॥

पाठक्रमानर्थक्यप्रसक्तेर्न यथेच्छक्रमेणानुष्ठानमिति चेत्-॥३५॥

## स्याद्विद्यार्थत्वाद्यथा परेषु सर्वस्वारात् ॥३६॥

प्रयोगे पाठक्रमानुसरणे सत्यपि विद्याग्रहणार्थत्वात् कर्मावबोधनार्थे विद्याग्रहणे पाठक्रमनियमजन्यमदृष्टं तदाश्रयं स्यादिति न पाठक्रमस्य वैयर्थ्यम्। यथा परपक्षे सर्वस्वारक्रमस्यादृष्टार्थता तथाऽत्रापीति भावः॥३६॥

### यज्ञानामग्निष्टोमपूर्वकत्वाधिकरणम् ॥१३॥

## य एतेनेत्यग्निष्टोमः प्रकरणात् ॥३७॥

'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यनेन विहितज्योतिष्टोमे श्रूयते—'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः, य एतेनानिष्ट्वाऽन्येन यजेत गर्तपतितमेव हि तज्जीर्यते प्रमीयते' इति। ज्योतिष्टोमस्तु अग्निष्टोमात्यग्निष्टोमोक्थ्यषोडश्यतिरात्राऽऽप्तोर्यामवाजपेयैः सप्तसंस्थायुतः। तत्र संस्थाविशेषमनुपन्यस्य ज्योतिष्टोमेत्यविशेषक्रमात् उक्तवाक्यगत—एतेनेति-पदेन तादृशज्योतिष्टोमः परामृश्यते इति चेन्न। अग्निष्टोमिकायाः प्रथम-संस्थाया एव नित्यत्वेन ज्योतिष्टोमस्वरूपत्वात्तस्याप्रकरणत्वात सर्वनाम्नां

प्रकृतपरमार्शकत्वमिति नियमात् अग्निष्टोम एव एतच्छब्दवाच्यः, नान्यः कश्चन । अनित्यत्वादिति भावः ॥३७॥

## लिङ्गाच्च ॥ ३८ ॥

'यस्य नवतिशतं स्तोत्रीयाः' इति वाक्यशेषगतं लिङ्गमप्येतमेवार्थं द्रढयति । यत अग्निष्टोमस्यैव भवन्ति नवतिशतं स्तोत्रीयाः, नान्यस्य । तथा हि—त्रिवृद्बहिष्पवमानम् [ ९ ], पञ्चदशाऽऽज्यानि चत्वारि (६०), पञ्चदशो माध्यन्दिनः पवमानः (१५), सप्तदशानि पृष्ठानि चत्वारि (६८), सप्तदश आर्भवः पवमानः (१७), यज्ञायज्ञीयम् (२१), तदेतन्नवतिशतम् (१९०) अग्निष्टोमस्येत्यग्निष्टोम एतत्पदार्थ इति सिद्धम् ॥ ३८ ॥

ज्योतिष्टोमविकृतीनामग्निष्टोमपूर्वकत्वाधिकरणम् ॥ १४ ॥

## अथान्येनेति संस्थानां सन्निधानात् ॥ ३९ ॥

पूर्वोदाहृतवाक्य एव 'अन्येन यजेत' इत्यत्र अन्यशब्दः तत्प्रकरणे सन्निधानात् अत्यग्निष्टोमादितत्संस्थानामेव वाचकः, न तद्विकाराणां सर्वेषां यज्ञानां वाचक इति ॥ ३९ ॥

## सि० ॥ तत्प्रकृतेर्वाऽऽपत्तिविहारौ हि न तुल्येषूपपद्येते ॥ ४० ॥

तत्प्रकृतेः—ज्योतिष्टोमप्रकृतेः, सर्वेषामेव एकाहादीनां तद्विकृतिभूतयज्ञानां वाचकोऽन्यशब्दः । हि-यतः, आपत्तिविहारौ—अन्यनिष्ठस्यातत्त्वप्राप्तिरापत्तिः । अन्यपदार्थेनान्यस्योपभोगो विहारः, तुल्येषु—स्वाभिन्नेषुभेदाघटितसादृश्यवत्सु नोपपद्येते । यत तद्भिन्नत्वे सति तद्गतधर्मवत्त्वं सादृश्यपदार्थः । तच्च सादृश्यं नास्त्यत्यग्निष्टोमादिषु ज्योतिष्टोमसंस्थासु । तासां ज्योतिषां स्तोमो यत्रेति व्युत्पत्त्या ज्योतिष्टोमरूपत्वेन तदभिन्नत्वात् । येन स्तोत्रेण तत्तत्संस्थासमाप्तिस्तेन तेन नाम्ना सा सा संस्था व्यपदिश्यत इत्येव । न तेन तदन्यत्वं सिध्यति । प्रथमसंस्थात्मकस्याग्निष्टोमस्य एतेनेति पदेन

ग्रहणमिति तु पूर्वाधिकरणे प्रसाधितमेव । प्रसिद्धं चाभियुक्तानां प्रयोगप्रक्रियायाम् । सत्येवमन्यशब्देनाग्निष्टोमप्रतियोगिकभेदवत्वात् षण्णां संस्थानां ग्रहणे 'प्रजापतिर्वा अग्निष्टोमः, स उत्तरान् एकाहान् असृजत । ते सृष्टा अब्रुवन्, न वै प्रभवाम इति । तेभ्यः स्वातन्त्र्यं प्रायच्छत्, अथ ते प्राभवन्' एवं 'यथा वा अग्नेर्जातादध्यग्नयो विन्हियन्त एवं वा एतस्माद्यज्ञादन्ये, क्रतवो विन्हियन्ते।' इति तेषां स्तावकार्थवादसंसूचितौ उपर्युक्तार्थौ आपत्तिविहारौ अनुपपन्नौ स्याताम् । तस्मादर्थवादोक्तापत्तिविहारयोः समुपपत्त्यर्थमेकाहादीनामेव ज्योतिष्टोमभिन्नानां यज्ञानामन्यपदेन ग्रहणमिति भावः॥४०॥

## शङ्का ॥ प्रशंसा च विहरणाभावात् ॥४१॥

**विहरणाभावात्**—प्रकरणादिभिः प्रमाणैः ज्योतिष्टोमाङ्गानां तस्मिन्नेव विश्रान्तत्वान्नास्ति विहरणम् । अन्यथा प्रकरणादीनां बाधापत्तिः स्यात् । एवमन्यनिष्ठस्वातन्त्र्यस्यान्यत्र प्राप्तिरूपा आपत्तिरपि प्रत्यक्षविरुद्धा ! इत्थमापत्तिविहरणयोरभावात् केवलमविद्यमानगुणकथनात्मिका प्रशंसा सा स्तुतिमात्रमित्यर्थः । तस्मान्न पूर्वसूत्रोक्तस्तयोरापत्तिविहारयोर्विरोध इति भावः ॥ ४१ ॥

## स० ॥ विधिप्रत्ययाद्वा न ह्यकस्मात्प्रशंसा स्यात् ॥ ४२ ॥

**विधिप्रत्ययात्**—प्रकरणादिना ज्योतिष्टोमविश्रान्ता अपि तद्धर्माः प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशविधेः सत्त्वात्तद्विधिप्राप्तान् तान् गृहीत्वैव विहारेण प्रशंसा तेषामुपपद्यते । एवमापत्तिरपि द्रष्टव्या । अन्यथा तद्धर्मप्रापकशास्त्राभावेऽकस्मात्प्रशंसा कथं स्यात् ? नैव स्यादित्यर्थः । सा त्वस्ति । अतः स्तः आपत्तिविहाराविति भावः ॥४२॥

**एकानेकसोमकानां सर्वेषामग्निष्टोमपूर्वकत्वाधिकरणम् ॥१५॥**

## एकस्तोमो वा क्रतुसंयोगात् ॥४३॥

एकाहादीनां ज्योतिष्टोमविकृतीनामेव यज्ञानाम् 'अन्येन यजेत' इत्यत्र अन्यशब्देन ग्रहणमिति स्थितम्। सन्ति चैकस्तोमका अनेकस्तोमकाश्च तद्विकृतिभूता यज्ञाः। तेषु केषाम् अन्यशब्देन ग्रहणमिति जिज्ञासायामाह—**एकस्तोमो वेति।** 'त्रिवृदग्निष्टोमो भवति। पञ्चदश उक्थ्यो भवति।' इत्यादयो ये ज्योतिष्टोमविकृतिभूता एकस्तोमका यज्ञाः षड्रात्रादिषु अहीनेषु आम्नाताः, त एव अन्यशब्देन ग्राह्याः। कुत **'क्रतुसंयोगात्—'** यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति' ज्योतिष्टोमविकारे यत्र चोदकेन प्राप्तो त्रिवृत्स्तोमः तं विकृतिभूतं यज्ञं व्याप्नोतीत्यर्थः। एवमेकस्यैव त्रिवृदादेः स्तोमस्य तत्तत्क्रतुव्यापकत्वात् एकस्तोमका एव विकृतियज्ञा अन्यशब्दवाच्या नानेकस्तोमका इति ॥४३॥

## सि० ॥ सर्वेषां वा चोदनाविशेषात् प्रशंसा स्तोमानाम् ॥ ४४ ॥

बहुस्तोमैकस्तोमानां सर्वेषामेव ज्योतिष्टोमविकृतिभूतानां यज्ञानामन्यशब्देन ग्रहणम्। **चोदनाविशेषात्**—अन्यशब्दस्याविशेषात्। दीपयतीति स्तोमानां स्तुतिमात्रम्। न हि सा सर्वक्रतुग्रहणं विरुध्यते। येन सङ्कोचः स्यात्। दीपयतीत्यस्य प्रकाशयतीत्यर्थः। न व्याप्तिरिति भावः ॥ ४४ ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां पञ्चमाध्यायस्य तृतीयः पादः ॥ ३ ॥ श्री ॥

---

## ॥ अथ पञ्चमाध्यायस्य चतुर्थः पादः ॥

### पाठक्रमापेक्षया श्रुत्यर्थयोर्बलवत्त्वाधिकरणम् ॥ १ ॥

## क्रमकोपोऽर्थशब्दाभ्यां श्रुतिविशेषात् अर्थविशेषाच्च ॥१॥

ज्योतिष्टोमे ऐन्द्रवायवप्रभृतिग्रहमध्ये आश्विनग्रहस्तृतीयस्थाने पठित । 'अग्निहोत्रं जुहोति । यवागूं पचती' त्यत्राग्निहोत्रयवागूपाकयो पाठक्रमोऽस्ति । तत्र **अर्थशब्दाभ्याम्**—अनुष्ठयक्रमबोधकश्रुत्यर्थप्रमाणाभ्यां, **क्रमस्य कोपः**—पाठक्रमस्य बाध स्यात् । कुत ? **श्रुतिविशेषात्**—'आश्विनो दशमो गृह्यते' इति प्रत्यक्षश्रुतिगम्यत्वात् क्रमस्येति शेष । तथा **अर्थपरत्वात्**—अग्निहोत्रस्यार्थं प्रति यवागूपाकस्य सा ानत्वात् । पाठक्रमस्य आनुमानिकत्वात् यवागूपाके फलकल्पनाप्रसङ्गाच्च दौर्बल्यमिति श्रुत्यर्थाभ्या तस्य बाध इति भाव ॥१॥

**मुख्यक्रमेण आग्नेयस्य पूर्वमवदानाद्यनुष्ठानाधिकरणम् ॥२॥**

## अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥२॥

दर्शपूर्णमासप्रकरण सान्नाय्यधर्मा व सापाकरणदोहनादय पूर्वमाम्नाता , तत पुरोडाशधर्मा निर्वापावघातादय । तेषा धर्माणामनुष्ठानमपि पाठक्रमेणैव प्रवृत्तमस्ति । अत प्रधानार्थमवदानादिकमपि प्रवृत्तिक्रमेण पूर्वमेव स्यात्, नाऽऽग्नेयस्यावदान प्रथममिति ॥२॥

## सि० ॥ यथाप्रदानं वा तदर्थत्वात् ॥३॥

प्रदानक्रमेणैव अवदानादिक विधेय, न प्रवृत्तिक्रमेण । कुत ? तेषा **तदर्थत्वात्**—अवदानादीना प्रदानार्थत्वात् । प्रदान त्वाग्नेयस्य प्रथम पश्चात्सान्नाय्यस्य । मुख्यक्रमो हि प्रवृत्तिक्रमात्प्रबल । प्रदानान्तमेक पदार्थ इति चेत्कृतवाचिन्तास्त्विति भाव ॥३॥

## लिङ्गदर्शनाच्च ॥४॥

प्रयाजशेषाभिघारे 'स वै ध्रुवायामेवे अभिघारयति, ततो हि प्रथममाज्यभागौ यक्ष्यन् भवति' इति अभिघारप्राथम्य प्रथमप्रदानात्मकलिङ्गदर्शनादपि प्रदानक्रमेणैवावदान सिध्यति ॥ ४ ॥

इष्टिसोमयोः पौर्वापर्यनियमाधिकरणम् ॥ ३ ॥

## वचनादिष्टिपूर्वत्वम् ॥ ५ ॥

'एष वै देवरथो यद्दर्शपूर्णमासौ, यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते, रथस्पष्ट एवावसाने वरे देवानामवस्यति' इति वचनादिष्टिपूर्वत्वमेवेति नियमः। न हि वचनस्यातिभार इति ॥ ५ ॥

## सि० ॥ सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनात् तदन्ते नानर्थकं हि स्यात् ॥ ६ ॥

इष्टिपूर्वत्वं स्वीकुर्मः। किं तु सोमोऽप्येकेषां यजमानानां दर्शपूर्णमासयोः पूर्वं स्यात्। कुतः? 'सोमेन यक्ष्यमाणोऽग्नीनादधीत, नर्तुं स प्रतीक्षेत न नक्षत्रमिति' अग्न्याधानस्य ऋतुनक्षत्रातिक्रमवचनात्। अन्यथा तदन्ते—इष्ट्यन्ते, सोम इत्युच्यमानेन 'तदतिक्रमवचनमनर्थकं स्यात्। यस्यैव ऋतुनक्षत्रे उक्ते तस्यैवानादरः स्यादिति भावः ॥६॥

## तदर्थवचनाच्च नाविशेषात्तदर्थत्वम् ॥७॥

'यः सोमेन यजेत सोऽग्निमादधीत' इत्यग्न्याधानस्य सोमार्थत्वबोधकवचनादपि सोमाधानयोरव्यवहिताऽऽनन्तर्यं सिध्यति। अन्यथा सोमेन अग्निहोत्रेष्ट्यादिभिश्च सर्वैरेव यक्ष्यमाणोऽग्नीनादधीतेत्युक्तौ सर्वार्थत्वेनाविशेषात्रोक्तवचनबोधिताऽऽधानस्य सोमार्थत्वरूपो विशेषः समुपपद्येत। तस्मात्सोमपूर्वत्वमपीति भावः ॥७॥

## अयक्ष्यमाणस्य च पवमानहविषां कालनिर्देशात् आनन्तर्याद्विशङ्का स्यात् ॥८॥

'यः सोमेनायक्ष्यमाणोऽग्नीनादधीत, स पुरा संवत्सरात्पवमानहवींषि निर्वपेत्' अनेन वचनेन सोमयागकर्तृत्वाभावे निमित्ते सति पवमानहविषां कालविशेषो विहितः। सोमयागस्य च नित्यत्वात् सोमयागकर्तृत्वाभाववान् पवमानेष्ट्यधिकारी नैव शास्त्रतः प्रसिध्यति। तस्मात् अग्न्याधानानंतरमय-

क्ष्यमाणअयमेनसोमेनायक्ष्यमाणइत्यस्यार्थो वाच्यः । तथा चाधानानन्तरं तादृशनिमित्ते सति पवमानहविषां कालविशेषविधानेन सोमयागे आधानानन्तर्यस्य निष्प्रत्यूहं सिद्धत्वात् विशङ्का—शङ्काराहित्यं स्यादिति भावः ॥८॥तस्मात्-

## इष्टिरयक्ष्यमाणस्य तादर्थ्येन सोमपूर्वत्वम् ॥९॥

आधानानन्तरं सोमेनायक्ष्यमाणस्य पूर्वं इष्टिः । सोमार्थत्वेन यक्ष्यमाणस्य तु इष्टेः सोमपूर्वत्वम् इति सिद्धम् ॥९॥

### ब्राह्मणस्यापि इष्टिसोमयोः पौर्वापर्यनियमाधिकरणम् ॥४॥

## उत्कर्षाद् ब्राह्मणस्य सोमः स्यात् ॥१०॥

इष्टिपूर्वत्वं सोमपूर्वत्वं चानियतमिति स्थितम् । तत्र ब्राह्मणस्य सोमपूर्वत्वमेव नियतमित्याशङ्कते । ब्राह्मणस्य इष्टेः पूर्वं नियमेन सोमः स्यात् । कुतः ? 'आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वा अग्नीषोमीयो भवति । यदेवादः पौर्णमासं हविः तदनुनिर्वपेत् । तर्हि उभयदेवत्यो भवति' । इति श्रुत्या सोमोत्तरमग्नीषोमीयस्य उत्कर्षात् । अग्नीषोमीययागमन्तरा शेषयागैः फलानुत्पत्तेः षड्यागानामेवोत्कर्ष इति भावः ॥१०॥

## पौर्णमासी वा श्रुतिसंयोगात् ॥११॥

पूर्वोक्तवचने पौर्णमासं हविरनुनिर्वपेदिति श्रवणात् केवलं पौर्णमासीययागत्रिकमेवोत्कृष्यते । न दर्शयागत्रिकमिति ॥११॥

## सर्वस्य चैककर्मत्वात् ॥१२॥

सर्वस्य—षड्यागसमूहस्यैवोत्कर्षः, एककर्मत्वात्—समुच्चयेनैकफलजनकत्वात् ॥१२॥

## स्याद्वा विधिस्तदर्थेन ॥१३॥

तदर्थेन—ज्योतिष्टोमाङ्गत्वेन, विधिः—अपूर्वकर्मविधिः स्यात् । पौर्णमासनामकमपूर्वं कर्म विधीयते, उत्कर्षो नेति भावः ॥१३॥

## प्रकरणात्तु कालः स्यात् ॥१४॥

प्रकरणात्—दर्शपूर्णमासप्रकरणात्, कालः—सोमयागोत्तरत्वात्मकः कालविधिः स्यात्। प्रकरणबाधो मा भूदिति तदुत्तरत्वरूपकालविधिमङ्गीकृत्य दर्शपूर्णमासयोरुभयोरप्युत्कर्षो न्याय्य इति भावः ॥१४॥

नतु प्रतीक्षेदित्यादिना सोमकालबाधाधिकरणम् ॥५॥

## स्वकाले स्यादविप्रतिषेधात् ॥१५॥

अपर्यवसित एव पूर्वाधिकरणे अधिकरणान्तरारम्भोऽयम्। स्वेति 'यः सोमेन यक्ष्यमाणोऽग्नीनादधीत नर्तुं न प्रतीक्षेत न नक्षत्रम्'। इत्यनेन वचनेन आधानस्य यः कालो वसन्तर्तुकृत्तिकादिनक्षत्रात्मकः स एव बाध्यते। न सोमस्य। सोमस्तु स्वकाले स्यात्। अविप्रतिषेधात्—फलवत्वेन तस्य प्राधान्यात्, प्रधानकालस्य प्रतिषेधानर्हत्वात्, आधानस्य अग्निद्वारा सोमाङ्गत्वात् अङ्गकालबाधस्य न्याय्यत्वादिति ॥ १५ ॥

## सि०॥ अपनयो वा आधानस्य सर्वकालत्वात् ॥१६॥

प्रधानकालस्यैवोक्तवाक्येन बाधः क्रियते। नाङ्गकालस्य। कुतः? 'यदैवैनं यज्ञ उपनमेत् अथादधीत' सोमानुष्ठानश्रद्धायामाधानकालो न प्रतीक्ष्य इत्यर्थकेनानेन वचनेनाऽऽधानकालबाधे तस्य सर्वकालत्वात् बाधितस्य पुनर्बाधासम्भवादिति भावः ॥ १६ ॥

## पौर्णमास्यूर्ध्वं सोमाद् ब्राह्मणस्य वचनात् ॥ १७ ॥

पूर्वोपक्रान्तस्योत्तरमिदम्। 'यदेवादः पौर्णमासं हविस्तदनुनिर्वपेत्' इति ब्राह्मणवाक्यात् पौर्णमासी एव सोमादूर्ध्वमुत्कृष्यते। नामावासी। प्रमाणाभावात्। नापि फलानुपपत्तिः वचनादेव फलं भविष्यतीति ज्ञायते। किमिव हि वचनं न कुर्यात्। न तस्यातिभारोऽस्तीति भावः ॥ १७ ॥

## एकं वा शब्दसामर्थ्यात् प्राक्कृत्स्नाविधानम् ॥१८॥

एकमग्नीषोमीयं हविरेवोत्कृष्येत । **शब्दसामर्थ्यात्**—निर्दिष्टवाक्य-घटकादःशब्दसामर्थ्यात् । अदः पौर्णमासं हविरित्यनेन समीपस्थितस्यैव निर्देश इति भावः । अतः सोमात्प्राक् **कृत्स्नस्य**—अग्नीषोमीयातिरिक्तस्य सर्वस्यैव, **विधानम्**--अनुष्ठाने कार्यमिति यावत् ॥ १८ ॥

आज्यस्य सोमादूर्ध्वमनुत्कर्षाधिकरणम् ॥ ६ ॥

## पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात् ॥ १९ ॥

'आग्नेयो वै ब्राह्मणो देवतयेति पूर्वोदाहृतवाक्ये केवलाग्नेयत्वेना-प्युपक्रमात् अग्नीषोमीयहविरिवाऽऽग्नेयहविरप्यदःशब्देन ग्राह्यमिति चेन्न । 'तर्हि उभयदेवत्यो भवती'ति निर्देशाद्द्विदेवताकः पुरोडाश एवादःशब्देन तत्र ग्राह्यः । नैकदेवत्यः । **अनिर्देशे**- तस्य तस्मिन्वाक्ये अनिर्देशादित्यर्थः । 'सास्य देवता'( पा. सू. ४।२।२४।) इति देवतासम्बन्धसत्त्वात् **तद्युक्ते**—यद्यपि पुरुषे उभयदेवत्यो भवति निर्देशः, समुपपद्यते इति भावः ॥ १९ ॥

## आज्यमपीति चेत् ॥ २० ॥

द्विदेवत्यस्यैवादःशब्देन ग्रहणमिति चेदुपांशुयागे ' अग्नीषोमावुपांशु यष्टव्यावाज्येनेत्याऽऽज्यहविरपि उत्कृष्येते'ति चेत्—॥ २० ॥

## न मिश्रदेवतात्वादैन्द्राग्नवत् ॥ २१ ॥

नाज्यस्य उत्कर्षः स्यात् । कस्मात् ? **मिश्रदेवतात्वात्**—उपांशु-यागे विष्णुः प्रजापतिश्च विकल्पेन देवते स्तः । अत एकदेवतात्वद्विदेवता-त्वोभयमिश्रत्वात्तद्यागस्य न नियतं द्विदेवत्यमाज्यम् । तस्मान्नोत्कर्षस्तस्य । यथा—' आग्नेयं चतुर्धा करोती'ति विहितं चतुर्धाकरणं मिश्रदेवत्ये ऐन्द्राग्न-पुरोडाशे न भवति तद्वदित्यर्थः ॥२१॥

वैकृतानामैन्द्राग्नादीनां सद्यस्कालताधिकरणम् ॥७॥

## विकृतेः प्रकृतिकालत्वात्सद्यस्कालोत्तरा ततिस्तयोः प्रत्यक्षशिष्टत्वात् ॥२२॥

'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः'' सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम.' इत्यादिका **उत्तरा ततिः**—विकृतीष्टिपरम्परा, सद्यस्कालैव स्यात् । न प्रकृतिवद्व्यहकाला । कस्मात्? 'य इष्टया पशुना सोमेन वा यजेत, सोऽमावास्यायां पौर्णमास्यां वा यजेत' इति तस्याः सद्यस्कालत्वं प्रत्यक्षवचनविहितम् । विकृतेः प्राकृतिकं द्व्यहकालत्वं चोदकप्राप्तम् । तदानुमानिकम् । तयोः प्रत्यक्षेण सद्यस्कालत्वेन आनुमानिकं द्व्यहकालत्वं बाध्यते इति भावः ॥ २२ ॥

## शङ्का—द्वैयहकाल्ये तु यथान्यायम् ॥ २३ ॥

प्रकृतेः **द्वैयहकाल्ये**—दिनद्वयानुष्ठेयत्वात् विकृतेरपि तथा कृते **यथान्यायम्**— प्रकृतिवद्विकृतौ कार्यमिति न्यायानपेतं भवति ॥ २३ ॥

## वचनाद्वैककाल्यं स्यात् ॥ २४ ॥

'पर्वण्यन्वाधानम् । इध्माबर्हिषश्च सन्नहनम् । प्रातिपदीष्टिः' इति वचनात् प्रकृतौ द्व्यहकालत्वं युक्तम् । विकृतावानुमानिकस्य तस्य य इष्ट्वेति प्रत्यक्षवचनेन बाधात्सद्यस्कालत्वमेवेति सिद्धान्तः ॥ २४ ॥

सोमात् सान्नाय्यविकारादीनामुत्कर्षाधिकरणम् ॥ ८ ॥

## सान्नाय्याऽऽग्नीषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवत् ॥ २५ ॥

'सा वैश्वदेव्यामिक्षा' इत्यादयः सान्नाय्यविकाराः 'अग्नीषोमीयमेकादशकपालं निर्वपेद्वसन्ते ब्रह्मवर्चसकामः' इत्यादय पशुपुरोडाशा अग्नीषोमीयविकाराः । ते सर्वे यथायथं सोमादूर्ध्वमनुष्ठेयाः । कुतः? 'नासोमयाजी सन्नयेत्' इति निषेधेन सान्नाय्यं कर्म सोमादूर्ध्वमुत्कृष्टम् । अग्नीषोमीयस्य उत्कर्षस्तु प्राक् प्रदर्शित एव । **प्रकृतिवत्**—प्रकृतौ तयोः सोमोत्तरकालस्य क्लृप्तत्वात् तद्विकृतौ तद्बाधो न युक्त इति भाव. ॥ २५ ॥

सोमविकाराणां दर्शपूर्णमासाभ्य उर्ध्वं कर्तव्यताधिकरणम् ॥ ९ ॥

## तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥२६॥

यथा सान्नाय्याग्नीषोमीयविकाराः सोमोत्तरकालिकास्तथा 'गवा यजेते'त्यादिना विहिता गवादिनामका एकाहादय सोमविकारा अपि दर्शपूर्णमासोत्तरं स्यु. । न तत्पूर्वम् । कुतः ? 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'ति सोमस्य दर्शपूर्णमासोत्तरत्वविधानात् तद्विकारेष्वपि तदुत्तरत्वमेव चोदकोऽतिदिशति । ननु 'सोमेन यक्ष्यमाणोऽग्नीनादधीते'ति सोमस्य आधानानन्तर्याद्यथा इष्टिपूर्वत्वं तथा तद्विकाराणामपीष्टिपूर्वत्वमेव स्यादिति चेन्न । सोमस्येष्टिपूर्वत्वं न साक्षाद्विहितम् । अपि त्वाधानानन्तर्योपदेशेनार्थसिद्धं तत् । न हि चोदकोऽर्थसिद्धमतिदिशति । अपि तु विहितमेव । इष्ट्युत्तरत्वं तु क्त्वाश्रुत्या साक्षाद्विहितम् । अतः सोमविकारा एकाहादयः दर्शपूर्णमासादूर्ध्वमनुष्ठेया इति सिद्धम् ॥ २६ ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां पञ्चमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

सम्पूर्णश्च पञ्चमाऽध्यायः ।

---

## ॥ अथ षष्ठाध्यायस्य प्रथमः पादः ॥

यागादिकर्मणां स्वर्गादिफलसाधनत्वाधिकरणम् ॥ १ ॥

( अधिकारन्यायः । )

## द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः ॥ १ ॥

शास्त्रोपदिष्टानां सर्वेषामपि कर्मणामनुष्ठानक्रमः पूर्वाध्याये निरूपितः । कस्तेषामनुष्ठाता अर्थात्केऽधिकारिण इत्यधिकारजिज्ञासायां तन्निरूपणायायं षष्ठाध्याय आरभ्यते । तत्रेदमादिमं सूत्रं **द्रव्याणामिति** । **द्रव्याणाम्** सुवर्णस्वर्गादिरूपाणाम्, **कर्मसंयोगे**-कर्मणा यागेन संयोगे श्रूयमाणे, **गुणत्वेन**-तत्साधनत्वेन सम्बन्धः स्यात् । न भावार्थेनेति यावत् । अत्रायं

पूर्वपक्षिणोऽभिप्रायः—' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत '' ज्योतिष्टोमेन स्वर्गकामो यजेत'इत्यादौ यागादिक्रियानिष्पादकत्वं कर्तृत्वम् । तज्जन्यफलभोक्तृत्वमधिकारः । स चाधिकारः तत्क्रियाकर्तुर्नास्त्येव । फलभोगाभावात् । तथा हि—यजेतेत्यादौ आख्यातप्रत्ययेन भावना अभिधीयते । तस्या चैकपदोपात्तो धात्वर्थ एव भाव्यत्वेनान्वेति । न पदान्तरोपात्तः स्वर्गः । एकपदरूपया श्रुत्या वाक्यस्य बाधितत्वात् । इत्थं स्वर्गस्य भाव्यत्वाभावे गुणत्वमेवाभ्युपेयम् । स्वर्गशब्दस्तु नात्र सुखं वक्ति । किन्तु सुखसाधनं चन्दनखण्डादिद्रव्यं कथयति । लोकव्यवहारे तथा दृष्टत्वात् । तादृशं द्रव्यं कामयितुमर्हम् । तेन विना यागादिकर्मानिष्पत्तेः । तस्मादुक्तवाक्यादौ फलस्यानभिधानात् तद्भोगस्याप्यभाव एवेति न फलभोक्तृत्वलक्षणोऽधिकार इत्यधिकाराध्यायो नारम्भणीय इति ॥१॥

## सि० ॥ असाधकं तु तादर्थ्यात् ॥२॥

तुशब्दः पूर्वपक्षव्यावर्तकः । स्वर्गः असाधकं—यागसाधको न भवति । कुतः ? **तादर्थ्यात्**—यागस्य स्वर्गार्थत्वात्—स्वर्गं फलमुद्दिश्य तत्साधनत्वेन यागस्य विहितत्वादित्यर्थः । अत्रायं सिद्धान्ताभिसन्धिः—यजेतेत्यत्र प्रत्यये न केवलमाख्यातत्वमस्ति । अपि तु लिङ्त्वमपि विद्यते । तेन रूपेण स प्रत्ययः पुरुषं प्रवर्तयति । पुरुषश्च स्वाभिमतफलमन्तरेण नैव प्रवर्तते । अतः पुरुषप्रवृत्तिसिध्यर्थं स विधिप्रत्ययः विशिष्टं सुखमेव स्वर्गशब्दार्थ इति द्योतयति । किञ्च, सुखविशिष्टद्रव्यवाचकत्वापेक्षया लाघवात् ' नागृहीतविशेषणा विशिष्टबुद्धिः ' इति नियमाच्च सुखमेव स्वर्गपदस्य वाच्योऽर्थः । तस्य च स्वर्गस्य भावनाया भाव्यत्वेनान्वयात् न भाव्यस्य तस्य यागसाधनत्वं कदापि सम्भवति । तस्मात्—पुंभोग्यस्य स्वर्गाख्यसुखस्य सत्त्वात् तद्भोक्तृत्वरूपाधिकारोऽस्तीत्यधिकाराध्यायोऽयमारम्भणीय इति सिद्धान्तः ॥ २ ॥

## प्रत्यर्थं चाभिसंयोगात् कर्मतो ह्यभिसम्बन्धः, तस्मात् कर्मोपदेशः स्यात् ॥ ३ ॥

यत्रैकपदश्रुत्या यागस्य भाव्यत्वमित्युक्तम् । तस्योत्तरार्थमिदं सूत्रम् । **हि**—यतः, उक्तयुक्त्या **कर्मतः**—यागेन सार्कं कस्यचित्सम्बन्धोऽवश्यं वाच्यः । अतः **प्रत्यर्थं**—स्वर्गं प्रति, **अभिसम्बन्धः**—साध्यताख्यः सम्बन्धः कल्प्यः । तस्मात्स्वर्गमुद्दिश्य **कर्मोपदेशः**—यागविधिः स्यादित्यर्थः । उक्त-युक्त्या उत्पत्तिशिष्टपुरोडाशावरुद्धे यागे द्रव्यस्यानाकाङ्क्षितत्वात् यागे पुरुषस्य प्रवृत्तिसिध्यर्थं तदभीष्टफलस्याकाङ्क्षितत्वात् पदश्रुत्यपेक्षया वाक्यश्रुतिरेवात्र गरीयसीति भाव. ॥ ३ ॥

यागादिषु समर्थमनुष्यस्यैवाधिकाराधिकरणम् ॥२॥

## फलार्थत्वात् कर्मणः शास्त्रं सर्वाधिकारं स्यात् ॥४॥

' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, अग्निहोत्रं जुहुयात्स्वर्गकामः ' इत्यादिशास्त्रं **सर्वाधिकारं**—सर्वेषामेव तत्तत्कर्माधिकारदर्शकं स्यात् । कस्मात् ? सर्वेषामपि **कर्मणः**—यागादिकर्मणः, **फलार्थत्वात्**—फलेच्छावत्त्वादित्यर्थः ॥४॥

## सि० ॥ कर्तुर्वा श्रुतिसंयोगात् विधिः कार्त्स्न्येन गम्यते ॥५॥

**कार्त्स्न्येन कर्तुः**—यावत्पूर्वोक्ताङ्गविशिष्टप्रधानकर्तुः, **विधिः**—अधिकारविधिः, **श्रुतिसंयोगात्**—उक्तार्थे विधितात्पर्यात्, इतिकर्तव्यतोपेत-प्रधानकर्मण एव परमापूर्वजनकत्वबोधनात् अन्धपङ्ग्वादीनामाज्यावेक्षण-विष्णुक्रमणादियागाङ्गकर्तृत्वासम्भवान्न सर्वेषामधिकार । अपि तु समर्थाना-मेवेति भावः ॥५॥

यागादिषु स्त्रीपुंसयोरुभयोरधिकाराधिकरणम् ॥३॥

## लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः ॥६॥

**लिङ्गविशेषस्य**—पुंल्लिङ्गस्य ' स्वर्गकामः ' इत्यादौ निर्देशात् पुंयुक्तं याजमानत्वमिति **ऐतिशायनो** मन्यते ॥ ६ ॥

## तदुक्तित्वाच्च दोषश्रुतिरविज्ञाते ॥७॥

तदुक्तित्वात्—पुंलिङ्गस्य विवक्षितत्वादेव ' गर्भेण अविज्ञातेन हतेन भ्रूणहा ' इत्यस्या श्रुतौ यज्ञसाधनपुंगर्भहननशङ्कया भ्रूणहत्यादोषापादकम-विज्ञाते लिङ्गमुपपद्यते । अन्यथा स्त्रीत्वेन विज्ञातेऽपि भ्रूणहन्तृत्वस्य समान-त्वात् अविज्ञातेनेति कथनं व्यर्थं स्यात् । अतः पुंस एवाधिकारो न स्त्रिय इति ॥७॥

## सि० ॥ जातिं तु बादरायणः अविशेषात्, तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात् ॥८॥

अविशेषात्—स्वर्गकामादिपदस्य प्रथमपेक्षितफलपरत्वेन पुंस्त्वस्य अविवक्षितत्वात्, जातिम्-अनेकानुगतं स्वर्गविषयकेच्छासामान्यं, बादरायण आचार्यो मन्यते । जात्यर्थस्य—स्वर्गेच्छायाः, अविशिष्टत्वात्-उभयसाधारण-त्वात् स्त्री अप्यधिकारिणीति प्रतीयेत । यच्च अविज्ञातेनेति लिङ्ग प्रदर्शितम् । तत् ' अविज्ञातो वा एष गृह्यते यदाप्रयणः ' इति विधेस्तावकम् । न पुंस्त्वविवक्षायामलमिति भावः ॥८॥

## विभक्त्येति चेन्न ॥९॥

' पशुना यजेतेत्यत्र विभक्त्या एकत्वविवक्षावदत्रापि विभक्त्या पुंस्त्वं विवक्ष्येतेति चेन्न ॥९॥

## चोदितत्वाद्यथाश्रुति ॥१०॥

चोदितत्वात्—विहितत्वात् यथा श्रुतं तथा तत्र । अत्र त्वनुवाद-गतमिति वैषम्यमिति भावः ॥ १० ॥

## द्रव्यवत्त्वात्तु पुंसां स्यात् द्रव्यसंयुक्तं क्रयविक्रया-भ्यामद्रव्यत्वं स्त्रीणां द्रव्यैः समानयोगित्वात् ॥११॥

' व्रीहिभिर्यजेत । पशुना यजेत । तस्य ह द्वादशशतं गावो दक्षिणा ' इत्यादिश्रुतेः द्रव्यसंयुक्तं—द्रव्यसाध्यं यज्ञादिकर्म, पुंसां च ' याजनाध्यापन-

प्रतिग्रहप्रजापालनजयकृषिवाणिज्यादिना द्रव्यवत्त्वात्तेषामेव तत्राधिकारः । स्त्रीणां तु 'शतमधिरथं दुहितृमते दद्यात् । आर्षे गोमिथुनम्' इत्यादिक्रयविक्रयाभ्यां **समानयोगित्वात्**--द्रव्यैः साकं साध्यसाधनभावसम्बन्धात्, **अद्रव्यत्वम्**--स्वस्वत्वाश्रयद्रव्यराहित्यम् । अतो नाधिकार इत्याक्षेपः सिद्धान्ते । पित्रा विक्रीतत्वात्पितृद्रव्येणासम्बन्धः, भर्त्रा क्रीतत्वाद्दासादिवत्तदीयद्रव्येणापि न सम्बन्ध इति भावः ॥११॥

## तथा चान्यार्थदर्शनम् ॥१२॥

यथा पितुर्विक्रयः सिद्धः, तथा भर्तुः क्रयेऽपि 'अथान्यैश्वरती'ति क्रयस्य दर्शनं ज्ञेयम् ॥१२॥

## तादर्थ्यात् कर्मतादर्थ्यम् ॥१३॥

कर्तनादिना तस्या अपि स्वस्वत्वाश्रयं द्रव्यं स्यादिति चेन्न । **तादर्थ्यात्**--भर्त्रर्थत्वात् । भर्त्रर्थे यत् कर्म तदेव तया कार्यं नान्यत् । तथा च **स्मृतिः**--

भार्यापुत्रश्च दासश्च निर्धनाः सर्व एव ते ।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ इति ॥१३॥

## फलोत्साहाविशेषात् ॥ १४ ॥

तुः पक्षव्यावर्तकः । **फलोत्साहः**--फलविषयिणी इच्छा, तस्या **अविशेषात्**--स्त्रिया अपि सत्त्वादस्त्यधिकारस्तस्याः ॥ १४ ॥

## अर्थेन च समवेतत्वात् ॥ १५ ॥

**अर्थेन**--द्रव्येण च, **समवेतत्वात्**--युक्तत्वात् 'पत्नी पारिणाय्यस्येशे' इति श्रुत्या 'धर्मे च अर्थे च कामे च नातिचरितव्या त्वयेयम्' इति स्मृत्या च द्रव्यस्वामित्वं तस्याः सिद्धम् ॥ १५ ॥

## क्रयस्य धर्ममात्रत्वम् ॥१६॥

प्रकृते क्रयस्य विक्रयस्य च नियतद्रव्यकत्वात् **धर्ममात्रत्वम्**—अदृष्टसाधनत्वं बोध्यम् । न लौकिकानियतद्रव्यकक्रयदृष्टफलकत्वम् ॥ १६ ॥

### यागे दम्पत्योः सहाधिकाराधिकरणम् ॥४॥

## स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥१७॥

इत्थं स्ववतोः द्रव्यवतोः पत्नीयजमानयोः—'धर्मे चार्थे च कामे च नातिचरितव्या त्वयेयम्, सहधर्मश्चरितव्यः, सहापत्यमुत्पादयितव्यम्' तथा दर्शपूर्णमासादौ यत्रोभयविलक्षणसंस्कारसंस्कृतेनाऽऽज्येन होमो विहितस्तादृग्वचनाच्च **ऐककर्म्यं**—मिलितैकप्रयोगः स्यात् । न पृथक् पृथक् प्रयोग उभयोरिति भावः ॥१७॥

## लिङ्गदर्शनाच्च ॥१८॥

'मेखलया यजमानं दीक्षयति' 'योक्त्रेण' पत्नीं यजमानं मिथुनत्वाय' इति लिङ्गदर्शनादपि ऐककर्म्यं सिध्यति । अन्यथा भिन्नप्रयोगे योक्त्राभावेन मिथुनत्वं विरुद्धं स्यात् ॥१८॥

## क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते ॥१९॥

पत्न्याः क्रीतत्वात् **स्वामित्वं**—द्रव्यस्वामित्वं, **भक्त्या**—गौणवृत्त्या उच्यते । न मुख्यवृत्त्येति ॥१९॥

## फलार्थित्वात्तु स्वामित्वेनाभिसम्बन्धः ॥ २० ॥

**फलार्थित्वात्**—मिलितयोः फलार्थित्वश्रवणात्, मुख्यस्वामित्वेनैवाभिसम्बन्धः । न गौणेनेत्यर्थः ॥२०॥

## फलवत्तां च दर्शयति ॥२१॥

मिलितयोः फलवत्ता दर्शयति-'सम्पत्नी पत्या सुकृतेन गच्छताम् । यज्ञस्य धुर्या युक्तावभूताम् । सञ्जानानौ विजहतामरातीर्दिवि ज्योतिरजरमारभेताम्' इति श्रुतिर्दम्पत्योः फलं दर्शयति । तस्मादुभौ अधिकृतौ इति सिद्धान्तः ॥२१॥

एकस्यैव पुंसः आधानाधिकरणम् ॥५॥

## आधानं च द्वियज्ञवत् ॥२२॥

'क्षौमे वसानावग्निमादधीयाताम्' इत्याधाने श्रुतम् । तत्र आधानं–द्वाभ्यां पुंभ्यामाधानं कार्यम् । द्विवचनश्रवणात् । 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति द्वियज्ञवत् ॥२२॥

## सि० ॥ गुणस्य तु विधानत्वात्पत्न्या द्वितीयशब्दः स्यात् ॥२३॥

गुणस्य- क्षौमस्य, विधानत्वात् -विधीयमानत्वात्, द्वितीयशब्दः-- द्विवचनम्, पत्न्या–पत्नीं गृहीत्वा स्यात् । 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्युत्पत्तिवाक्ये एकवचनश्रवणादेककर्तृकत्वम् । क्षौमवस्त्रपरिधानकर्तृत्वं तु द्वयोरित्यर्थः ॥ २३ ॥

पत्न्या यावदुक्ताशीर्ब्रह्मचर्यादावेवाधिकाराधिकरणम् ॥ ६ ॥

## तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् ॥ २४ ॥

उक्तविधया सिद्धाधिकारायाः तस्याः--पत्न्याः, 'पत्नीं सन्नह्यति, पत्नीं वाचयति' इत्यादियावदुक्तं तावदेव । नातोऽधिकम् । अतुल्यत्वात्- अध्ययनाभावेन यजमानतुल्यत्वाभावात् । आशीर्मन्त्रब्रह्मचर्यफलिसंस्कारादिकं सर्वं तुल्यमेवोभयोरिति ॥ २४ ॥

यागे शूद्रस्यानधिकाराधिकरणम् ॥ ७ ॥

## चातुर्वर्ण्यमविशेषात् ॥ २५ ॥

चातुर्वर्ण्यं यागाधिकृतम्, अविशेषात् – विशेषवचनाभावादित्यर्थः ॥ २५ ॥

## निर्देशाद्वा त्रयाणां स्यादग्न्याधेयेऽसम्बन्धः क्रतुषु ब्राह्मणश्रुतेरित्यात्रेयः ॥ २६ ॥

'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' इत्यन्याधेये श्रुतत्वात् त्रयाणामधिकारः स्यात् । क्रतुषु–दर्शपूर्णमासप्रभृतिषु तुरीयवर्णस्य असम्बन्धः–अनधिकारः, ब्राह्मणादिश्रुतेरित्यात्रेयो मन्यते ॥२६॥

## निमित्तार्थे च बादरिः, तस्मात् सर्वाधिकारः स्यात् ॥ २७ ॥

'वसन्ते' इत्यादिवाक्यं **निमित्तार्थकं**–ब्राह्मणकर्तृकाऽऽधानस्य निमित्तं वसन्तः, एवं राजन्यकर्तृकस्य वैश्यकर्तृकस्य च ग्रीष्मः शरच्च निमित्तम् । शूद्रस्य तु अनियतः कालः । **तस्मात्**–अर्थित्वाविशेषात्सर्वेषामधिकारः स्यादिति **बादरिर्मनुते** ॥ २७ ॥

## अपि वा अन्यार्थदर्शनाद्यथाश्रुति प्रतीयेत ॥२८॥

अपि वेति पक्षव्यावृत्तिः । **अन्यार्थदर्शनात्**–अन्यत्र 'पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' एवं 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य' इति शूद्रवर्ज्यं त्रैवर्णिकं गृहीत्वा तत्तन्निमित्ते सति विशिष्टविधिदर्शनात् अत्रापि यथाश्रुति वसन्तादिकालीनः शूद्रवर्ज्यब्राह्मणादिवर्णकर्तृकाग्न्याधानविधिर्बोध्यः ॥ २८ ॥

## निर्देशात्तु पक्षे स्यात् ॥ २९ ॥

'य एवं विद्वानग्निमाधत्ते ।' इत्युत्पत्तिवाक्यनिर्देशात् **पक्षे**–उक्तनिमित्ते वसन्तादिकालः स्यादिति पुनर्निमित्ताऽऽशङ्का ॥ २९ ॥

## वैगुण्यान्नेति चेत् ॥ ३० ॥

प्रागुक्तपयोव्रतादेः ब्रह्मसामादेश्च राहित्येन शूद्रेण कृतमपि तत्कर्म फलं नैव जनयेत् विगुणत्वादिति चेत्– ॥ ३० ॥

## न काम्यत्वात् ॥ ३१ ॥

**न काम्यत्वात्**– 'स्वर्गकामो यजेत' इत्यविशेषश्रवणात् तस्यापि कामनावत्त्वात् अनियतेन येन केनापि व्रतं स्यादिति न वैगुण्यम् । तद्वत्तामाणीति भावः ॥ ३१ ॥

## संस्कारे च तत्प्रधानत्वात् ॥ ३२ ॥

**संस्कारे**--पयोव्रतादिसंस्कारे, **तत्प्रधानत्वात्**-- पुरुषप्रधानत्वात्-- पुरुषसंस्कारः पयोव्रतादिर्यस्य श्रुतस्तस्यैवः सः, नान्यस्येति नैव वैगुण्यमपीति भावः ॥ ३२ ॥

## अपि वा वेदनिर्देशादपशूद्राणां प्रतीयेत ॥ ३३ ॥

*अपि वेति पक्षव्यावृत्तिः । ' वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम्'* इति वेदे त्रयाणामेव **निर्देशात्**–उपनयनस्य वेदग्रहणार्थत्वात्, शूद्रस्य वेदाभावात् **अपशूद्राणां**--शूद्रभिन्नानामेव त्रैवर्णिकानां वैदिक आधानादिकर्मण्यधिकारः, न शूद्रस्येति प्रतीयेत ॥ ३३ ॥

## गुणार्थत्वान्नेति चेत् ॥३४॥

उपनयनस्य **गुणार्थत्वात्**— पुरुषसंस्कारार्थत्वात्, नोक्तार्थसिद्धिः— न वेदग्रहणार्थमुपनयनमित्याक्षेपस्तस्य ॥३४॥

## संस्कारस्य तदर्थत्वाद्विद्यायां पुरुषश्रुतिः ॥३५॥

**संस्कारस्य**–उपनयनस्य, **तदर्थत्वात्**-- विद्यार्थत्वात्, विद्यायामेव **पुरुषश्रुतिः**-- ब्राह्मणादीनां श्रवणम् । सम्भवति दृष्टफले अदृष्टकल्पनं न युक्तमिति भावः ॥ ३५ ॥

## विद्यानिर्देशान्नेति चेत् ॥ ३६॥

. **विद्यानिर्देशात्**— विद्याकल्पनात्, स्वर्गकामश्रवणादेव विद्या कल्पनीयेति चेन्न ॥ ३६ ॥

## अवैद्यत्वादभावः कर्मणि स्यात् ॥ ३७ ॥

**अवैद्यत्वात्**— विद्याया अभावात्, **अभावः**—कर्मण्यधिकाराभावः स्यात् ॥ ३७ ॥

## तथा चान्यार्थदर्शनम् ॥ ३८ ॥

अत्रैव साधकं लिङ्गं दर्शयति तथा चेति । 'पद्यु ह वा एतत् श्मशानं यच्छूद्रस्तस्मात्सकाशे नाध्येयम्' यस्य समीपे अध्ययनं निषिद्धम्, किमु वक्तव्यं तस्य विद्याभाव इति । तस्मादपशूद्राणामेव ब्राह्मणादीनां विद्यावतामाधानादिकर्मण्यधिकार इति सिद्धम् ॥ ३८ ॥

## यागे निर्धनस्याप्यधिकाराधिकरणम् ॥ ८ ॥

## त्रयाणां द्रव्यसम्पन्नः कर्मणो द्रव्यसिद्धित्वात् ॥३९॥

त्रयाणां मध्ये द्रव्यसम्पन्नः—यो हि द्रव्यवान् स स्वाधिकारी । कुतः? कर्मणः—यागादेः, द्रव्यसिद्धित्वात्—द्रव्यसाध्यत्वादिति ॥ ३९ ॥

## सि० ॥ अनित्यत्वात्तु नैवं स्यात् अर्थाद्धि द्रव्यसंयोगः ॥ ४० ॥

अनित्यत्वात्— दारिद्र्यस्य अनित्यत्वात् नैवं स्यात् । न हि दरिद्र इति काचन जातिरस्ति । धनमन्तरेण जीविष्यतीत्येतदप्यनुपपन्नम् । अर्थात्-सम्पादनात्, द्रव्यसंयोगः स्यादित्यर्थः ॥ ४० ॥

## अङ्गहीनस्यापि यागे अधिकाराधिकरणम् ॥९॥

## अङ्गहीनश्च तद्धर्मा ॥४१॥

यो द्रव्ये न्याय उक्तः स एवाङ्गहीनेऽपि ज्ञेयः । अन्धत्वादिकमौषधेन दूरीकृत्य अधिकारी भविष्यतीति भावः ॥४१॥

## अचिकित्स्याङ्गवैकल्यस्य यागानधिकाराधिकरणम् ॥१०॥

## उत्पत्तौ नित्यसंयोगात् ॥४२॥

उत्पत्तौ उत्पत्तिसमय एव, योऽन्धः तस्यान्धत्वस्य तेन साकं नित्य-संयोगात्—अचिकित्स्याङ्गवैकल्यत्वेन, स न यागाद्यधिकारीति ज्ञेयम् ॥४२॥

## दर्शपूर्णमासयोस्त्र्यार्षेयस्यैवाधिकाराधिकरणम् ॥११॥

## अत्र्यार्षेयस्य हानं स्यात् ॥४३॥

दर्शपूर्णमासयोः 'आर्षेयं वृणीते, एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चातिवृणीते' इति श्रुतम् । तत्र अत्र्या-

पैयस्य--स्यार्षेयगिन्नस्य, हानं--अधिकाराभावः स्यात् । एकादीना विधाने वाक्यभेदापत्ते 'त्रीन् वृणीते' इत्यस्य विधे शेषभूतोऽयमर्थवाद एकमित्यादिरिति भावः ॥४३॥

## चातुर्वर्ण्यातिरिक्तस्य रथकारस्याऽऽधानेऽधिकाराधिकरणम् ॥१२॥

( रथकारन्यायः । )

## वचनाद्रथकारस्य आधाने सर्वशेषत्वात् ॥४४॥

'वर्षासु रथकार आदधीत्' इति वचनादत्रैवर्णिकस्य रथकारस्य आधाने अधिकारः स्यात् । कुतः ? तस्य **सर्वशेषत्वात्**--वसन्तादिवाक्यैर्ब्राह्मणादित्रैवर्णिकानामाधान विहितम् । तेभ्य परिशिष्टो रथकार अत्रैवर्णिक । तस्य वक्ष्यमाणजातेरिद वसन्तादिभिन्नकालविहितमाधान वचनबलात्सिध्यतीति भावः ॥४४॥

## न्याय्यो वा कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात्॥४५॥

रथं करोतीति व्युत्पत्त्या रथनिर्माणरूपक्रियासम्बन्धात् त्रैवर्णिक एव रथकारो न्याय्यः । कुतः ? शूद्रस्य **प्रतिषिद्धत्वात्**--श्रौतकर्मानधिकारात् ॥४५॥

## अकर्मत्वात्तु नैवं स्यात् ॥ ४६ ॥

**अकर्मत्वात्**— त्रैवर्णिकाना शिल्पिकर्मनिषेधात्, **नैवं स्यात्**—त्रैवर्णिको न रथकारशब्दवाच्य इत्यर्थः ॥ ४६ ॥

## आनर्थक्यं च संयोगात् ॥ ४७ ॥

ब्राह्मणादिकर्तृकाऽऽधानेषु वसन्तादिकालसंयोगात् पुनर्वर्षर्तुविधानमप्यनर्थकं स्यात्—॥ ४७ ॥

## गुणार्थमिति चेत् ॥ ४८ ॥

**गुणार्थं**—निमित्तार्थं, त्रैवर्णिकेष्वेव रथकरणक्रियानिमित्तत्वेन कालो विधीयत इति चेत् ॥ ४८ ॥

## उत्क्रमनिमित्तत्वम् ॥ ४९ ॥

' य एवं विद्वानग्निमाधत्ते ' इत्यनेनाऽऽधानस्य प्राप्तौ वसन्तादिकालो निमित्तत्वेन विधेयः । तन्नैव सम्भवति । कालस्यानुपादेयत्वात् । इति अनिमित्तत्वं-- निमित्तत्वं न सम्भवतीत्युक्तमेवप्रागिति भावः ॥ ४९ ॥

## सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात्प्रतीयेरन् ॥५०॥

' सौधन्वना ऋभवः सूरचक्षसः ' ऋभूणांत्वा देवानां व्रतपते व्रतेनादधामि ' इति रथकारस्याधानं मन्त्रलिङ्गात् । त्रैवर्णिकेभ्यः किंचिद्धीनाः शूद्रभिन्नाः सौधन्वना नाम जातिविशेषाः प्रकृते वर्षाकालीनाधानेऽधिकारिणः प्रतीयेरन् । अपि च ' नेमिं नयन्ति ऋभवो यथा ' इति ये नेमिं नयन्ति ते ऋभव इत्युच्यन्ते । रथकाराश्च नेमिं नयन्ति । अतोऽप्यत्रैवर्णिकानामशूद्राणामेवैतदाधानमिति सिद्धान्तः ॥५०॥

### त्रैवर्णिकभिन्नस्य निषादस्य रौद्रयागे अधिकाराधिकरणम् ॥१३॥

( निषादस्थपतिन्यायः । )

## स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् ॥५१॥

' रौद्रं चरुं निर्वपेद्यत्र रुद्रः प्रजाः शमयेत् ' इत्येतामिष्टिं प्रकृत्य- ' एतया निषादस्थपतिं याजयेत् ' इति श्रूयते । तत्र यः स्थपतिः स एव निषादः स्यात् । शब्दसामर्थ्यात्--शब्दानिष्ठमुख्यवृत्तिसामर्थ्यात् । षष्ठीतत्पुरुषेण त्रैवर्णिकग्रहणे लक्षणाप्रसक्तेः ' न विधौ परः शब्दार्थः ' इति निषेधात् कर्मधारय एवात्र युक्त इति भावः ॥५१॥

## लिङ्गदर्शनाच्च ॥५२॥

' कूटं दक्षिणा ' इति निषादानां द्रव्यं कूटशब्देन दर्शयति श्रुतिः । कूटं निषादानामेवोपकारकं नार्याणां त्रैवर्णिकानामिति भावः ॥५२॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां षष्ठाध्यायस्य प्रथमः पादः सम्पूर्णः ॥१॥ श्रीः ॥

## ॥ अथ षष्ठाध्यायस्य द्वितीयः पादः ॥

### सत्रे प्रत्येकस्य सत्रिणः फलसम्बन्धाधिकरणम् ॥१॥

## पुरुषार्थैकसिद्धित्वात्तस्य तस्याधिकारः स्यात् ॥१॥

'ऋद्धिकामाः सत्रमासीरन्' । तथा—'सप्तदशावराश्चतुर्विंशतिपरमाः सत्रमासीरन्' इति श्रूयते । तत्र **तस्य तस्य**--प्रत्येकपुरुषस्य, **अधिकारः**--समग्रफलभोगः स्यात् । नांशेन फलभोगः । कुतः ? '**पुरुषार्थैकसिद्धित्वात्**--पुरुषार्थस्य फलस्य एकसिद्धित्वात्--प्रत्येकपुरुषोत्पन्नत्वात् । ऋद्धिकामा इत्यादिवाक्यम् ऋद्धिफलसाधनं सत्र नच बहुकर्तृक फलजनने समर्थमिति ज्ञापयति । तस्मान्मिलित्वा स्वतन्त्राः समग्रफलकामाः सन्त एव तत्र प्रवर्तन्त इति भावः ॥ १ ॥

## अपि चोत्पत्तिसंयोगात् यथा स्यात्सत्त्वदर्शनं तथा भावो विभागे स्यात् ॥ २ ॥

एकस्मिन् कर्मणि बहूना मुख्यकर्तृत्वे मानमाह—**उत्पत्तिसंयोगात्**-उत्पत्तिवाक्ये कर्तृन्वयिबहुत्वसङ्ख्याश्रवणात् । नैतल्लोकविरुद्धमित्याह—**यथा सत्त्वदर्शनं**—यथा गज पश्यन्त्विति बहूनां नियोगे गजदर्शनक्रिया एकक्षणे सम्पद्यते । तथा **भावः**—अनुष्ठानं, **विभागे**—पुरुषभेदेऽपि स्यात् । अध्वर्युणा आहवनीये हविषि प्रक्षिप्ते बहुभिरेकक्षणे त्यागरूपानुष्ठानं कर्तुं शक्यत्वादिति भावः ॥ २ ॥

### दर्शादौ कर्त्रैक्यनियमाधिकरणम् ॥ २ ॥

## प्रयोगे पुरुषश्रुतेर्यथाकामी प्रयोगे स्यात् ॥३॥

**प्रयोगे**—दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिवाक्ये स्वर्गकाम उद्देश्यः । उद्देश्यगतं चैकत्वं सङ्केत्यवद्विवक्षितम । ततः पुरुषमात्रश्रुतेः **प्रयोगे**—अनुष्ठाने, **यथाकामी**—यथेष्टं

स्यात्। एको द्वौ त्रयो वा यागं निर्वर्तयेयुः, न एक एवेति भावः ॥३॥

## प्रत्यर्थं श्रुतिभाव इति चेत् ॥४॥

अर्थमर्थं प्रतीति **प्रत्यर्थं, श्रुतिभावः**--अर्थभेदेन गुणप्रधानभावोऽस्तीति शेषः। स्वर्गकाम इति पदप्रतिपाद्यपुंसः फलं प्रत्युद्देश्यत्वेन तद्वत् सङ्ख्याया अविवक्षितत्वेऽपि यागानुरक्तां क्रियां--भावनां विदधत्ता आख्यातप्रत्ययः कर्तृत्वेन भावनागुणभूते आक्षेपलम्ये कर्तर्यपि विधेयत्वं बोधयतीति विधेयगतसंख्याया विवक्षितत्वान्न यथाकामी स्यादिति चेत्--॥४॥

## तादर्थ्ये न गुणार्थता अनुक्ते अर्थान्तरत्वात् कर्तुः प्रधानभूतत्वात् ॥५॥

**तादर्थ्ये**--फलस्य पुरुषार्थत्वे, **कर्तुः प्रधानभूतत्वात्**--यागकर्तुस्तस्य पुंसस्तत्र प्राधान्यात्, **न गुणार्थता**--गुणभूतयागाङ्गत्वं न सम्भवति तस्य। प्रधानगुणत्वयोर्विरोधेनैकत्र वृत्तेरसम्भवात्। **अनुक्ते अर्थान्तरत्वात्**--विरोधस्य शब्दागम्यत्वेऽपि प्रत्यक्षादिप्रमाणान्तरगम्यत्वात्। लोके यत्र हि प्रधानत्वं राजादिषु तत्र गुणत्वमप्रधानत्वं नैव दृष्टमिति भावः ॥५॥

## सि० ॥ अपि वा कामसंयोगे सम्बन्धात् प्रयोगायोपदिश्येत प्रत्यर्थं हि विधिश्रुतिर्विषाणवत् ॥६॥

अपि वेति पक्षो व्यावर्त्यते। 'यजेत स्वर्गकामः' इत्यस्मिन् कामसंयोगे वाक्ये आख्यातस्य घटकत्वेन सम्बन्धात्, सः **प्रयोगाय**--पुरुषप्रवृत्त्यर्थमुपदिश्यते इति निर्ज्ञातं धर्मलक्षणाधिकरणे। अतो नेह पुरुषप्राधान्यं शास्त्रतात्पर्यविषयः। अपि तु यागानुष्ठानमेवानेन विधीयते। तद्विधौ तत्साधनकर्तुस्तदङ्गत्वाद्विशेषणीभूतसङ्ख्यायाः विधेयगतत्वेन विवक्षितत्वमेवेति न यथाकामी स्यात्प्रयोगे। यत्र ह्येकस्मिन्नेव गुणप्रधानभावः शास्त्रतात्पर्यविषयस्तत्र **प्रत्यर्थं**--'कृष्णविषाणया कण्डूयत' इति तृतीयया श्रुत्या गुणत्वं

'चात्वाले कृष्णविषाणं प्रास्यती'ति द्वितीयया च प्राधान्यं बोध्यते इति **विधिश्रुतिः**--तत्तात्पर्यज्ञापिका पृथक् श्रुतिर्यया विद्यते, तथा प्रकृते नास्तीति निर्दिष्टरीत्या गुणत्वमेव स्वर्गकामपुरुषस्य, न प्राधान्यमिति विवक्षितं तद्गतमेकत्वमिति भावः ॥६॥

## अन्यस्यापीति चेत् न ॥७॥

कर्तारमुद्दिश्य फलप्राप्तिर्न विधीयते । किन्त्वनुष्ठानमात्रं विधीयते चेत् **अन्यस्य**— परनिष्ठस्वर्गकामनयाप्यनुष्ठेयं स्याद्यागादिकर्म । न हि स्वर्गकाम इत्यत्र आत्मनः परस्येति वा विशेषः श्रूयत इति चेन्न ॥ ७ ॥

## अन्यार्थेनाभिसम्बन्धः ॥ ८ ॥

यजेतेत्यात्मनेपदश्रवणात् **अन्यार्थेन** — अन्यनिष्ठस्वर्गकामनया समं कर्तुरभिसम्बन्धो नास्ति । कर्तृगामिनि क्रियाफल एवाऽऽत्मनेपदविधानादिति भावः ॥ ८ ॥

## फलकामो निमित्तमिति चेत् ॥ ९ ॥

**फलकामः**— स्वर्गकामशब्दः, **निमित्तम्**— निमित्तद्योतकः, यावज्जीवपदवदिति चेत् ॥ ९ ॥

## न नित्यत्वात् ॥ १० ॥

न निमित्तम् । **नित्यत्वात्**— निमित्तद्योतकणमुलप्रत्ययाद्यभावादिति भावः ॥ १० ॥

## कर्म तथेति चेत् ॥११॥

'युवं हि स्थः स्वर्पती, इति द्वयोर्यजमानयोः प्रतिपद कुर्यात्' 'एते असृग्रमिन्दव', इति बहुभ्यः यजमानेभ्यः' इति श्रुतेः ज्योतिष्टोमाद्यकमपि कर्म **तथा**—अनेककर्तृकमिति सिध्यतीति चेत्—॥११॥

## न समवायात् ॥१२॥

**न समवायात्**–' एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति इतानेककर्तृकयागादौ सावकाशत्वादित्यर्थः ॥१२॥

आरब्धकाम्यकर्मणोऽपि समाप्तिनियमाधिकरणम् ॥ ३ ॥

## प्रक्रमात्तु नियम्येत आरम्भस्य क्रियानिमित्तत्वात् ॥ १३ ॥

'प्रजाकामो यजेत। ग्रामकामो यजेत । कारीर्या वृष्टिकामो यजेत' इत्येवमादि काम्यं कर्म समाम्नायते। तत् **प्रक्रमात्**--कर्मण आरम्भात्, यावत्समाप्ति **नियम्येत**--नियतं स्यादित्यर्थः । कुतः ? **आरम्भस्य क्रियानिमित्तत्वात्**-समाप्तिक्रियाकारणत्वात् । सति कारणे निमित्ते वा कार्यस्य नैमित्तिकस्य वा अवश्यंभावित्वेन, आरब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणमित्युक्तेश्च समाप्तेरेव शास्त्रतात्पर्यविषया । आरम्भस्त्वर्थसिद्धः'। तं विना तस्या अनुपपत्तेः सा तमाक्षिपति । अत आरब्धं कर्मावश्यं समापनीयमिति भावः । किञ्च, 'देवताभ्यो वा एष आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते ' ' त्रैधातवीयेन यजेत ' इत्यारब्धस्य कर्मण असमाप्तौ निन्दाप्रायश्चित्तयोः श्रवणादपि तत्समापनीयमित्येव प्राप्नोति ॥१३॥

## फलार्थित्वाद्वाऽनियमो यथाऽनुपक्रान्ते ॥१४॥

यागस्य **फलार्थित्वात्**--फलसाधनत्वमात्रप्रतिपादनात्, **अनियमः**--फलेच्छानिवृत्तौ समापनस्य नियमो न । **यथा अनुपक्रान्ते**--कामनासत्त्वेऽप्यारम्भाभावे समाप्त्यभावः, तथा आरम्भेऽपि कामनाभावात्समाप्त्यभाव इत्यर्थः ॥१४॥

## नियमो वा तन्निमित्तत्वात्कर्तुस्तत्कारणं स्यात् १५॥

**नियमो वा**—समाप्तिनियम एव । आरम्भस्य **तन्निमित्तत्वात्**—समाप्तिनिमित्तत्वात् । अन्यथा समाप्त्यनियमे **कर्तुः**--आरम्भकर्तुः, **तत्**-असमापनं, **कारणं**—' यो यक्ष्य इत्युक्त्वा न यजते देवताभ्य एष आवृश्च्यते ' इति श्रुत. प्रत्यवायकारणं स्यात् । ' त्रैधातवीयेन यजेत ' इति प्रायश्चित्तोपदेशोऽपि समाप्तिनियमं द्रढयतीति भावः ॥१५॥

आरब्धलौकिककर्मणः समाप्त्यनियमाधिकरणम् ॥ ४ ॥

## लोके कर्माणि वेदवत्ततोऽधिपुरुषज्ञानम् ॥१६॥

लोके **कर्माणि**— रथगृहारम्भादीनि, **वेदवत्**— वैदिककर्मवत्, अवश्यं समापनीयानि । ननु, तान्यर्थसुखादिलोकप्रसिद्धमूलकत्वेनाशास्त्रीयाणीति चेन्न । **अधिपुरुषज्ञानं**— गृहादिनिर्माणकर्तुः पुरुषस्य तद्विषयकं ज्ञानं, **ततः**— शास्त्रादेव भवति । अतस्तान्यपि कर्माणि शास्त्रीयाणीति भावः ॥१६॥

## अपराधेऽपि च तैः शास्त्रम् ॥ १७ ॥

**अपराधे**—रथादिनिर्माणसमये अरादीनां भङ्गे, तैस्तक्षादिभिः 'आरे भग्ने इन्द्रवाहुर्वेद्धव्यः पायसेन ब्राह्मणो भोजयितव्यः' इत्यादिप्रायश्चित्तशास्त्रमपि पठ्यते । ततः शास्त्रीयत्वात्तत्कर्म समापनीयमिति ॥१७॥

## सि० ॥ अशास्त्रा तूपसम्प्राप्तिः शास्त्रं स्यान्न प्रकल्पनं तस्मादर्थेन गम्येत अप्राप्ते शास्त्रमर्थवत् ॥१८॥

**अशास्त्रा**–निर्मूला, **उपसम्प्राप्तिः**— गृहरथादिनिर्माणप्राप्तिः । तस्मात् **शास्त्रं**–शिल्पिशास्त्रं, न **प्रकल्पकं**—स्वमूलवेदानुमापकं नेत्यर्थः । **अर्थेन**—स्वसंरक्षणादिप्रयोजनेन, **गम्येत**–ज्ञातव्यम् । किं तन्निर्माणफलमित्याकाङ्क्षायामाह—**अप्राप्ते**—गृहरथादिनिर्माणकौशलशून्ये पुरुषे, **तच्छास्त्रमर्थवत्**—सफलम् । स्वबुध्या कर्तुमसमर्थः शास्त्रं दृष्ट्वा कुर्यादिति भावः । यच्च गृहरथादिनिर्माणाङ्गभूतं वास्तुदेवताद्याश्रय च पुरुषार्थं नैमित्तिकं कर्म, तस्य कर्मणः शास्त्रीयत्वादिष्टमेव तत्समापनम् ॥ १८ ॥

प्रतिषिद्धकर्मणामनुष्ठानेऽनिष्टापाताधिकरणम् ॥ ५ ॥

( कलञ्जन्यायः । )

## प्रतिषेधेष्वकर्मत्वात्क्रिया स्यात्प्रतिषिद्धानां विभक्तत्वादकर्मणाम् ॥ १९ ॥

'न कलञ्जं भक्षयेत्, न लशुनम्, न पलाण्डुम्, न गृञ्जनम्' इति श्रुतेषु **प्रतिषेधेषु**— सिद्धान्तिनो निषेधत्वेनाभिमतेषु वाक्येषु श्रूयमाणनञः न प्रत्ययवाच्यभावनायामन्वयः, धात्वर्थभक्षणेन व्यवहितत्वात् । समासापत्तेर्न कलञ्जेन सम्बन्धः । भक्षणाभावस्य कृत्साध्यतया कर्तव्यताप्रतिपादकविध्यन्वयानुपपत्तेर्नापि भक्षणेन साकं तस्यान्वयः सम्भवतीत्यगत्या 'नेक्षेतोद्यन्तमादित्य' मितिवत् भक्षणपदस्य लक्षणया भक्षणविरोधिसङ्कल्प एवार्थो वाच्यः । तस्य कर्तव्यतया भक्षयेदिति विधानमुपपन्नमतः **अकर्मत्वात्**-भक्षणविरोधिसङ्कल्पविधित्वात्, क्रिया स्यात् न निषेधः । यतो 'नञ्पदसमभिव्याहृतधातोः स्वविरुद्धार्थे लक्षणा यस्मिन् स पर्युदासः, यच्च निवर्तकं वाक्यं स निषेधः' इति पर्युदासनिषेधयोः **विभक्तत्वात्** परस्परं भिन्नत्वात्, तद्बोधकवाक्ययोरपि भेदात् 'न कलञ्जमित्यादिवाक्यजन्यादिनसङ्कल्पात्मकक्रियाजन्यादृष्टस्वर्गादिफलेच्छारहितेन तद्भक्षणं कार्यमित्यायातीति पूर्वः पक्षः ॥१९॥

## सि० ॥ शास्त्राणां त्वर्थवत्त्वेन पुरुषार्थो विधीयते तयोरसमवायित्वात्तादर्थ्ये विध्यतिक्रमः ॥२०॥

**शास्त्राणाम्**—' अथ तस्य व्रतम् ' 'नेक्षेतोद्यन्तमादित्यम्' 'एतावता हैनसा वियुक्तो भवति' इति त्रयाणां शास्त्रवाक्यानाम्, **अर्थवत्त्वेन**—पुरुषस्येष्टफलप्रद ईक्षणविरोधी 'नेक्षिष्ये' इति सङ्कल्पात्मकः पुरुषार्थोऽत्र विधीयते । यत उपक्रमोपसंहाराऽऽलोचने एकार्थप्रतिपादकत्वाद्वाक्यत्रयमपीदमेकं वाक्यमिति निःसन्दिग्धं सिध्यति । अतोऽत्र लक्षितः सङ्कल्पोऽर्थः युक्त एव । प्रकृते 'न कलञ्जं भक्षयेदित्यादौ तु **तयोः**—प्रथमतृतीयशास्त्रयोः **असमवायित्वात्**— अभावात्, **तादर्थ्ये**— शक्यार्थत्यागाय, **विध्यतिक्रमः**— विधीयमानार्थनिषेधः, भक्षयेदिति भक्षणप्रवृत्तिविरोधी तन्निवृत्तिरूपो मुख्यार्थ एवानिष्टपरिहारायोच्यते । इति व्यवहितान्वयोऽप्यत्र न दोषावह इति भावः ॥२०॥

गुर्वनुगमनादीनामुपनयनोत्तरप्रवृत्त्याधिकरणम् ॥ ६ ॥

## तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् ॥२१॥

' गुरुरनुगन्तव्यः अभिवादयितव्यश्च । वृद्धतयाः प्रत्युत्थेयः समन्तव्यश्च । ' प्राङ्मुखोऽन्नानि भुञ्जीत । ' क्षुत आचामेत् ' इत्यादीनि **तस्मिन्**-मन्वादिस्मृतिषु, **शिष्यमाणानि** — पठ्यमानानि गुर्वनुगमनादीनि कर्तव्यानि **जननेन**-- जन्ममात्रेण प्रवर्तेरन् । विशेषाश्रवणादित्यर्थ ॥ २१ ॥

## सि०॥ अपि वा वेदतुल्यत्वादुपायेन प्रवर्तेरन् ॥२२॥

' वैदिका एव पदार्था मन्वादिभिः स्मर्यन्ते ' इति प्रागुक्तमेव। अतः स्मृतीनां **वेदतुल्यत्वात् उपायेन**-उपनयनेन सह, प्रवर्तेरन् एते नियमाः । अत एवोपनयनात्प्राक् ' कामचारवादभक्षा' इति स्मृतम् । तस्मादुपनयनमारभ्यैते नियमा. परिपालनीया , न प्रागिति ॥२२॥

अग्निहोत्रादियावज्जीवकर्मणां स्वकालमात्रकर्तव्यत्वाधिकरणम् ॥७॥

( अग्निहोत्रन्याय. । )

## अभ्यासोऽकर्मशेषत्वात् पुरुषार्थो विधीयते ॥२३॥

' यावज्जीवमग्निहोत्रं जुहोति' यावज्जीवं दर्शपूर्णमासाभ्यां यजेत ' इत्यादिवाक्येन उक्तकर्मण **अभ्यासः**-आवृत्तिर्विधीयत इति स्थितं द्वितीयाध्याये । अत्रायमभ्यासः **अकर्मशेषत्वात्**—कर्मशेषत्वाभावात्, पुरुषार्थत्वेन विधीयते । अत सातत्येन तादृशश्रुतिविहितं कर्म कार्यम् । यावज्जीवमिति जीवननिमित्तेन विहितत्वात् सति निमित्ते नैमित्तिकस्य त्यागायोगात् सर्वदैव तदनुष्ठानमिति भाव ॥२३॥

## एतस्मिन्नसम्भवन्नर्थात् ॥ २४ ॥

**एतस्मिन्**— सार्वकालिकानुष्ठाने, **असम्भवन्**- निद्राऽऽहारादिलोपप्रसङ्गेन सम्भवाभावात्, तदतिरिक्तकाले सर्वदा न कर्तव्य इत्यर्थ ॥२४॥

## सि० ॥ न कालेभ्य उपदिश्यन्ते ॥२५॥

**कालेभ्यः**— विहितकालेभ्यः अन्यत्र न स्युः । यतः ' सायं प्रातरग्निहोत्रं जुहोति ' अमावास्यायाममावास्यया यजेत ' इत्यादिभिर्वाक्यैस्तत्काला उपदिश्यन्ते । ततस्तेष्वेव स्युरिति भावः ॥ २५ ॥

## दर्शनात्काललिङ्गानां कालविधानम् ॥२६॥

**काललिङ्गानां**–विहितकाल एवेत्यत्र लिङ्गाना दर्शनात् ' अप वा एषं स्वर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन् अमावास्यां पूर्णमासीं वा अतिपातयेत् ' इति तत्राननुष्ठाने प्रायश्चित्तश्रवणं लिङ्गम् । अतः **काले विधानं**— तदनुष्ठानम् । न संन्ततम् । इति सिध्दम् ॥ २६ ॥

### अग्निहोत्रादीनां स्वकालावृत्त्या आवृत्त्यधिकरणम् ॥८॥

## तेषामौत्पत्तिकत्वादागमेन प्रवर्तेत ॥२७॥

**आगमेन**–आगते आगते प्रातरादिकाले अग्निहोत्राद्यनुष्ठानं कर्तव्यम् । न सकृत् । कुतः ? **तेषामौत्पत्तिकत्वात्**–प्रातरादिकालसंयुक्तानामेवाग्निहोत्रादीनामुत्पत्तिवाक्यैर्विधानाद् । कालविशिष्टजीवननिमित्तस्यावृत्तौ नैमित्तिकावृत्तेरावश्यकत्वाद्विहितकाले तदावृत्तिरिति भावः ॥२७॥

## तथा हि लिङ्गदर्शनम् ॥२८॥

**तथा हि**—उक्तार्थे लिङ्गदर्शनम्-- ' यो दर्शपूर्णमासयाजी सन् अमावास्यां पूर्णमासीं वाऽतिपातयेदिति प्रायश्चित्तश्रवणमित्यर्थः ॥२८॥

### दर्शादौ भेदादिनिमित्तस्याऽऽवृत्तौ नैमित्तिकावृत्त्यधिकरणम् ॥९॥

## तथाऽन्तःक्रतुयुक्तानि ॥२९॥

यथा क्रतुनिमित्तावृत्तौ क्रत्वावृत्तिः, तथा **अन्तःक्रतुयुक्तानि**–क्रतुमध्ये यानि नैमित्तिकानि ' भिन्ने जुहोति । स्कन्ने जुहोतीत्यादीनि क्रत्वर्थानि अपि तथा–आवर्तेरन् इत्यर्थः ॥२९॥

### गुर्वनुगमनादीनां प्रतिनिमित्तमावृत्त्यधिकरणम् ॥ १० ॥

## आचाराद् गृह्यमाणेषु तथा स्यात्पुरुषार्थत्वात् ॥३०॥

गुर्वनुगमनादिषु आचारप्राप्तेषु **तथा**—आवृत्तिः स्यात् । **पुरुषार्थत्वात्**-गुरुप्रीत्यर्थत्वात् ॥ ३० ॥

**ऋणत्रयापाकरणस्य ब्राह्मणक्षत्रियवैश्यानां नित्यत्वाधिकरणम् ॥११॥**

## ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् ॥३१॥

ब्राह्मणस्येति क्षत्रियवैश्ययोर्लक्षकम् । सोमविद्याप्रजं नित्यम् । **ऋणवाक्येन**-- ऋणपदघटितवाक्येन, **संयोगात्**-- त्रयानपाकरणे दोषश्रवणात् 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते । ब्रह्मचर्येण ऋषिभ्यः । यज्ञेन देवेभ्यः । प्रजया पितृभ्यः । एष वा अनृणीयः पुत्री यज्वा ब्रह्मचारी'ति श्रुतेः ॥ ३१ ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां षष्ठाध्यायस्य द्वितीयः पादः ॥२॥ श्रीः ॥

---

# ॥ अथ षष्ठाध्यायस्य तृतीयः पादः ॥

**नित्ये यथाशक्त्यङ्गानुष्ठानाधिकरणम् ॥१॥**

## सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात् ॥१॥

**सर्वशक्तौ प्रवृत्तिः स्यात्**—यावज्जीवमिति विहितनित्याग्निहोत्रादौ कर्मणि सर्वानुष्ठानसमर्थस्यैव प्रवृत्तिः स्यात् । **तथाभूतोपदेशात्**—साङ्गानुष्ठानस्यैव विहितत्वात् ॥१॥

## सि०॥ अपि वाप्येकदेशे स्यात् प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्र तदर्थत्वात् ॥२॥

अपि वेति पूर्वोक्तव्यावृत्तिः । **एकदेशेऽपि**—अङ्गैकदेशानुष्ठानेऽपि, प्रयोगः स्यात् । **हि**- यस्मात्, **प्रधाने**— प्रधानानुष्ठाने, **अर्थस्य**-प्रत्यवाय-

मात्रात्मकफलस्य, **निर्वृत्तिः**—सिद्धिः । **इतरत्र**—इतरफले स्वर्गादौ, **गुण-मात्रं**—यावदङ्गानुष्ठानम् । यावदङ्गानुष्ठानस्य **तदर्थत्वात्**—स्वर्गार्थत्वादित्यर्थः ॥२॥

## तदकर्मणि च दोषः तस्मात्ततो विशेषःस्यात् प्रधाने नाभिसम्बन्धात् ॥३॥

**तदकर्मणि**—तस्य-प्रधानस्य अकर्मणि-अननुष्ठाने, 'पथो वा एषोऽध्यपथेनैति' इति **दोषः** श्रूयते । **तस्मात्ततः**— अङ्गात्, **विशेषः स्यात्** । **प्रधानेनाभिसम्बन्धात्**—प्रधानमात्रानुष्ठानस्य आवश्यकत्वमिति भावः ॥३॥

## कर्माभेदं तु जैमिनिः प्रयोगवचनैकत्वात्सर्वेषामुपदेशः स्यात् ॥४॥

**कर्माभेदं तु**— कर्मणोः— नित्यकाम्यप्रयोगयोः अभेदम् एकरूपतां जैमिनिराह 'अमावास्यायाम् अमावास्यया पौर्णमास्या पौर्णमास्या यजेत' इति प्रयोगवचनस्यैकरूपत्वात् । प्रयोगद्वयेऽपि **सर्वेषां**—यावदङ्गानाम् **उपदेशः**—अनुष्ठानं स्यादिति भावः ॥४॥

## अर्थस्य व्यपवर्गित्वादेकस्यापि प्रयोगे स्यात् यथा क्रत्वन्तरेषु ॥५॥

**एकस्य प्रयोगेऽपि**—एकाङ्गकनित्यप्रयोगेऽपि, विगुणादपि नित्यादित्यर्थः, प्रत्यवायाभावः फलं स्यात् । कुतः ? **अर्थस्य**—प्रधानस्य, अङ्गेभ्यः **व्यपवर्गित्वात्**—पृथक्कृतत्वात् । 'अमावास्यया यजेत । पौर्णमास्यया यजेत' इत्यत्र अमावासीपौर्णमासीशब्दौ न साङ्गप्रधानपरौ । अपि तु प्रधानभूतक्रियादिषड्यागपरावेवेति द्वितीयाध्यायस्य द्वितीयपादे चतुर्थाधिकरणे सप्रपञ्चं निरूपितमिति न पूर्वसूत्रोक्त आक्षेपावसरः । तस्मान्नित्यकाम्यप्रयोगयोर्मिथो भिन्नत्वाद्विगुणमपि नित्यं कर्तव्यमेवेति भावः । **यथा क्रत्वन्तरेषु**-

प्रकृतिविकृत्यादिषु यथापरस्य धर्माः परस्य न भवन्ति । तथा काम्यप्रयोगस्य धर्मा अपि नित्यस्य भवितुं नार्हन्ति । तयोर्भिन्नत्वादेवेति ॥ ५ ॥

## विध्यपराधे च दर्शनात्समाप्तेः ॥६॥

विध्यपराधे च—अङ्गानुष्ठानासम्भवेऽपि 'यदेव यादृक् तादृक् होतव्यमिति **समाप्तेर्दर्शनात्**— यथाकथंचिदङ्गहीनमपि प्रधानमनुष्ठेयमेवेति श्रवणादित्यर्थः ॥ ६ ॥

## प्रायश्चित्तविधानाच्च ॥ ७ ॥

'यस्याग्निमनुद्धृतं सूर्योऽभ्युदेति चतुर्गृहीतमाज्यं पुरस्ताद्धरेत्' इत्यादिभिः प्रायश्चित्तश्रवणादपि अङ्गलोपेऽप्यनुष्ठेयं नित्यमिति ज्ञापयतीति भावः ॥ ७ ॥

### अङ्गवैकल्ये काम्यस्य निष्फलत्वाधिकरणम् ॥ २ ॥

## काम्येषु चैवमर्थित्वात् ॥८॥

'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम' 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' 'वैश्वदेवीं साङ्ग्रहायणीं निर्वपेद् ग्रामकामः' इत्यादिषु काम्येषु कर्मसु एवमङ्गवैगुण्यस्याप्यनुष्ठानम्. **अर्थित्वात्**—अथ तत्कर्मजन्यफलेच्छायाः सत्त्वादित्यर्थः ॥८॥

## असंयोगात्तु नैवं स्याद् विधेः शब्दप्रमाणत्वात् ॥९॥

**नैवं स्यात्** । **असंयोगात्**—केवलप्रधानकर्मणः अपूर्वजनकत्वे तात्पर्याभावात् । विधेरपूर्वजनकत्वस्य शब्दप्रमाणैकगम्यत्वात् । केवलयागभावना नोपदिश्यते । किन्तिवतिकर्तव्यताविशिष्टा सा अपूर्वजनिकेत्युपदिश्यते इति भावः ॥९॥

## अकर्मणि चाप्रत्यवायात् ॥ १० ॥

**अकर्मणि**—नित्यकर्माननुष्ठाने, यथा प्रत्यवायः तथा काम्ये कर्मण्यकरणात् नित्यकाम्ययोः साम्यमिति भावः ॥ १० ॥

द्रव्यभेदेऽपि कर्माभेदाधिकरणम् ॥३॥

**क्रियाणामाश्रितत्वाद् द्रव्यान्तरे विभागः स्यात् ॥ ११ ॥**

क्रियाणां—मन्त्रयागहोमक्रियाणां, द्रव्याश्रितत्वात् द्रव्यान्तरे—व्रीहिनीवारादिद्रव्यभेदे, विभागः—यागादिकर्मणो भेदः स्यात् ॥११॥

**सि० ॥ अपि वाऽव्यतिरेकाद्रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यान्नामधेयं च सत्त्ववत् ॥१२॥**

अपि वा ऐककर्म्यं स्यात्—द्रव्यभेदेऽपि दर्शपूर्णमासादिपदवाच्यत्वे-नैकमेव कर्म स्यात्। अव्यतिरेकात्—व्यतिरेकसाधकाभावात्। रूपशब्दा-विभागात्-तद्वाचकदर्शपूर्णमासादिपदस्य तद्वाच्यस्य दर्शत्वपूर्णमासत्वादिरूप-धर्मस्य चैक्यात्। यथा गोपदैक्ये तद्वाच्यगोत्वैक्ये गोत्वावच्छिन्ना व्यक्तिः अपूर्वा न। किंवा द्रव्यगुणकर्मणां द्रव्यत्वादिना भेदेऽपि सत्त्वेन न भेदः। सदिति नामधेयं च न पृथक्। तथा द्रव्यभेदेऽपि न भिन्नमिति भावः ॥१२॥

नित्यकर्मणः अनित्यप्रारब्धकर्मणश्च द्रव्यापचारे प्रतिनिधिना समापनाधिकरणम् ॥४॥

**श्रुतिप्रमाणत्वाच्छिष्टाभावे अनागमः अन्यस्य अशिष्टत्वात् ॥१३॥**

श्रुतिप्रमाणत्वात्—'व्रीहिभिर्यजेत' इति तृतीयाश्रुत्या व्रीहिणा-मङ्गत्वोपदेशात्, शिष्टाभावे—विहितव्रीह्यभावे, अन्यस्य—नीवारादेः, अनागमः—अप्राप्तिः। अशिष्टत्वात्—अनङ्गत्वादिति ॥१३॥

**क्वचिद्विधानाच्च ॥ १४ ॥**

क्वचिज्ज्योतिष्टोमे 'सोमाभावे पूतिकानभिषुणुयात्' इति प्रतिनि-धिविधानादत्र तथा नीवारप्रापकवचनस्याभावान्न प्रतिनिधिरिति ॥१४॥

**सि० ॥ आगमो वा चोदनार्थाविशेषात् ॥१५॥**

आगमः— नीवारप्राप्तिः, चोदनार्थाविशेषात्— चोदनार्थस्य यागाभिन्नत्वस्य पूर्वमेव व्यवस्थापितत्वात्, नीवारैरपि यागनिष्पत्तिसम्भवात् विशेषवचनाभावेऽपि सादृश्यादिना तत्प्राप्तिरिति भावः ॥१५॥

## नियमार्थः क्वचिद्विधिः ॥१६॥

क्वचिद्विधिः— पूतिकविधिः, नियमार्थः—प्रतिनिधित्वेनान्यस्यापि प्राप्तौ पूतिका एव ग्राह्या इत्यर्थः ॥१६॥

## तन्नित्यं तच्चिकीर्षा हि ॥ १७ ॥

हि—यस्मात्कारणात्, तच्चिकीर्षा—यागचिकीर्षा नित्या । अकरणे प्रत्यवायश्रवणात् । अतः तत्—पूतिकाप्रापणं नित्यम्—अवश्यं, शास्त्रं विनापि पक्षे प्राप्तम् । मुख्यालाभेऽपि यागस्याऽवश्यं कर्तव्यत्वादिति भावः ॥१७॥

देवतामन्त्रक्रियाणामपचारे प्रतिनिध्यभावाधिकरणम् ॥५॥

## न देवताग्निशब्दक्रियमन्यार्थसंयोगात् ॥१८॥

देवता—इन्द्रादिः, अग्निः—आहवनीयादिः, शब्दः—मन्त्रसमूहः, क्रिया—प्रयाजादिः, न प्रतिनिधिमर्हति । कुतः? अन्यार्थसंयोगात् - देवतादीनां प्रतिनिधिसाधकन्यायातिरिक्तन्यायोपेतत्वात् । व्रीहिद्रव्यस्य पुरोडाशकार्यसाधकत्ववन्नीवारस्यापि तत्साधकत्वं प्रत्यक्षसिद्धम् । देवतादेरदृष्टसाधकत्वं तु न तथा । अपि तु शास्त्रप्रमाणैकगम्यम् । शास्त्रविहितदेवतादिप्रयोज्यं यददृष्टं तदन्येनापि भवतीति शास्त्रमन्तरा ज्ञातुमशक्यमेवेति भावः ॥ १८ ॥

## देवतायां च तदर्थत्वात् ॥ १९ ॥

अग्न्यादिदेवतायां च तदर्थत्वात्—हविरुद्देश्यत्वात्, दर्शादिहविषः उद्देश्योऽग्न्यादिः । तत्र सूर्यादियोजने स दर्शयागो न स्यात् । एवमन्यत्रापीति भावः ॥१९॥

प्रतिषिद्धद्रव्यस्य प्रतिनिधित्वाभावाधिकरणम् ॥६॥

## प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः ॥२०॥

' अयज्ञिया वै माषाः ' इति यज्ञसामान्ये निषेधश्रवणात् माषादिद्रव्यं प्रतिनिधित्वेन न ग्राह्यम् । इति द्रव्यादिप्रतिनिधिनिर्णयः ॥२०॥

स्वामिनः प्रतिनिध्यभावाधिकरणम् ॥७॥

## तथा स्वामिनः फलसमवायात् फलस्य कर्मयोगित्वात् ॥२१॥

स्वामिनस्तथा- न प्रतिनिधिः । कुतः ? फलस्य कर्मयोगित्वात्- प्रयोक्तृगामित्वात् । फलसमवायात्-प्रतिनिधौ फलोत्पत्त्यापत्तेरिति भावः ॥२१॥

सत्रे कस्यचित्स्वामिनोऽपचारे प्रतिनिध्यादानाधिकरणम् ॥८॥

## बहूनां तु प्रवृत्तावन्यमागमयेद्वैगुण्यात् ॥२२॥

( सत्रन्यायः । )

' सप्तदशावरा सत्रमासीरन् ' इति बहूनां स्वामिनां प्रवृत्ते कर्मणि कस्मिंश्चिदेकस्मिन्नपचरिते अवैगुण्यात्-सप्तदशत्वादिसंख्यालोपो मा भूदित्यन्यं तत्पूरकमागमयेत् ॥२२॥

सत्रे प्रतिनिहितस्य अस्वामित्वाधिकरणम् ॥९॥

## स स्वामी स्यात्संयोगात् ॥२३॥

सः-प्रतिनिधिः, स्वामी स्यात् । कुतः ? तत्संयोगात्-स्वामिस्थानसम्बन्धादित्यर्थः ॥२३॥

## सि० ॥ कर्मकरो वा भृतत्वात् ॥२४॥

कर्मकरः-आचार्यादिवत् कर्मकरः । भृतत्वात्- द्रव्यदानेन परिक्रीतत्वात् ॥ २४ ॥

## तस्मिंश्च फलदर्शनात् ॥२५॥

' य. सत्राय दीक्षितानां प्रतीयेतापि तस्य फलम् ' इति तस्मिन्- अपचरिते स्वामिनि, फलदर्शनं दृष्टं न स्वामी । अपि तु कर्मकर एवेति भावः ॥ २५ ॥

सत्रे प्रतिनिहितस्य यजमानधर्मग्राहित्वाधिकरणम् ॥ १० ॥

## स तद्धर्मा स्यात् तत्कर्मसंयोगात् ॥ २६ ॥

**सः**--प्रतिनिधिः, **तद्धर्मा**--यजमानधर्मवान् स्यात् । **तत्कर्मसंयोगात्**--यजमानस्य यत्कर्म तदर्थं नियुक्तत्वात् ॥२६॥

श्रुतद्रव्यापचारे तत्सदृशस्यैव प्रतिनिधित्वाधिकरणम् ॥११॥

## सामान्यं तच्चिकीर्षा हि ॥२७॥

**सामान्यं**--व्रीहिसदृशं ग्राह्यम् । **हि**-यस्मात्, यागे प्रवृत्तस्य **तच्चिकीर्षा**--यद्विषयिणी इच्छा, तदलाभे तत्सदृशेनेच्छतीति भाव ॥२७॥

परिगृहीतद्रव्यापचारे वैकल्पिकद्रव्यान्तरानुपादानाधिकरणम् ॥१२॥

## निर्देशात्तु विकल्पे यत् प्रवृत्तम् ॥ २८ ॥

**विकल्पे** - विकल्पविषये, **यत्प्रवृत्तं**--यद्द्रव्य प्रथमनङ्गीकृतम्, तत्सदृश ग्राह्यम् । **निर्देशात्**--प्रथमप्रवृत्तद्रव्यस्यैवाङ्गत्वेन निर्देशात ॥ २८ ॥

## अशब्दमिति चेत् ॥ २९ ॥

सदृशम् **अशब्दम्**--*अविहितमिति* चेत्-- ॥ २९ ॥

## नानङ्गत्वात् ॥ ३० ॥

अविहितत्वस्य वैकल्पिकेऽपि तुल्यत्वात् इतरशास्त्रे अप्रामाण्यप्रसक्तिरिति भावः। संस्कारा अपि खादिरे खादिरप्रतिनिधौ कर्तव्या इति सिद्धान्त ॥३०॥

पूतिकस्य सोमप्रतिनिधित्वाधिकरणम् ॥ १३ ॥

## वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य ॥ ३१ ॥

'यदि न सोमं विन्देत पूतिकानभिषुणुयात' इत्याम्नायते । तत्र सिद्धान्तः । **अभावे**--सोमाभावे, **तत्सामान्येन**-तत्सादृश्येन, **इतरस्य**--पूतिकातिरिक्तस्य, प्राप्तौ **वचनात्**--'यदि न सोममिति वचनात्, न सदृशमन्याय्यं-गृहीतुमयोग्यम् । असदृशा पूतिकाद्रव्येनैव प्रतिनिधिः स्यात् । **अभावात्**--ईदृशवचनाभावे इतरस्य सदृशस्य प्राप्तिरिति भावः ॥३१॥

प्रतिनिध्यपचारे उपात्तद्रव्यसदृशस्य पुनः प्रतिनिधित्वा-
धिकरणम् ॥१४॥

## न प्रतिनिधौ समत्वात् ॥३२॥

**प्रतिनिधौ**--व्रीहिप्रतिनिधिनीवारनाशे, **न**--तत्सदृशं द्रव्यं न ग्राह्यम्। कुतः ? **समत्वात्**-आगन्तुकत्वस्य तुल्यत्वात् । अतः मुख्यसदृश एव प्रतिनिधिः पुनरपि ग्राह्य इति भावः ॥३२॥

श्रुतस्यापि प्रतिनिधेरभावे मुख्यसदृशस्यैव प्रतिनिधित्वा-
धिकरणम् ॥१५॥

## स्याच्छ्रुतिलक्षणे नियतत्वात् ॥३३॥

नीवारनाशे तत्सदृशग्रहणाभावेऽपि पूतिकनाशे तत्सदृशं ग्राह्यमित्याह--- **श्रुतिलक्षणे**-वाक्येन विहितप्रतिनिधिनाशे नष्टतत्सदृशग्रहणं स्यात् । तस्मिन् प्रयोगे तस्य श्रुतिनियमितत्वात् ॥३३॥

## सि० ॥ न तदीप्सा हि ॥३४॥

पूतिकासदृशोपादानं न । **हि**--यतः, यागे प्रवृत्तस्य **तदीप्सा**--सोमेच्छा, प्रथमं न पूतिकेच्छा । अतः आगन्तुकसदृशो नेच्छाविषयो भवितुमर्हतीत्यर्थः ॥३४॥

मुख्यापचारे पुनस्तत्प्राप्तौ तस्यैवोपादानाधिकरणम् ॥१६॥

## मुख्याधिगमे मुख्यम् आगमो हि तदभावात् ॥३५॥

मुख्यस्यालाभेन नीवारान् सम्पाद्य यागार्थं प्रवृत्तः, किन्तु निर्वापादिकं न कृतम् । तत्र तैरारब्धदर्शप्रयोगे **मुख्याधिगमे**--व्रीहिलाभे, **मुख्यं**-व्रीहय एव ग्राह्याः । **हि**--यत, **तदभावात्**--मुख्याभावात्, **आगमः**-नीवारागम. । सर्वथा मुख्याभाव एव प्रतिनिधिरिति भावः ॥३५॥

प्रतिनिधिना आरब्धे कर्मणि मुख्यलाभेऽपि प्रतिनिधिनैव
समापनाधिकरणम् ॥१७॥

## प्रवृत्तेऽपीति चेत् ॥३६॥

**प्रवृत्तेऽपि**-- नीवारपुरोडाशेन प्रवृत्तप्रधानयागसम्पत्त्यनन्तरमपि व्रीहिलाभे पुनर्व्रीहिग्रहणमिति चेत्-॥३६॥

## सि० ॥ नानर्थकत्वात् ॥३७॥

**न पुनर्व्रीहिग्रहणम्** । **अनर्थकत्वात्**--व्यर्थत्वात् । यागार्थं हि द्रव्यसम्पादनम् । यागस्य जातत्वाद्व्यर्थमेव तत्सम्पादनम् । नाङ्गानुसारेण प्रधानावृत्तिर्युक्तेति भावः ॥३७॥

अमुख्ये संस्कारयोग्येऽपि मुख्यस्यैवोपादानाधिकरणम् ॥१८॥

## द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् ॥३८॥

'यूपे पशुं बध्नाती'ति पशुबन्धनयूपप्रकृतिभूतो मुख्यः खदिरः पशुनियोजनमात्रसमर्थः । 'यूपमष्टाश्रीकरोती' त्यष्टाश्रीकरणसंस्कारासमर्थः । खदिरसदृशः बदरस्तूभयसमर्थः । तत्र को ग्राह्य इत्याकाङ्क्षाया **द्रव्यस्य**--खदिरस्य, **संस्कारस्य च**--अष्टाश्रीकरणादेः, परस्परं **विरोधे**--उभयोरेकत्रासम्भवे, **द्रव्यं**--मुख्यः खदिरो ग्राह्यः, संस्कारो बाध्यः । **तदर्थत्वात्**--द्रव्यार्थत्वात्तस्य अङ्गप्रधानविरोधे अङ्गस्य लोप इति भावः ॥३८॥

प्रयोजनायोग्यस्य मुख्यस्य सत्त्वेऽपि प्रतिनिध्यादानाधिकरणम् ॥ १९ ॥

## अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तेर्द्रव्याणामर्थशेषत्वात् ॥३९॥

**अर्थस्य**--पशुनियोजनकार्यहेतुद्रव्यस्य खदिरस्य, **विरोधे**--तत्कार्यासमर्थे द्रव्यं खदिरं त्यक्त्वा **अर्थः**--तत्कार्यं, सम्पादनीयम् । **द्रव्याभावे**--मुख्यद्रव्याभावे, **गौणेनापि**--बदरेणापि, **तदुत्पत्तेः**--तत्कार्योत्पत्तेर्जायमानत्वात् । **द्रव्याणामर्थशेषत्वात्**--पशुनियोजनाङ्गत्वात् प्रधानानुसारेणाङ्गलोपो युक्त इति भावः ॥३९॥

अङ्गनिर्वाहासमर्थस्यापि प्रधाननिर्वाहकस्य मुख्यस्योपादानाधिकरणम् ॥ २० ॥

## विधिरप्येकदेशे स्यात् ॥४०॥

यत्र मुख्यद्रव्यम् अवदानमात्रे पर्याप्तम्। नीवारादयस्तु या कार्यपर्याप्ता। तत्र किं ग्राह्यमिति विमर्शे आह- **विधिः**--विहितमपि द्रव्य व्रीह्यादि, **एकदेशे**--अवदानमात्र समर्थम्। अतस्तत्र प्रतिनिधिः स्यात्। भूयसामनुग्रहायेति भाव ॥४०॥

## मि० ॥ अपि वा अर्थस्य शक्यत्वात् एकदेशेन निर्वर्त्येत अर्थानामविभक्तत्वात् गुणमात्रमितरत्तदर्थत्वात् ॥४१॥

अपि वेति पूर्वोक्तव्यावृत्तिः। **अर्थस्य** प्रधानयागस्य, अनुष्ठातुम् **एकदेशेन**--अल्पेनापि मुख्यद्रव्येण, शक्यत्वात् **निर्वर्त्येत**-तेनैव प्रधानं कर्तव्यम्। **इतरत्** स्विष्टकृदादि, **तदर्थत्वात्**-हविःसंस्कारार्थत्वात्, गुणमात्रं हविरङ्गम्। अत **अर्थानां**--स्विष्टकृदादिशेषप्रतिपत्तिप्रभृतीनां सर्वेषां कार्याणां, हविरङ्गत्वेन समानत्वात् तानि सर्वाण्यपि हविरङ्गत्वाद्दुर्बलानि। 'व्रीहिभिर्यजेतेति श्रुत्या व्रीहीणां यागाङ्गत्वात्तस्य प्राबल्यमिति भाव ॥४१॥

॥ इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां षष्ठाध्यायस्य तृतीय पाद सम्पूर्ण ॥ श्री ॥

---

## ॥ अथ षष्ठाध्यायस्य चतुर्थः पादः ॥

अवत्तनाशे पुनरवदानार्थं प्रतिनिध्यादानाधिकरणम् ॥ १ ॥

### शेषाद्व्यवदाननाशे स्यात्तदर्थत्वात् ॥ १ ॥

दर्शपूर्णमासयोः 'द्विर्हविषोऽवद्यती'ति पुरोडाशात् स्रुचि द्विरवदानानन्तरं तदवत्तमात्रनाशे पुनरपि शेषात्—पुरोडाशादेवावदानं कार्यम्। कुतः? तदर्थत्वात्—'अग्नये जुष्टं निर्वपामी'ति निर्वापेण निखिलपुरोडाशस्य अग्न्यर्थत्वादिति भावः ॥ १ ॥

### सि०॥ निर्देशाद्वाऽन्यदागमयेत् ॥२॥

निर्देशात्—'मध्यात् पूर्वार्धादवद्यती'ति विधानात्, तन्नाशे अन्यत् प्रतिनिधाय तेन यागः कार्यः। मध्यपूर्वार्धयोरेव अग्न्यर्थत्वादिति। न कृत्स्नपुरोडाशस्येति भावः ॥२॥

स्विष्टकृदर्थावत्तनाशे पुनरवदानाभावाधिकरणम् ॥२॥

### अपि वा शेषभाजां स्याद्विशिष्टकारणत्वात् ॥३॥

शेषभाजां—शेषप्रतिपत्तिरूपस्विष्टकृद्यागार्थमवत्तहविषो नाशे स्विष्टकृदादीनां लोप एव। कुतः? विशिष्टकारणत्वात्—प्रधानयागनिर्वृत्त्यनन्तरमवशिष्टस्य प्रतिपत्तिकारणत्वात्। शेषहविःसंस्कारार्थाः स्विष्टकृद्यागादयो हविरङ्गभूताः। अङ्गानुसारेण प्रधानावृत्तिर्न भवतीत्युक्तमेव प्रागिति भावः ॥३॥

ऋत्विजामेव शेषभक्षणाधिकरणम् ॥ ३ ॥

### निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् ॥ ४ ॥

शेषभक्षः—प्राशित्रशंयुवाकादिशेषभक्षणम्, अन्यैः—प्रकृताध्वर्यवादिऋत्विग्भ्योऽन्यैः कर्तव्यम्। कुतः? निर्देशात्—'यजमानपञ्चमा इडां भक्षयन्ती'ति निर्देशात। प्रधानवत्—यथा 'यदाग्नेयोऽष्टाकपालः' इत्यनियमेन कृत्स्नपुरोडाशे यागसम्बन्धे प्राप्ते 'मध्यादवद्यती'त्यनेन स नियः-

## अङ्गनिर्वाहासमर्थस्यापि प्रधाननिर्वाहकस्य मुख्यस्योपादानाधिकरणम् ॥ २० ॥

### विधिरप्येकदेशे स्यात् ॥४०॥

यत्र मुख्यद्रव्यम् अवदानमात्रे पर्याप्तम् । नीवारादयस्तु यावत्कार्यपर्याप्ताः । तत्र किं ग्राह्यमिति विमर्शे आह--**विधिः**--विहितमपि द्रव्यं व्रीह्यादि, **एकदेशे**--अवदानमात्रे समर्थम् । अतस्तत्र प्रतिनिधिः स्यात् । भूयसामनुग्रहायेति भावः ॥४०॥

### सि० ॥ अपि वा अर्थस्य शक्यत्वात् एकदेशेन निर्वर्त्येत अर्थानामविभक्तत्वात् गुणमात्रमितरत्तदर्थत्वात् ॥४१॥

अपि वेति पूर्वोक्तव्यावृत्तिः । **अर्थस्य**--प्रधानयागस्य, अनुष्ठानम् **एकदेशेन**--अल्पेनापि मुख्यद्रव्येण, शक्यत्वात् **निर्वर्त्येत**--तेनैव प्रधानं कर्तव्यम् । **इतरत्**--स्विष्टकृदादि, **तदर्थत्वात्**--इति तस्य कार्यत्वात्, गुणमात्रं हविरङ्गम् । अत **अर्थानां**--स्विष्टकृदादिशेषप्रतिपत्तिप्रभृतीनां सर्वेषां कार्याणां, हविरङ्गत्वेन समानत्वात् तानि सर्वाण्यपि हविरङ्गत्वाद्दुर्बलानि । 'व्रीहिभिर्यजेत' इति श्रुत्या व्रीहीणां यागाङ्गत्वं, तस्य प्राबल्यमिति भावः ॥४१॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां षष्ठाध्यायस्य तृतीयः पादः सम्पूर्णः ॥ श्री. ॥

---

## ॥ अथ षष्ठाध्यायस्य चतुर्थः पादः ॥

अवत्तनाशे पुनरवदानार्थं प्रतिनिध्यादानाधिकरणम् ॥ १ ॥

### शेषाद्द्व्यवदाननाशे स्यात्तदर्थत्वात् ॥ १ ॥

दर्शपूर्णमासयोः 'द्विर्हविषोऽवद्यती'ति पुरोडाशाद् स्रुचि द्विरवदानानन्तर तदवत्तमात्रनाशे पुनरपि शेषात्—पुरोडाशादेवावदानं कार्यम् । कुतः ? तदर्थत्वात्—'अग्नये जुष्टं निर्वपामी'ति निर्वापेण निखिलपुरोडाशस्य अग्न्यर्थत्वादिति भावः ॥ १ ॥

### सि०॥ निर्देशाद्वाऽन्यदागमयेत् ॥२॥

निर्देशात्—'मध्यात् पूर्वार्धादवद्यती'ति विधानात्, तन्नाशे अन्यद् प्रतिनिधाय तेन याग कार्य.। मध्यपूर्वार्धयोरेव अग्न्यर्थत्वादिति । न कृत्स्नपुरोडाशस्येति भावः ॥२॥

स्विष्टकृदर्थावत्तनाशे पुनरवदानाभावाधिकरणम् ॥२॥

### अपि वा शेषभाजां स्याद्विशिष्टकारणत्वात् ॥३॥

शेषभाजां—शेषप्रतिपत्तिरूपस्विष्टकृद्यागादीनां तद्धविर्नाशे नाशे स्विष्टकृदादीना लोप एव । कुतः ? विशिष्टकारणत्वात्—प्रधानयागनिर्वृत्त्यनन्तरमवशिष्टस्य प्रतिपत्तिकारणत्वात् । शेषहवि.संस्कारार्थ. स्विष्टकृदादयो हविरङ्गभूताः । अङ्गानुसारेण प्रधानावृत्तिर्न भवतीत्युक्तमेव प्रागिति भावः ॥३॥

ऋत्विजामेव शेषभक्षणाधिकरणम् ॥ ३ ॥

### निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् ॥ ४ ॥

शेषभक्षः—प्राशित्रशंयुवाकादिशेषभक्षणं, अन्यैः—ब्रह्मयजमानादिऋत्विग्भ्योऽन्यैः कर्तव्यम् । कुतः ? निर्देशात्—'यजमानपञ्चमा इडां भक्षयन्ती'ति निर्देशात् । प्रधानवत्—यथा 'मध्यादवद्यती'त्यनियमेन कृत्स्नपुरोडाशे यागसम्बन्धे प्राप्ते 'मध्यादवद्यति' चेन्न तु निर्-

र्त्यते, तथा इडाभक्षणवाक्येन प्राशित्रादिशेषभक्षणे यजमानसहितप्रकृतऋत्विक्सम्बन्धो व्यावर्त्यते इति भावः ॥ ४ ॥

## सि० ॥ सर्वैर्वा समवायात्स्यात् ॥ ५ ॥

सर्वैर्वा—इडादिसर्वभक्षैः साकं प्रकृताः सर्वे ऋत्विजः सम्बध्यन्ते इत्यर्थः । कुतः? समवायात्—कर्मकरत्वेन सर्वेषां तत्र सम्बन्धात् । तस्मात् प्रकृतानां सर्वेषामेव ऋत्विजां सयजमानानां शेषभक्षणं स्यादिति भावः ॥५॥

## निर्देशस्य गुणार्थत्वम् ॥ ६ ॥

निर्देशस्य—'यजमानपञ्चमाः' इति वचनस्य, गुणार्थत्वम्-कर्मकरत्वाभावेन अप्राप्तयजमानविध्यर्थत्वम् । अतो न व्यावर्तकं तद्वचनमिति भावः ॥ ६ ॥

## प्रधाने श्रुतिलक्षणम् ॥ ७ ॥

प्रधाने—प्रधानयागे, 'भक्ष्यादवद्यति' ति श्रुतिलक्षणं प्रामाण्यम् । विधेयस्यान्यस्याभावायुक्तैर व्यावृत्तिस्तत्र । अत्र तु न तथा । विधिपरिसङ्ख्ययोर्विशये विधिरेवाभ्यर्हितः स्वार्थत्वात् परिसङ्ख्या प्राप्तबाधादिदोषत्रयवत्त्वादिति भावः ॥ ७ ॥

## अर्थवदिति चेत् ॥ ८ ॥

अश्वमेधे यथा ऋत्विजा न सर्वभक्षणं तद्वदत्रापीति चेत्—॥ ८ ॥

## न चोदनाविरोधात् ॥ ९ ॥

न । 'अश्वमेधेन यजेत' इति चोदनाबाधप्रसङ्गात् । तत्र भक्षस्य बाहुल्यात्सर्वभक्षणेऋत्विजा विरक्तौ स यज्ञो न समाप्येतेति भावः ॥ ९ ॥

कृत्स्नैकदेशभेदे प्रायश्चित्तानुष्ठानाधिकरणम् ॥ ४ ॥

## सि० ॥ अर्थसमवायात्प्रायश्चित्तमेकदेशेऽपि ॥१०॥

एकदेशेऽपि—एकदेशभेदनेऽपि, प्रायश्चित्तम्-होमः कार्यः । कुतः? अर्थस्य—भेदनरूपनिमित्तस्य, समवायात्—निष्पन्नत्वात् । 'भिन्ने जुहो-

ती ' ति श्रुतेर्यथा कृत्स्नकपालभेदने तथा तदेकदेशभेदनेऽपि तात्पर्यसत्त्वादिति भावः ॥ १० ॥

## न त्वशेषवैगुण्यात्तादर्थ्यं हि ॥ ११ ॥

**अशेषे**—कृत्स्नभेदने तु, न होमः । **हि**—यतः, **तदर्थं**—भिन्नस्य संस्कारार्थं होमः । अशेषभिन्नस्य **वैगुण्यात्**— अग्रे कार्याक्षमत्वात्, होमो निष्फल इति भावः ॥ ११ ॥

## स्याद्वा, प्राप्तनिमित्तत्वात् अतद्धर्मो नित्यसंयोगात् न हि तस्य गुणार्थत्वेनानित्यत्वात् ॥ १२ ॥

कृत्स्नभेदनेऽपि प्रायश्चित्तं होमः स्यादेव । **प्राप्तनिमित्तत्वात्**— भेदनरूपनिमित्तस्य प्राप्तत्वात् । होमः **अतद्धर्मः**—भिन्नकपालसंस्कारो न । त्वन्मते भिन्नशब्दस्य संस्कार्यकपालवाचकत्वेन निमित्तवाचकत्वाभावात् होमस्य नैमित्तिकत्वं न संभवति । अर्थात्तस्य **नित्यसंयोगात्**-- नित्यत्वात्, **गुणार्थत्वेन**— संस्कारत्वेन, निर्देशोऽसम्भवी । तथा सति भेदनस्य कादाचित्कत्वेनानित्यत्वात्, होमस्य च नित्यत्वात्, नित्यानित्यसंयोगविरोधात्मको दोषस्त्वन्मते प्राप्नोति । यतो न हि नित्यमनित्यस्योपकर्तुं प्रभवति । अतो न होमो भिन्नसंस्कारः । अपि तु भेदने निमित्ते सति नैमित्तिकः। प्रायश्चित्तमिति भावः ॥१२॥

## गुणानां च परार्थत्वाद्वचनाद्व्यपाश्रयः स्यात् ॥१३॥

किञ्च, **गुणानाम्**-- अङ्गानां, **परार्थत्वात्**--प्रधानार्थत्वात्, **वचनात्**-- विशेषवचनात्, **व्यपाश्रयः**--अन्यत्र विनियोगः स्यात् । प्रकृते ' भिन्ने जुहोती' ति वाक्ये विशेषाश्रवणात् प्रकरणेन प्रधानहोमाधिकरणकविधिर्वक्तव्यः । स च न सम्भवति । आहवनीयानुरुद्धत्वात् । 'आहवनीये जुहोति' ' भिन्ने जुहोती ' त्युभयोस्तुल्यबलत्वेन वचनात् विकल्पः स्यादिति चेन्न । निमित्तत्वेनोपपत्तौ दुष्टो विकल्पो न युक्त इति भावः ॥ १३ ॥

## भेदार्थमिति चेत् ॥ १४ ॥

'गायत्र्या त्वा शताक्षरया सन्दधामी'ति भिन्नस्य पुनः सन्धानार्थता मन्त्रलिङ्गतः प्रतीयते। सा बाध्यते इति चेत्- ॥ १४ ॥

## नाशेषभूतत्वात् ॥ १५ ॥

न। अशेषभूतत्वात्- भेदनप्रतिमंत्रस्य शेषभूतत्वाभावात्। न हि होमेन मन्त्रेण वा तत्सन्धातुं शक्यते। मृदापि सन्धीयमानस्य भिन्नबुद्धिर्नोपेयादित्यदर्शयैव तत्र वक्तव्येति भाव. ॥ १५ ॥

## अनर्थकश्च सर्वनाशे स्यात् ॥१६॥

किञ्च, सर्वनाशे-' भिन्ने कपालिमप्सु प्रहरेती'ति श्रुतम्। अतस्तत्रानर्थकं संस्कार· । तत उद्धृत्य उपधाने योजनीयमिति चेन्न। ' अन्यदुपदधाति ' स्वामनन्ति। तस्मात् ' भिन्ने जुहोती ' ति कात्स्न्यैकदेशभेदमनिमित्ते सति नैमित्तिकमिदं तदङ्गभूतं कर्मेति राद्धान्त ॥१६॥

क्षामे सर्वदाहे प्रायश्चित्तानुष्ठानाधिकरणम् ॥५॥

[ क्षामेष्टिन्यायः। ]

## क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात् ॥१७॥

क्षामे—पुरोडाशदाहे, यत्प्रायश्चित्तं श्रुतं तत्सर्वदाहे स्यात्। कुत ? एकदेशस्य— एकदेशदाहस्य, अवर्जनीयत्वात्—नित्यत्वात्। न हि नित्यस्य नैमित्तिकत्वं सम्भवतीति भाव ॥ १७ ॥

## दर्शनादेकदेशे स्यात् ॥१८॥

' यस्य पुरोडाशौ क्षायत तं यज्ञ वरुणो गृह्णाति, यदा तद्धविः सन्तिष्ठेत अथ तदेव हविर्निर्वपेत, यज्ञो हि यज्ञस्य प्रायश्चित्ति ' इत्यस्यां श्रुतौ ' तद्धविः सन्तिष्ठेतेति तेन हविषा याग समाप्येतेत्यर्थकम्। सर्वदाहे भस्मीभूतस्य यागानर्हत्वात्तद्वाक्य विरुध्येतेत्येकदेशदाह एवात्राभिमत इत्याशङ्का । दर्शनात्—यागसमाप्तिश्रवणात्, एकदेशदाह एव स्यादिति ॥ १८ ॥

## अन्येन वै तच्छास्त्राद्धि कारणप्राप्तिः ॥१९॥

**अन्येन**—आज्येनैतत्समापनम् । आज्येन समापने पुनःकारणं कथमित्याह—**शास्त्रात्**—' दाहे पुनरावृत्तिः ' इति शास्त्रात् कारणप्राप्तिरस्तीत्यर्थः । अन्यद्रव्येणानुष्ठितेऽपि यागे दाहस्य निमित्तत्वं नापगच्छति । सति निमित्ते नैमित्तिकमावश्यकमिति भावः ॥ १९ ॥

## तद्धविः शब्दान्नेति चेत् ॥२०॥

' तद्धविः सन्तिष्ठेतेति शब्दश्रवणात्तदर्थं हविः साधनम् । नान्येन हविषा यागसमाप्तिरिति चेत्- ॥ २० ॥

## स्यादिज्यागामी हविःशब्दस्तल्लिङ्गसंयोगात् ॥२१॥

**इज्यागामी**—यागवाची, हविःशब्दः । **तल्लिङ्गसंयोगात्**–' सन्तिष्ठेतेति लिङ्गसम्बन्धात् । अतोऽन्येन हविषा स्याद्याग इति भावः ॥ २१ ॥

**एकहविरार्तावपि पञ्चशरावनिर्वापाधिकरणम् ॥ ६ ॥**

## यथाश्रुतीति चेत् ॥२२॥

' यस्योभयं हविरार्तिमार्च्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्वपेत् ' अत्र **यथाश्रुति**–यथा श्रूयते तथा, सायप्रातरुभयहविरार्तिनिमित्त. पञ्चशरावौदननिर्वापः । नान्यतरहविरार्तिनिमित्त इति चेत्–॥२२॥

## सि० ॥ न तल्लक्षणत्वादुपपातो हि कारणम् ॥२३॥

न सायप्रातरुभयदोहार्तिनिमित्त एव पञ्चशरावौदननिर्वापः । अपि त्वन्यतरार्तिनिमित्तोऽपि स । **हि**– यत', **उपपातः**–निष्प्रतियोगिकनाशः साक्षाद्दृक्ष. । अतः सः न निमित्तम् । तस्य नित्यत्वेन सार्वकालिकत्वात् । हविःप्रतियोगिकस्य तस्य निष्प्रतिबन्धेन निमित्तत्वोपपत्तौ सत्य' तस्मिन्नुभयविशेषणमविवक्षितमेव । तत्तु प्राप्तस्य दोहद्वयस्यानुवादकम् । तस्मात्तेन शब्देन तदनूद्य हविरार्ते निमित्तत्वमुक्त्वा स निर्वापो विधीयते । निर्दिष्टवाक्येनेति भावः ॥ २३ ॥

होमाभिषवोभयकर्तुरेव भक्षणाधिकरणम् ॥७॥

## होमाभिषवभक्षणं च तद्वत् ॥२४॥

ज्योतिष्टोमे–' हविर्धानमण्डपे ग्रावभिरभिषुत्य आहवनीये हुत्वा प्रत्यञ्च परेत्य सदसि भक्षान् भक्षयन्ती ' ति श्रुतम् । अत्र होमाभिषवभक्षणं तद्वत्–हविरार्तिवत्, प्रत्येकं निमित्तम् । अभिषुत्य भक्षयन्ति, हुत्वा भक्षयन्ति इति । नोभयकारणकमित्यर्थः ॥ २४ ॥

## सि० ॥ उभाभ्यां वा न हि तयोर्धर्मशास्त्रम् ॥२५॥

उभाभ्यां–समुच्चिताभ्यामेव होमाभिषवाभ्यां भक्षणम् । हि–यतः, भक्षणं तयोः–होमाभिषवयोर्धर्म, इत्येवं प्रतिपादकमिदं शास्त्रं न । तथा सति प्रतिप्रधानं गुणावृत्तिरिति भक्षणस्यावृत्तिः स्यात् । वाक्यभेदश्च । तस्मादभिषुत्य हुत्वा भक्षयन्तीत्येकार्थकमेवेदं वाक्यमिति भावः ॥ २५ ॥

पुनराधानं प्रतिवह्न्यनुगमद्वयस्य निमित्तत्वाधिकरणम् ॥ ८ ॥

## पुनराधेयमोदनवत् ॥ २६ ॥

अग्निहोत्रप्रकरणे–' यस्योभावग्नी अनुगतावभिनिम्लोचेयातां सूर्यो वा अभ्युदियात् पुनराधेयं तस्य प्रायश्चित्तम ' इति श्रुतम् । तत्र पुनराधेयं–पुनराधाननिमित्तत्वम्, ओदनवत्–पञ्चशरावौदनानिमित्तवत् । अन्यतरानुगमनमपि निमित्तमिति भावः ॥२६॥

## सि० ॥ द्रव्योत्पत्तेश्चोभयोः स्यात् ॥२७॥

' वसन्ते ब्राह्मणोऽग्नीनादधीत ' इति प्रकृताद्राधानादन्यदाधानं पुनराधेयमित्यनेन विधीयते । तत्र प्रकृताधाने अग्निद्वयोत्पादकत्वमाधानस्य क्लृप्तम् । अत उभयोरग्न्योरनुगमे पुनराधानं स्यात् । द्रव्योत्पत्तेः–अग्निद्वयरूपद्रव्योत्पत्तेः, आधानकार्यत्वात् । अग्निद्वयनाश एव निमित्तम् । न एकाग्निनाश इति भावः ॥२७॥

पञ्चशरावनिर्वापस्य कर्मान्तराधिकरणम् ॥९॥

## पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात् ॥२८॥

पञ्चशारावः द्रव्यश्रुतेः-- ओदनद्रव्यश्रवणात्, **प्रतिनिधिः**--सान्नाय्यद्रव्यप्रतिनिधिः स्यात् । नापूर्वयाग इति ॥२८॥

## सि०॥ चोदना वा द्रव्यदेवताविधिरवाच्ये हि॥२९॥

. **हि**--यतः, 'ऐन्द्रं पञ्चशारावमोदनम्' इति द्रव्यदेवतात्मकं यागस्वरूपं श्रूयते । अतोऽपूर्वयागविधिरेवायम् । न द्रव्यप्रतिनिधिः । द्रव्यदेवतासम्बन्धस्य विना यागमसम्भवात् । प्रतिनिधिपक्षे ऐन्द्रमित्यस्यानर्थक्यात् । प्रकृते इन्द्रः महेन्द्रश्च देवते । ते उभे इन्द्रशब्देन अवाच्ये । अतो यागान्तरविधिरिति भावः ॥२९॥

**पञ्चशारावयागस्य नैमित्तिकदर्शयागाङ्गत्वाधिकरणम् ॥ १० ॥**

## स प्रत्यानमेत् स्थानात् ॥३०॥

**सः**-पञ्चशारावयागः, **प्रत्यानमेत्**--प्रतिनिधिः स्यात् । स्थानात्॥३०॥

## सि०॥ अङ्गविधिर्वा निमित्तसंयोगात् ॥३१॥

**अङ्गविधिरेव** । न प्रतिनिधिः । कुतः ? 'यस्योभय हविरार्तिमार्च्छेदिति हविरार्तिरूपनिमित्तसंयोगादित्यर्थः ॥३१॥

**सत्रायागूर्याप्रवृत्तस्य विश्वजिदावश्यकत्वाधिकरणम् ॥११॥**

## विश्वजित्त्वप्रवृत्ते भावः कर्मणि स्यात् ॥३२॥

'यः सत्रायागुरते, स विश्वजिता यजेत सर्ववेदसदक्षिणेन' इत्याम्नायते । तत्रायं श्रुतो विश्वजिद्यागः **अप्रवृत्ते**--यः सत्रं करिष्यामीति सङ्कल्प्य नानुतिष्ठति, तेनैव कार्यः । न सत्र कुर्वतापि । यतो **भावः**-- सत्रकाले, **कर्मणि**--'विश्वजिता यजेत' इति विश्वजिति श्रवणम् ॥ ३२ ॥

## निष्क्रयवादाच्च ॥ ३३ ॥

'सर्वाभ्यो देवताभ्यः सर्वेभ्यः पृष्ठेभ्यः यदात्मानं निष्क्रीणीते' इत्यर्थवादस्य परिक्रीणीत इति लिङ्गदर्शनादपि देवतोद्देशेन सङ्कल्प्य अकरणे ऋणी सन् अनेन विश्वजिद्यागेनानृणी जायते इत्यर्थकं परिक्रीणीत इति सङ्गतं भवतीति भावः ॥ ३३ ॥

॥ बर्हिषेत्यादिश्रुतेः वत्सकालविधानार्थत्वाधिकरणम् ॥ १२ ॥

## वत्ससंयोगे व्रतचोदना स्यात् ॥३४॥

दर्शपूर्णमासयोः—'बर्हिषा पूर्णमासे व्रतमुपैति, वत्सैरमावास्यायाम्' इति श्रुतम्। तत्र **व्रतचोदना**-वत्ससाधनकं व्रतं विधीयते। न व्रतस्य कालः। वत्सापाकरणकाले व्रतं भक्षणं कार्यमिति न तत्कालः। कुतः? **वत्ससंयोगात्**--वत्सव्रतयोः श्रूयमाणत्वादित्यर्थः ॥ ३४ ॥

## सि०॥ कालो वा उत्पन्नसंयोगात् यथोक्तस्य ॥३५॥

'अमावास्यायां बहुसर्पिष्कं व्रतं व्रतयन्ति' इति वचनेन प्राप्तस्य व्रतस्य अप्राप्तः, वत्सापाकरणकाल एव विधीयते। न वत्सः। कुतः? **यथोक्तस्य**—सकारणव्रतस्य, उत्पन्नस्य **संयोगात्**—श्रवणादित्यर्थः ॥३५॥

## अर्थापरिमाणाच्च ॥३६॥

'वत्सेन अमावास्यायाम्' इत्यत्र किं वत्सो व्रतयितव्यः? उत वत्सेन हस्तस्थानीयेन व्रतयितव्यम्? अथवा वत्सं समीपे संस्थाप्य व्रतमुपेयात्? इत्येवमादीनामर्थानां मध्ये **अपरिमाणात्**--एकस्य नियामकस्य अभावादपि, लक्षणया उक्तकालविधिरिति भावः ॥३६॥

## वत्सस्तु श्रुतिसंयोगात्तदङ्गं स्यात् ॥३७॥

**श्रुतिसंयोगात्**--शक्यार्थसंभवात्। **वत्सस्तु**--वत्ससाधनकव्रतविधिरेव। तदङ्गं स्याद्वत्सः। कालपरत्वे लक्षणापत्तिरिति पुनराशङ्का ॥३७॥

## कालस्तु स्यादचोदनात् ॥३८॥

**अचोदनात्**—'पुरा वत्सानामपाकर्तोर्दम्पती अश्नीयाताम्' इति श्रुत्या कालस्य प्राप्तत्वेन वत्सैरमावास्यायामिति प्रकृतवाक्यस्य अनुवादकत्वात् लक्षणया कालबोधकमेव तदिति भावः ॥३८॥

## अनर्थकश्च कर्मसंयोगे ॥३९॥

अन्या—द्वादशाप्यष्टम्य एकाष्टकापदवाच्या इति चेत्— ॥३३॥

## न भाक्तत्वादेषां हि लोके ॥३४॥

न द्वादशाष्टम्य एकाष्टकापदवाच्या । अपि तु माघी एव कृष्णाष्टमी तथा । इतरासु तु भक्त्या—लक्षणया लोके तच्छब्दव्यवहारः ॥३४॥

## दीक्षापराधे चानुग्रहात् ॥३५॥

'एकाष्टकाया दीक्षेरन् । एषा वै संवत्सरस्य पत्नी यदेकाष्टका तस्या क्रयः सम्पद्यते । तेनैकाष्टका न शंथट् कुर्वन्ति, न अनादरं कुर्वन्ती'ति पौर्णमास्याश्चतुरहे पुरस्ताद्दीक्षाया अपराधे--अयोगे, यो अनादरः स क्रययोगेन परिह्रियते । ' एषा वै संवत्सरस्य पत्नी'ति वचनश्रवणम् इतरास्वष्टमीषु तत्पदवाच्यत्वं नास्तीत्यत्र लिङ्गं ज्ञेयम् ॥३५॥

## उत्थाने चानुप्ररोहात् ॥३६॥

उत्थाने--एकाष्टकायाः प्राप्तौ, अनुप्ररोहात्--ओषधिवनस्पतीनां पल्लवितत्वश्रवणात् ' तानुत्तिष्ठत ओषधिवनस्पतयोऽनूत्तिष्ठन्ति ' तान् सत्रिणो यागार्थमुत्तिष्ठतः ओषध्यादय अनूत्तिष्ठन्तीति वसन्तसामीप्यं व्यञ्जयति । इदं नान्यत्र चिन्हमिति भाव. ॥३६॥

## अस्यां च सर्वलिङ्गानि ॥३७॥

अस्यां—माघकृष्णाष्टम्यामेकाष्टकापदवाच्यायां सर्वलिङ्गानि— अन्यानि लिङ्गान्यपि सन्ति । तानि भाष्यादितो ज्ञेयानि । नेह विस्तरभयादुच्यन्ते ॥ ३७ ॥

दीक्षोत्कर्षे तन्नियमानामप्युत्कर्षाधिकरणम् ॥१०॥

## दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् ॥३८॥

ज्योतिष्टोमे ' दीक्षितो न ददाति । न पचति । न जुहोति । ' इत्यादयो नियमाः अवभृथपर्यन्तं श्रूयन्ते । तत्र दीक्षाकालस्य 'न जुहोती'त्या-

दिनिषेधाङ्गत्वेन **शिष्टत्वात्**--विहितत्वात्, **अतिक्रमे**--अवभृथोत्कर्षे नियतानामग्निहोत्रादीनां धर्माणाम् अनुत्कर्षः । दीक्षाविमोकस्य दैवादुत्कर्षेऽपि तत्कालस्य प्राप्तत्वादग्निहोत्रादिकमवभृथात्प्रागप्यनुष्ठेयमिति ॥ ३८ ॥

## सि० ॥ उत्कर्षो वा दीक्षितत्वादविशिष्टं हि कारणम् ॥ ३९ ॥

'न जुहोती'त्यादिनिषेधस्यापि अवभृथोत्कर्षे उत्कर्ष एव । कुतः? **दीक्षितत्वात्**--दीक्षाविशिष्टत्वात् । **हि कारणं** -- निषेधप्रवृत्तिनिमित्तम् **अविशिष्टम्**--अस्त्येवेत्यर्थः । दीक्षाकालस्य उक्तनिषेधाङ्गत्वे दीक्षितशब्दे लक्षणाप्रसङ्गात् दीक्षाविशिष्टत्वमेव निषेधप्रवृत्तिनिमित्तमिति भावः ॥ ३९ ॥

### अवभृथोत्कर्षे प्रतिहोमाननुष्ठानाधिकरणम् ॥ ११ ॥

## तत्र प्रतिहोमो न विद्यते यथा पूर्वेषाम् ॥४०॥

अवभृथोत्कर्षस्य पुरुषापराधप्रयुक्तत्वात् तत्र होमलोपो दोषहेतुः । अतो दीक्षाविमोकानन्तरं तत्पूर्वं विधाय तावद्धोमा अनुष्ठेया इत्याशङ्कायामुक्तं **तत्रेति**। तदानीं प्रतिहोमः परिसङ्ख्यायते भवति । नास्त्येवेति यावत्। यथा **पूर्वेषाम्**---असति कालातिक्रमे अकृतानां न प्रतिहोम, तथैतेषामपीति भावः ॥ ४० ॥

## कालप्राधान्याच्च ॥४१॥

कालस्यानुपादेयत्वाद्विधानासम्भवेन प्राधान्यान्निमित्तमात्र सः सन्निहित-वदतिक्रान्त । अतोऽपि न प्रतिहोमस्तत्र ॥४१॥

### उदवसानीयोत्कर्षेऽपि प्रतिहोमाननुष्ठानाधिकरणम् ॥ १२ ॥

## प्रतिषिद्धश्चोर्ध्वमवभृथादिष्टेः ॥४२॥

अवभृथोत्तरभाविन्या उदवसानीयाया इष्टेः कदाचिदुत्कर्षे जाते तस्याः प्राग् लुप्तानां होमानां प्रतिहोम आवश्यक । दीक्षाया अभावात् । दीक्षाग्रहणस्य अवभृथपर्यन्तत्वात् । इत्याशङ्कायामाह सूत्रकार **प्रतीति** । अवभृथादूर्ध्वमुत्कृष्टाया

उदवसानीयेष्टयाः प्राग् लुप्तानां न प्रतिहोमः । कुतः ? ' एतया उदवसानीयया पुनराधेयसंमितया इष्ट्वा अग्निहोत्रं होतव्यम् ' इति श्रुत्या तस्य प्रतिषिद्धत्वा-दग्निहोत्रस्य तदानीं प्राप्तिरेव नेति भावः ॥ ४२ ॥

प्रतिहोमे सायमग्निहोत्रप्रभृत्यारम्भाधिकरणम् ॥ १३ ॥

## प्रतिहोमश्चेत्सायमग्निहोत्रप्रभृतीनि हयेरन् ॥ ४३ ॥

प्रतिहोमे सायमारभ्य अग्निहोत्रादिहोमः कार्य इत्यर्थः । कृत्वाचि-न्तेय चेदित्यनेन सूचिता ॥ ४३ ॥

षोडशिसंस्थे प्रातरग्निहोत्रप्रभृत्यनुष्ठानाधिकरणम् ॥१४॥

## प्रातस्तु षोडशिनि ॥४४॥

षोडशिक्रतौ प्रातरारभ्य लुप्तत्वात्प्रतिहोमे स एव क्रमोऽनुसर्तव्य इत्यर्थः ॥४४॥

भेदनादिनिमित्तकहोमस्य दर्शपूर्णमासाङ्गताधिकरणम् ॥१५॥

## प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् ॥४५॥

**अधिकारे**—दर्शपूर्णमासप्रकरणे ' भिन्ने जुहोति स्कन्ने जुहोति ' इति भेदनादिदोषनिमित्तक यत् प्रायश्चित्तं श्रुतं तत् न दर्शपूर्णमासयोरेव । अपि तु सर्वत्रैव स्यात् । कुतः ? **दोषसामान्यात्**--भेदनादिदोषस्य सर्वसाधारणत्वादिति ॥४५॥

## सि० ॥ प्रकरणे वा शब्दहेतुत्वात् ॥४६॥

**प्रकरणे वा**—दर्शपूर्णमासयोरेव, तस्य प्रायश्चित्तस्य विश्रामः । कुतः ? **शब्दहेतुत्वात्**--शब्दस्य-- यजेततिशब्दप्रतिपाद्यप्रधानयागस्य हेतुत्वात्—उपकारकत्वात्, प्रकरण एव विश्रामे तत्प्रकरणपठितानां प्रधानोपकारकत्वं क्लृप्तम् । प्रकरणविभेदे तु फलं कल्पनीयमिति गौरवमिति भावः ॥४६॥

## अतद्विकाराच्च ॥४७॥

प्रकरणविश्रान्तमपि तत्प्रायश्चित्तमतिदेशेन अग्निहोत्रादावस्तु इति चेन्नेत्याह—अतदिति । अग्निहोत्रादेः दर्शपूर्णमासविकृतित्वाभावादित्यर्थः ॥ ४७ ॥

व्यापन्नशब्दार्थनिर्णयाधिकरणम् ॥१६॥

## व्यापन्नस्याप्सुगतौ यदभोज्यमार्याणां तत्प्रतीयेत ॥ ४८ ॥

'व्यापन्नमप्सु प्रहरती' ति श्रुतम् । तत्र व्यापन्नस्याप्सु प्रक्षेपश्रवणात् यद् आर्याणाम् **अभोज्यं**—केशकृमिकीटमलादिदूषितं, तत्प्रतीयेत । स व्यापन्नपदस्यार्थ इति निर्णयः ॥४८॥

अपच्छेदयौगपद्येऽपि प्रायश्चित्ताधिकरणम् ॥१७॥

## विभागश्रुतेः प्रायश्चित्तं यौगपद्येन विद्यते ॥४९॥

ज्योतिष्टोमीयप्रातःसवने बहिष्पवमानस्तोत्रार्थं शालाया बहिः प्रसर्पतामृत्विजामन्वारम्भः श्रुतः । 'अध्वर्युं प्रस्तोता अन्वारभते । प्रस्तोतारं प्रतिहर्ता । प्रतिहर्तारम् उद्गाता । उद्गातारं ब्रह्मा' इति । अन्वारम्भण नाम—पुरतो गन्तुः कच्छं धृत्वा तत्पृष्ठत अन्यस्य पिपीलिकापङ्क्त्याकारतः प्रसर्पणम् । इत्यमन्वारम्भणेन गच्छतां प्रमादत **अपच्छेदे**—विभागे सति, तत्र प्रायश्चित्तमित्थं श्रुतम् । 'यदि प्रतिहर्ता अपच्छिन्द्यात्तस्मिन्नेव सर्ववेदसं दद्यात् । यदि उद्गाता अपच्छिन्द्याददक्षिणं त यज्ञमिष्ट्वा तेन पुनर्यजेत' इति । 'तत्र तद्यायत्पूर्वस्मिन् दासयं न स्यादिति च' । अत्र उद्गातृप्रतिहर्त्रुभयकर्तृकक्रियाजन्यसंयोगस्य युगपत् **अपच्छेदे**—विभागे जाते प्रायश्चित्तं न विद्यते । अपि त्वन्यतरविभाग एव तत्प्रायश्चित्तम् । कुतः ? **विभागश्रुते**— 'यद्युद्गाता यदि प्रतिहर्ता' इति विभागश्रवणात् । अन्यतरक्रियाजन्यविभागस्यानिमित्तत्वस्य युगपदुभयक्रियाजन्यविभागे अभावादिति भावः ॥४९॥

## सि०॥स्याद्वा प्राप्तनिमित्तत्वात् कालमात्रमेकम्॥५०

युगपदुभयक्रियाजन्यविभागेऽपि प्रायश्चित्तं स्यादेव । कुतः ? —**प्राप्तनिमित्तत्वात्**—यत्क्रियाजन्यो विभागः स तस्य कर्तेति प्रसिद्धो व्यवहारः। उभयक्रियाजन्यविभागेऽपि तद्विभागानुकूलकृतिमत्त्वरूपं कर्तृत्वं प्रत्येकस्मिन्नास्त्येव । कालैक्यं परं दैवात् । अतो निमित्तस्य विद्यमानत्वात्तत्रापि प्रायश्चित्तमस्त्येवेति भावः ॥ ५० ॥

अपच्छेदयौगपद्ये अदक्षिणत्वसर्वस्वदक्षिणत्वयोः विकल्पाधिकरणम् ॥ १८ ॥

## तत्र विप्रतिषेधाद्विकल्पः स्यात् ॥५१॥

**तत्र**—उक्तनिमित्तककर्मणोरनुष्ठाने, **विप्रतिषेधात्**—विरोधात् ,विकल्पः स्यात् । न समुच्चय इति ॥ ५१ ॥

## प्रयोगान्तरे वोभयानुग्रहः स्यात् ॥५२॥

सर्वस्वदक्षिणमाद्यप्रयोग समाप्य पुनर्द्रव्यं सम्पाद्यैकमदाक्षिणं कृत्वा द्वितीयं विहितद्वादशशतदक्षिणं प्रयोगं कुर्यात् । एवं प्रयोगभेदेन **उभयानुग्रहः**—समुच्चयः स्यात् ॥ ५२ ॥

## न चैकसंयोगात् ॥५३॥

**एकसंयोगात्**— प्रक्रान्तप्रयोग एव सर्वस्वदक्षिणाया अदक्षिणत्वस्य च श्रवणात् न समुच्चयः । प्रयोगभेदेनानुष्ठानं त्वशास्त्रीयमेवेति भावः ॥ ५ ॥

अनुक्रमेणापच्छेदे उत्तरापच्छेदनिमित्तकप्रायश्चित्ताधिकरणम् ॥१९॥

## पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् ॥५४॥

प्रथमं प्रतिहर्तृकः अपच्छेदः, पश्चादुद्गातृकर्तृकः इत्यपच्छेदयोः पौर्वापर्ये **पूर्वदौर्बल्यं**—पूर्वापच्छेदनिमित्तककर्मणो बाधः । **प्रकृतिवत्**–यथा प्रकृतित. पञ्चप्रयाजाना प्रथमं प्राप्तौ ' नव प्रयाजा इज्यन्ते ' इत्यनेन वैकृतेन पूर्वस्य पश्चात्तरस्य बाधस्तद्वदित्यर्थ. ॥५४॥

उद्गातुरुत्तरापच्छेदेऽपि सर्वस्वदक्षिणादानाधिकरणम् ॥२०॥

**यद्युद्गाता जघन्यः स्यात्पुनर्यज्ञे सर्ववेदसं दद्याद्यथेतरस्मिन् ॥५५॥**

यद्युद्गाता—उद्गात्रपच्छेदो यदि जघन्यः—पश्चात्स्यात्तर्हि पुनर्यज्ञे सर्ववेदसं दद्यात् । यथेतरस्मिन्—यथा पूर्वयज्ञे सर्वस्वदक्षिणा तथा पुनर्यज्ञेऽपीत्यर्थः । पूर्वस्मिन् दास्यन् स्यादित्यत्र पूर्वशब्देन अव्यवहितनैमित्तिकी सर्वस्वदक्षिणा एव ग्राह्या । न व्यवहिता द्वादशशतदक्षिणेति भावः ॥५५॥

अहर्गणेऽपच्छेदेन सर्वेषामावर्तनाधिकरणम् ॥ २१ ॥

**अहर्गणे यस्मिन्नपच्छेदस्तदावर्तेत कर्मपृथक्त्वात् ॥५६॥**

अहर्गणे—द्वादशरात्रादौ, यस्मिन्यहन्यपच्छेदः तत्—तदहमावर्तेते । कर्मणां—द्वादशस्तुत्यानां पृथक्त्वात् । न द्वादशस्तुत्यात्मकं निखिलक्रतुमदक्षिणं समाप्य पुनः स आवर्तनीयः । कुतः ? द्वादशाह इति सङ्ख्यया कर्मभेदादिति भावः ॥ ५६ ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां षष्ठाध्यायस्य पञ्चमः पादः सम्पूर्णः ॥ ५ ॥ श्रीः ॥

---

## ॥ अथ षष्ठाध्यायस्य षष्ठः पादः ॥

---

सत्रे समानकल्पानां सहाधिकाराधिकरणम् ॥१॥

**सन्निपाते वैगुण्यात्प्रकृतिवत्तुल्यकल्पा यजेरन् ॥१॥**

'वासिष्ठराजन्यानां नाराशंसो द्वितीयः, अन्येषां तनूनपात् द्वितीयः' इति प्रकृतौ विहितम् । सत्रे दीक्षणीयादौ अतिदेशेन अधिकारिभेदत उभयं प्राप्तम् । तत्र वसिष्ठात्रिवध्र्यश्वशुनककण्वकश्यपसंकृतिगोत्राणां नाराशंसद्वितीयप्रयाजानां तदन्येषां च तनूनपाद्द्वितीयानां मिलित्वा सत्राधिकारे

कल्पद्वयानुष्ठानासम्भवात्समानकल्पानामेवाधिकार इति सिद्धान्तस्योपक्रमपरमिदं सूत्रम् । **सन्निपाते**–भिन्नकल्पानामेकत्रमेलने, यथा प्रकृतौ वासिष्ठादिभिस्तनूनपादनुष्ठाने वैगुण्यम्, तदन्यैर्नाराशंसानुष्ठानेऽपि वैगुण्यमेव । तथाऽत्र सत्रादावपि स्यादेव । अतस्तुल्यकल्पानामेव सत्रेऽधिकारः ॥ १ ॥

## वचनाद्वा शिरोवत्स्यात् ॥ २ ॥

'ऋद्धिकामाः सत्रमासीरन्' 'सप्तदशावरा एकविंशतिपरमाः सत्रमासीरन्' इति श्रवणाद्भिन्नकल्पानामप्रतिषेधाच्च सर्वेषामधिकारसिद्धौ **शिरोवत्**–'पुरुषशीर्षमुपदधाति' इति विशेषवचनात् चयनातिरिक्ते कर्मणि शवशिरस्पर्शस्य प्रत्यवायजनकत्वेऽपि चयने तदपवादो यथा तथा वासिष्ठादीनां तनूनपात्प्रयाजो वैगुण्यजनकोऽपि सत्रे तेषां तथा न स्यात् । इति भिन्नकल्पानां समानकल्पानां च सर्वेषामेव ऋद्धिकामानां सत्राधिकार इति ॥ २ ॥

## न वा अनारभ्यवादत्वात् ॥३॥

नैवमिति परिहरति । **अनारभ्यवादत्वात्**–प्रकरणविशेषमनधिकृत्य पठितत्वात्, यथा अग्निचयनमभिकृत्य शिर उपधानं विहितं 'पुरुषशीर्षमुपदधाती'ति, तथा भिन्नकल्पानधिकृत्य 'सत्रमासीरन्निति' स्याच्चेत् तदधिकारबलेन प्रकृताविव वैगुण्यं बाध्येत। नात्र तथा । अत्र त्वनारभ्य 'सत्रमासीरन्निति' श्रुतम् । तत्समानकल्पेषु चरितार्थमिति भावः ॥ ३ ॥

## स्याद्वा परार्थत्वादौदुम्बरिवत् ॥४॥

भिन्नकल्पानामपि सत्रं स्यादेव । कुतः? **परार्थत्वात्**—उक्तप्रयाजयोर्यज्ञार्थत्वात् । **औदुम्बरीवत्**–यथा 'यजमानेन संमायौदुम्बरीं परिवासयन्ति' इति यस्य कस्यचिदेकस्य परिमाणेन सम्पादितेन यज्ञ अन्येषामपि सिद्धो भवति । तद्वन्नाराशंसतनूनपातोरन्यतरस्यापि कस्यचिदेकस्यानुष्ठानेनापि क्रतुसिद्धिः स्यान्न वैगुण्यमिति ॥४॥

## न तत्प्रधानत्वात् ॥५॥

नैवं स्यात् । तत्प्रधानत्वात्—वासिष्ठादेः प्राधान्यात् । 'सप्तदशारत्निर्वाजपेयस्य यूपो भवती'तिवत् वासिष्ठाना नाराशंस इति वाक्ये षष्ठीश्रुत्या वासिष्ठाना प्राधान्यश्रवणात् नाराशंसस्य तदङ्गत्वेन तदभावे न क्रतुसिद्धिः । किन्तु वैगुण्यमेव । एवं भिन्नकल्पानामधिकारोक्तौ तत्तत्पात्पक्षेऽपि तदभावे न क्रतुसिद्धिरिति भाव ॥५॥

## औदुम्बर्याः परार्थत्वात् कपालवत् ॥६॥

यच्च, औदुम्बरीविदित्युक्त, तत्रौदुम्बर्या परार्थत्वात्—क्रत्वर्थत्वात् कपालवत्— यथा 'कपालेषु पुरोडाशं श्रपयती'ति पुरोडाशार्थमपि कपाल 'पुरोडाशकपालेन तुषानुपवती'ति तृतीयाश्रुत्या तुषोपवापाङ्गम् । तथा फलेन अधिकृतस्यापि यजमानस्य 'यजमानेन संमायेति तृतीयाश्रुत्या मानाङ्गत्वेन केनापि कृत तन्मान चरितार्थम । प्रकृते तु वासिष्ठादीनां प्राधान्यान्न तथेति भाव ॥ ६ ॥

## अन्येनापीति चेत् ॥७॥

एव चेत् अन्येनापि— क्रत्वन्तरसयुक्तेनापि यजमानेन, संमानं स्यादिति चेत ॥ ७ ॥

## न एकत्वात्तस्य चानधिकारात् शब्दस्य चाविभक्तत्वात् ॥ ८ ॥

न क्रत्वन्तरसंयुक्तेन यजमानेन समानप्रसक्ति । कुतः ? एकत्वात्—यजेतेत्याख्यातार्थान्वितयजमानस्य एकत्वात् । तस्य—अन्ययजमानस्य, अनधिकारात्—एतत्प्रयोगजन्यफलभोक्तृत्वाभावात्, शब्दस्य—यजमानेन संमितौदुम्बरीभवती'ति वाक्यगतयजमानशब्दस्य, अविभक्तत्वात्—एतत्प्रयोगजन्यफलभोक्त्रभिन्नयजमानप्रतिपादकत्वाच्चेति भाव' ॥ ८ ॥

## सन्निपातात्तु निमित्तविघातः स्यात् बृहद्रथन्तरवत् विभक्तशिष्टत्वात् वसिष्ठनिर्वर्त्ये ॥ ९ ॥

**सन्निपातात्**--भिन्नकल्पयोः संमेलनात्, **निमित्तस्य**—वसिष्ठकर्तृकत्वनिमित्तकनाराशंसस्य अन्यकर्तृकत्वनिमित्तकतनूनपातश्च इति प्रत्येकं यो नियमः तस्य **विघातः**--अभावः स्यात्। वसिष्ठनिर्देशे अन्यनिर्देशे च प्रयोगे **विभक्तशिष्टत्वात्** प्रत्येककर्तृकत्वनिमित्त एव विधानात्। **बृहद्रथन्तरवत्**-यथा-' यदि रथन्तरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्। यदि बृहत्सामा शुक्राग्रान् ' इति पृष्ठस्तोत्रे बृहत्साम चेत् शुक्राग्रत्वं, रथन्तरसाम चेत् ऐन्द्रवायवाग्रत्वं विहितं निकृतिविशेषं। तदुभयं यत्र चोदकेन प्राप्तं तत्र निमित्तद्वयस्यापि बाधः। तद्वदत्रापि बाधः। अतस्तद्वदत्रापि इच्छैव नियामिकेति भावः॥ ९॥

## अपि वा कृत्स्नसंयोगादविभागः प्रतीयेत, स्वामित्वेनाभिसम्बन्धात्॥ १०॥

**अपि वेति**--शङ्का निरस्यते। तथा हि-**कृत्स्नसंयोगात्**—सम्पूर्णनाराशंसेन सम्पूर्णतनूनपाता च सम्बन्धात्, वासिष्ठादीनाम् **अविभागः प्रतीयेत**—निमित्तविभागो नास्तीत्यर्थः। कुतः ' **स्वामित्वेनाभिसम्बन्धात्**— वसिष्ठमुद्दिश्य नाराशंसविशिष्टं निखिलं कर्म फलसाधनत्वेन विधीयते। एवमन्यमुद्दिश्यापि तनूपाद्विशिष्टं तथैव विधीयते। भिन्नकल्पानामधिकारे उभयानुष्ठानप्रसक्तिः। तथा च प्रयाजे पञ्चत्वबाधः। अतो भिन्नकल्पाना नाधिकारः सत्रे इत्यर्थः॥ १०॥

## साम्नोः कर्मवृद्धयैकदेशेन संयोगो गुणत्वेनाभिसम्बन्धस्तस्मात्तत्र विघातः स्यात्॥११॥

**कर्मवृद्ध्या**— बृहद्रथन्तरोभयसामकैकपृष्ठस्तोत्रविधानात् स्तोत्राख्यकर्मणो वृद्ध्या, **साम्नोः** -बृहद्रथन्तरयोः, **एकदेशेन**— स्तोत्रैकदेशेन संयोगात्, तथा स्तोत्रं प्रति तयोः साम्नोः **गुणत्वेन**-अङ्गत्वेन सम्बन्धाच्चेति वैषम्यम्। अतस्तत्र तन्निमित्तविघातो युक्तः। अत्र तथा नेति भावः॥११॥

भिन्नकल्पयोरपि राजपुरोहितयोः कुलाययज्ञे अधिकाराधिकरणम् ॥२॥

## वचनात्तु द्विसंयोगः तस्मादेकस्य पाणिवत् ॥१२॥

कुलाययज्ञं प्रकृत्य—'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति श्रूयते। तत्र **वचनात्**—एतेनेति वचनात्, **द्विसंयोगः**—एकस्य राज्ञः पुरोहितद्वयसंयोगः प्रतीयते। तस्मात् राज्ञः पुरोहितौ इति षष्ठीसमासेन एकराजपुरोहितद्वयस्य प्रकृतयज्ञे अधिकारः। **पाणिवत्**—यथा वामहस्तस्य कर्मानर्हत्वेऽपि 'अञ्जलिना जुहोती'ति वचनात्कर्मयोग्यत्वं, तद्वदत्रापीति भावः ॥ १२ ॥

## अर्थाभावात्तु नैवं स्यात् ॥१३॥

'पुरोहितं करोति। पुरोहितस्य प्रवरेण राजा प्रवृणीते' इति प्रवरार्थमेकः पुरोहितः अपेक्षितः। द्वितीयस्य **अर्थाभावात्**—प्रयोजनाभावान्नैव स्यादित्यर्थः ॥ १३ ॥

## अर्थानां च विभक्तत्वान्न तच्छ्रुतेन सम्बन्धः ॥१४॥

**अर्थानाम्**—एतद्यागाधिकारिविशेषणसम्बन्धस्तेजःसम्बन्धित्ववीर्यवत्त्वादिगुणानां **विभक्तत्वात्**—पृथक्त्वादपि, **न श्रुतेन**—पुरोहितद्वयेन यागस्य सम्बन्धः। 'राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इत्युक्त्वा 'तेजस्वी ब्राह्मणस्य। वीर्यसम्पन्नो राजन्यस्य' इति ब्राह्मणस्य तेजसा क्षत्रियस्य वीर्येण स्तुतिरम्नाता। पुरोहितद्वयाधिकारे सा वीर्येण स्तुतिर्व्यर्थ—निरालम्बना स्यात्। स्तुतेर्गुणिवृत्तिगुणाभिधानस्वरूपत्वादिति भावः ॥ १४ ॥

## पाणेः प्रत्यङ्गभावादसम्बन्धः प्रतीयेत ॥ १५ ॥

**पाणेः**—वामपाणेः, स्वदक्षिणहस्तेनाञ्जलिकरणे **प्रत्यङ्गभावात्**—सहकारित्वात्, अन्यदक्षिणहस्तेन असम्बन्धः प्रतीयेत। अन्यदक्षिणहस्तेन

स्वदक्षिणहस्तसयोगे संहताञ्जलिर्न भवति । अतोऽगत्या वामहस्तसयोजन-मिति भाव ॥ १५ ॥

## सत्रे ब्राह्मणमात्रस्य अधिकाराधिकरणम् ॥ ३ ॥

## सत्राणि सर्ववर्णानामविशेषात् ॥१६॥

'य एव विद्वांसः सत्रमासते । य एव विद्वांस. सत्रमुपयन्ति ' इत्यत्र विशेषाश्रवणात्सत्रे सर्ववर्णानामधिकार । ज्योतिष्टोमवत् । 'ऋद्धिकामाः सत्र-मासीरन्निति सर्वेषामपि ऋद्धिकामनया सत्त्वादिति भाव ॥ १६ ॥

## लिङ्गदर्शनाच्च ॥१७॥

द्वादशाहे ब्रह्मसाम्नि इत्थ श्रूयते–' बार्हद्गिरं ब्राह्मणस्य, पार्थुरश्म्यं राजन्यस्य, रायोवाजीयं वैश्यस्य ' इति गुणभेदश्रवणात् ब्राह्मणस्येत्यादि-लिङ्गदर्शनाच्च त्रयाणामधिकार इति ॥१७॥

## सि०॥ ब्राह्मणानां वा इतरयोरार्त्विज्याभावात् ।१८।

ब्राह्मणानामेव सत्रेष्वधिकार । **इतरयोः**—क्षत्रियवैश्ययोर्न । कुत' ? **आर्त्विज्याभावात्**–तयोरार्त्विज्यानिषिद्धत्वात्। ऋत्विजां यजमानत्वश्रवणा-दिति भाव. ॥ १८ ॥

## वचनादिति चेत् ॥१९॥

' ये यजमानास्ते ऋत्विज' ' इति वचनात् क्षत्रियादिषु यजमानेषु आर्त्विज्य प्राप्तमिति चेत्—॥ १९ ॥

## न स्वामित्वं हि विधीयते ॥ २० ॥

नेद वचन यजमानानुद्दिश्य तत्संस्कारार्थत्वेन ऋत्विक्त्वस्य ऋत्वि-कार्यकर्तृत्वस्य विधायकम्। तथा सत्यपूर्वविधित्व- अदृष्टत्व–अप्राकृतकार्यक-ल्पनादिदोषप्रसक्ते । अपि तु ज्ञापकसिद्धव्यपदेशितान्वयेन ये ऋत्विज ते यजमाना इति ऋत्विक्कार्यमुद्दिश्य तत्कर्तृत्वेन स्वामित्व विधीयते । तथा च न प्रागुक्तदोषप्रसक्ति । न वा सर्ववर्णानां सत्राधिकार इति भाव ॥२०॥

## गार्हपते वा स्यातामविप्रतिषेधात् ॥२१॥

सत्रे गृहपतिरिति व्यवह्रियमाणो यः, तत्सम्बन्धिकर्मणि राजन्यवैश्यौ भविष्यतः । तत्र ऋत्विक्कार्यस्याभावात्तयोः अविप्रतिषेधात्—अविरोधादिति पुनः सर्वाधिकारशङ्का ॥ २१ ॥

## न वा कल्पविरोधात् ॥ २२ ॥

न राजन्यवैश्ययोः सत्रेऽधिकारः । कल्पविरोधात्—चमसवैरूप्य-विरोधप्रसक्तेः । 'फलचमसो राजन्यस्य, सोमचमसो विप्राणाम्' तथा 'बार्हद्गिरं ब्राह्मणाना साम, पार्थुरश्मं राजन्यस्येति विरोधः ॥ २२ ॥

## स्वामित्वादितरेषामहीने लिङ्गदर्शनम् ॥२३॥

सत्रे ऋत्विजां स्वामित्वात्—यजमानत्वात्, तत्र आर्त्विज्यविरो-धात् इतरेषां—राजन्यादीनां, द्वादशाहे अहीने सत्रात्मके चारितार्थ्यम् । तत्र यजमाने आर्त्विज्यविध्यभावान्न लिङ्गविरोधः । तस्मात् सत्रे विप्राणामे-वाधिकार इति सिद्धम् ॥ २३ ॥

सत्रे विश्वामित्रवत्समानकल्पानामधिकाराधिकरणम् ॥४॥

## वासिष्ठानां वा ब्रह्मत्वनियमात् ॥ २४ ॥

ब्राह्मणानां सत्राधिकारे सिद्धेऽपि न सर्वेषां ब्राह्मणानां सः । अपि तु 'वासिष्ठो ब्रह्मा भवति' इति वासिष्ठस्य ब्रह्मत्वनियमात् तत्समान-कल्पोपपत्त्यर्थं वासिष्ठानामेवाधिकार इति ॥२४॥

## सर्वेषां वा प्रतिप्रसवात् ॥ २५ ॥

प्रतिप्रसवात्—'यः स्तोमभागानधीते स वासिष्ठः' इति वासिष्ठ-शब्दार्थविवरणात, सर्वेषां तदध्ययनसत्त्वात्सर्वेषामेव ब्राह्मणानां सत्राधिकारः स्यात् ॥ २५ ॥

## सि० ॥ वैश्वामित्रस्य हौत्रनियमात्— भृगुशुनकवासिष्ठानामनधिकारः ॥ २६ ॥

'विश्वामित्रो होता भवति' इति विश्वामित्रो होत्रे नियतः। स एव स्तोमभागान् पठति'। तेन भिन्नकल्पत्वात् भृग्वादीनामनधिकारः। किन्तु विश्वामित्रसमानकल्पानामेव सत्राधिकार इति सिद्धान्तः॥ २६॥

सत्रे आहिताग्नेरेवाधिकाराधिकरणम्॥५॥

## विहारस्य प्रभुत्वादनग्नीनामपि स्यात्॥२७॥

**विहारस्य**--साग्निकाऽऽहवनीयस्य, **प्रभुत्वात्**-अनग्निककृतुपकार-समर्थत्वात्, अनग्नीनामपि सत्रऽधिकारः स्यात्। न साग्नीनामेवेति॥२७॥

## सारस्वते च दर्शनात्॥२८॥

'परस्यैवा एते स्वर्गं लोकं यन्ति, ये अनाहिताग्नयः सत्रमासते' इति सारस्वतनामकसत्रे व्यक्तं श्रवणादनग्नीनामपि सत्राधिकारः॥२८॥

## प्रायश्चित्तविधानाच्च॥२९॥

'यस्य आहिताग्नेरग्नय अन्यैरग्निभिः संसृज्यन्ते अग्नये विविच्ये अष्टाकपालं निर्वपेत्' इत्यन्याग्निसंसर्गे प्रायश्चित्तविधानादपि अनाहिताग्नीनामधिकारः सिध्यतीति॥२९॥

## सि० ॥ साग्नीनां वा इष्टिपूर्वत्वात्॥३०॥

'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति सोमस्येष्टिपूर्वत्व-नियमात् तद्विकृतेरपि तदावश्यकत्वादनाहिताग्नेस्तदसम्भवान्न तस्याधिकार इति भावः॥३०॥

## स्वार्थेन च प्रयुक्तत्वात्॥३१॥

'अग्नीनादधीत' इत्यात्मनेपदेन आत्मार्थत्वज्ञापनात् स्वाहवनीयस्य **स्वार्थेन**--स्वफलेन सम्बद्धत्वादपि नाधिकारस्तेषाम्॥३१॥

## सन्निवापं च दर्शयति॥३२॥

'सावित्राणि होष्यन्तः सन्निवपेरन्' इति सर्वेषामग्नीनां **सन्निवापं**--मेलनं, साग्निकानामेव सत्रमिति दर्शयति॥३२॥

सत्रे जुह्वादीनां सर्वसाधारण्याधिकरणम् ॥६॥

## जुह्वादीनामप्रयुक्तत्वात्सन्देहे यथाकामी प्रतीयेत ॥ ३३ ॥

सत्रे जुह्वादिपात्राणि तदीयर्त्विजां मध्ये यस्य कस्यचिद् ग्राह्याणि ? उत नूतनानि सर्वसाधारणानीति सन्देहे जुह्वादीनां **अप्रयुक्तत्वात्**—पात्रग्रहणवेलायां स्वप्रयोगस्यैवेत्यनिर्दिष्टत्वात्, तत्र **यथाकामी**—इच्छैव नियामिकेति प्रतीयेत इत्यर्थः ॥ ३३ ॥

## सि० ॥ अपि वा अन्यानि पात्राणि साधारणानि कुर्वीरन् विप्रतिषेधाच्छास्त्रकृतत्वात् ॥३४॥

**अन्यानि**—नवीनान्येव, **साधारणानि**—सर्वसाधारणानि पात्राणि कर्तव्यानि । कुतः ? कस्यचिद् ग्रहणे तस्य मध्ये मृतौ 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति तदीयपात्रदाहे अन्यपात्राभावेन **विप्रतिषेधात्**—अनुष्ठानप्रतिबन्धात्, नूतनपात्रकरणस्य **शास्त्रकृतत्वात्**—शास्त्रतात्पर्यविषयत्वादिति भावः ॥ ३४ ॥

## प्रायश्चित्तमापदि स्यात् ॥३५॥

पूर्वाधिकरणे अग्निसंसर्गे प्रायश्चित्तं श्रुतम् । तस्य चारितार्थ्यं सूत्रेणानेनाऽऽलोच्यते । **आपदि**—प्राणसङ्कटे, अन्यो. संसर्ग उक्तः । आपन्निवृत्तौ स्वाग्नीन् विभज्य प्रायश्चित्तं कुर्युरिति भावः ॥३५॥

वैकृतसामिधेनीसामसदस्ये वर्णत्रयाधिकाराधिकरणम् ॥७॥

## पुरुषकल्पेन विकृतौ कर्तृनियमः स्याद्यज्ञस्य तद्गुणत्वादभावादितरान् प्रत्येकस्मिन्नधिकारः स्यात् ॥ ३६ ॥

अध्वरकल्पादिषु इष्टिविकृतिषु श्रुतं सामिधेनीनां सामसदस्यं वैश्यस्यैव । न वर्णत्रयस्य । कुतः ? **विकृतौ**—अध्वरकल्पादिविकृतौ, **पुरुष-**

**कल्पेन**–' सप्तदशानुब्रूयाद्वैश्यस्य ' इति पुरुषविशेषकर्तृकत्वेन आम्नात-साप्तदश्यकत्वेन **कर्तृनियमः**--वैश्यरूपकर्तृनियमः स्यात् । **यज्ञस्य**--अध्वर-कल्पादिविकृतियागस्य, **तद्गुणत्वात्**–साप्तदश्यगुणकत्वात्, **इतरान् प्रति**–ब्राह्मणादीन् प्रति, **अभावात्**- साप्तदश्याभावात्, **एकस्मिन्**–वैश्य एव, **अधिकारः**--तद्यज्ञाधिकारः स्यात् । अध्वरकल्पादिविकृतिसमीपपठितेन ' सप्तदशानुब्रूयाद्वैश्यस्य ' इति वाक्येन साप्तदश्यत्वमनूद्य वैश्यकर्तृकत्वं तत्र नियम्यत इति भावः ॥२६॥

## लिङ्गाच्चेज्याविशेषवत् ॥२७॥

**लिङ्गात्**-- ' सप्तदशो वै वैश्य ' इत्यर्थवादादपि, साप्तदश्यं वैश्यकर्तृकत्वमात्रसम्बन्धि, न ब्राह्मणक्षत्रसम्बन्धीति सिध्यति। **इज्याविशेषवत्**- ' वैश्यो वैश्यस्तोमेन यजेत ' इति वैश्यस्तोमयागो यथा वैश्यमात्रकर्तृकस्तथा साप्तदश्यमपीति भाव. ॥ २७ ॥

## सि०॥न वा संयोगपृथक्त्वात् गुणस्येज्याप्रधानत्वात् असंयुक्ता हि चोदना ॥३८॥

न विकृतीष्वध्वरकल्पादिषु तेषु वैश्यमात्रकर्तृकत्वनियमः । अपि तु वर्णत्रयाधिकारः । कुत ? **संयोगपृथक्त्वात्**—प्रकृतौ ' सप्तदशानुब्रूयाद्वैश्यस्य ' अध्वरकल्पादिसन्निधौ ' सप्तदश सामिधेनीरन्वाह ' इति वाक्यद्वय-संयोगयोः पृथक्त्वात्—विजातीयत्वात्, द्वितीयेन विहितगुणस्य साप्तदश्यस्य इज्याप्रधानत्वात् ततस्तत्र वैश्यपदेन **असंयुक्ता**—रहिता, **चोदना**–विधि-वाक्यम्, प्रथमेन तु ' पञ्चदश सामिधेन्य ' इति पाञ्चदश्यबाधकत्वेन वैश्यमुद्दिश्य साप्तदश्यं विहितम्। तदतिदेशतो विकृतिषु प्राप्तं यथा, तथा क्रतुसामान्य-मुद्दिश्य विहितं पाञ्चदश्यमपि प्राप्तम् । अर्थात्तद्वृत्तिक्रतुसामान्यापेक्षत्वं सर्वेषामधिकारे सत्येव घटते । नान्यथेति भाव. ॥ ३८ ॥

## इज्यायां तद्गुणत्वाद्विशेषेण नियम्येत ॥३९॥

'वैश्यो वैश्यस्तोमेन यजेत' इति श्रुते इज्याया— वैश्यस्तोमे, तद्गुणत्वात्— तस्य—वैश्यकर्तृकस्य गुणत्वात्— गुणत्वेन विधानात्, विशेषेण नियम्येत -तत्क्रतुमुद्दिश्य वैश्यकर्तृकत्वं नियम्येतेत्यर्थः । यत्र वैश्यस्तोमस्तत्र वैश्यकर्तृकत्वमिति । तद्गुणत्वाभावादिति भावः ॥३९॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां षष्ठाध्यायस्य षष्ठः पादः सम्पूर्णः ॥ ६ ॥ श्री ॥

---

## ॥ अथ षष्ठाध्यायस्य सप्तमः पादः ॥

विश्वजिति पित्रादीनामदेयत्वाधिकरणम् ॥ १ ॥

### स्वदाने सर्वमविशेषात् ॥ १ ॥

'विश्वजिति सर्वस्वं दक्षिणा' इति श्रुतत्वात् स्वदाने— सर्वस्वदाने, सर्वं— पित्रादिकमपि, देयम् । अविशेषात्—नेदं देयमिति विशेषस्य अश्रूयमाणत्वादित्यर्थः ॥ १ ॥

### सि०॥ यस्य वा प्रभुः स्यादितरस्याशक्यत्वात् ॥२॥

यस्य -स्वस्य त्यागे प्रभुः तद्देयम् । इतरस्य— पित्रादेः, स्वत्वस्य त्यक्तुमशक्यत्वात् । न हि पितुर्दाने पितृत्वमपैतीति भावः ॥ २ ॥

विश्वजिति पृथिव्या अदेयत्वाधिकरणम् ॥ २ ॥

### न भूमिः स्यात्सर्वान् प्रत्यविशिष्टत्वात् ॥३॥

तत्रैव विश्वजिति गवपथराजमार्गजलाशयाद्यन्विता महाभूमिः सार्वभौमेनापि सर्वस्वदाने न देया । कुतः ? स्वकर्मफलभुञ्जानान् सर्वान् प्रति तस्या अविशिष्टत्वात्—साधारणत्वादित्यर्थः ॥ ३ ॥

विश्वजिति अश्वादीनामदेयत्वाधिकरणम् ॥ ३ ॥

### अकार्यत्वाच्च ततः पुनर्विशेषः स्यात् ॥४॥

**अकार्यत्वात्**–' न केसरिणो ददाति ' इत्यश्वाना दानस्य निषेधात्, **तत**--सुवर्णादिभ्य, **विशेषः**–दानकर्मत्वाभाव स्यादश्वेष्विति ज्ञेयम् ॥४॥

विश्वजिति विद्यमानानामेव सर्वस्वानां देयत्वाधिकरणम् ॥४॥

## नित्यत्वाच्चानित्यैर्नास्ति सम्बन्धः ॥ ५ ॥

सर्वस्वदानस्य **नित्यत्वात्** अग्रिमद्रव्यलाभस्यानिश्चयात **अनित्यैर्न सम्बन्धः** । न दानकर्मत्वमिति भाव ॥५॥

विश्वजिति धर्मार्थसेवकशूद्रस्यादेयत्वाधिकरणम् ॥५॥

## शूद्रश्च धर्मशास्त्रत्वात् ॥६॥

**धर्मशास्त्रत्वात्**--स्वधर्मसंरक्षणार्थं शुश्रूषमाणत्वात्, **शूद्रोऽपि अदेय** –न दानकर्मत्वभागित्यर्थः । य शूद्र स्वकीयधर्मपरिपालनार्थं द्विजसेवा कुरुते, तस्मिन्स्वत्वस्याभावात सोऽप्यदेय इति भाव ॥६॥

विश्वजिति दक्षिणाकाले विद्यमानानामेव सर्वस्वाना देयत्वाधिकरणम् ॥ ६ ॥

## सि० सू० ॥ दक्षिणाकाले यत् स्वं प्रतीयेत तद्दानसंयोगात् ॥७॥

**दाक्षिणाकाले यत्स्वं**—यावद्द्रव्यं स्व व, तावद्देय प्रतीयेत । **तद्दानसंयोगात्**— सत्ताश्रयस्यैव दानार्हत्वादिति भाव ॥ ७ ॥

विश्वजिति दक्षिणादानोत्तराङ्गानामप्यनुष्ठानाधिकरणम् ॥७॥

## अशेषत्वात्तदन्तः स्यात्कर्मणो द्रव्यसिद्धित्वात् ॥८॥

विश्वजिद्यागो दक्षिणान्त एव । न प्रकृतिवदवभृथान्त । कुत ? **अशेषत्वात्**— अस्य यागस्य अशेषदक्षिणात्वात, **कर्मणः**– शेषकर्मण, **द्रव्यसिद्धित्वात्**–द्रव्यसाध्यत्वात्, सर्वस्वदाने तत्काले द्रव्याभावेन **तदन्तः** –दाक्षिणान्त स्यात् । सर्वस्वदानस्य प्रत्यक्षवचनप्राप्तत्वादातिदेशिककर्मशेषस्य बाध इति भाव ॥ ८ ॥

सि० ॥ अपि वा अशेषकर्मा स्यात् क्रतोः प्रत्यक्षशिष्टत्वात् ॥ ९ ॥

क्रतोः— 'विश्वजिता यजेत' इति श्रुत्या समाप्तिपर्यन्तस्य विश्वजित्क्रतो, प्रत्यक्षशिष्टत्वात् अशेषकर्मा— समाप्तिपर्यन्त स्यात् ॥९॥

तथा चान्यार्थदर्शनम् ॥१०॥

तथा च-समाप्तिपर्यन्तत्वादेव, अन्यार्थस्य- 'अवभृथादुदेत्य वत्सत्वचमाच्छाद्यति' इति विहितस्य दर्शनम् -श्रवण सङ्गच्छते। दक्षिणान्तत्व तदनुपपन्न स्यादिति भाव. ॥१०॥

अशेषं तु समञ्जसाऽऽदानेन शेषकर्म स्यात् ॥११॥

अशेषं तु—तदशेष प्रदीयते। तदेव समञ्जसाभूतम्। तथा च सर्वस्व ददातीति शब्द समुपपद्यते। यच्च प्रत्यक्षा समाप्तिरिति। आदानेन— नूतनसम्पादनेन, शेषकर्म- अवशिष्ट कर्म स्यादिति ॥११॥

न आदानस्य अनित्यत्वात् ॥१२॥

आदानस्य--नूतनलाभस्य, अनित्यत्वात्--अनिश्चितत्वात्, शेषकर्मणश्च नित्यत्वान्न तयो सम्बन्ध सम्भवति। अत शेषयितव्य किञ्चिदिति ॥ १२ ॥

दीक्षासु विनिर्देशात् अक्रत्वर्थत्वेन संयोगः, तस्मादविरोधः स्यात् ॥१३॥

दीक्षासु विनिर्देशात्- प्रकृतौ ज्योतिष्टोमे 'इद क्रत्वर्थमिद दक्षिणार्थम' इति कर्मारम्भ एव विभागस्य कृतत्वात्, तस्यातिदेशेन विश्वजिति प्राप्तत्वात अक्रत्वर्थत्वेन-क्रत्वर्थत्वेन यत् कृत्स्न तद्भिन्नेन, संयोगः -दानसम्बन्ध. । तथा च 'सर्वस्व ददाती' त्यस्याप्यविरोध स्यादिति सिध्दम् ॥१३॥

अहर्गणेऽपि विश्वजिति सर्वस्वदानाधिकरणम् ॥ ८ ॥

## सि० ॥ अहर्गणे च तध्दर्मः स्यात्सर्वेषाम-विशेषात् ॥ १४ ॥

' अथैतस्याष्टरात्रस्य विश्वजिदभिजितावेकाहावभितः, उभयतो ज्योतिर्मध्ये षडहः. पशुकामो ह्येतेन यजेत ' इति वाक्यविहिताष्टरात्राहर्गणो द्वादशाहविकृतिरस्ति । तत्र ' विश्वजित्सर्वपृष्ठोऽतिरात्रो भवती ' त्यादौ विश्वजिद्विहितः । अन्ते चाभिजित् । तत्र अष्टरात्राहर्गणेऽपि **तद्धर्मः**— प्रकृतिभूतविश्वजिध्दर्मः सर्वस्वदानादिः स्यात् । कुतः ? **सर्वेषां**— प्रकृतिविकृतिरूपाणाम्, **अविशेषात्**— य एव प्रकृतौ विश्वजिध्दर्मः स एव चोदकेन विकृतावपि स्यादिति भावः ॥ १४ ॥

## द्वादशशतं वा प्रकृतिवत् ॥ १५ ॥

अष्टरात्राहर्गणस्य परम्परया ज्योतिष्टोमप्रकृतिकत्वेन तदन्तःपातिविश्वजितोऽपि **प्रकृतिवत् द्वादशशतमेव** दक्षिणा स्यादिति ॥१५॥

## अतद्गुणत्वात्तु नैवं स्यात् ॥१६॥

**अतद्गुणत्वात्**--द्वादशशतस्य विश्वजिद्धर्मत्वाभावात्, **नैवं**--ज्योतिष्टोमदक्षिणा तत्र न स्यात् । आनुमानिकातिदेशान्नामातिदेशस्य प्राबल्यादिति सर्वस्वदानमेव तत्रेति भावः ॥ १६ ॥

## लिङ्गदर्शनाच्च ॥१७॥

' हीयते वा एष पशुभिर्यो विश्वजिति सर्वस्वं न ददाती'ति लिङ्गविरोधोऽपि द्वादशशतदक्षिणापक्षे स्यादतोऽपि नैवं स्यादिति भावः ॥१७॥

### विश्वजिति द्वादशशतन्यूनधनस्यानधिकाराधिकरणम् ॥९॥

## विकारः सन्नुभयतोऽविशेषात् ॥१८॥

सर्वस्वपदं द्वादशशतघिकपरं तन्न्यूनपरं वेति सन्देहे आह--

**विकारः**—विश्वजिद्यागरूपविकारस्य धर्मः, **उभयतः**- द्वादशशतन्यूनदाने अधिकदानेऽपि उपपद्यते । ' सर्वस्वं दद्यात ' इति **अविशेषात्**—न्यूनमधिक-

मिति विशेषाभावात् । अत एकगोस्वामिना सहस्रगोस्वामिना चानुष्ठेयो विश्वजिद्याग इति ॥ १८ ॥

## सि० ॥ अधिकं वा प्रतिप्रसवात् ॥१९॥

न्यूनधनस्य अधिकधनस्य वा विश्वजिति अधिकार इति न । अपि त्वधिकधनस्यैवेत्याह—**अधिकं वा**—द्वादशशताधिकमेव, तस्यैवाधिकारः, यस्य द्वादशशताधिकं धनमस्ति । कुतः ? **प्रतिप्रसवात्**—द्वादशशतं विधाय 'एतावता वा ऋत्विज आनेयाः, अपि वा सर्वस्वेन' इति द्वादशशतेन ऋत्विग्लाभे सर्वस्वदानं निहितम् । न तन्न्यूनधने सम्भवतीति भावः ॥१९॥

## अनुग्रहाच्च पादवत् ॥२०॥

**अनुग्रहात्**—प्राक्तनद्वादशशतानुग्रहादपि सर्वस्वं सिध्यति । **पादवत्**—एकमुद्रादाने तदन्तर्गतपादमुद्रापि दत्ता भवति । तद्वदधिकदाने तदन्तर्गतं द्वादशशतं दत्तमेवेति भावः ॥ २० ॥

**आधाने अपरिमितं देयमित्यनेन सङ्ख्यान्तरविधानाधिकरणम् ।१०।**

## अपरिमिते शिष्टस्य सङ्ख्याप्रतिषेधस्तच्छ्रुतित्वात् ॥२१॥

आधाने 'एका देया, षड् देयाः, द्वादश देयाश्चतुर्विंशतिर्देयाः, शतं देयम्, सहस्रं देयम्, अपरिमितं देयम्' इति श्रूयते । तत्र अपरिमितमित्यनेन परिमितसङ्ख्या प्रतिषिध्यते किंवा कल्पान्तरं विधीयते इति विमर्शे पूर्वपक्षमाह—**अपरिमिते**— अपरिमितशब्दश्रवणे, पूर्वशिष्टैकादिद्रव्यसङ्ख्याप्रतिषेधः प्रतीयते । न कल्पान्तरविधानम् । कुतः ? **तच्छ्रुतित्वात्**—तस्य-अपरिमितशब्दस्य श्रुतित्वात्—शक्यार्थलाभात् ।·परिमितं न भवतीत्यपरिमितमिति विग्रहे परिमाणशून्यद्रव्यस्याप्रसिद्धत्वेन श्रुतेरप्रामाण्यप्रसङ्गात् नञः दानक्रियान्वये परिमितं न देयम् इति तस्य प्रतिषेधः सिध्यतीति भावः ॥२१॥

## सि० ॥ कल्पान्तरं वा तुल्यवत्प्रसङ्ख्यानात् ॥२२॥

**कल्पान्तरं**—अपरो दानकल्प एव विधीयते । **तुल्यवत्प्रसङ्ख्यानात्**—एका देयेत्यादिभिस्तुल्यवत्पठितत्वात् ॥ २२ ॥

### अपरिमितशब्देन सहस्राधिकस्य ग्रहणाधिकरणम् ॥ ११ ॥

## अनियमोऽविशेषात् ॥ २३ ॥

सहस्रशब्दसहपठितेनापरिमितशब्देन न्यूनमधिकं वा ग्राह्यमित्यस्य **अनियमः**— नियमो नास्ति । **अविशेषात्**—विशेषाश्रवणादिति ॥ २३ ॥

## सि० ॥ अधिकं वा स्यात् बह्वर्थत्वात् इतरैः सन्निधानात् ॥ २४ ॥

**अधिकं वा**—श्रूयमाणसङ्ख्याया अधिकमेव स्यात् । कुतः? **इतरैः**-शतसहस्रादिशब्दैः, **सन्निधानात्**— सान्निधानं यस्य तादृशाद्बह्वर्थत्वात् । यत्र इतरसङ्ख्यावाचकशब्दसमभिव्याहृतबहुत्ववाचकः शब्दः, तत्र बहुत्ववाचकशब्दे इतरश्रूयमाणसङ्ख्याधिकसङ्ख्यावाचकत्वमिति व्याप्तेः सर्वानुभवसिद्धत्वादिति भावः ॥ २४ ॥

## अर्थवादश्च तदर्थवत् ॥ २५ ॥

**अर्थवादः** – ‘ उत्कृष्टं वै तदपरिमितम् ’ इत्यपरिमितमित्यस्य सन्निधौ श्रूयमाणः अर्थवादोऽपि **तदर्थवत्**– तस्य अधिकसङ्ख्यार्थकत्वं द्रढयतीत्यर्थः ॥ २५ ॥

### इति ह स्मेत्यादिपरकृतिपुराकल्पानामर्थवादताधिकरणम् ॥१२॥

## परकृतिपुराकल्पं च मनुष्यधर्मः स्यात् अर्थाय ह्यनुकीर्तनम् ॥२६॥

दर्शपूर्णमासयोः ‘ इति ह स्माह बर्हिषदकुर्माष्णिर्माषान् मे पचत ’ एवम् – ‘ उल्मुकैर्ह स्म पूर्वे समाजग्मुः, तान् ह असुरा रक्षांसि निर्जघ्नुः ’ इति श्रुतम् । तत्र एककर्तृकोपाख्यानपरं वाक्यं **परकृतिः** । अनेककर्तृको-

पाल्यानपरं च वाक्यं **पुराकल्पः** इति तल्लक्षणम् । अत इदं परकृतिपुराकल्पं च **मनुष्यधर्मः**--मनुष्यमात्रमुद्दिश्य विधिः, उत विशिष्टगोत्रिणमुद्दिश्यैव । आहोस्विदर्थवादोऽयमिति । तत्रायं **मनुष्यधर्मः**--मनुष्यमात्राधिकारः स्यात् । हि--यतः, फलायेदं वाक्यस्य अनुकीर्तनं प्ररकृतिरूपमिति उक्ताधिकारप्रदर्शनमेव वाक्यस्य प्रयोजनमिति ॥ २६ ॥

## तद्युक्ते च प्रतिषेधात् ॥ २७ ॥

' अमेध्या वै माषाः ' इत्येवंजातीयकस्य विधेः प्रतिषेधो दृश्यते । प्रसक्तमेव प्रतिषिध्यते । तस्मोऽपि मानुषधर्म इति ॥ २७ ॥

## निर्देशाद्वा तध्दर्मः स्यात्पञ्चावत्तवत् ॥२८॥

**निर्देशात्**— वद्कुर्वार्ष्णिरिति वाक्ये वृष्णिनिर्देशात **तध्दर्मः**--वृष्णिधर्मः स्यात । जमदग्नीना **पञ्चावत्तवत्**--' पञ्चावत्तं जमदग्नीनाम् ' इति जमदग्निगोत्राणामेव पञ्चावत्तं भवति, तद्वद् । तनो वृष्णिगोत्रमात्राधिकारेणाप्येतादृशस्य विधे. साफल्यं सम्भवतीति न मनुष्यमात्राधिकार इति ।२८।

## विधौ तु वेदसंयोगादुपदेशः स्यात् ॥२९॥

**वेदे**— अर्थवादात्मके **संयोगात्**-- वार्ष्णिसंयोगात, **विधौ**-- तदनुमितविधौ, **उपदेशः**--वृष्णिशब्दस्योपदेशः स्यात् । पूर्वकल्पे नायमर्थवादः । अस्मिन् कल्पे त्वर्थवादत्वाङ्गीकार इति ॥ २९ ॥

## सि० ॥ अर्थवादो वा विधिशेषत्वात् तस्मान्नित्यानुवादः स्यात् ॥ ३० ॥

**विधिशेषत्वात्**-- ' तस्मादारण्यमेवाश्नीयात् ' इति कल्पविधिशेषत्वात्स्तावकत्वात्, **अर्थवादो वा**--अर्थवाद एव एवंजातीयकः । न मनुष्यमात्राधिकारो विधिः । न वा वृष्णिगोत्रमात्राधिकारो वेति भावः ॥३०॥

सहस्रसंवत्सरशब्दस्य सहस्रदिनपरत्वाधिकरणम् ॥ १३ ॥

## सहस्रसंवत्सरं तदायुषामसम्भवान्मनुष्येषु ॥ ३१ ॥

' पञ्चपञ्चाशतस्त्रिवृतः संवत्सरा, पञ्चपञ्चाशतः पञ्चदशाः, पञ्चपञ्चाशतः सप्तदशाः, पञ्चपञ्चाशत एकविंशाः विश्वसृजामयनं सहस्रसंवत्सरम् ' इति श्रूयते । तत्र **सहस्रसंवत्सरं**—सहस्रसंवत्सरसाध्यं सत्रं, **तदायुषां**—सहस्रायुषां देवादीनाम् । कुतः ? मनुष्येष्वसम्भवात् ॥ ३१ ॥

## उपचारोऽन्यार्थदर्शनम् ॥ ३२ ॥

' प्रजापतिं वै प्रजाः सृजमानं पाप्मा मृत्युरभिजघान स तपोऽतप्यत सहस्रसंवत्सरान् पाप्मानं विजिहासन् ' **इत्युपचारः**--अर्थवादः, **अन्यार्थदर्शनं**-- देवानामधिकारं दर्शयति । तत्र प्रजापतिकर्तृकत्वश्रवणादिति भावः ॥ ३२ ॥

## अपि वा तदधिकारान्मनुष्यधर्मः स्यात् ॥३३॥

**तदधिकारात्**— निखिलशास्त्रस्य मनुष्याधिकारत्वात्, अत्र सत्रे **मनुष्यधर्मः**-- मनुष्याधिकार एव स्यात् ॥ ३३ ॥

## नासामर्थ्यात् ॥ ३४ ॥

**असामर्थ्यात्**— तावदायुरभावान्न मनुष्याधिकारः ॥ ३४ ॥

## सम्बन्धादर्शनात् ॥ ३५ ॥

' शतायुर्वै पुरुषः ' इति श्रुतेस्तदधिकाऽऽयुर्वृद्धेः रसायनादिकस्य च जन्यजनकसम्बन्धादर्शनान्न रसायनादिभिर्मनुष्येण आयुषो वृद्धिं सम्पादयितुं शक्येति न सहस्रसंवत्सरसत्रे मानुषाणामधिकारः सम्भवतीति भावः ॥ ३५ ॥

## स कुलकल्पः स्यादिति कार्ष्णाजिनिरेकास्मिन्नसम्भवात् ॥ ३६ ॥

**एकास्मिन्नसम्भवात्** सः मनुष्याधिकारः पुत्रादिपरम्परया **कुलकल्पः**—कुलस्याधिकारबोधकः स्यादिति **कार्ष्णाजिनि**राचार्यो मन्यते ॥ ३६ ॥

## अपि वा कृत्स्नसंयोगादेकस्यैव प्रयोगः स्यात् ।३७।

शास्त्रफलं प्रयोक्तरीति नियमात् **कृत्स्नसंयोगात्**—कृत्स्नस्य प्रयोगस्य फलजनकत्वात् एकस्यैव कृत्स्न. प्रयोग. स्यात् । एक एव प्रयोक्तेति भावः ॥ ३७ ॥

## विप्रतिषेधात्तु गुण्यन्यतरः स्यादिति लावुकायनः ॥ ३८ ॥

विश्वसृजामयनमभिधौ ' पञ्चपञ्चाशतस्त्रिवृतः सम्वत्सराः ' इत्यादि श्रुतम् । तत्र **विप्रतिषेधात्**—विरोधात्, **अन्यतरः** शब्दः गौणः स्यादिति **लावुकायनस्य** मतम् । एकदेशानुष्ठातरि फलसम्बन्धाश्रवणात् पञ्चपञ्चाशत इत्यादिसङ्ख्यया मुख्यसंवत्सरसम्बन्धाङ्गीकारे वाक्यस्य प्रामाण्यं दुर्घटम् । अतस्तन्निवारणार्थमन्यतरस्य शब्दस्य गौणार्थत्वमवश्य वाच्यमिति भावः ॥ ३८ ॥

## संवत्सरो वा विचलितत्वात् ॥३९॥

क शब्दो गौण इत्याकाङ्क्षायामाह-- **संवत्सरो वा**-- सवत्सरशब्द एव गौणार्थ, **विचलितत्वात्**। चान्द्रसावनसौरादिषु वत्सरेषु दृष्टत्वेन तदर्थस्य **विचालितत्वात्**- व्यभिचरितत्वात्, स एव गौण. । पञ्चपञ्चाशच्छब्दो हि सङ्ख्याविशेषे नियत । तत स गौणो नेति भाव ॥३९॥

## स प्रकृतिः स्यादधिकारात् ॥ ४० ॥

**सः**— सवत्सरशब्द , **प्रकृति** –प्रकृतिवत्– स्वप्रकृतिभूतगवामयनवत् । गवामयने ' यो मास' संवत्सर ' इति व्यवहारादत्रापि तथा स्यादिति । संवत्सरशब्दस्य गौणत्वमङ्गीकृत्येद बोध्यमिति भावः ॥ ४० ॥

## सि० ॥ अहानि वा अभिसङ्ख्यत्वात् ॥४१॥

उपनयन-वेदाध्ययन-दारसङ्ग्रह- आधान- ज्योतिष्टोमानन्तरं सहसमासजीविनामनभ्यासादुक्तरक्षो न सम्भवतीति सिद्धान्तमाह— **अहानि वेति**- पञ्चपञ्चाशत् अहानेव सवत्सरपदवाच्यानि । **अभिसङ्ख्यत्वात्**—

सर्वसत्रप्रकृतिभूतद्वादशाहे त्रिवृदहः प्रकृत्य ' आदित्यो वै सर्वर्तवः, स यदा उदेति अथ वसन्तः, यदा सङ्गवोऽथ ग्रीष्मः, यदा मध्यन्दिनेऽथ वर्षा, यदपराह्णेऽथ शरद्, यदाऽस्तमेति अथ हेमन्तशिशिरौ ' इत्येवमेकस्मिन्नहनि षड्ऋतूनां परिगणनात् षड्ऋतुमयात्मकसंवत्सरत्व तस्य युक्तमेवेति भावः ॥ ४१ ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां षष्ठाध्यायस्य सप्तमः पादः सम्पूर्णः ॥ ७ ॥ श्रीः ॥

---

## ॥ अथ षष्ठाध्यायस्य अष्टमः पादः ॥

### अनाहिताग्नेरेव चतुर्होत्रहोमाधिकाराधिकरणम् ॥१॥

### इष्टिपूर्वत्वादक्रतुशेषो होमः संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याऽऽधानस्य सर्वशेषत्वात् ॥१॥

किमपि प्रकरणमनारभ्येदं श्रूयते—' प्रजाकामं चतुर्होत्रा याजयेत् ' ' चतुर्गृहीतमाज्यमादाय चतुर्होतारं व्याचक्षीत पूर्वेण ग्रहेणार्धं जुहुयात् तदुत्तरेणार्धम् ' इति । ' पृथिवी होता द्यौरध्वर्युरित्यादिको मन्त्रश्चतुर्होता । तेन मन्त्रेण प्रजाकामं प्रत्ययं दर्विहोमो विहितः । तत्र **अक्रतुशेषः**—कस्यापि क्रतोरनङ्गभूतः, **अपूर्वोऽपि**—अप्रकृतिकोऽपि, यत्किञ्चिद्दर्विहोमः **संस्कृतेषु**-आधानादिसंस्कृताग्निषु स्यात् । न लौकिकाग्निषु । कुतः ? **आधानस्य**-आधानसंस्कृताहवनीयाद्यग्नेः, **सर्वहोमशेषत्वात्** । तस्य च पवमानेष्टिसाध्यत्वात् आहिताग्नेरस्मिन् होमेऽधिकारः । नानाहिताग्नेरिति ॥१॥

### सि०॥ इष्टित्वेन तु संस्तवश्चतुर्होतृनसंस्कृतेषु दर्शयति ॥ २ ॥

'एषा वा अनाहिताग्नेरिष्टिः, यच्चतुर्होतारः' **इतीष्टित्वेन संस्तवस्तु चतुर्होतॄन्**--चतुर्होत्रहोमान्, **असंस्कृतेषु**--आधानायसंस्कृतेषु--अर्थाल्लौकिकाग्निषु **दर्शयति**--ज्ञापयतीत्यर्थः ॥ २ ॥

## उपदेशस्त्वपूर्वत्वात् ॥३॥

**उपदेशस्तु**--विधिरेवायम् । नार्थवादः । **अपूर्वत्वात्**--अप्राप्तत्वात् । अर्थवादत्वे वैयर्थ्यात् अक्रतुशेषक.र्मसामान्यस्य विधिरेवायमिति शङ्का ॥ ३ ॥

## स सर्वेषामविशेषात् ॥ ४ ॥

सः--उपदेशः, **सर्वेषाम्** — क्रतुशेषाणामक्रतुशेषाणां च चतुर्होत्रहोमानाम् । **अविशेषात्**—विशेषाभावादित्यर्थः ॥ ४ ॥

## अपि वा क्रत्वभावादनाहिताग्नेरशेषभूतनिर्देशः॥५॥

**अपि** वेत्युक्तपक्षव्यावृत्तिः । अनाहिताग्नेरियमिष्टिरिति श्रुतेः अनाहिताग्नेः क्रत्वभावाच्च **अशेषभूतनिर्देशः**— अक्रतुशेषाणामेवायमुपदेशः । न क्रतुशेषाणाम । उक्तविशेषादित्यर्थः ॥५॥

## जपो वा अनग्निसंयोगात् ॥ ६ ॥

**अनग्निसंयोगात्**— अनाहिताग्निशब्दसंयोगात् 'एषा वा अनाहिताग्नेः' इत्यनेनोक्ता क्रिया जपात्मिकैवास्त्वित्यपरा शङ्का ॥ ६ ॥

## इष्टित्वेन संस्तुते होमः स्यात् अनारभ्याधीतत्वात् इतरेषामवाच्यत्वात् ॥ ७ ॥

तां परिहरति । **इष्टित्वने**— इष्टिपदवाच्येन संस्तुते सति होम एव स्यात्, न जपः । यतो इष्टिर्यागः, स एव प्रक्षेपादिको होम इति अनारम्याग्निसंयोगस्य श्रवणात् आहवनीयस्योक्तदर्विहोमे **अवाच्यत्वात्**— प्रवेशासम्भवात्, **इतरेषां**— श्रौतकर्मणामेव आहवनीयः । न प्रकृतस्यास्य होमस्य । यदि 'यदाऽऽहवनीय' इति शास्त्रं चातुर्होत्रहोमसन्निधौ पठितं स्यात्तदाऽपरिहार्यं स्यात् । तन्नास्तत्येवेति भावः ॥ ७ ॥

## उभयोः पितृयज्ञवत् ॥ ८ ॥

**पितृयज्ञवत्**— ' अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति ' इति यथा उभयोरयं यज्ञः, तथा चातुर्होत्रहोमोऽपि **उभयोः**— अहिताग्न्यनाहिताग्न्योः स्यादिति ॥ ८ ॥

## निर्देशो वा अनाहिताग्नेरनारभ्याग्निसंयोगात् ॥९॥

' एषा वा अनाहिताग्नेरिष्टिः ' इत्यनाहिताग्नेरेव निर्देशः । न आहिताग्निं प्रापयति सः । **अनारभ्याग्निसंयोगात्**--अनारभ्याधीतत्वादित्यर्थः ॥ ९ ॥

## पितृयज्ञे संयुक्तस्य पुनर्वचनम् ॥१०॥

**पितृयज्ञे संयुक्तस्य**-- आहिताग्निसंयुक्तस्य, **पुनर्वचनम्**-- ' अनाहिताग्नेरौपासनेऽग्नौ श्रपणधर्मा होमश्च ' इति पृथक् विधिरस्ति । अत्र न तथेति भावः ॥ १० ॥

अनाहिताग्निषु उपनयनहोमाधिकरणम् ॥ २ ॥

## उपनयन्नादधीत होमसंयोगात् ॥ ११ ॥

**उपनयन्**—उपनयनं कुर्वन्, आधानं कुर्यात् । जुहोतीति **होमसंयोगात्**— होमस्य आहवनीयापेक्षत्वादाहवनीयस्य आधाननाध्यत्वादिति भावः ॥ ११ ॥

## सि० ॥ स्थपतीष्टिवल्लौकिके वा विद्याकर्मानुपूर्वत्वात् ॥ १२ ॥

**विद्याकर्मानुपूर्वत्वात्**— विद्या- ' स्वाध्यायोऽध्येतव्यः ' इति विहितस्वाध्यायाध्ययनम् । कर्म—तत्साध्यमुपनयनात्मकं कर्म । एतदुभयपूर्वकत्वादाधानस्य एतयोः प्राक् तदसम्भवेन उपनयनसमये आधानस्य असम्भवात् निषादस्थपतेरिष्टिवत् लौकिकाग्नावेव उपनयनहोम इति भावः ॥ १२ ॥

## आधानं च भार्यासंयुक्तम् ॥१३॥

'क्षौमे वसानावग्नीनादधीयाताम्' इति भार्यासाहित्यमाधानस्य श्रुतम्। विद्याग्रहणोत्तरकालश्च भार्यासंयोग। ततोऽपि लौकिकाग्नावेव उपनयनहोमः ॥ १३ ॥

## अकर्म चोर्ध्वमाधानात्तत्समवायो हि कर्मभिः॥१४॥

ऊर्ध्वमाधानात् आधानादूर्ध्वं परिणीतायां भार्यायाम् अकर्म- कर्मसम्बन्धाभाव। हि-यत, तत्समवायः-तस्मिन् उपनयनकाले समवाय-कर्मभिर्भार्यासम्बन्ध, अस्तीति शेष। उपनयनात्प्राक् आधानार्थमेका भार्या, स्वाध्यायाध्ययनोत्तर च प्रजार्थमपरा अस्त्विति शङ्कितुरभिप्राय ॥१४॥

## अकर्म च दारक्रिया आधानोत्तरकाले ॥१५॥

आधानोत्तरकाले दारक्रिया अकर्म-अननुष्ठेया-नैव कार्या। अशास्त्रात्--शास्त्राभावादिति भाव ॥ १५ ॥

## श्राद्धवदिति चेत् ॥ १६ ॥

श्राद्धवत्--पितृयज्ञवत् -पिण्डपितृयज्ञो यथा आहिताग्नेरनाहिताग्न्यो-स्तथा कालद्वये भार्याद्वयमिति चेत् ॥१६॥

## न श्रुतिविप्रतिषेधात् ॥ १७ ॥

'वेदमधीत्य स्नायात्, स्नात्वा भार्यामुद्वहेत' इति वचनविरोधान्नैव सम्भवतीति भाव ॥ १७ ॥

## अर्थादन्यदेवेति चेत् ॥१८॥

अर्थात्--रागात् प्राप्तौ अन्यदेव--स्नानमुद्वाहे विदधाति। रागप्राप्तदारसङ्ग्रहस्य काले नियमपरमुक्तवचनमिति न विरोध इति चेत्- ॥१८॥

## सर्वार्थत्वात् पुत्रार्थो न प्रयोजयेत् ॥ १९ ॥

सर्वार्थत्वात् धर्मे च अर्थे च कामे च नातिचरितव्येति धर्मप्रजोभयार्थत्वादेकस्या एव दारग्रहणस्य, पुत्ररूपो ऽर्थ द्वितीयायां न प्रयोजयेत्-

न प्रेरयेत् । धर्मप्रजोभयार्थः कालविशिष्टो विवाहः प्रागुक्तवाक्येन विधीयते । अतो विवाहद्वयमप्रामाणिकमिति ॥ १९ ॥

## सोमपानात्तु प्रापणं द्वितीयस्य तस्मादुपयच्छेत्॥२०॥

उक्तयुक्त्या प्रागुपनयनादाधानसमये वा विवाहो नास्तीति स्वीकुर्मः । अथापि विवाहद्वयमप्रामाणिकमिति यदुक्तं तन्न । यतः 'तस्माद्यस्य न धर्मसम्पन्ना न प्रजासम्पन्ना वा पत्नी सोऽन्यां कुर्वीत' इति वचनात् **सोमपानात्तु**- 'सोमपो न द्वितीयां जायामभ्युपैति' इति वचनाच्च द्वितीयविवाहः प्रामाणिकः । निषेधस्य प्राप्तिपूर्वकत्वात् । प्राप्तिस्तु प्रदर्शिता । तस्मात् **उपयच्छेत्**—अन्यां भार्यां गृह्णीयात् ॥ २० ॥

## पितृयज्ञे तु दर्शनात् प्रागाधानात्प्रतीयेत ॥२१॥

**पितृयज्ञे तु**--पिण्डपितृयज्ञ 'अप्यनाहिताग्निना कार्यः' इति वचनदर्शनात् आधानात्प्रागपि प्रतीयेत--स्यादित्यर्थः ॥२१॥

### अनाहिताग्नौ स्थपतीष्ट्यधिकरणम् ॥ ३ ॥

## स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत् तादर्थ्याच्चापवृज्येत ॥ २२ ॥

'एतया निषादस्थपतिं याजयेत्' इति विहिता **स्थपतीष्टिः प्रयाजवत्**-- यथा प्रयाजादीन् चोदकाद् गृह्णाति, तथा अग्न्याधानं **प्रयोजयेत्**-- गृह्णीयादित्यर्थः । **तादर्थ्याच्च**-- तत्रत्याग्न्याधानस्य तदिष्टिमात्रार्थत्वात् तस्यामिष्टावपवृक्तायां तेऽग्नयोऽपि **अपवृज्येरन्**--उत्सृज्येरन्निति ॥ २२ ॥

## सि०॥ अपि वा लौकिकेऽग्नौ स्यात् आधानस्यासर्वशेषत्वात् ॥ २३ ॥

प्रकृतेयमिष्टिः लौकिकाग्नावेव स्यात् । कुतः? **अग्न्याधानस्य असर्वशेषत्वात्**-- यावत्पुरुषकर्तृकयज्ञाङ्गत्वाभावात् । 'वसन्ते ब्राह्मणो अग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' इत्याधानोत्पत्तिवाक्ये त्रैवर्णिककर्तृकत्वश्रवणात् त्रैवर्णिककर्तृकयज्ञाङ्गत्वमेव तस्येति भावः ॥ २३ ॥

अनाहितेऽभावकीर्णिपश्वनुष्ठानाधिकरणम् ॥ ४ ॥

## अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात् ॥२४॥

'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत' इति ब्रह्मचारिणः क्षतव्रतत्वे विहितः **अवकीर्णिपशुः**— *निरऋतिदेवताकगर्दभद्रव्यको यागः* **तद्वत्**— स्थपतीष्टिवत् लौकिकाग्नावेव कार्यः। **आधानस्य अप्राप्तकालत्वात्**— तं प्रति प्राप्त्यभावादित्यर्थः ॥ २४ ॥

दैवकर्मणामुदगयनादिकालताधिकरणम् ॥ ५ ॥

## उदगयनपूर्वपक्षाहःपुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शनात् ॥ २५ ॥

'उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः' इत्यादिस्मृतेः,' 'एतद्वै देवानां रूपं यदुदगयनं पूर्वपक्षोऽहः' इति रूपस्य 'पूर्वाह्णो वै देवाना, मध्यन्दिनो मनुष्याणाम्, अपराह्णः पितृणाम्' इत्यन्यार्थस्य च दर्शनात् **दैवानि**–चौलोपनयनविवाहप्रभृतीनि शुभकर्माणि, उक्तपुण्यकालेषु कार्याणीत्यर्थ ॥ २५ ॥

## अहनि च कर्मसाकल्यम् ॥ २६ ॥

तथा **अहनि**—दिवैव, सकलं निर्दिष्टं कर्म कर्तव्यम्। न रात्रावपि सिद्धम् ॥ २६ ॥

पित्र्यकर्मणोऽपरपक्षादिकालताधिकरणम् ॥ ६ ॥

## इतरेषु तु पित्र्याणि ॥ २७ ॥

**पित्र्याणि**— श्राद्धादीनि कर्माणि, **इतरेषु**— अपरपक्षापराह्णकालेषु कर्तव्यानि। अन्यार्थदर्शनादिभ्य इति शेषः ॥ २७ ॥

ज्योतिष्टोमाङ्गयाञ्चाक्रययोर्नित्यताधिकरणम् ॥ ७ ॥

## याञ्चाक्रयणमविद्यमाने लोकवत् ॥ २८ ॥

ज्योतिष्टोमे 'द्वादशरात्रीर्दीक्षितो भृतिं विन्वीत' तथा 'सोमं क्रीणाति' इति याञ्चाक्रयणे श्रुते। ते उभे धने सोमे च अविद्यमाने एव कार्ये, न

विद्यमाने । **लोकवत्**— लोके यस्य द्रव्यादिकं नास्ति स एव याचते क्रीणाति च । तद्वदत्रापि द्रष्टव्यमिति ॥ २८ ॥

## सि० ॥ नियतं वा अर्थवत्त्वात्स्यात् ॥ २९ ॥

**नियतं**— नित्यमेव तत् । तच्च विद्यमानेऽपि तस्मिन् धनादावश्यं कार्यं तत् । कुतः ? **अर्थवत्त्वात्**— क्रत्वपूर्वजननरूपफलवत्त्वात् । लोके अर्थानुगामी शब्दः । वेदे तु शब्दानुसार्यर्थ इति भावः ॥ २९ ॥

### ज्योतिष्टोमादिषु पयोव्रतादीनामपि नित्यताधिकरणम् ॥८॥

## तथा भक्षप्रैषाच्छादनसंज्ञप्तहोमद्वेषम् ॥३०॥

तण्डुलादिसत्त्वेऽपि 'पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति विहितपयआदिरेव तस्य तस्य भक्षः ज्योतिष्टोमे श्रुतः । एवं दर्शपूर्णमासयोः श्रुतः 'प्रोक्षणीरासादय, इध्माबर्हिरुपसादय, स्रुचः सम्मृड्ढि, पत्नीं सन्नह्य आज्येनोदेहि' इत्यादि प्रैषः प्रोक्षण्यासादनज्ञानसत्त्वेऽपि । एवमन्यवस्त्रसत्त्वेऽपि 'दर्भमयं वासो भवति' इति वाजपेये श्रुतं दर्भमयवस्त्रपरिधानम् । एवं पशुनाशकृत्पादाघातादिकरणेऽपि 'यत् पशुर्मायुमकृतोरो वा पद्भिराहत अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहस' इति मन्त्रेण पशौ संज्ञपनहोमः । एवं द्वेष्याभावेऽपि 'योऽस्मान् द्वेष्टि यं च वयं द्विष्मः जातवेदः' इति मन्त्रपाठश्च **तथा**—पूर्वाधिकरणोक्तनियमवत् नियतं कार्यः ॥३०॥

### अपररात्रे व्रतस्य अनियमाधिकरणम् ॥९॥

## अनर्थकं त्वनित्यं स्यात् ॥३१॥

ज्योतिष्टोमे 'मध्यन्दिने अपररात्रे वा व्रतं व्रतयति' इति श्रुतम् । तत्र यस्मिन् काले कृतं व्रतं सम्यक् न जरिष्यतीति मन्येत । तदा क्रियमाणं तद् व्रतम् **अनर्थकम्**—अजीर्णादिदोषेण महदनिष्टजनकं स्यात् । अतस्तदानीम**नित्यं**—कर्तव्यमेवेति नियमस्य त्याग एवेति भावः ॥ ३१ ॥

### छागस्यैव अग्नीषोमीयपशुत्वाधिकरणम् ॥ १० ॥

## पशुचोदनायामनियमः, अविशेषात् ॥३२॥

ज्योतिष्टोमे ' यो दीक्षितो यदग्नीषोमीयं पशुमालभते ' इति श्रुतायां **पशुचोदनायां**— पश्वालम्भवाक्ये, यः **अनियमः**— कोऽपि पशुः, न छाग एवेति नियमः । कुतः ? **अविशेषात्** विशेषस्य अश्रवणादिति ॥३२॥

## सि० ॥ छागो वा मन्त्रवर्णात् ॥ ३३ ॥

' छागस्य वपाया मेदसोऽनुब्रूहि ' इति **मन्त्रवर्णात्**— मन्त्रलिङ्गात् छाग एवेति निश्चयः ॥ ३३ ॥

## न चोदनाविरोधात् ॥ ३४ ॥

**चोदनाविरोधात्**— विधिवाक्यस्य प्राबल्यात् दुर्बलेन मन्त्रलिङ्गेन न तस्य सङ्कोच इति ॥ ३४ ॥

## आर्षेयवदिति चेत् ॥ ३५ ॥

**आर्षेयवत्**—' आर्षेयं वृणीते ' इत्युक्त्वा ' त्रीन् वृणीते ' इत्यनेन यथा तस्य सङ्कोचः, तथा अत्रापि स्यादिति चेत्— ॥ ३५ ॥

## न तत्र ह्यचोदितत्वात् ॥ ३६ ॥

**तत्र**—छागे, **अचोदितत्वात्**—विधेरभावात, न सङ्कोचः । आर्षेयस्थले तु ' त्रीन् वृणीते ' इति सामान्यप्राप्तस्य त्रित्वेन सङ्कोचे विधिरस्तीति विषमो दृष्टान्तः ॥ ३६ ॥

## नियमो वैकार्थ्यं ह्यर्थभेदाद्भेदः पृथक्त्वेना-भिधानात् ॥३७॥

**नियमो वा**—श्रुतौ पशुपदवाच्यश्छाग इति नियम एव, **हि**—यतः, **ऐकार्थ्यं**—पशुपदार्थपशुत्वच्छागपदार्थच्छागत्वयोरविरोधः । अतो मन्त्रलिङ्गस्य दुर्बलत्वेऽपि तेन शब्दार्थस्य बाधो न क्रियते । यत्र तु **पृथक्त्वेना-भिधानात्**—परस्परविरोधेनार्थभेदात् मन्त्रलिङ्गविध्यर्थयोर्भेदः, तत्र मन्त्रलि-

ङ्गमन्यार्थं स्यान्नाम । प्रकृते न तथा । अत. सङ्कोचे शक्यार्थबाधाभावात् दुर्बलेनापि मन्त्रलिङ्गेन सङ्कोचो युक्त इति भावः ॥ ३७ ॥

## अनियमो वा अर्थान्तरत्वात् अन्यत्वं व्यतिरेकशब्दभेदाभ्याम् ॥ ३८ ॥

**अर्थान्तरत्वात्**--छागपशुशब्दयोरपर्यायशब्दत्वात्, **व्यतिरेकशब्दभेदाभ्यां च**--पशुत्वस्य छागत्वाभाववद् गवादिवृत्तित्वाभिन्नशब्दवाच्यत्वाभ्या हेतुभ्या च, **अन्यत्वं**--भिन्नत्वं-वैरूप्यमिति यावत् । अतो **अनियमः**-यः कोऽपि पशुः, न छाग एवेति नियम इति ॥ ३८ ॥

## सि० ॥ न वा प्रयोगसमवायित्वात् ॥३९॥

नैवानियमः । **प्रयोगसमवायित्वात्**--उक्तमन्त्रस्य नित्यं प्रयोगसम्बन्धात् नियम एव । अन्यथा अश्वादिग्रहणे मन्त्रलिङ्गविरोधेन मन्त्रः पाक्षिकः स्यादिति भावः ॥ ३९ ॥

## छागे न कर्माख्या रूपलिङ्गाभ्याम् ॥४०॥

छिदेर्गमेश्च छागशब्दस्य प्रसिद्धेश्छिन्नगतिश्छाग इति मन्त्रलिङ्गमपि अन्यत्राश्वादौ योगेन अबाधितमित्याशङ्कायामाह--**छागेनेति** । छागेनैव कर्मयोगः । **आख्यारूपलिङ्गाभ्याम्**--रूढशक्तिपुलिङ्गाभ्यामित्यर्थ. । रूढिर्योगमपहरतीति न्यायाद्योगशक्तेरप्रवृत्तिरिति भाव ॥ ४० ॥

## रूपान्यत्वान्न जातिशब्दः स्यात् ॥४१॥

'छागो बस्तश्छागलक.' इति शब्दाना वयोविशेषपरत्वेऽपि नाश्वादिपशुवाचकत्वम् । कुतः ? **रूपान्यत्वात्**-- छागवृत्तिवयोविशेषस्य अश्ववृत्तिवयस अन्यत्वात् । अतो वयोविशेषविशिष्टच्छागत्वरूपजातिवाच्येव छागशब्दः स्यात् । यथा कलभशब्दः वयोविशेषविशिष्टं हस्तिनमेव ब्रूते । न अश्वादिकम् । तथा छागशब्दः वयोविशेषयुतं छागलकमेवाचष्टे, नान्यमिति भावः ॥ ४१ ॥

## विकार इति चेत् ॥ ४२ ॥

नदीशब्दस्य शब्दविशेषेऽपि वैय्याकरणे प्रयुज्यमानत्वाद् पदपदार्थ-सम्बन्धो न नियत । अतो विकारः— कल्पितसम्बन्ध एव अत्रास्त्विति चेत्— ॥ ४२ ॥

## न औत्पत्तिकत्वात् ॥ ४३ ॥

पदपदार्थसम्बन्धे न विकार । नित्य औत्पत्तिकत्वात्—प्रथमाध्यायीयपञ्चमाधिकरण पञ्चमसूत्रेण नित्यत्वस्य उक्तत्वात् ॥४३॥ (१।१।५)

## स नैमित्तिकः पशोर्गुणस्याचोदितत्वात् ॥ ४४ ॥

'सुषिरो वा एतर्हि पशु यर्हि वपामुत्खिदन्ति' इत्यर्थवादागत-च्छिद्रनिमित्तकछागशब्द । स चान्यत्रापि वर्तितुमर्हतीत्याशङ्कायामाह— न नैमित्तिको नेति पूर्वसूत्राद् नञनुवृत्ति । सः— छागशब्द, नैमित्तिक— छिद्रनिमित्तको नैव भवति । कुत ' अग्नीषोमीय पशुमालभेत ' इति श्रुते पशौ गुणस्य—छिद्रत्वस्य विधिविहितत्वाभावात् । रूढियोगमपहरतीति युक्तत्वाच ॥ ४४ ॥

## जातेर्वा तत्प्रायवचनार्थवत्त्वाभ्याम् ॥४५॥

तस्मात्-तत्प्रायवचन— जातौ भूरिप्रयोगेण रूढिशक्त्या, अर्थवत्त्वेन— विधानिरङ्कार्थवत्त्वेन च, जातेरेव वाचकश्छागशब्द, नान्यवाचक इति सिद्धम् ॥ ४५ ॥

**इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्या षष्ठाध्यायस्य अष्टमः पादः ॥८॥ संपूर्णश्च षष्ठाध्यायः ॥६॥ श्रीः ॥**

**॥ इति पूर्वषट्कः समाप्तः ॥**

—×—

# अथ पूर्वमीमांसासूत्रवृत्तेः

भावबोधिन्याः

उत्तरः षट्कः ॥

## ॥ अथ सप्तमाध्यायस्य प्रथमः पादः ॥

अभिवन्द्य महर्षिजैमिनीयं पदपाथोजयुगं समादरात् ।
विवृणोमि तदीयसूत्रसङ्घोत्तरषट्कं कृपया तदीयया ॥१॥
जैमिनेर्विमलसूक्तिह्लादिनीमज्जनेन विशदं मम चेतः ।
बालवल्लुठतु शम्भुपदाब्जे येन गर्भवसतिर्न पुनः स्यात् ॥२॥
विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥३॥
प्रमाणाद्यधिकारान्तैः षडध्यायैर्निरूपिते ।
उपदेशेऽतिदेशोऽथ तत्सापेक्षो विचार्यते ॥४॥

पूर्वषट्केन औपदेशिका धर्मा विचारिताः । अथोत्तरषट्केन वैकृत आतिदेशिकधर्मविचारः प्रस्तूयते । अपेक्षितस्यार्थजातस्य साक्षात्प्रतिपादको वचनसन्दर्भो यत्र पठ्यते स **उपदेशः** । **अतिदेशस्तु**—यस्मात्प्राकृतात्कर्मणः तत्समानेषु कर्मसु धर्मप्रवेशो येन स्यात् स अतिदेशः, इति तल्लक्षणम् । तदुक्तम्—

अन्यत्रैव प्रणीतायाः कृत्स्नाया धर्मसन्ततेः ।
अन्यत्र कार्यतः प्राप्तिरतिदेशोऽभिधीयते ॥१॥ इति ॥

एतेन पूर्वोत्तरषट्कयोः हेतुहेतुमद्भावः सङ्गतिः सूचिता ।

अथ प्रयाजादिधर्माणामपूर्वप्रयुक्तत्वाधिकरणम् ॥ १ ॥

### सि०॥ श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात् ॥ १ ॥

**मुख्यभेदे**—फलवत्त्वेन मुख्यानामपूर्वाणां शब्दान्तरादिभिर्भेदे सति **शेषाणां**—तदर्थानां प्रयाजादीनां, **यथाधिकारं**—यस्य यत्र प्रकरणं तत्रैव, **भावः**— व्यवस्था स्यात् । **श्रुतिप्रमाणत्वात्** — अयमस्य शेष इति श्रुति-

प्रमाणैकगम्यत्वात् । दर्शपूर्णमासीयकथंभावाकाङ्क्षयाऽन्विताः नान्यत्र गन्तुं समर्था इति भावः ॥ १ ॥

## पू० प० ॥ उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैक-धर्म्यं स्यात् ॥ २ ॥

**ऐकधर्म्यम्**— सर्वेषां यागानां तुल्यधर्मत्वमेव स्यादेतेषां प्रयाजादीनां धर्माणाम् । कुतः ? **उत्पत्तेः**— यजेः, **योऽर्थः**— अपूर्वं, तयोः **अविभागात्**— अविशेषादित्यर्थः । **सत्त्ववत्**— यथा 'गां पदा न स्पृशेदित्युक्ते न सन्निहितायामेव कस्याचिद् गवि अयं पादस्पर्शनिषेधः । अपि तु गोशब्देन तत्र यावद्गोग्रहणम् । तथा यागमुद्दिश्य विधीयमाना एते धर्माः सर्वयागार्था भवितुमर्हन्तीति ॥ २ ॥

## सि०॥ चोदनाशेषभावाद्वा तद्भेदाद् व्यवतिष्ठेरन् उत्पत्तेर्गुणभूतत्वात् ॥ ३ ॥

प्रयाजादयो धर्मा दर्शपूर्णमासार्था एवेति **व्यवतिष्ठेरन्** । कुतः ? दर्शपूर्णमासनाम्नोः कर्मणोः **उत्पत्तौ**-अपूर्वे, **गुणभूतत्वात्**-अङ्गत्वात्-तदर्थत्वादित्यर्थः । तथा **चोदनाशेषभावात्** । **चोदनायाः**—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति विधेः, **शेषभावात्**—एकदेशरूपत्वात्, **तद्भेदात्**— अपूर्वभेदस्य द्वितीये 'चोदना पुनरारम्भः' (२।१।५।) इत्यधिकरणे व्यवस्थापितत्वाच्चेत्यर्थः । अत्रेदं रहस्यम्—प्रयाजादिधर्माणां यागाङ्गत्वं न वाक्यप्रमाणेन । अपि तु कथंभावाकाङ्क्षारूपप्रकरणेनैव । तच्च प्रकरणं यागेन अपूर्वं कुर्यादित्युक्तौ कथं यागेन अपूर्वं कर्तव्यमिति यागविधिश्रवणजन्याकाङ्क्षापूर्वकतया निखिलाङ्गविधिवाक्यानां तत्सम्बन्धात् सः धर्मसमाम्नायः कर्मविध्येकदेशरूपः । इत्थमपूर्वोद्देशेन कर्मविधानाद्यागो विधेय इति दर्शपूर्णमा... धर्मास्तदपूर्वप्रयुक्ता एव, न त्वपूर्वान्तरप्रयुक्ताः ।

## सत्त्वे लक्षणसंयोगात्सार्वत्रिकं प्रतीयेत ॥४॥

**सत्त्वे**-- गोव्यक्तौ, **लक्षणसंयोगात्**- लक्षणावृत्तेः सम्बन्धात्, गोपदं **सार्वत्रिकं**— सकलगोसाधारण, प्रतीयेत । गोपदेन व्यक्तिं लक्षयित्वा तदनुवादेन पादस्पर्शनिषेधविधानात् सन्निहितत्वविशिष्टस्य उद्देश्यत्वे वाक्यभेदप्रसक्तेः गोत्वावच्छिन्नपरत्वं तत्र । अत्र तु यागस्य फलं प्रति गुणत्वात् सन्निहितत्वविशिष्टयागविधौ न वाक्यभेद इत्युक्तदृष्टान्तवैषम्यमिति भाव. ॥ ४ ॥

## अविभागात्तु नैवं स्यात् ॥ ५ ॥

**नैवम्**— अपूर्वार्था धर्मा इति न युक्तम् । कुतः ? **अविभागात्**- प्रत्यक्षप्रमाणावगतयागार्थतया अङ्गाना यागेन अविभागात्- विभागासम्भवादित्यर्थः । अङ्गभूते द्रव्ये तथा देवतायां मन्त्रेषु अग्न्यादौ च यागकारणत्वं प्रत्यक्षगम्यम् । अपूर्वसाधनत्वं तु आनुमानिकम् । तच्च प्रत्यक्षाद्दुर्बलमिति नापूर्वार्थत्वमङ्गानामिति पुनराशङ्का ॥ ५ ॥

## द्व्यर्थत्वं च विप्रतिषिद्धम् ॥ ६ ॥

यदि दर्शपूर्णमासार्था एव प्रयाजादयो न॑ . तदा सौर्ययागे प्रयाजाभावेन 'प्रयाजे प्रयाजे कृष्णलं जुहोती' ति वाक्यस्य यागमुद्दिश्य प्रयाजविध्यर्थत्व, प्रयाजमुद्दिश्य च कृष्णलविध्यर्थत्वमिति **द्व्यर्थत्वं विप्रतिषिद्धम्**- वाक्यभेदापत्तेरन्याय्यम् । मन्मते तु धर्माणा सर्वार्थत्वात् तत्र प्रयाजाना विद्यमानत्वात् कृष्णलमात्रविधानमिति न स दोषः ॥ ६ ॥

## सि० ॥ उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात् ततश्च कर्मभेदः स्यात् ॥ ७ ॥

**चोदनायाम्**—अपूर्वे, धर्माणां **प्रवृत्तिः स्यात्** । **उत्पत्तौ**-यागे, धर्माणां **विध्यभावात्** । तस्मादपूर्वार्थत्वाद्धर्माणां तद्भेदात् **कर्मणः**— धात्वर्थस्य, **भेदः स्यात्** ॥ ७ ॥

## यदि वाऽप्यभिधानवत्सामान्यात्सर्वसिद्धिः स्यात् ॥ ८ ॥

**यदि वा**—प्रयाजादिधर्माणामपूर्वत्वाद्धर्मान्तरेऽपि **अभिधानवत्सामान्यात्**— अभिधानमपूर्वमिति नामत्वेन सर्वेषामपूर्वाणां तुल्यत्वात्, **सर्वसिद्धिः**— अपूर्वद्वारा सर्वयागार्थत्व, स्यात्। यथा—'वाहीकोऽतिथिरागत, तस्मै यवान्न दीयतामित्युक्ते यवान्नदानप्रयोजकत्वेन वाहीकमात्रं जानाति तद्दाता। न पुरावर्णितव्यक्तिमेव केवलम्। तथाऽत्रापीति भाव ॥ ८ ॥

## अर्थस्य त्वविभक्तत्वात्तथा स्यात् अभिधानेषु पूर्ववत्त्वात्प्रयोगस्य कर्मणः शब्दभाव्यत्वात् विभागाच्छेषाणामप्रवृत्तिः स्यात् ॥ ९ ॥

**प्रयोगस्य**— 'वाहीकोऽतिथिरागतस्तस्य यवान्न दीयतामित्युक्तवाक्यप्रयोगस्य **पूर्ववत्त्वात्**— पूर्वमसकृत श्रुतत्वेन, तद्देशसम्बन्धी य स यवान्नप्रिय', इति व्याप्ति गृहीता यवान्नदानस्य निमित्त तद्देशसम्बन्ध, न पुरुष इति निश्चिनोति। इति वाहीकाद्य**भिधानेषु अर्थस्य**--वाहीकदेशसम्बन्धस्य, तावत्पुरुषेषु **अविभक्तत्वात्**-- नियतत्वात्, तत्र **तथा स्यात्**--यो यो वाहीकस्तस्य यवान्नदान युक्तमेव। अत्र तु **कर्मणः**—अपूर्वस्य, **शब्दभाव्यत्वात्**- शब्दैकगम्यत्वात्, **तद्विभागात्**- तस्य-अपूर्वस्य शब्देन **विभागात्**— कर्मभेदेन भेदसिद्धे, **शेषाणां**-- प्रयाजादिधर्माणां सर्वत्र **अप्रवृत्तिः स्यात्**—यत्र पठितं तत्रैव विश्रान्ति। एवं दृष्टान्तवैषम्येणोक्तशङ्कानिरास वर्णन भाव ॥ ९ ॥

## स्मृतिरिति चेत् ॥ १० ॥

ननु, अरुणपराशरा इति नाम्ना शाखिना परिचरेषु ' ये दर्शपूर्णमास-

धर्मास्ते सर्वेष्टीनामित्यारभ्य यावत्सर्वा प्रकृतिविकृतयोऽनुक्रान्ता ' इति स्मृतिरूपं ब्राह्मणं स्मृतं तस्य का गतिरिति चेत्—॥ १० ॥

## न पूर्वत्वात् ॥ ११॥

**नेति** शङ्का निरस्यते । **पूर्वत्वात्** दर्शपूर्णमासप्रकृतिकत्वं सर्वासां विकृतीष्टीनाम । तासु चोदकशास्त्रेण तद्धर्मप्राप्तिरिति वक्ष्यमाणानुवादिका सा स्मृतिरिति भाव ॥ ११ ॥

## अर्थस्य शब्दभाव्यत्वात् प्रकरणनिबन्धनात् शब्दादेवान्यत्र भावः स्यात् ॥ १२ ॥

**अर्थस्य**— अङ्गकलापस्य, **शब्दभाव्यत्वात्**— विधिगम्यत्वात्, तेषामङ्गानां **प्रकरणेन निबन्धनात्**— अन्यत्र गन्तुमशक्यत्वात्, **अन्यत्र**- सौर्ययागादौ, अङ्गानां **भावः**— प्राप्तिः, **शब्दादेव**—वक्ष्यमाणेन अतिदेशशास्त्रेणैव स्यात् । तस्मादतिदेशशास्त्रमारम्भणीयमित्युक्तार्थनिगमनसूत्रमिदमिति भाव ॥ १२ ॥

**समानमितरच्छ्येनेनेति श्रुत्या इषौ श्येनीयविशेषधर्मातिदेशाधिकरणम् ॥ २ ॥**

## समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात् ॥१३॥

इषुश्येननामानौ द्वावभिचारिकौ एकाहौ अव्यक्तलिङ्गत्वेन ज्योतिष्टोमविकारौ यागौ । अतस्तयोरुभयोर्ज्योतिष्टोमधर्माश्चोदकेन प्राप्ताः । तत्र इषौ ' समानमितरत् श्येनेन ' इति श्रुतम् । तस्य **समाने**— उक्तार्थे, श्रुतस्य **उत्पन्नाधिकारः**— अनुवादः स्यात् । न विधिः । कुत ' **पूर्ववत्त्वात्**'- ज्योतिष्टोमविकृतित्वादिषोः । तत्र प्रकृतित अतिदेशेन प्राप्तानामेवानुवाद इत्यतिदेशशास्त्रं नारम्भणीयमित्याक्षेपमङ्गति ॥ १३ ॥

## श्येनस्येति चेत् ॥१४॥

श्ये नविशेषितोऽग्नीषोमीयादीन् धर्मानुपदिशति उक्तार्थस्यानिर्णि चेत्- ॥१४॥

## न असन्निधानात् ॥ १५ ॥

नैवम् । यत इयेने ज्योतिष्टोमधर्मा श्येनस्य वैशेषिकधर्माश्च सन्ति । तत्रेतरपदेन प्रकृतिधर्मा एव ग्राह्या । तत्प्राप्यत्तलिङ्गत्वेन तेषामेव सन्निधानादिति ॥ १५ ॥

## सि०॥ अपि वा यद्यपूर्वत्वादितरदधिकार्थे ज्योतिष्टोमिकत्वात् विधेस्तद्वाचकत्वं समानं स्यात् ॥१६॥

अपि वेति पक्षान्तरपरिग्रहद्योतकः । विधिरयं श्येनवैशेषिकाणां, न ज्योतिष्टोमिकानुवादः । कुतः ? अपूर्वत्वात्– उक्तवाक्यस्य विधायकत्वेनैव सार्थक्यात् । इतरत्–इतरदिति पदम्, अधिकार्थे ज्योतिष्टोमिकाद्विधेः– ज्योतिष्टोमसम्बन्धिधर्मेभ्यः यदधिकं तद्बोधकं विधिर्धर्मजातं तत्कथनेन समानमिति वचनार्थः । अपूर्वत्वेन विधिः सार्थक इति भावः ॥१६ ॥

### एतद्ब्राह्मणानीत्यादिना पञ्चसु हविष्षु सार्थवादविध्यतिदेशाधिकरणम् ॥ ३ ॥

## पञ्चसरेष्वर्थवादातिदेशः सन्निधानात् ॥१७॥

चातुर्मास्ये वैश्वदेव—वरुणप्रघास- साकमेध शुनासीरीयेति चत्वारि पर्वाणि सन्ति । तत्राद्ये वैश्वदेवपर्वणि " आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुम, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम्, मारुतं सप्तकपालम्, वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालम् " इत्यष्टौ हवींषि विहितानि । ' अर्भ्राणि वा एतानि हवींषि,' इति ब्राह्मणे तेषां हविषामर्थवाद आम्नातः । तथा ' त्रेधा सन्नद्धं बर्हिर्भवति । त्रेधा सन्नद्ध इध्मः, नव प्रयाजाः, नवानुयाजाः ' इत्यङ्गविधयोऽपि तत्राऽऽम्नाताः । एवं स्थिते द्वितीये वरुणप्रघासपर्वणि पूर्वोक्तानि आग्नेयादीनि पञ्च हवींषि विधाय तदीयं पूर्वोदाहृतं ब्राह्मणमेषु पञ्चसु हविष्षु अतिदिशति । ' एतद्ब्राह्मणान्येव पञ्च हवींषि, यद्ब्राह्मणानीतराणि ' इति । तत्र

**पञ्चसरेषु**--आग्नेयादीनां पञ्चहविषा प्रतिपर्वगमनमस्तीति पञ्चसरपदवाच्येषु तेषु द्वितीये वरुणप्रघासे उक्तवाक्येनातिदिष्टेषु ब्राह्मणपदेन **अर्थवादातिदेशः** -अर्थवादमात्रस्य अतिदेशः स्यात् । न अङ्गविधीनाम् । कुतः? **सन्निधानात्**-विधिवाक्यशेषत्वेन तस्यार्थवादस्य सन्निधानादिति ।१७॥

## सि० ॥ सर्वस्य चैकशब्द्यात् ॥१८॥

**सर्वस्य**--अङ्गविधीनां ब्राह्मणानां च, अतिदेशः स्यात् । **ऐकशब्द्यात्**-एकेन ब्राह्मणशब्देन उभयो प्रतिपाद्यत्वात् ॥ १८ ॥

## लिङ्गदर्शनाच्च ॥ १९ ॥

वरुणप्रघासे 'त्रिंशदाहुतयो वाजिनो यजन्ति, आहुतीनां सम्पत्त्यै त्रिंशत्त्वाय' इति **लिङ्गदर्शनात्**-त्रिंशदाहुतिपरिगणनमङ्गविध्यतिदेशं विना अनुपपन्नमिति भावः ॥ १९ ॥

## विहिताम्नानान्नेति चेत् ॥ २० ॥

**विहिताम्नानात्**— वैश्वदेवपर्वणि विहितस्य 'अग्निं मन्थन्ति प्रसुवो भवन्ति' इत्याग्निमन्थनादेः पुनराम्नानात्--पुनर्विधानात्, **न** अङ्गविध्यतिदेशः । विध्यतिदेशश्चेत्तत्पुनर्विधानं व्यर्थमिति भावः ॥२०॥

## न इतरार्थत्वात् ॥ २१ ॥

**न** व्यर्थं पुनर्विधानम् । **इतरार्थत्वात्**- मारुतप्रचारार्थत्वात् ॥ २१॥

**एतद्ब्राह्मण इत्यनेन एककपालैन्द्राग्न्योः सार्थवादविध्यतिदेशाधिकरणम् ॥ ४ ॥**

## एककपालैन्द्राग्नौ च तद्वत् ॥ २२ ॥

तथा साकमेधे 'एतद्ब्राह्मण ऐन्द्राग्नः एतद्ब्राह्मण एककपालः यद्ब्राह्मण इतरइतरश्चेत्यत्रापि **तद्वत्**-पूर्वोक्तरपक्षौ पूर्वाधिकरणवदित्यर्थः ॥ २२॥

**साकमेधे वारुणप्राघासिकैककपालातिदेशाधिकरणम् ॥ ५ ॥**

**एककपालानां वैश्वदेविकः प्रकृतिः आग्रयणे सर्वहोमापरिवृत्तिदर्शनात् अवभृथे च सकृद्द्व्यवदानस्य वचनात् ॥ २३ ॥**

वैश्वदेवपर्वणि 'द्यावापृथिव्य एककपाल' वरुणप्रघासपर्वणि च 'काय एककपाल' इति स्थितम्। साकमेधपर्वणि तु वैश्वदेवीयमेककपालमित्युक्त्वा तत्रैव 'एतद्ब्राह्मण एककपाल' इत्याम्नातम्। अत्रैतच्छब्देन वरुणप्रघासीयैककपाल एव ग्राह्यः। न विहितबहुधर्मकेऽपि वैश्वदेवीयैककपालः। कुतः? तस्य समस्तैककपालप्रकृतित्वात्। तथा हि— **एककपालानां**— यावदेककपालानां, **वैश्वदेविकः**— वैश्वदेविकैककपालः, **प्रकृतिः**। कुतः? **आग्रयणे** द्यावापृथिव्यैककपाले एव 'सर्वहुतं करोति, आज्यस्यैव द्यावापृथिव्यौ यजेत' इत्याज्ययागविधिपरेण वाक्येन **सर्वहोमस्य अपरिवृत्तिं** दर्शयति। **अवभृथे च** वारुणैककपाले 'इदमेवैककपालस्य द्विरवद्यति' इति द्विरवदानस्य पुनर्विधानम्। तदेतत्सर्वं वैश्वदेविके एककपाले विहितम्। अतः सर्वेषामेककपालानां सः प्रकृतिः। प्रकृतित्वाच्च साकमेधीयेऽप्येककपाले तद्धर्माः प्राप्ता इति तेषामुपदेशो निष्फलः। वारुणप्रघासस्य '*हिरण्मयस्य स्रुव शमीमय्यो वा*' इत्यादयो ये वैशेषिका धर्मास्ते परं तत्राप्राप्ताः। तस्मात्तेषामुपदेशार्थं वारुणप्राघासिकैककपालस्य ग्रहणमेव साकमेधे पर्वणि श्रूयमाणवाक्यस्थैतच्छब्देन न्याय्यम्। न वैश्वदेवीयैककपालस्येति सिद्धम् ॥२३॥

इति पूर्वमीमांसासूत्रवृत्तौ **भावबोधिन्यां** सप्तमाध्यायस्य प्रथमः पादः ॥१॥ श्रीः ॥

## ॥ अथ सप्तमाध्यायस्य द्वितीयः पादः ॥

रथन्तरादिशब्दस्य गानविशेषार्थत्वाधिकरणम् ॥ १ ॥

### साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम् ॥१॥

'अभि त्वा शूर नो नुम.' इत्येतस्यामृचि गानविशेषेण गीयमानं साम रथन्तरशब्दवाच्यम् । तच 'कवतीषु रथन्तर गायति' कवतीषु–' कयानश्चित्र आभुवदित्याद्यास्तिस्र ऋचः कवत्यः तासु, वामदेव्य साम अध्ययनतः प्राप्तम् । तद्वाधित्वं तासु रथन्तरसामगान कार्यमित्याेदिश्यते । तत्र गानस्य गानयुक्तऋचो वा अतिदेश इति विचिकित्सायामाह **साम्नः अभिधानशब्देन**-वाचकशब्देन रथन्तरमित्यानुपूर्विक्रमेण, **यथाशिष्टं**—गुरुपरम्परया यथोपदिष्टं तथा प्रवृत्तिस्तस्य शब्दस्य स्यात् । रथन्तर साम पठ इत्युक्ते गानयुक्तामृचं पठति । अतो गानयुक्ताया ऋचोऽतिदेशोऽयमिति ॥ १ ॥

### शब्दैस्त्वर्थविधित्वात् अर्थान्तरे अप्रवृत्तिः स्यात् पृथग्भावात् क्रियाया ह्यभिसम्बन्धः ॥ २ ॥

अप्रवृत्तिः-न ऋचः प्रवृत्तिः । कुतः? **शब्दैस्त्वर्थविधित्वात्**—शब्दाना स्वस्वार्थबोधफलकत्वात्, **अर्थान्तरे**—अन्यशब्दार्थे, अन्यशब्दस्य प्रवृत्तिर्नैव स्यात् । **पृथग्भावात्**– तत्तदर्थवाचकशब्दानां पृथक्त्वात्, **क्रियायाः**—तत्तदर्थस्य, तेन तेन शब्देन सम्बन्ध. । ऋचोऽतिदेशे 'अभि त्वा शूर नो नुमेति ऋचो बोध्यो योऽर्थः सः 'कयानश्चित्र आभुवदिति ऋचा बोधनीयः । स च न सम्भवति । तत्तदर्थभेदात । अतः ऋगतिदेशो न सम्भवतीति भावः ॥ २ ॥

### स्वार्थे वा स्यात्प्रयोजनं क्रियायास्तदङ्गभावेनोपदिश्येरन् ॥ ३ ॥

**स्वार्थे वा**— स्वशक्यार्थबोधने प्रवर्तमाना अभि त्वापृच येन कर्मणे-त्सेत्तत्र जयान् जुहुयादितितत्**तदङ्गभावेनोपादिश्येरन्**- तासां कवतीनाम-ङ्गत्वेन विधीयेरन् । **क्रियायाः**— अभित्वेति ऋक्पाठस्य, **प्रयोजनं**— फल, प्रयाजादीनामिव अदृष्टमपूर्वं कल्पनीयम् । ऋगन्तरस्य ऋगन्तरार्थ-बोधकत्वाभावेऽपि अदृष्टार्थत्वेन तत्प्रवृत्तिः स्यादिति ॥ ३ ॥

## शब्दमात्रमिति चेत् ॥ ४ ॥

पूर्वमते फलस्य कल्प्यत्वेन दु:श्लिष्टत्वान्मतान्तरमाह—**शब्दमात्रं**— रथन्तरमित्यानुपूर्वीविशिष्ट तावन्मात्र कवतीषु ऋक्षु योग्यम् । रथन्तरशब्देन कवतीरभिलपेदिति चेत्—॥ ४ ॥

## न औत्पत्तिकत्वात् ॥ ५ ॥

नामिनाम्नो सम्बन्धस्य **औत्पत्तिकत्वात्**— स्वतःसिद्धत्वात्-नित्यत्वात्, **न** रथन्तरशब्दस्य कवत्यर्थत्व सम्भवति । औत्पत्तिकसम्बन्धस्य अभावादिति भाव ॥ ५ ॥

## शास्त्रं चैवमनर्थकं स्यात् ॥ ६ ॥

**शास्त्रं चैवं**—' कवतीषु रथन्तरं गायती' ति अतिदेशशास्त्रमप्येवमन-र्थकं स्याद् । अनेन हि वचनेन अतिदेशो विधेय. । स. असिद्ध स्यात् । अस्य रथन्तरशब्दस्य अन्यत्राङ्गत्वे अक्लृप्तस्य तस्य अत्रैव अपूर्वत्वादिति भाव ॥ ६ ॥

## स्वरस्येति चेत् ॥ ७ ॥

ननु रथन्तरमिति शब्दस्य कवतीषु विधानासम्भवेऽपि अभित्वेत्यृचि यः स्वर. तस्य तासु विधान स्यादिति चेत्—॥७॥

## न अर्थाभावाच्छ्रुतेर्न सम्बन्धः ॥ ८ ॥

**न**—स्वरस्य विधानं नेत्यर्थ । कुत ? **अर्थाभावात्**-अर्थस्य-अभित्वा ऋच स्वरस्य कवतीषु ऋक्षु अभावात् । **श्रुते**—' कवतीषु रथ-

न्तरं गायती'ति श्रुतेः, **न सम्बन्धः**—स्वरेण साकं सम्बन्धो न । स्वरविधौ तात्पर्यं नेति भावः ॥८॥

## स्वरस्तूत्पत्तिषु स्यात् मात्रावर्णाविभक्तत्वात् ॥९॥

**स्वरः**-अभिवतीस्वरः, **उत्पत्तिषु**--' अभि त्वा शूर' इत्यृचि उत्पन्नेषु वर्णेषु, यः स्वरः सः तेषु कवतीगतवर्णेष्वपि स्यात् । कुतः ? **मात्रावर्णाविभक्तत्वात्**--अभि त्वा शूरेत्यृचि या मात्रा, ये च वर्णाः, तेषां बाहुल्येन कवतीष्वपि सत्त्वेन तदविभक्तत्वात्—तदभिन्नत्वात् । अभिवतीस्वरः कवतीषु विधीयते । यदि उत्तरीत्या तस्य तत्र सिद्धत्वेन विधानमसम्भवीत्युच्येत, तर्हि तस्यानुवादोऽस्त्विति पक्षान्तरद्योतकस्तुः ॥ ९ ॥

## लिङ्गदर्शनाच्च ॥१०॥

' रथन्तरमुत्तरयोर्न पश्यामीति निधामित्रस्तपस्तेपे, बृहदुत्तरयोर्न पश्यामीति वसिष्ठः ' इति **लिङ्गदर्शनाद**प्यनुवादः सिध्यति । तथा हि—यद्धि विद्यमानं न दृश्यते तद्दर्शनाय यत्नः, न त्वविद्यमानदर्शनविषयिणी इच्छा यत्नो वा भवति । अत. उत्तरयोरपि रथन्तरमस्तीति सिध्यति । तद्वत्कवतीष्वप्यस्तीति पक्षान्तरमेव युक्तमिति भावः ॥१०॥

## अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति ॥११॥

**उत्तरासु विकारस्य**--नूतनधर्मस्य, **अश्रुतेः**-अविधानात, **यथाश्रुति**-स्वाध्यायसमये यथा पठितं तथैव पाठः स्यात् । तथा च ' रथन्तरमुत्तरयोर्गायति । कवतीषु रथन्तरं गायति' । इत्येतद् अप्रवृत्तिकरमनुवादमात्रमनर्थकं निष्फलं स्यादिति भावः ॥ ११ ॥

## शब्दानां चासामञ्जस्यम् ॥ १२ ॥

अप्रवृत्तिकरत्वेन वैयर्थ्यान्मास्त्वनुवादपक्षः । अथापि रथन्तरे प्रस्तूयमाने ' पृथिवीं मनसा ध्यायेत् ' इत्यादयो ये धर्माः श्रुतास्तत्प्रापकमिदं वचनद्वयं स्यादित्याशङ्कायामाह—। तथा सति **शब्दानाम्**—उक्तवचनगतरथ-

न्तरादिपदानाम् असामञ्जस्यं--शक्यार्थबोधो न । अपि तु तत्सम्बन्धिधर्मेषु लक्षणा स्यादिति भाव ॥ १२ ॥

## सि० ॥ अपि तु कर्मशब्दः स्याद् भावोऽर्थः प्रसिद्धग्रहणत्वाद् विकारो ह्यविशिष्टोऽन्यैः ॥१३॥

**अपि** त्विति पूर्वोक्त किमपि न । तथा सति देशलक्षणा धर्मलक्षणा वा आश्रयणीया स्यात् । अगतिश्चैषा यल्लक्षणाश्रयणम् । **अपि तु कर्मशब्दः स्यात्**—रथन्तरादि॰ शब्दः गानाख्यस्य ऋक्संस्काररूपकर्मण वाचकः स्यात् । अयमेव **भावोऽर्थः**—वास्तवार्थ - सिद्धान्तरूप इत्यर्थः । कुत॰ ? **प्रसिद्धग्रहणत्वात्**—रूढिशक्तिमत्त्वाद्गायतिधातोः । ' अग्निहोत्रं जुहोती'त्यत्र अग्निहोत्रशब्दस्य धात्वर्थ इव ' रथन्तरं गायती'त्यत्र रथन्तरशब्दार्थस्य गाने अभेदेनान्वयात् । किञ्च, **विकारः**—ह्रस्वानामक्षराणां दीर्घता, दीर्घाणां च ह्रस्वता, विवृतानां संवृतत्व, संवृतानां च विवृतत्वरूपः **अविशिष्टोऽन्यैः**--अन्यैः--अवहननादिभिः अविशिष्ट.- तुल्यः । अवहननेन यथा वितुषीभाव , तथा गानेन ऋचोऽक्षराभिव्यक्तिरिति भावः ॥१३॥

## अद्रव्यं चापि दृश्यते ॥१४॥

किञ्च, ' प्रजापतेर्हृदयमनृचं साम गायति ' इत्यत्र **अद्रव्यम्**- ऋक्शून्य, साम **दृश्यते**--श्रूयते । द्रव्यशब्दः छन्दोगैः ऋचि प्रयुज्यते । प्रजापतेर्हृदय सामविशेष. । अतोऽपि न गानविशिष्टऋग्विधिरिति भावः ॥१४॥

## तस्य च क्रिया ग्रहणार्था नानार्थेषु विरूपित्वात् अर्थो ह्यासामलौकिको विधानात् ॥ १५ ॥

अकर्मकाले-प्रयोगशून्यसमये **तस्य**—रथन्तरादिशब्दवाच्यस्य साम्न , **क्रिया**--पाठः, **ग्रहणार्था**--अभ्यासार्था । यतो **नानार्थेषु**--नानाश्रयेषु ऋक्षु, **विरूपित्वात्**--भिन्नरूपत्वात्, तत्तद्रूपं तदभ्यासं विना नैव सम्भवतीति भाव. । हि--यत , **आसां**--रथन्तरादिसंज्ञानाम्, **अर्थः अलौकिकः**

**विधानात्**—गुरुशिक्षयैव ज्ञेयः । न आहननवल्लोकप्रसिद्धः । अतोऽभ्यासार्थमकर्मकाले तस्य पाठ इति साम्न ऋक्संस्कारार्थेऽपि आहननादिवत् प्रयोगशून्यकाले पठनं न व्यर्थमिति भाव ॥ १५ ॥

## तस्मिन् संज्ञाविशेषाः स्युर्विकारपृथक्त्वात् ॥ १६ ॥

**तस्मिन्**- गानेऽपि, **विकारपृथक्त्वात्**-- गानस्वरूपाणां पृथक्त्वात्, **संज्ञाविशेषाः**--बृहद्रथन्तरादिभिन्नभिन्नसंज्ञाः स्युः । तस्मादापाततो गानस्यैकरूपत्वेऽपि तदात्मकस्य साम्नो बृहद्रथन्तरादिसंज्ञाभेदो न व्यर्थ इति भाव. ॥ १६ ॥

## योनिशस्याश्च तुल्यवदितराभिर्विधीयन्ते ॥१७॥

**योनिशस्याः**। यस्यामृचि सामोत्पन्नं सा ऋक् साम्नो **योनिः**। अप्रगीतमन्त्रसाध्या स्तुतिः **शस्त्रम्** । तत्साधनभूता ऋक् **शस्या**। योनिश्चासौ शस्या च योनिशस्या । ता. **योनिशस्याः**— अप्रगीतमन्त्रसाध्यस्तुतिरूपशस्त्रसाधनभूता ऋच., **इतराभिः**— अयोनिशस्याभि — प्रगीतमन्त्रसाध्यस्तुतिरूपस्तोत्रसाधनभूताभिः ऋग्भिः, ' याम्याः शंसति, शिपिविष्टवन्ती. शंसति रथन्तरस्य योनिमनुशंसति, बृहतो योनिमनुशंसति ' इति शंसतिशब्देनाभिधानरूपतुल्यत्वेन विधीयन्त इति उभयो — योनिशस्याऽयोनिशस्ययोर्ऋचोः तुल्येन शंसतिशब्देन निर्देशस्य कृतत्वादृगेवेयं साम । न गानविशिष्टा ऋगिति भाव ॥१७॥

## अयोनौ चापि दृश्यते अतथायोनि ॥१८॥

किञ्च, ' बृहद्गायत्रीषु क्रियते ' इत्ययोनौ-- अयोनिभूतऋग्भिन्नर्क्षु, साम दृश्यते। यतो बृहत्सामः बृहतीछन्दस्का ऋग्योनिः । न गायत्रीछन्दस्का । अतथायोनि च-अयोनिभूता ऋचो यच्छन्दस्कास्ततो न्यूनाधिकाक्षरच्छन्दस्कान्यपि सामानि दृश्यन्ते । ' यो वै त्रिच्छन्दसि साम उहति ' इत्यादिना वाक्यजातेनेति रथन्तरादीनां गीतिविशिष्टऋगर्थत्वाङ्गीकारे उक्तं सर्वमनुपपन्नं स्यादिति भावः ॥ १८ ॥

## ऐकार्थे नास्ति वैरूप्यमिति चेत् ॥१९॥

यदुक्तं तदा क्रिया ग्रहणार्था इति तदाक्षिप्यते। रथन्तरगीतेर्बृहद्गीतेरर्थान्तरत्वात् रथन्तरगीतावभ्यामेन गृहीतायामपि बृहद्गीतिरगृहीता भवतीति युक्त एव रथन्तरे गृहीते बृहत शिक्षणार्थमकर्मकाले प्रयोग। रथन्तरगीतिस्त्वेक एवार्थ। तस्य योऽन्या प्रयोगे शिक्षिते पुनरुत्तरासु न शिक्षितव्यम्। अतस्तास्वकर्मके प्रयोगो व्यर्थ इति चेत्-॥१९॥

## स्यादर्थान्तरेष्वनिष्पत्तेर्यथा पाके ॥२०॥

अर्थान्तरेष्वनिष्पत्तेः:- ऋगन्तरेष्वाश्रयभेदादभ्यासमन्तरेणानिष्पत्ते, प्रयोगाद् वहि पाठ स्यात। यथा पाके-पाकपदार्थस्य सर्वत्रैक्येऽपि अर्थभेदेन वैरूप्यं दृश्यत। यथा तण्डुलपाकोऽन्य, गुडपाकश्चान्य। गृहीतेऽपि तण्डुलपाके गुड पक्तु न जानाति स. । तदर्थं शिक्षणमावश्यकम्। तद्वदत्रापीति अकर्मकाले प्रयोगो नैव व्यर्थ इति वाच्यम्॥ २०॥

## शब्दानां च सामञ्जस्यम् ॥ २१॥

एव सामशब्दानामृक्शब्दानां च सामञ्जस्यं भवति। यतताशब्द ऋच एव वक्ष्यति। रथन्तरशब्दश्च साम एव वक्ष्यात्। अन्यथा ऋक्ताशब्दे देशलक्षणा स्यात्, रथन्तरशब्दे वा धर्मलक्षणाप्रसक्ति। तस्मात-' गीतिसामेति गानमात्रमेव सामशब्दार्थ। न ऋगिति परमार्थ॥ २१॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां सप्तमाध्यायस्य

द्वितीय पाद सम्पूर्ण ॥ श्री ॥ २॥

---

# ॥ अथ सप्तमाध्यायस्य तृतीयः पादः ॥

अग्निहोत्रादिनाम्ना तद्धर्मातिदेशाधिकरणम् ॥ १ ॥

## सि० ॥ उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात् ॥ १ ॥

कौण्डपायिनामयने 'मासमग्निहोत्रं जुहोति' इति श्रुतम्। इदं नित्याग्निहोत्रादन्यदपूर्वं कर्मेति द्वितीयाध्याये स्थितम्। तथा अग्निहोत्रमिति कर्मनामधेयमित्यपि प्रथमे व्यवस्थितम्। तेनैव नाम्ना प्रकृतस्यास्य कर्मणो निर्देशः नित्याग्निहोत्रधर्मप्राप्त्यर्थं इति सिद्धान्तेनायमुपक्रमः क्रियते-**उक्तमिति। उक्तं क्रियाभिधानम्**-अग्निहोत्रक्रियायाः अग्निहोत्रमिति नाम इत्युक्तं प्रथमस्य नामधेयपादे चतुर्थे। **अन्यत्र**-कुण्डपायिनामयने, **तच्छ्रुतौ**अग्निहोत्रशब्दश्रुतौ, **विधिप्रदेशः**--विधेः-धर्मस्य प्रदेश -अतिदेशः स्यादित्यर्थः ॥ १ ॥

## पू० ॥ अपूर्वे वापि भागित्वात् ॥ २ ॥

**वापीति** पूर्वपक्षार्थकः। **अपूर्वे**-एते नित्याग्निहोत्रमासाग्निहोत्रे उभे अपूर्वे कर्मणी स्याताम्। उभयोः साधारण तन्नाम। कुत ? **भागित्वात्**--अयमपि जुहोतिरेतस्य नामधेयस्य भागी। यथा तत्र अग्निहोत्रं जुहोतीति समुच्चारणम्, एवमिहापि तथा। तस्मादुभयोः साधारण नामेति नास्ति धर्मातिदेशः ॥ २ ॥

## नाम्नस्त्वौत्पत्तिकत्वात् ॥ ३ ॥

**नाम्नः**— अग्निहोत्रादिशब्दानामर्थेन सार्कं सम्बन्धस्य, **औत्पत्तिकत्वात्**-नित्यत्वात्, एकः शब्दः एकेनैवार्थेन सार्कं नियमेन सम्बद्ध्यते, नानेकैरर्थैः। एकस्यानेकार्थत्वमन्याय्यमित्युक्तम्। अतो न उभयोः साधारणं तन्नामेत्यस्ति धर्मातिदेश इति भावः ॥ ३ ॥

## प्रत्यक्षाद्गुणसंयोगात् क्रियाभिधानं स्यात् तदभावे अप्रसिद्धं स्यात् ॥ ४ ॥

नित्याग्निहोत्रे **प्रत्यक्षात्**—श्रूयमाणात्, 'अग्निर्ज्योतिरिति मन्त्रलिङ्गेन **गुणस्य**— देवतारूपस्य, **संयोगात्**, तत्प्रख्यन्यायेन **क्रियाभिधानं**— तत्कर्मणो नाम स्यात्। मासाग्निहोत्रे तु **तदभावे** – तस्य विधिपठितमन्त्राद्यभावे, **अप्रसिद्धमङ्गं** विधास्यन् न नामत्व लभते। अतो नित्यानित्याग्निहोत्रकर्मण एव तन्नाम। मासाग्निहोत्रे तु तद्धर्मप्राप्त्यर्थं तन्नाम्ना व्यवहार इति भाव ॥ ४ ॥

*प्रायणीयेति नाम्ना धर्मातिदेशाधिकरणम् ॥ २ ॥*

## अपि वा सत्रकर्मणि गुणार्थैषा श्रुतिः स्यात् ॥५॥

द्वादशाहे प्रथममह प्रायणीयनामकम। तद्विकृतौ गवामयनेऽपि प्रथममह प्रायणीयमेव। अस्मिन् **सत्रकर्मणि** प्रकृतौ विकृतौ च **गुणार्था**— गुणविधानार्था 'प्रायणीय' इत्येषा श्रुति स्यात्। न धर्मातिदेशार्था। कुत ? प्रयन्त्यनेनेति प्रायणीयमित्यनेन योगेन—श्रुत्यर्थेन द्वादशाहे इयं नाम प्रवृत्तास्ति। तद्विकृतिभूते गवामयनेऽपि अयं योग श्रुत्यर्थः अस्त्येवेति न लाक्षणिको धर्मातिदेशोऽत्रेति भाव ॥ ५ ॥

सर्वपृष्ठशब्देन षण्णां पृष्ठानामतिदेशाधिकरणम् ॥ ३ ॥

## विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वात् ज्योतिष्टोमिकानि पृष्ठानि अस्ति च पृष्ठशब्दः ॥६॥

'विश्वजित् सर्वपृष्ठो भवती'ति श्रुतम्। तत्र सर्वपृष्ठ इत्ययमनुवाद एव। न विधि। यो ह्यसर्वपृष्ठ तत्र सर्वपृष्ठता विधेया। अत्र विश्वजित् सर्वपृष्ठ एव। कुत ? **तत्पूर्वकत्वात्**- ज्योतिष्टोमपूर्वकत्वाद्विश्वजित। अत **विश्वजिति सर्वपृष्ठे** उत्पत्तिवाक्येन **ज्योतिष्टोमिकान्येव पृष्ठानि** प्रतिपाद्यन्ते। एव प्रकृतित एव प्राप्तौ इदमनुवादकं भवति वाक्य, न विधायकमिति भाव। ज्योतिष्टोमे

माहेन्द्रादिचतुर्षु स्तोत्रेषु **पृष्ठशब्दः**— ' सप्तदश पृष्ठानी'ति पृष्ठशब्देन व्यवहारोऽस्तीति तत्र माध्यन्दिनसवने एकमेव पृष्ठ, न बहूनीति शङ्का व्यर्थैवेति भावः ॥६॥

## सि० ॥ षडहाद्वा तत्र चोदना ॥७॥

अप्रवृत्तिविशेषकरत्वेन आनर्थक्यात् ज्योतिष्टोमे च पृष्ठबहुत्वस्याभावात् नायं ज्योतिष्टोमिकसर्वपृष्ठानुवादः । अपि तु **षडहात्**-- षडहनामकात्, आतिदेशिको विधिरेवायम् । यत्**तत्र**- षडहे, **चोदना**-- ' रथन्तर-- बृहत्--वैरूप--वैराज-रैवत- शाक्कराणां षण्णां पृष्ठस्तोत्राणां साक्षाद्विधयः सन्ति । ततः षाडहिकानां तेषामातिदेशिको विधिरयमिति भावः ॥ ७ ॥

## लिङ्गदर्शनाच्च ॥ ८ ॥

' पवमाने रथन्तरं करोति, आर्भवे बृहत्, मध्ये इतराणि, वैरूपं होतुः साम, वैराजं मैत्रावरुणस्य, रैवतं ब्राह्मणाच्छंसिन , शाक्करमच्छावाकस्य' इति **लिङ्गदर्शनादपि** षाडहिकानि पृष्ठानीनि संसिध्यन्ति ॥८॥

## उत्पन्नाधिकारो ज्योतिष्टोमः ॥९॥

**उत्पन्नाधिकारः**-'बृहत्पृष्ठं भवती'त्युत्पन्नपृष्ठस्तोत्राधिकारको **ज्योतिष्टोमः** । न उत्पत्त्यधिकारः । माहेन्द्रादिस्तोत्रेषु पृष्ठशब्दः छत्रिन्यायेन लाक्षणिक इति भावः ॥ ९ ॥

## द्वयोरिति चेत् ॥ १० ॥

ज्योतिष्टोमे **द्वयोः**—बृहद्रथन्तरयोः, समुच्चय इति चेत्- ॥ १० ॥

## न व्यर्थत्वात्सर्वशब्दस्य ॥ ११ ॥

**न** द्वयोः समुच्चयः । तथा सति **सर्वशब्दो** व्यर्थः स्यात् । सर्वशब्दो हि बहुषु प्रयुज्यते, न द्वयोरिति भावः ॥ ११ ॥

**अवभृथनाम्ना सौमिकधर्मातिदेशाधिकरणम् ॥ ४ ॥**

## सि० ॥ तथा अवभृथः सोमात् ॥ १२ ॥

चातुर्मास्ये वरुणप्रघासपर्वणि-' वारुण्या निष्कासेन तुषैश्चावभृथं यन्ती'ति श्रूयते । दर्शपूर्णमासयो –' प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम्' इत्यादिमन्त्रै सर्वासु दिक्षु आप उत्सिच्यन्ते । अत्रापि ' अवभृथं यन्तीति वाक्ये अवभृथशब्द तथा विश्वजिति षडहाब्दमातिदेशवत् सोमावभृथात् तद्धर्मप्राप्त्यर्थ । न दर्शपूर्णमासप्राप्तदिगुत्सेके तुषनिष्कासविधानार्थ इति भाव ॥ १२ ॥

## शं० ॥ प्रकृतेरिति चेत् ॥१३॥

प्रकृतेः—दर्शपूर्णमासाभ्यां प्राप्तदिगुत्सेकस्य गुणत्वेन तुषनिष्कासयोर्विधानमिदमिति पश्याम । ' एष वै दर्शपूर्णमासयोरवभृथ ' इत्यर्थवादे दिगुत्सेके अवभृथशब्दस्य प्रयोगदर्शनादिति चेत्—॥१३॥

## न भक्तित्वात् ॥ १४ ॥

अर्थवादे दिगुत्सेके अवभृथशब्दस्य भक्तित्वात्—स्तावकत्वात्, तयोर्विधानमिदमिति मत न युक्तम् । अपि तु सौमिकपदार्थधर्मातिदेश इत्येव सम्यक ॥ १४ ॥

## लिङ्गदर्शनाच्च ॥ १५ ॥

' नायुर्दान् जुहोति, न साम गायति ' इति केषाञ्चित्सौमिकावभृथधर्माणां निषेधरूपलिङ्गदर्शनादपि सौमिकावभृथधर्मातिदेशविधिरित्येव सिध्यति । प्राप्तिमन्तरेण निषेधासम्भवादिति भाव ॥ १५ ॥

वारुणप्राघासिकावभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम् ॥ ५ ॥

## सि० ॥ द्रव्यादेशे तद्द्रव्यः श्रुतिसंयोगात् पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥१६॥

वारुणप्राघासिकावभृथे सौमिकावभृथधर्मातिदेशविधिरिति स्थिते तस्मिन्नवभृथे द्रव्यादेशे— पुरोडाशतुषनिष्कासरूपद्रव्यादेशे प्राप्ते तद्–

द्रव्यः-- तुपनिष्कासद्रव्यक एव स । न पुरोडाशद्रव्यकः । कुतः ? **श्रुतिसंयोगात्**— प्रत्यक्षश्रुत्या विधानात् । **अनादेशे**—प्रत्यक्षश्रुत्या अप्राप्तौ, **पुरोडाशः, तत्प्रकृतित्वात्**—आनुमानिकत्वात्तस्य, प्रत्यक्षाच्चानुमानं दुर्बलमिति तद्बाध इति भावः ॥१६॥

वैष्णवशब्दादातिथ्यायां धर्मानतिदेशाधिकरणम् ॥ ६ ॥

## सि० ॥ गुणविधिस्तु न गृण्हीयात्समत्वात् ॥१७॥

आतिथ्यायामिष्टौ – ' नवकपालो वैष्णवो भवति ' तथा राजसूये-- ' वैष्णवस्त्रिकपाल ' इति श्रूयते । तत्र वैष्णव इति नाम **न गृह्णीयात्**-आतिथ्याधर्मान्न गृह्णीयात् । तान्नातिदिशेदित्यर्थः । अपि तु **गुणविधिः**- देवतारूपगुणविधायकं तत् । कुतः **समत्वात्**- देवताराधकतद्धितस्य उभयत्र तुल्यत्वात् ॥ १७ ॥

निर्मथ्यादिशब्दानां धर्मानतिदेशाधिकरणम् ॥ ७ ॥

## सि० ॥ निर्मथ्यादिषु चैवम् ॥१८॥

**निर्मथ्यबर्हिराज्यशब्देषु चैवं** — वैष्णवशब्दवद्यौगिकत्वेन गुणविधायकत्वं, न धर्मातिदेश इति भावः ॥ १८ ॥

द्वयोः प्रणयन्तीत्यनेन सौमिकधर्मानतिदेशाधिकरणम् ॥८॥

## प्रणयनं तु सौमिकमवाच्यं हीतरत् ॥१९॥

चातुर्मास्येषु ' द्वयोः प्रणयन्ति, तस्माद्द्वाभ्यां यन्ति ' अनेन वाक्येन विहितं प्रणयनं किं सधर्मकं सौमिकं प्रणयनमुताधर्मकं दार्शपौर्णमासिकमिति विशये साङ्गकलापं **सौमिकमेव तत्प्रणयन**मिति सूत्र । कुतः ? चोदकप्राप्ततेन तस्य विध्यर्हत्वात् । **इतरत्**-दार्शपौर्णमासिकं **तु प्रणयनम् अवाच्यम्**—अविधेयम् । चोदकशास्त्रेणैव तस्य प्राप्तत्वात् । सौमिकत्वे तद्धर्मप्राप्त्यर्थं तस्य विधानं सार्थकमिति ॥ १९ ॥

## उत्तरवेदिप्रतिषेधश्च तद्वत् ॥ २० ॥

' न वैश्वदेवे उत्तरवेदिमुपयन्ति, न शुनासीरीये ' **इत्युत्तरवेदिप्रतिषेधोऽपि तद्वत्**—तस्य सौमिकप्रणयनपरत्वद्योतक । न दार्शपौर्णमासिकप्रणयनपरत्वद्योतक । तत्र उत्तरवेद्यभावेन निषेधासम्भवात् । तस्य प्राप्तिपूर्वकत्वादिति ॥ २० ॥

## सि० ॥ प्राकृतं वा अनामत्वात् ॥ २१ ॥

**प्राकृत**-- दार्शपौर्णमासिक प्रणयनमेव तत् । न सौमिकम् । कुत ? **अनामत्वात्**--प्रणयनमिति सौमिकप्रणयननामत्वाभावेन नामातिदेशासम्भवादिति भाव ॥ २१ ॥

## परिसङ्ख्यार्थं श्रवणं गुणार्थमर्थवादो वा ॥२२॥

**श्रवणं**--द्वयो प्रणयन्तीति वाक्यश्रवण, **परिसङ्ख्यार्थं**-- वैश्वदेवशुनासीरीययो प्रणयननिवृत्त्यर्थं, **वा गुणार्थं**-- प्रागुदेशनयनरूपगुणार्थम्, अथवा **अर्थवादः**-- ' तस्माद्द्वाभ्या यन्तीति स्तुत्यर्थं प्रणयनानुवाद इति भाव ॥ २२ ॥

**द्वयोः प्रणयन्तीत्यनेन मध्यमयोर्द्वयोः प्रणयनाधिकरणम् ॥ ९ ॥**

## प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात्॥२३॥

चातुर्मास्ये ' वैश्वदेव-वरुणप्रघास साकमेध-शुनासीरीयेति चत्वारि पर्वाणि, तत्रेद प्रणयन कुत्र विधेयमित्याऽऽशङ्कायामाह पूर्वपादी । **प्रथमोत्तमयोः**-वैश्वदेवशुनासीरीययोरिद प्रणयन कार्यम । कुत ? ' **न वैश्वदेवे उत्तरवेदिमुपयन्ति, न शुनासीरीये,**' इति तयो **उत्तरवेदिप्रतिषेधात्**— ' उत्तरवेद्यामग्निं निदधातीति श्रवणात् यत्रेद प्रणयन तत्रोत्तरवेदिप्राप्तौ तन्निषेध सार्थक इति भाव ॥ २३ ॥

## सि० ॥ मध्यमयोर्वा गत्यर्थवादात् ॥२४॥

**गत्यर्थवादात्**- ' उरू वा एते यज्ञस्य यद्वरुणप्रघास साकमेधश्च

इति गतिसाधनोरुप्रतिपादकार्थवादात्— ऊरुत्वेन तयोः संस्तवात्, ह्रम्या यन्तीत्यर्थवादाच्च, मध्यमयोरेव प्रणयनमिदमिति भावः ॥ २४ ॥

## औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः ॥२५॥

'उपात्र वपन्ति-- उत्तरवेद्यामग्निं निदधाति' इति पर्वविशेषमनारभ्य श्रुतम्। अत. पर्वचतुष्टये अविशेषेणात्तरवेदिप्राप्तौ औत्तरवेदिकप्रतिषेध. अनारभ्यपठितवचनप्राप्तोत्तरवेदिप्रतिषेधार्थ इत्येवं तस्य चारितार्थ्यं ज्ञेयमिति भावः ॥२५॥

### स्वरसामादिशब्दानां धर्मातिदेशकत्वाधिकरणम् ॥ १० ॥

## स्वरसामैककपालामिक्षं च लिङ्गदर्शनात् ॥ २६ ॥

गवामयने द्वयोर्मासषट्कयोर्मध्ये वर्तमानं विषुवन्नामकं प्रधानभूतमेकमहर्विद्यते। तच्च दिवाकीर्त्यनामकम्। तस्मात्प्राचीनास्त्रय स्वरसामनामका अहर्विशेषाः। तथा उपरिष्टादपि त्रयः स्वरसामानः। तदेतदभिप्रेत्य—'अभितो दिवाकीर्त्यं त्रयः स्वरसामानः' इति श्रूयते। तेषु च ग्रहसातत्य-सप्तदशस्तोमाद्यो धर्मा विहिताः। एवं षडहनामके क्रत्वन्तरे 'पृष्ठ्य षडहो द्वौ स्वरसामानौ' इति श्रुतम्। तथा वैश्वदेवे पर्वणि 'द्यावापृथिव्य एककपाल' इति तत्र तस्य विशेषधर्मा अप्याऽऽम्नाता। एवम प्रण - द्यावापृथिव्यमेककपालं विधाय 'सर्वहुत जुहोति, अपर्यावर्तयन् जुहोती'ति श्रुतम्। तथा अन्यत्र 'काय एककपाल' इत्युक्त्वा तत्र 'वैश्वदेव्यामिक्षा' इति श्रुतम्। तत्रापि विशेषधर्मा. केचित्पठिताः। पुनरन्यत्र 'मैत्रावरुणी आमिक्षा' इति श्रूयते। तत्र **एतत्स्वरसामैककपालामिक्षं** गवामयनादिसम्बन्धिधर्माणामेवातिदेशकृत्। न स्वरसामादिगुणविशेषविधायकम्। कुत. ? **लिङ्गदर्शनात्**— येन एते स्वरसामादयः सर्वे तत्तद्धर्माणा ग्राहका इति निर्ज्ञायेत, तादृशतत्तल्लिङ्गाना दर्शनादित्यर्थः। तथा हि-- द्वादशाहविकृतौ षडहे क्रतौ पृष्ठ्येषु अहःसु क्रमेण 'त्रिवृत्पंचदशसप्तदशएकविंशत्रिणवत्रयस्त्रिंशस्तोमाख्योदयेन प्राप्ताः। तत्र तृतीयं यद् सप्तदशस्तोमकमहस्तत् 'त्रय-

त्रिंशस्य स्थानमभिपर्यूहन्ति, स उत्तराणां स्तोमानामव्यवायाय, त्रयाणां च सप्तदशानामनूचीनताया ' इति अव्यवधानार्थमिति तस्यार्थः । तच्चाव्यवधान षडस्य अह ' तत् त्रयस्त्रिंशस्थानमभिपर्यूहन्ती'त्युक्तवचनेन सप्तदश-स्तोमत्वे तदुत्तर स्वरसामशब्दद्वयस्य तद्ग्राह्यतद्धर्मसप्तदशस्तोम वे सप्तदश-स्तोमानां षष्ठसप्तमाष्टमानामह्नां सप्तदशस्तोमत्वादुपपन्नं भवति । नान्यथा । तथा आग्रयणे ' आज्यस्यैव द्यावापृथिव्यौ यजेतेति वाक्येन आज्यविधिपरेण सर्वहोमपर्यावृत्तिर्वैश्वदेविकौ धर्मौ च ज्ञाप्येते । एवं मैत्रावरुण्यामामिक्षाया ' वाजिनेन प्रचरन्ति ' इति वाजिनेज्या वैश्वदेविकधर्मप्रतिषेधस्ततो धर्म-प्राप्तिं दर्शयति । तस्मात्तत्तल्लिङ्गविशेषदर्शनात् यथायथं तत्तद्धर्माणामेव बोधक स्वरसामैककपालामिक्षमिति भाव ॥ २६ ॥

## चोदनासामान्याद्वा ॥२७॥

स्वरसामत्वसामान्यात् एककपालत्वसामान्यात् आमिक्षासामा-न्याद्वा ' लिङ्गमर्थसंयोगात् ' इति धर्मातिदेशप्राप्तिरिति शेष ॥ २७ ॥

### वासआदिशब्दानामाकृतिनिमित्तत्वाधिकरणम् ॥ ११ ॥

## कर्मजे कर्म यूपवत् ॥ २८ ॥

' वासो ददाति, अनो ददाति ' इति श्रूयते । तत्र वासआदिशब्द **कर्मजे**— कुविन्दकर्तृकतुरीवेमादिसंयोगात्मकक्रियाजन्यद्रव्ये वार्द्धकिक-र्तृकतक्षणादिक्रियाजन्ये च द्रव्ये दृष्ट । अत **कर्म**—तत्तच्छब्दप्रवृत्तिनिमित्त पूर्वोक्तं कर्मैव । **यूपवत्**— यथा यूपशब्दप्रवृत्तिनिमित्त तक्षणादिक कर्म, तद्वदत्रापि ज्ञेयम् । सत्येव तुरीवेमादिक्रियया पटादिकमुत्पाद्य दातव्यमिति भाव ॥ २८ ॥

## सि० ॥ रूपं वा अशेषभूतत्वात् ॥ २९ ॥

**रूपं**— जातिरेव पटादिशब्दप्रवृत्तिनिमित्तम् । न क्रिया । कुत ? तस्याः **अशेषभूतत्वात्**— अङ्गत्वेन अविहितत्वात् । ' यूपं तक्ष-तीति क्रियाकलापविधानात् दृष्टान्तवैषम्यमिति भावः ॥ २९ ॥

गर्गत्रिरात्रे लौकिकाग्नेरुपनिधानाधिकरणम् ॥ १२ ॥

## विशये अलौकिकः स्यात्सर्वार्थत्वात् ॥ ३०॥

' अग्निमुपनिधाय स्तुवीत ' इति गर्गत्रिरात्रे आज्यदोहानि सामानि प्रकृत्य स्तोत्रागतया विहितोऽग्निः श्रौतः उत लौकिकः इति **विशये** सति **अलौकिकः**– वैदिकः– आधानसंस्कारसंस्कृतः स्यात् । **सर्वार्थत्वात्**– तस्य वैदिकसर्वकर्मार्थत्वादित्यर्थः ॥ ३० ॥

## सि० ॥ न वैदिकमर्थनिर्देशात् ॥ ३१ ॥

न वैदिकः । अपि तु लौकिक एवाग्निस्तत्र ग्राह्यः । कुतः ? वैदिकं हि अग्निद्रव्यं ' अग्नीनादधीतेति शास्त्रेणोत्पादितम् । तस्य कार्यमपि ' यदाहवनीये जुहोतीत्यादिशास्त्रेणैव निर्दिष्टम् । सत्येवं तस्य सर्वार्थत्वे कल्प्यमाने निर्देशोऽनर्थकः स्यात् । सर्वार्थत्वं त्वस्य तत्तत्स्वीयकार्यापेक्षयाप्युपपन्नं भविष्यतीत्युभयमविरुद्धमिति भावः ॥३१॥

## तथोत्पत्तिरितरेषां समत्वात् ॥ ३२ ॥

**इतरेषां**— धिष्ण्यानामप्यग्नीनाम्, उत्पत्तिर्न **तथा**— न सर्वार्था । **समत्वात्**— ' प्रागासीनो धिष्ण्यान् व्याघारयति ' इति कार्यनिर्देशस्य समत्वादिति भावः ॥३२॥

उपशयो यूपो भवतीत्यत्र यूपशब्दस्य संस्काराप्रयोजकत्वाधिकरणम् ॥ १३ ॥

## संस्कृतं स्यात्तच्छब्दवाच्यत्वात् ॥ ३३ ॥

एकादशिन्याम् ' उपशयो यूपो भवति ' इति श्रूयते । तत्र संस्कृतमेव उपशयद्रव्यं स्यात् । नासंस्कृतम् । कुतः ? तच्छब्दवाच्यत्वात्– संस्कारनिमित्तकयूपशब्दवाच्यत्वात् । यूपशब्देन यूपधर्मनिर्देश इति भावः ॥ ३३ ॥

## भक्त्या वा अयज्ञशेषत्वात् गुणानामभिधानात्॥३४॥

**प्रयाजादिस्तद्गुणत्वात्**– वैदिकापूर्वसाधनत्वात् । वैदिकसौर्ययागापूर्वं प्रयाजादिजन्यं, वैदिकापूर्वत्वात् । दर्शपूर्णमासापूर्ववत् । इत्यनुमानेन तन्नियमसम्भवादिति भावः ॥ ४ ॥

## अपि वाऽन्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युः ॥ ५ ॥

**अपि वा**— नैवेन ' प्रयाजे प्रयाजे कृष्णलं जुहोतीति लिङ्गेन सौर्ययागे वैदिकी इतिकर्तव्यता नियन्तुं शक्यते । कुतः? **अन्यायपूर्वत्वात्**- न्यायपूर्वत्वाभावात्- हेतोरदुष्टत्वाभावात्-स्वरूपासिद्धत्वादित्यर्थः । तथा हि-यत्र प्रयाजाःक्लृप्तास्तत्रैव कृष्णलं जुहोतीति कृष्णलविधेर्वक्तुं शक्यत्वात्, यथा महापितृयज्ञे 'नार्षेयं वृणीते न होतार' मिति तत्र जात्वप्याऽऽर्षेयप्राप्तेरभावेन नित्यानुवादरूपत्वं तस्य । तथाऽत्रापि तानि **नित्यानुवादवचनानि स्युः ।** तथा च सौर्ययागः दर्शपूर्णमासीयेतिकर्तव्यताकः, दर्शपूर्णमासाङ्गभूतप्रयाजाङ्गत्वादिति हेतुः पक्षे नास्तीति स्वरूपासिद्धमनुमानमिति भावः ॥५॥

## मिथो विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यात् ॥ ६ ॥

यत्र प्रयाजा क्लृप्तास्तत्रैव कृष्णलविधिरित्युक्तौ **मिथः**-- परस्पर, **विप्रतिषेधात्**-- विरोधात्, क्लृप्तेन निराकाङ्क्षत्वयाऽन्यस्य व्यर्थत्वात् तद्विधौ वाक्यभेदाच्च **यथार्थकल्पना**– ये धर्मा यत्र क्लृप्तास्त एवा-न्यत्र चोदकेन प्राप्तास्तेषु कृष्णलविधिरिति यथार्थकल्पनैव स्यात् । तथा च न स्वरूपासिद्धिरिति भावः । अथवा वैदिकीलौकिक्योरितिकर्तव्यतयोर्मिथो विरोधात् वैदिक्यास्तस्याः प्रकरणादिना प्रमाणेन दर्शपूर्णमाससम्बद्धत्वात् सौर्ययागे लौकिकी इतिकर्तव्यता स्यादित्याऽऽशङ्कापरं सूत्रमित्यपि वक्तुं शक्यम् ॥ ६ ॥

## भागित्वात्तु नियम्येत गुणानामभिधानत्वात् सम्बन्धात् अभिधानवद्यथा धेनुः किशोरेण ॥७॥

न तत्र लौकिकी इतिकर्तव्यता । अपि तु वैदिकी एवेति **नियम्यते** । कुतः ? **गुणानां** - प्रयाजादीनां, **भागित्वात्**— वैदिकापूर्वसम्बन्धभाक्त्वात् **अभिधानवत्**— अग्निहोत्रनामवत् । यथा कौण्डपायिनामयने 'मासमग्निहोत्रं जुहोति'त्यग्निहोत्रनाम्ना तद्धर्मा तत्र नियमितः, तथा प्रयाजादिगुणानाम**भिधानत्वात्** 'प्रयाजे प्रयाजे कृष्णलं जुहोती'त्यत्र दर्शपूर्णमासाङ्गभूतप्रयाजनाम्ना तत्र दर्शपूर्णमासधर्मा अतिदिश्यन्ते । अर्थात् सौर्ययागे वैदिकी इतिकर्तव्यतैव नियम्यत इति भावः । यच्च दृष्टप्रवृत्तित्वादित्युक्तं, तत्र **यथा धेनुः**— धेनुशब्दः, गवि दृष्टप्रवृत्तिरपि प्रमाणान्तरसहकृत **किशोरेण** अश्वधेन्वापि सम्बध्यते । तथा उक्तलिङ्गेन अदृष्टातिदेशानामपि प्रयाजादीनां विकृतौ सूर्यादियागे सम्बन्धः समुपपद्यत इति भावः ॥ ७ ॥

## उत्पत्तीनां समत्वाद्यथाधिकारं भावः स्यात् ॥८॥

अदृष्टातिदेशानां प्रयाजानुयाजादीनां विकृतौ सम्बन्धः सूपपद्यत इति यदुक्तं तन्न । कुतः ? तेषामाग्नेयादिषड्यागाङ्गत्वे**नोत्पत्तीनां समत्वा**त्तुल्यत्वात् । **यथाधिकारं** - यत्र ये धर्माः श्रुतास्तत्र तेषां **भावः स्यात्** । न त्वन्येषामश्रुतत्वात् । यदि प्रयाजाः प्रधानम्, अनुयाजादीतराणि तदङ्गानि स्युः । तर्हि प्रधानप्रवृत्तौ तदनुयायीन्यङ्गान्यपि तत्र स्युः । न त्वेवम् । सर्वेषामङ्गत्वेन समत्वात् । अतः प्रयाजातिरिक्तधर्मप्रापकप्रमाणाभावान्नानुयाजादीनां विकृतौ प्रवेश इति भावः । यच्च अभिधानवदित्युक्तं, तद्धि परत्र प्रयुक्तः परशब्दः तद्धर्मानतिदिशतीति युक्तमेव । किञ्च, 'मासमग्निहोत्रं जुहोती'ति विधिरयम् । प्रकृतस्त्वनुवादः । तेन प्रयाजानामेव प्राप्तिर्नास्ति । कुतोऽनुयाजादीनाम् । ततो विषम उपन्यासः सः । तस्मान्न लिङ्गेन नियम इति ॥ ८ ॥

## उत्पत्तिशेषवचनं च विप्रतिषिद्धमेकस्मिन् ॥ ९ ॥

ननु, निष्प्रयोजनत्वेनेतिकर्तव्यतारहितप्रधानयागासम्भवात्सेतिकर्त-

व्यतार्कं प्रधानं 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति प्रधानविधिरेव विधते। इत्थं वेदेन विहितत्वात् वैदिकेषवैनिकर्तव्यता तत्र ग्राह्या नेतरेत्याऽऽशङ्काया सूत्रमिदमुत्पत्तीति। **एकस्मिन्** वाक्ये **उत्पत्तिशेषवचनं च**– प्रधानोत्पत्तिविधिः,शेषाणामङ्गाना वचनं विधिश्च इदं, **विप्रतिषिद्धं**–विरुद्धम्। न सम्भवतीत्यर्थः। कुतः? यदि निर्वपेदित्यनेन अङ्गान्यपि विधीयेरन् तर्हि विधितुल्यत्वेन तेषामपि प्रधानवत्फलसम्बन्ध स्यात्। तथा सत्यङ्गत्वमेव तेषा भग्नं भवेदिति भावः ॥ ९ ॥

## सि० ॥ विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत तथा हि लिङ्गदर्शनम् ॥ १० ॥

**प्रकृतिवत्**— दर्शपूर्णमासवत्, **चोदनायां**– सौर्ययागविधौ, **विध्यन्तः**– निखिलपौरोडाशिधर्मः, **प्रवर्तेत**– सम्बध्येत। यतः सर्वा अपि भावनाः किं केन कथमित्यंशत्रयवत्य। तत्र ब्रह्मवर्चसं भाव्यत्वेन, यागः करणत्वेनेत्याकाऽऽङ्क्षाद्वयनिवृत्तौ कथमित्याकाङ्क्षायामुक्तप्रयाजादिलिङ्गेन दर्शपूर्णमासीयधर्माणामुपस्थितौ तद्बोधकपदं कल्पयित्वा प्रकृतिवत् इति तेनैवाकाऽऽङ्क्षा पूर्णीयेति भावः। **हि**-यतः, **तथा लिङ्गदर्शनं**-दर्शपूर्णमासधर्मप्रापकप्रयाजादिलिङ्गदर्शनं 'प्रयाजे प्रयाजे' इति तत्र सौर्ययागे अस्तीत्यतः ॥ १० ॥

## लिङ्गस्य हेतुत्वादलिङ्गे लौकिकं स्यात् ॥ ११ ॥

**लिङ्गस्य**– प्रयाजादिवाचकशब्दश्रवणात्मकलिङ्गस्य, **हेतुत्वात्**– दर्शपूर्णमासीयधर्मप्राप्तिकारणत्वात्, **अलिङ्गे**– तादृशलिङ्गरहिते **लौकिकं** स्यादित्यर्थः ॥ ११ ॥

## लिङ्गस्य पूर्ववत्त्वात् चोदनाशब्दसामान्यात् एकेनापि निरूप्येत यथा स्थालीपुलाकेन ॥ १२ ॥

अलिङ्गे लौकिकमिति यदुक्तं तन्न। कुतः? **लिङ्गस्य पूर्ववत्त्वात्**-

प्रयाजलिङ्गस्य पूर्वेवत्त्वात्, सौर्ययागादौ प्रयाजादिधर्मप्राप्तौ स्वभिन्नचोद-**नाशब्दसामान्यात्**-- कर्मबोधकविधेः लिङ्गवति अलिङ्गवति वा तुल्यस्वरूप-कारणान्तरसत्त्वात् । न केवलं लिङ्गं धर्मप्रापकम् । अपि तु विधिप्रत्ययश्र-वणे कथं कुर्यादित्याऽऽकाङ्क्षापूरकदर्शपूर्णमासवत् इति । तत्र लिङ्गं नियामकमा-त्रमिति भावः । तादृशविधेरुभयत्र तुल्यत्वात् । **एकेनापि**-- लिङ्गदर्शनेन सर्वत्र **निरूप्येत**-- जानीयात् । **यथा स्थालीपुलाकेन**-- एकत्र दृष्टे सर्वे-दृष्टिः सिध्यति । तद्वदत्रापि ज्ञेयमिति यत्र लिङ्गं तत्रैव स्यात् । अन्यत्र कथ-मित्याऽऽशङ्का क्कार्याः । तस्मात्सौर्यादियागे वैदिकी इतिकर्तव्यता । न लौकि-कीति सिद्धम् ॥ १२ ॥

### गवामयने ऐकाहिकेतिकर्तव्यतानुष्ठानाधिकरणम् ॥ २ ॥

## द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिकाऽऽ-गमात् तदाख्यं स्यादेकाहवत् ॥ १३ ॥

' प्रजाकामा गवामयनमुपेयुः ' इत्यनेन विहिते गवामयनसत्रे द्वादशाहिको विध्यन्त इति वक्ष्यति । तत्र ' ज्योतिर्गौरायुरिति त्रीणि अहानि सन्ति । एवं ' ज्योतिर्गौरायुरिति स्वतन्त्रा एकाहविशेषा अपि विद्यन्ते । एवं स्थिते गवामयनसम्बन्धिज्योतिरादौ द्वादशाहात् आनुमानिकातिदेशेन शतदक्षिणा प्राप्ता । ज्योतिरादिनाम्ना च सहस्रदक्षिणापि प्राप्ता । तत्र कतमः पक्षो ग्राह्य इति विशये आह पूर्ववादी **द्वादशेति** । उक्तस्थले **अहर्गणे द्वादशाहिकं**-- द्वादशाहधर्मा ग्राह्याः । कुतः ? **तत्प्रकृतित्वात्**-- द्वादशाह-प्रकृतित्वाद् गवामयनस्य । **ऐकाहिकम्**-- एकाहसम्बन्धिज्योतिर्गौरायुरिति समाख्यानं तु, **अधिकाऽऽगमात्**--ज्योतिष्टोमादधिकस्तोत्रशस्त्राद्याऽऽगमात्, **तदाख्यं**-- तावन्मात्रेण चरितार्थं स्यात् । यथा स्वतन्त्र **एकाहस्तथेदमपीति** भावः ॥ १३ ॥

## लिङ्गाच्च ॥ १४ ॥

" द्वाभ्यां लोमावद्यति । द्वाभ्यां त्वचम् । द्वाभ्यामसृक् । द्वाभ्यां मांसम् । द्वाभ्यामस्थि । द्वाभ्यां मज्जानम् " । इति षड् द्विकाननुक्रम्य ' यद् द्वादशोपसदो भवन्ति आत्मानमेवाग्निरवदयते ' इति द्वादशोपसत्त्वरूपलिङ्गदर्शनमपि तत्र गवामयने द्वादशाहिकं धर्मजातं दृढीकरोति ॥ १४ ॥

## सि० ॥ न वा प्रत्यक्षत्वात्क्रत्वभिधानादधिकानामशब्दत्वम् ॥ १५ ॥

**नैव** द्वादशाहधर्मप्राप्तिः । अपि तु **क्रत्वभिधानात्**– ज्योतिरादिक्रतुनाम्नः तद्धर्मप्राप्तिरेव तत्र । कस्मात् ? आनुमानिकद्वादशाहातिदेशापेक्षया नामधेयस्य **प्रत्यक्षविधित्वेन** प्रबलत्वात् । नामधेयमपि क्रत्वोत्रशास्त्रप्रापकतया चरितार्थमिति यदुक्तं तत्र । **अधिकानां तेषामशब्दत्वं**– नाम्ना अविहितत्वम् । स्वतन्त्रैकाहिकहेतुवचनादाधिक्यमः, न नाम्नेति भाव. ॥ १५ ॥

## लिङ्गं सङ्घातधर्मः स्यात्तदर्थापत्तेर्द्रव्यवत् ॥ १६ ॥

**लिङ्ग**– यद् द्वादशोपसद्विधानं साधकमुक्तं द्वादशाहधर्मस्य तद् **सङ्घातधर्मः**–द्वादशाहे अहःसमुदायस्य धर्मः स्यात् । **तस्य** गवामयने **अर्थापत्तेः** - अर्थेन कार्यवशेन प्राप्तिः । तथा हि-- द्वादशाहः फलमुद्दिश्य विहितः । गवामयनमपि फलमुद्दिश्य विहितमिति द्वादशाहस्थानापन्नं तत् । ततस्तत्स्थानापन्नत्वेन लभ्यते इति न्यायेनैव तत्र गवामयने द्वादशोपसल्लाभः । न चोदकशास्त्रेणेति भाव. । **द्रव्यवत्**– यथा व्रीह्यभावे तत्स्थानापन्नीवारेषु अवहननादयः, तद्वदत्रापीत्यर्थः ॥ १६ ॥

## न वा अर्थधर्मः स्यात्सङ्घातस्य गुणत्वात् ॥ १७ ॥

**न वा**– नेत्र पूर्वापक्षलिङ्गपरिहारे इदं समाधानं युक्तम् । कुतः ? द्वादशोपसदः **अर्थधर्म**.- प्रधानस्य धर्मः, प्रधानाङ्गमिति यावत् । **सङ्घातस्य**-

समुदायत्वस्य तु **अहर्गुणत्वात्**। द्वादशत्वविशिष्टस्य अन्हः अङ्ग द्वादशोपसदः। विशिष्टमुद्दिश्य विधीयमानं न विशेषणाङ्गं भवति। न हि राजपुरुषमानयेत्युक्ते राजानमानयति। न वा 'मृष्टं गुङ्क्ते देवदत्त' इत्युक्ते शाकादिव्यञ्जनं तत्र प्रतीयेत। अपि प्रधानमेव प्रतीयते। अतः सङ्घातधर्मः स्याल्लिङ्गमिति पूर्वोक्तमङ्गमिति भाव ॥१७॥

## आर्थपत्तेर्द्रव्येषु धर्मलाभः स्यात् ॥ १८ ॥

**द्रव्येषु**-- प्रतिनिधित्वेन प्राप्तनीवारादिषु, **अर्थापत्तेः**-- अर्थस्य व्रीहिकार्यस्य --पुरोडाशनिर्माणस्य आपत्तेः--प्राप्तेः **व्रीहिधर्मलाभः स्यात्**। इह पुनर्द्वादशोपसत्त्वं नैव सङ्घातधर्म इति विषमो दृष्टान्तो द्रव्यवदिति भावः ॥ १८ ॥

## प्रवृत्त्या नियतस्य लिङ्गदर्शनम् ॥ १९ ॥

स्याद्वैषम्यं दृष्टान्ते। अथापि गवामयने न चोदकशास्त्रेण द्वादशोपसदां प्राप्तिः। यतः **प्रवृत्त्या**-- मुख्यप्रवृत्त्या, गवामयने नियतस्य द्वादशोपसत्त्वस्य लिङ्गदर्शनं भवति। तथा हि--गवामयने द्वादशाहिकं प्रथममहः। प्रायणीयोऽतिरात्रः। तस्य धर्मा द्वादशोपसदः। षडुपसदा ज्योतिर्गौरायुर्नामकाना जघन्यानामन्हामङ्गम्। उभयोर्गवामयने सन्निपाते प्रथमातिक्रमे माना भावात् मुख्यप्रवृत्त्यैव द्वादशोपसदो नियताः। न चोदकशास्त्रेणेति न तच्चोदकप्राप्तौ लिङ्गमिति भाव ॥ १९ ॥

## विहारदर्शनं च विशिष्टस्य अनारभ्यवादानां प्रकृत्यर्थत्वात् ॥ २० ॥

**विहारस्य**-- एकादशपशुप्रचारस्य द्वादशाहगतस्य गवामयने यद्दर्शनं तदपि तत्रैव **विशिष्टस्य**-- विहितस्य **दर्शनम्**। न स्वतिदेशशास्त्रतो दर्शनम्। कुतः? **अनारभ्यवादानाम्**--अप्रकृत्य पठितानां, **प्रकृत्यर्थत्वात्**-- प्रकृतिगामित्वस्वाभाव्यात्। तथा हि-- अनारभ्य एकादशिन्या विहारः

शिष्टः– " तदादिप्रभवाः पशवः स्युः । तानेवानूचीनान् अहरहरालभेरन् । आग्नेयमेव प्रथमेऽहनि आलभेरन् । सारस्वतीं मेषीं द्वितीये । सौम्यं बभ्रुं तृतीये । वारुणमन्ततः । अथ पुनः पर्यावर्तेरन्नाऽऽग्नेयमेव प्रथमेऽहनि आलभेरन् । सारस्वतीं मेषीं द्वितीये । सौम्यं बभ्रुं तृतीये । वारुणमन्ततः " इति । तत्र अनारभ्यवादाना प्रकृत्यर्थत्वात् ज्योतिष्टोमं प्रविष्टम् । तत्र अन्हां बहुत्वाभावेन प्रवेशासम्भवात् अपरा प्रकृतिं द्वादशाहमागतम् । तत्रापि पुनर्ज्योतिरादीना पर्यावर्तेषु न युगपत् इति तृतीया प्रकृतिं गवामयने प्रविष्टम् । इत्येवमुक्तविधिना गवामयनं प्रविष्टस्य एतद्दर्शनं नैवातिदेशशास्त्रस्य विषय इति भावः ॥ २० ॥

इति पूर्वमीमांसासूत्रवृत्तौ **भावबोधिन्यां** सप्तमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तः सप्तमाध्यायः ॥ ७ ॥ श्रीः ॥

## ॥ अथाष्टमाध्यायस्य प्रथमः पादः ॥

विशेषातिदेशप्रतिज्ञाधिकरणम् ॥ १ ॥

### अथ विशेषलक्षणम् ॥ १ ॥

**अथ** - सप्तमाध्याय सामान्यातिदेशनिरूपणानन्तर, तद्विशेषजिज्ञासा-क्रमस्मिन्नष्टमाध्याये विशेषातिदेशनिरूपणमारभ्यते इति तत्प्रतिज्ञा । अनेन सप्तमाष्टमयो पूर्वोत्तरभावोऽपि सूचित । यतो विना सामान्यज्ञान विशेष-जिज्ञासाया अनुदय ॥ १ ॥

विशेषकर्मणो धर्मातिदेशाधिकरणम् ॥ २ ॥

### यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ २ ॥

अविहितधर्मके कर्मणि विहितधर्मकेभ्य सर्वेभ्य कर्मभ्य इतिकर्त-व्यताऽऽकाङ्क्षापूरकधर्मा अतिदिश्यन्ते, उतैकस्मादेव तादृशकर्मण ? एक-स्माच्चेत्कस्मादित्याऽऽकाङ्क्षायामाह--**यस्येति** । **यस्य**- वैदिकविध्यन्तस्य, **लिङ्ग** किञ्चिच्छब्दगतमर्थगत वा, वैकृतकर्मविधौ तद्गुणवाक्ये वा दृश्यते । तत्र स एव विध्यन्त स्यात् । **अर्थस्य**- तस्य लिङ्गस्य तेन विध्यन्तेन **सयोगात्**- सम्बन्धात् । **अभिधानवत्**-- अग्निहोत्रादिनामवत् । 'सौर्यं चरु निर्वपेद् ब्रह्मवर्चसकाम ' इत्यत्र वाक्ये कथभावाऽऽकाङ्क्षापूरकप्रत्यक्षशब्दाभावात् विधिवाक्ये निर्वपतिलिङ्गम्, ओषधिद्रव्यलिङ्गम्, एकदेवतालिङ्ग च स्वसम्बन्धिनमाऽऽग्नेययागविध्यन्त स्मारयति । तद्विध्यन्तस्मरणे तद्वाचकशब्द-स्मृतिर्जायते । ततस्तमेव शब्द वाक्ये योजयति । 'सौर्यं चरुमाग्नेयवन्निर्वपेत्' इति आकाङ्क्षापूरक वाक्य सम्पन्नम् । एव सोमादौ पश्वादियागे चावगन्त-व्यम् । इत्येव निखिलाध्यायार्थसिद्धावुत्तरप्रपञ्च शिष्यबुद्धिवैशद्यार्थ इति भाव ॥ २ ॥

सोमे ऐष्टिकधर्मानतिदेशाधिकरणम् ॥ ३ ॥

## प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यात् ॥ ३ ॥

'ज्योतिष्टोमेन स्वर्गकामो यजेत, इति श्रूयते । तत्र कुतो विध्यन्त इति विमर्शे **सोमे**— उक्तसोमयागे ' **इष्टेः**— दर्शपूर्णमासेष्टेः, विध्यन्तस्य तद्धर्माणां **प्रवृत्तिः स्यात्** । कुतः ? **प्रवृत्तत्वात्**--सोमाङ्गभूतदीक्षणीयादिषु तद्विध्यन्तस्य प्रवृत्तत्वात्सोमेऽपि स एव विध्यन्त इति प्रवृत्त्या विज्ञायते ॥३॥

## लिङ्गदर्शनाच्च ॥ ४ ॥

'तस्यैकशतं प्रयाजानुयाजाः' इत्यैष्टिकधर्माः सोमे दृश्यन्ते । अतोऽप्यैष्टिकविध्यन्त इति निश्चीयते ॥ ४ ॥

## सि० ॥ कृत्स्नविधानाद्वा अपूर्वत्वम् ॥ ५ ॥

**कृत्स्नस्य**— सम्पूर्णाङ्गकलापस्य, तत्र **विधानात्, अपूर्वत्वम्**— धर्मानपेक्षत्वं तस्येति शेषः ॥ ५ ॥

## स्रुगभिघारणाभावस्य च नित्यानुवादत्वात् ॥ ६ ॥

ननु, सोमस्य अपूर्वत्वे-- इष्टिधर्मानपेक्षत्वे " घृतं वै देवा वज्रं कृत्वा सोममघ्नन् । स्रुचौ बाहू । तस्मात्स्रुचि सोमहविर्नाऽऽसाद्यते । न सोममाज्येनाभिघारयन्ति " इति निषेधोऽनुपपन्नः । तस्य प्राप्तिपूर्वकत्वात्तत्राह— **स्रुगिति**। स्रुचाहविरधारणमाज्येनाभिघारणाभावश्च नित्यानुवाद इत्यर्थः ॥६॥

## विधिरिति चेत् ॥ ७ ॥

उक्तप्रवृत्त्या सोमे ऐष्टिकधर्मानङ्गीकृत्य तत्र स्रुग्धारणाभिघारणयोः प्राप्तौ तन्निवृत्त्यर्थमयं निषेधविधिरिति चेत्— ॥ ७ ॥

## न वाक्यशेषत्वात् ॥ ८ ॥

**नाय** विधि. । कुतः ? **वाक्यशेषत्वात्**--" अग्निपुर्वा एतत्सोमं यदभिषुण्वन्ति । यदस्य स्रुचौ बाहू कुर्वन्ति । यच्चाज्यमन्तिकमकार्षु. । यदाह,

अंशुरंशुस्ते देव ममाप्यायताम्" इति विधेरर्थवादरूपत्वादस्य वाक्यस्येत्यर्थः । अस्यापि विधिवोक्तो वाक्यमदापत्तिरिति भावः ॥ ८ ॥

## शङ्कते चानुपोषणात् ॥ ९ ॥

'यदनुपोष्य प्रयायात् ग्रीवबद्धमेनममुष्मिन् लोके निर्नयेरन्' इत्यनुपोषणं शङ्कते । सोमस्वर्गिकर्मे वै इष्टयामुपोषणस्य नियतत्वादनुपोषण-शङ्का अनुपपन्ना । अतोऽप्यपूर्व इति भावः ॥ ९ ॥

## दर्शनमैष्टिकानां स्यात् ॥ १० ॥

'एकशत प्रयाजानुयाजाः' इति यदैष्टिकप्रयाजानुयाजदर्शनं, तत्सोमाङ्गभूतदीक्षणीयाद्यवभृथान्तानां प्रयाजपरिगणनं स्यात् । तस्मादपूर्वः सोमः ॥ १० ॥

ऐन्द्राग्नादौ ऐष्टिकधर्मातिदेशाधिकरणम् ॥ ४ ॥

## इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् ॥ ११ ॥

'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः' इत्याद्याः काम्याः, तथा नैमित्तिका अन्याश्चेष्टयः सन्ति । तासु दार्शपौर्णमासिकविध्यन्त. तध्दर्मप्राप्तिः स्यात् । तद्धितेन देवतानिर्देशादक लिङ्गं प्रथमाधिकरणे दर्शितमेव ॥ ११ ॥

अग्नीषोमीयपशौ दार्शिकधर्मातिदेशाधिकरणम् ॥ ५ ॥

## पशौ च लिङ्गदर्शनात् ॥ १२ ॥

पशौ— अग्नीषोमीयपशावपि,दर्शपूर्णमासधर्मः । एकादशप्रयाजानुयाजलिङ्गदर्शनात् ॥ १२ ॥

सवनीयादिपशौ अग्नीषोमीयधर्मातिदेशाधिकरणम् ॥ ६ ॥

## दैक्षस्य चेतरेषु ॥ १३ ॥

दैक्षस्य— अग्नीषोमीयपशोः, धर्मा इतरेषु— तद्भिन्नपशुयागेषु । आलभतिचोदनाविहितत्वादिलिङ्गादिति ज्ञेयम ॥ १३ ॥

सौर्ययागे **अप्रवृत्तत्वात्**—अनतिदिष्टत्वात्, फलादीनां त्रयाणां प्रधानेन सह सम्बध्दत्वात् प्रधानानिवृत्तौ **फलनियमकर्तृसमुदायस्य अनन्वयः**—तत्र अप्रवृत्तिरित्यर्थः ॥२०॥

## प्रवृत्तावपि तादर्थ्यात् ॥ २१ ॥

सौर्ययागे प्रधानकर्मण उपकारकाऽऽकाङ्क्षामात्रस्य विद्यमानत्वात्प्रकृतौ यत्प्रधानोपकारकत्वेन क्लृप्तं तस्यैवाऽऽकाङ्क्षया ग्रहणं वाच्यम् । सत्येवं फलं पुरुषोपकारकम् । तथा यावज्जीवनियमोऽपि पुरुषार्थः । एवं कर्मापि स्वर्गकामार्थम् । तथा प्रधानकर्मापि फलार्थमित्येतेषां मध्ये कस्यापि क्रत्वर्थत्वाभावात् **प्रवृत्तावपि**-अतिदेशेन प्राप्तावपि, **तादर्थ्यात्**-पुरुषार्थत्वात्, कर्मानुपकारकत्वेन व्यर्थमेव स्यादतो न तेषां विकृतौ प्रवृत्तिरिति भावः ॥ २१ ॥

## अश्रुतित्वाच्च ॥ २२ ॥

मासाग्निहोत्रे अग्निहोत्रवदिति नाम्ना प्रधानातिदेशवत् अत्र प्रधानातिदेशस्य **अश्रुतित्वात्**—अशास्त्रत्वादपि, न तत्प्रवृत्तिरिति भावः ॥ २२ ॥

### गुणकामानामपि गोदोहनादीनामनतिदेशाधिकरणम् ॥ १४ ॥

## गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यात् ॥ २३ ॥

'गोदोहनेन पशुकामस्य, उपास्मै गायता नर इति ग्रामकामाय प्रतिपदं कुर्यात्' इत्यादिप्रधानफलातिरिक्तपश्वादिफलसाधनानां गोदोहनादीनां **गुणकामेषु**—गुणात् -गोदोहनादेः कामः-पश्वादीच्छायां सत्यां, **तत्प्रवृत्तिः** स्यात् । **आश्रितत्वात्**—प्रणयनाश्रितत्वात् । आश्रयसत्त्वे आश्रितसत्त्वमावश्यकम् । पटसत्त्वे पटाश्रितचित्रसत्त्ववदिति ॥ २३ ॥

## सि० ॥ निवृत्तिर्वा कर्मभेदात् ॥ २४ ॥

**निवृत्तिः**—गोदोहनादेः विकृतौ निवृत्तिरेव । **कर्मभेदात्**—चमसगोदोहनयोः फलभेदात् । चमसः क्रत्वर्थः । गोदोहनं पुरुषार्थः । क्रत्वर्थस्यैव विकृतावाऽऽकाङ्क्षा । न पुरुषार्थस्यापीति भावः ॥ २४ ॥

## अपि वा अतद्विकारत्वात्क्रत्वर्थत्वात्प्रवृत्तिः स्यात् ॥ २५ ॥

ननु 'खादिरं वीर्यकामस्य यूपं कुर्यादिति' श्रुतेः खादिरप्रवृत्तिरपि विकृतौ न स्यादत आह—**अपि वेति**। खादिरप्रवृत्तिर्युक्तैव तत्र । कुत ? **अतद्विकारत्वात्**—तस्य क्रत्वर्थविकारत्वाभावात् । क्रत्वर्थविकारत्वं च क्रत्वर्थत्वाभावे सति क्रत्वर्थकार्यकारित्वम् । यथा गोदोहनादेः चमसकार्यकारित्वम् । खादिरत्वस्य तद्भिन्नत्वात् 'एकस्य तूभयत्वे संयोगपृथक्त्व'-मिति **क्रत्वर्थत्वाच्च प्रवृत्तिः** स्यादेवेति भाव ॥ २५ ॥

सौर्ये चरावभिमर्शनद्वयस्य विकल्पाधिकरणम् ॥ १५ ॥

## एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥ २६ ॥

'चतुर्होत्रा पौर्णमास्या हवींषि अभिमृशेत्, पञ्चहोत्रा अमावास्यायामिति प्रकृतौ श्रुतम् । 'पृथ्वी होतेत्यादिमन्त्रश्चतुर्होता । अग्निर्होतेत्यादि पञ्चहोता । इदमभिमर्शनं सौर्ययागे अतिदेशेन प्राप्तम् । तत्र **चोदनैकत्वात्**—एकविधिविहितत्वात्, सौर्ययागस्य **अविभाग**—भेदाभाव । अत **एकस्मिन् कर्मणि** उक्तमन्त्रद्वयस्य **विकल्प** एव । न तत्र मन्त्रद्वयं नियतम् । प्रकृतौ कालद्वये कर्मणोर्भिन्नत्वाद् व्यवस्था युक्ता । इह न तथा । अपि तु कालद्वयेऽप्येकत्वात्कर्मण विकल्प एव तयोरिति भावः ॥२६॥

सौर्ये आग्नेयधर्मातिदेशाधिकरणम् ॥ १६ ॥

## लिङ्गसाधारण्याद्विकल्पः स्यात् ॥२७॥

**लिङ्गसाधारण्यात्** — ओषधिद्रव्यात्मकलिङ्गस्योभयत्र तुल्यत्वात्, सौर्ययागे आग्नेयाग्नीषोमधर्मयो**र्विकल्पः स्यात्** ॥२७ ॥

## सि०॥ ऐकार्थ्याद्विनियम्येत पूर्ववत्त्वाद्विकारो हि ॥ २८ ॥

हि— यतः, सौर्ययागो **विकारो**—विकृतिः । अतः **पूर्ववत्त्वात्**—प्रकृतिधर्मसापेक्षत्वात्, तत्र **ऐकार्थ्यात्**— एकदेवताकत्वात्, **नियम्येत**—आग्नेयविष्यन्त एव तत्र नियम्येत ॥२८॥

## अश्रुतत्वान्नेति चेत् ॥ २९ ॥

सौर्यमिति तद्धितान्तेन पदेन सूर्यो देवता अस्येति सूर्यो वा इति नियन्तुमशक्यत्वादश्रुतमेकदेवताकत्वमिति चेत्—॥ २९ ॥

## स्यात्लिङ्गभावात् ॥ ३० ॥

'अमुनेरादित्य स्वेन भागधेयेनोपधावति' इत्यर्थवादवाक्ये सूर्यपर्यायाऽऽदित्यपदोत्तरमेकवचनरूप**लिङ्गभावात्**—उक्तलिङ्गसत्त्वात्, स्यादेकदेवताकत्वमिति भाव· ॥ ३० ॥

## तथा चान्यार्थदर्शनम् ॥ ३१ ॥

**तथा**—'उदुत्यं जातवेदसं देवं चित्रमिति मन्त्रद्वयेऽपि **अन्यार्थदर्शनम्**—अन्यार्थस्य-एकवचनस्य दर्शनमस्तीति शेषः ॥ ३१ ॥

**हविर्देवतयोर्विकल्पे हविःसामान्यस्य बलीयस्त्वाधिकरणम् ॥ १७ ॥**

## विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात् ॥ ३२ ॥

'ऐन्द्रमेकादशकपालं निर्वपेत' इति श्रुतम् । अत्र देवतालिङ्गेन पयोधर्माः, एकादशकपालादिलिङ्गेन पुरोडाशधर्मा इति रीत्या **विप्रतिपत्तौ**—विरोधे सति, **हविषा**— हविःसादृश्येन, विध्यन्तो **नियम्येत** । न देवतया । कुतः ? **कर्मणः तदुपाख्यत्वात्**—हविरन्तरङ्गत्वात्, कर्मोत्पत्तिवाक्येन कर्मणि बोध्ये कर्मबोधकपदेन सार्कं सन्निहितं द्रव्यवाचकं पदम् । तथा हि— निर्वपतिधातुवाच्यं कर्म, द्रव्यवाचकस्तद्धितः । तेन व्यवहितं देवतावाचकं पदमव्यवहितश्च तद्धितः । अतो देवता बहिरङ्गम् । द्रव्यं यागस्यान्तरङ्गम् । विरोधे द्रव्यलिङ्गेन देवतालिङ्गं बाध्यत इति भावः ॥३२॥

## तेन च कर्मसंयोगात् ॥ ३३ ॥

**तेन**—हविषा च संयुज्य कर्म चोद्यते । 'सौर्यं चरुम्, ऐन्द्रमेकादशकपालं निर्वपेदिति । हविः कर्मणि साक्षात्प्रकारः । देवता तु हविर्द्वारा। अतोऽपि हविर्लिङ्गं प्रबलमित्यर्थः ॥ ३३ ॥

## गुणत्वेन देवताश्रुतिः ॥ ३४ ॥

**गुणत्वेन**—हविषो विशेषणत्वेन, **देवताश्रुतिः** । तद्धितार्थे प्रकृत्यर्थो विशेषणम् । प्रत्ययाना प्रकृत्यर्थान्वितस्वार्थबोधकत्वानियमात् । विशेषणापेक्षया *विशेष्यस्य प्रबलत्वादिति भाव ॥ ३४ ॥*

**शतकृष्णलाख्यहिरण्ये औपधधर्मातिदेशाधिकरणम् ॥ १८ ॥**

## हिरण्यमाज्यधर्मस्तेजस्त्वात् ॥ ३५ ॥

'प्राजापत्यं घृते शतकृष्णल चरुं निर्वपेदायुष्कामः' इति श्रूयते । शतकृष्णलं सुवर्णशकलशतम । तत् **हिरण्यमाज्यधर्मः**-- उपांशुयाजविध्यन्तस्तत्र स्यात् । कुतः ? **तेजस्त्वसामान्यात्** । हिरण्यमस्मनां तेजः । आज्यमपि गव तजः । प्रतिबिम्बाधिष्ठानादुभयोः सादृश्यमिति भावः ॥ ३५ ॥

## धर्मानुग्रहाच्च ॥ ३६ ॥

हिरण्ये आज्यावेक्षणादिरूपाग। **धर्माणामनुग्रहात्**--अत्राधात, तस्य पुरोडाशधर्मत्वे वितुषीकरणरूपद्वारलोपेन अवहननादीना बाध एव स्यात्। *तस्मादाज्यधर्मास्तत्रेति भावः ॥ ३६ ॥*

## सि० ॥ औषधं वा विशदत्वात् ॥ ३७ ॥

कृष्णलेषु **औषध वा**--औषधस्य विध्यन्त । तद्धर्मा इत्यर्थः । कुतः ? **विशदत्वात्**--कृष्णलव्रीह्यो. काठिन्यविरलत्वादिरूप वैशद्यं विद्यते । घृते तन्नास्ति ॥ ३७ ॥

## चरुशब्दाच्च ॥ ३८ ॥

'प्राजापत्यं चरुम्' इति **चरुशब्दश्च** ओषधिधर्मप्रापकः । तत् प्रबलं लिङ्गम् । आज्ये चरुशब्दव्यवहाराभावादिति भावः ॥ ३८ ॥

## तस्मिंश्च श्रपणश्रुतेः ॥ ३९ ॥

'घृते श्रपयति' इति **तस्मिन्**—आज्ये **श्रपणश्रुतेः**—श्रपणश्रवणादपि ओषधिधर्मप्राप्तिः कृष्णलेषु । न हि श्रपणमाज्यधर्मः । किन्तु ओषधिधर्म इति भावः ॥ ३९ ॥

मधूदके उपांशुयाजीयाऽऽज्यधर्मातिदेशाधिकरणम् ॥१९॥

## मधूदके द्रवसामान्यात् पयोविकारः स्यात् ॥ ४० ॥

'दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यम्' इदं चित्रायागस्योत्पत्तिवाक्यम् । अत्र **मधूदकयोः पयोविकारः**—पयोधर्मः स्यात् । **द्रवसामान्यात्**—द्रवत्वेन सादृश्यादित्यर्थः ॥ ४० ॥

## सि०॥ आज्यं वा वर्णसामान्यात् ॥४१॥

**आज्यम्**— आज्यधर्मास्तत्र स्युः । **वर्णसामान्यात्**—वर्णेन साजात्यादुभयोरित्यर्थः ॥ ४१ ॥

## धर्मानुग्रहाच्च ॥ ४२ ॥

आज्यधर्माणां बहूनामनुग्रहादपि **तद्धर्मा** एव तत्र । पयोधर्मत्वे दोहनादीनां बहुधर्माणां बाधःस्यादिति भावः ॥ ४२ ॥

## पूर्वस्याविशिष्टत्वात् ॥ ४३॥

**पूर्वस्य**—पूर्वपक्षिणोक्तस्य द्रवत्वेन सादृश्यस्य, **अविशिष्टत्वात्**—आज्येऽपि सत्त्वादविरोध इति भावः ॥ ४३ ॥

इति पूर्वमीमांसासूत्रवृत्तौ **भावबोधिन्या**मष्टमाध्यायस्य प्रथमः पादः ॥ १ ॥ श्रीः ॥

---

## ॥ अथ अष्टमाध्यायस्य द्वितीयः पादः ॥

चातुर्मास्यसौत्रामण्योरैष्टिकधर्मातिदेशाधिकरणम् ॥ १ ॥

### वाजिने सोमपूर्वत्वं सौत्रामण्यां च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥

चातुर्मास्ये 'वाजिभ्यो वाजिनम्' इति वाजिनयागः श्रुतः । तथा सौत्रामण्याम् 'आश्विनं ग्रहं गृह्णाति । सारस्वतमैन्द्रमिति सुराग्रहाः श्रुताः । अत्र उभयत्र सौत्रामण्यां वाजिने च **सोमपूर्वत्वं**–सोमधर्मत्वम्। **ताच्छब्द्यात्**– सोमो वै सुरा । सोमो वै वाजिनमिति शब्दात् । नात्र वाजिनसुरयोः सोमाभेदः तद्भेदप्रत्यक्षविरोधात् । अत सोमपदस्य सोमधर्मके लक्षणेति भावः ॥१॥

### अनुवषट्काराच्च ॥ २ ॥

'वाजिनस्याग्ने वीहीत्यनुवषट्करोति । सुराया वीहीत्यनुवषट्कारात्मकलिङ्गादपि सोमधर्मप्राप्तिस्तत्रेति गम्यते ॥ २ ॥

### समुपहूयभक्षणाच्च ॥ ३ ॥

'अध्वर्यो उपह्वयस्व । ब्रह्मन्नुपह्वयस्वेत्यादिउपह्वानमन्त्रैराहूय शेषं समं विभज्य भक्षयन्तीति **समुपहूयभक्षणमपि** सोमधर्मप्राप्तौ लिङ्गम् । यतः समुपहूयभक्षणं सोमधर्म इति भावः ॥ ३ ॥

### क्रयणश्रपणपुरोरुगुपयामग्रहणासादनवासोपनहनं च तद्वत् ॥ ४ ॥

किञ्च, यथा 'अरुणया पिङ्गाक्ष्यैकहायन्या' सोमस्य क्रयः । एवं 'सीसेन क्लीबाच्छष्पाणि क्रीणाती'ति सुरायाः **क्रयः** श्रूयते । 'मैत्रावरुण पयसा श्रीणातीतिवत् 'आश्विनं कुवलसक्तुभिः श्रीणाती'ति **श्रपणमाम्नायते** । एका **पुरोरुक्** एका याज्यैव । न पुरोऽनुवाक्या । 'उपयाम गृहीतोऽस्य च्छिद्रायत्वेति **उपयामयुक्तमन्त्रवत्त्वम्** । 'आश्विनं ग्रहं गृह्णाती'ति **ग्रहण**–

लिङ्गम् । गृहीत्वा आसादयन्तीति आसादनलिङ्गम् । ' त्रिरात्रं सहता भवन्ति । क्षौमे वाससुपनिबद्धा इति वासोपनहनम् । इत्येवं क्रयणादीनि लिङ्गानि सोमप्रकृतिकत्वं वाजिनेज्यासौत्रामण्योरुपोद्बलयन्तीति तयोः सौमिको विध्यन्त इति प्राप्तम् ॥४॥

## सि०॥ हविषा वा नियम्येत तद्विकारत्वात् ॥५॥

हविषा—हविःसादृश्येन, नियम्येत— ऐष्टिको धर्मो नियम्येत । तद्विकारत्वात्—तस्य दर्शपूर्णमासिकहविषः विकारत्वात्सुरावाजिनयोः । सुरा ओषधिद्रव्यविकारः । वाजिनं च सान्नाय्यविकारः । तस्मादैष्टिकधर्मास्तयोरिति भावः ॥ ५ ॥

## प्रशंसा सोमशब्दः ॥ ६ ॥

' सोमो वै सुरेति वाक्ये सोमशब्दः प्रशंसा—स्तावकः । अमात्ये राजशब्दवत् । अतो नाय नाम्ना धर्मातिदेशकः ॥ ६ ॥

## वचनानीतराणि ॥ ७ ॥

एवं हविःसादृश्येन ऐष्टिकधर्मत्वे सिद्धे इतराणि—सीसक्रयादीनि वाचनिकानि, आमनहोमादिवद्विशेषधर्मत्वेन विधीयन्ते । न हि वचनस्यातिभारोऽस्तीति भाव. ॥ ७ ॥

## व्यपदेशश्च तद्वत् ॥ ८ ॥

' शष्पैरेव दीक्षणीयामाप्नोति । तोक्मभिः प्रायणीयाम् । सिंहलोमभिरातिथ्यामिति व्यपदेशोऽपि तद्वत्—सोमशब्दवत्स्तुत्यात्मक इत्यर्थः ॥८॥

## पशुपुरोडाशस्य च लिङ्गदर्शनात् ॥ ९ ॥

' नैता पशूना पुरोडाशा भवन्ति । ग्रहपुरोडाशा ह्येते ' इत्यनेन पुरोडाशप्रतिषेधं कृत्वा गृहाणा पुरोडाशधर्मत्वेन पुरोडाशकार्यं ते कुर्युरिति स्तुतिर्लिङ्गमिति भावः ॥ ९ ॥

पशौ सान्नाय्यधर्मातिदेशाधिकरणम् ॥ २ ॥

## पशुः पुरोडाशविकारः स्याद्देवतासामान्यात् ॥१०॥

' यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति ज्योतिष्टोमे श्रुतः पशुः- अग्नीषोमीयपशुयागः, पुरोडाशविकार -तद्धर्मा स्यात् । देवतासामान्यात्- अग्नीषोमीयदेवतासादृश्यादिति ॥ १० ॥

## प्रोक्षणाच्च ॥ ११ ॥

' अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामीति पशुं प्रोक्षति ' इति *प्रोक्षणस्य पुरोडाशधर्मस्य श्रवणमपि तस्य पुरोडाशधर्मत्वविषये* लिङ्गमिति ॥ ११ ॥

## पर्यग्निकरणाच्च ॥ १२ ॥

' आहवनीयादुल्मुकेन पशुं पर्यग्निकरोति ' इति पुरोडाशधर्म- पर्यग्निकरणश्रवणादपि तद्धर्मत्वमवगम्यते ॥ १२ ॥

## सि० ॥ सान्नाय्यं वा तत्प्रभवत्वात् ॥१३॥

सान्नाय्यं- *सान्नाय्यधर्म एव तत्र स्यात्* । तत्प्रभवत्वात्- *पशुप्रभवत्व- साजात्यात्* ॥ १३ ॥

## तस्य च पात्रदर्शनात् ॥ १४ ॥

' कुम्भ्या श्रपयति ' इति तस्य-पशो , पात्रस्य दर्शनादपि पशौ सान्नाय्यधर्मा इति निर्णय ॥ १४ ॥

*पशौ पयोधर्मातिदेशाधिकरणम् ॥ ३ ॥*

## दध्नः स्यान्मूर्तिसामान्यात् ॥ १५ ॥

सान्नाय्यमध्ये दध्नो धर्म स्यान्न पयसः । मूर्तिसामान्यात्-मूर्तेः- घनीभावस्य सादृश्यादित्यर्थः ॥ १५ ॥

## सि० ॥ पयो वा कालसामान्यात् ॥ १६ ॥

**पयोधर्म** एव स्यात् । **कालसामान्यात्**--एकाहसाध्यत्वरूपकालसा-दृश्यादिति भावः ॥ १६ ॥

## पश्चानन्तर्याच्च ॥ १७ ॥

**पश्चानन्तर्यात्**– पशुप्रभवमध्ये प्रथमं पयः पश्चाद्दधीति पयः पशोरन्तरङ्गमिति भावः ॥ १७ ॥

## द्रवत्वं चाविशिष्टम् ॥ १८ ॥

पशुरपि द्रवति, पयोऽपि द्रवतीति **द्रवत्वं चाविशिष्टं**— द्वयो-स्तुल्यम् । द्रवत्वेन तयोः साजात्यमिति भावः ॥ १८ ॥

### आमिक्षायां पयोधर्मातिदेशाधिकरणम् ॥ ४ ॥

## आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् ॥ १९ ॥

'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षेति श्रुत आमिक्षायागः पयोदध्युभयधर्मः स्यात् । **उभयभाव्यत्वात्**— पयोदध्युभयजन्यत्वा-दित्यर्थः ॥ १९ ॥

## एकं वा चोदनैकत्वात् ॥ २० ॥

**एकं वा**—एकमेव विकुर्याच्च । **चोदनैकत्वात्**— एकविधिविहित-त्वात् । एकविध्यन्तेन निराकाङ्क्षत्वान्नोभयमिति भावः ॥ २० ॥

## दधि सङ्घातसामान्यात् ॥ २१ ॥

**दधिधर्मः । सङ्घातसामान्यात्**—घनीभावेन सादृश्यात् ॥ २१ ॥

## सि० ॥ पयो वा तत्प्रधानत्वात् लोकवद्दध्नस्तद-र्थत्वात् ॥ २२ ॥

**पयो वा**—पयोधर्मा एव स्युस्तत्र । कस्मात् ? **तत्प्रधानत्वात्**-पयसो भूयस्त्वात् । **लोकवत्**—लोके पयसो घनीभावार्थं दध्यातञ्चनं क्रियते। तद्वत्प्रकृतेऽपि **दध्नः**—दधिनिक्षेपस्य, **तदर्थत्वात्**—पयसो घनीभावार्थत्वात् । घनीभूतं पय एव तदिति भावः ॥ २२ ॥

## धर्मानुग्रहाच्च ॥ २३ ॥

इत्थमेकाहसाध्यत्वादिधर्माणामनुग्रहोऽपि सिद्धो भवति ॥२३॥

## सद्योभावं च दर्शयति ॥ २४ ॥

'जुषन्तां युज्यं पयः' इति सद्योभावं— एकाहसाध्यत्वं दर्शयति । तत् आमिक्षाया दधिधर्मत्वे विरुध्येत । तच्चैकाहसाध्यत्वं द्रढयति । तस्मात्पयोधर्मत्वमेवाऽऽमिक्षाया इति भावः ॥ २४ ॥

**सत्राहीनयोः सत्राहीनात्मकद्वादशाहधर्माणां व्यवस्थयाऽतिदेशाधिकरणम् ॥ ५ ॥**

## सत्रमहीनश्च द्वादशाहः तस्योभयथा प्रवृत्तिः ऐककर्म्यात् ॥ २५ ॥

'*प्रायणीयोऽतिरात्रः । पृष्ठ्यः षडहः । त्रयश्छन्दोमाः । अविवाक्यमहः । उदयनीयोऽतिरात्रः*' इत्यहर्गणात्मको द्वादशाहः क्रतुर्विधीयते । स 'सत्रमहीनश्च द्वादशाहः' इत्यभियुक्तोपदेशात्सत्रमहीन इत्युभयसंज्ञकः । 'एके द्वा बहवोऽपि वा अहीनेन यजेरन् । तान् दीक्षिता याजयेयुः' 'गृहपतिसप्तदशाः स्वयमृत्विजो ब्राह्मणाः सत्रमुपेयुः' इत्येवमादयस्तस्य धर्माः संज्ञाभेदेन व्यवस्थया आम्नाताः । स 'गणेषु द्वादशाहस्येति द्विरात्रादिषु विकृतिष्वहर्गणेषु प्रवर्तते इत्युक्तम् । एवं स्थिते द्विरात्रादिषु अहीनेषु गवामयनादिसत्रेषु च प्रत्येकमुभयधर्माः प्रवर्तन्त इति वक्तुमुचितम् । न सत्रे सत्रधर्मा अहीने अहीनधर्मा इति । कस्मात् ? द्वादशाहः सत्रमहीनश्चेत्युभयरूपत्वात् । तस्य—द्वादशस्य द्वादशाहस्य उभयथा—उभयप्रकारेण प्रवृत्तिः । ऐककर्म्यात्—कर्मण एकत्वादिति ॥ २५ ॥

## सि० ॥ अपि वा यजतिश्रुतेरहीनभूतप्रवृत्तिः स्यात् प्रकृत्या तुल्यशब्दत्वात् ॥ २६ ॥

अपि वा—नोक्तरीत्या प्रवृत्तिः । अपि तु यत्र यजतिस्तत्र अहीनभूतस्य धर्मस्य प्रवृत्तिः स्यात् । कुतः ? प्रकृतौ 'द्वादशाहेन प्रजाकामं

याजयेत्' इति यजतिश्रुतेः **प्रकृत्या तुल्यशब्दत्वात्**—'य एवं विद्वान् द्विरात्रेण यजते' इति प्रकृतिसदृशशब्दत्वात् । एवं अहीने-अहीनधर्मे निश्चिते तुल्यन्यायेन सत्रधर्मा अपि सत्र एवेत्यर्थोऽपीदं भवतीति भावः ॥२६॥

## द्विरात्रादीनामेकादशरात्रादहीनत्वं यजतिचोदनात् ॥ २७ ॥

अहर्गणमध्ये कियतामहीनत्वं सत्रत्वं च कियतां तदाह—**द्विरात्रेति** । द्विरात्राद्येकादशरात्रान्तानामहीनत्वम् । **यजतिचोदनात्**— यजतिधातुपाठेन विधानादित्यर्थः ॥ २७ ॥

## लिङ्गाच्च ॥२८॥

'अग्निष्टोमो वै प्रजापतिः, स उत्तरानेकाहानसृजत । तमेन द्विरात्रादय अहर्गणा ऊचुः, त्वमस्मान्मा हासीरिति । तदेषामहीनत्वमिति' । तदेषामहीनत्वे लिङ्गमप्यस्तीति बोध्यम् ॥ २८ ॥

पञ्चदशरात्रादिषु सत्रधर्मातिदेशाधिकरणम् ॥ ६ ॥

## अन्यतरतोऽतिरात्रत्वात् पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वदर्शनात् ॥ २९ ॥

'त्रिवृदग्निष्टुदग्निष्टोमस्त्रिरात्रो दशरात्र उदयनीयोऽतिरात्रः' इत्युपदिष्ट-**पञ्चदशरात्रस्य**, तथा 'मासमग्निहोत्रं जुहुनीत्यारभ्य यावद्दशरात्रो महाव्रतमुदयनीयोऽतिरात्र इति **कुण्डपायिनामयनस्य च** अहीनत्वम् । न सत्रत्वम् । कुतः ? आद्यन्तयोर्मध्ये अन्यतरदेशे **अतिरात्रसंज्ञकस्य सत्त्वात्** । यश्चान्यतरतोऽतिरात्रः सोऽहीनः । यतस्तद्**भूतेषु**—अन्यतरतोऽतिरात्रभूतेषु, **अहीनत्वं** श्रूयते । यदन्यतरतोऽतिरात्रस्तेनोऽहीन इति ॥ २९ ॥

## अहीनवचनाच्च ॥ ३० ॥

उक्तवाक्ये अहीन इति प्रत्यक्षवचनादपि तयोरहीनत्वमिति ॥३०॥

## सत्रे चोपेयिचोदनात् ॥ ३१ ॥

ते उभे पञ्चदशरात्रकुण्डपायिनामयने **सत्रे** एव । कुतः ? **उपेयिचोदनात्**—'य एव भूतिकार्यमिच्छन्तस्त एन पञ्चदशरात्रमुपेयु ' कुण्डपायिनामयनेऽपि ' भूतिकामा उपेयु ' ' इति उपशब्दघटितवाक्याभ्या तयोर्विधानादिति भाव ॥ ३१ ॥

## सत्रलिङ्गं च दर्शयति ॥ ३२ ॥

' गृहपति. सुब्रह्मण्य सुब्रह्मण्य ' इति कुण्डपायिनामयने ' गृहपति ' रिति **सत्रलिङ्गं च** दृश्यते । यत सत्रे एव गृहपतिरिति व्यवहारो नान्यत्र । अतोऽपि तयो सत्रत्वमिति निष्कर्ष ॥ ३२ ॥

इति पूर्वमीमासासूत्रवृत्तौ **भावबोधिन्या**मष्टमाध्यायस्य द्वितीय पाद ॥ २ ॥ श्री ॥

---

## ॥ अथ अष्टमाध्यायस्य तृतीयः पादः ॥

शुचिदेवते आग्नेयस्य आग्नावैष्णवे च अग्नीषोमीयस्य धर्मातिदेशाधिकरणम् ॥ १ ॥

## हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ १ ॥

' आग्नावैष्णवमेकादशकपाल निर्वपत्, सारस्वत चरु, बार्हस्पत्य चरुम् ' । तथा ' अग्नये पवमानायाष्टाकपालम्, अग्नये पावकाय, अग्नये शुचये ' इत्यहर्गणा अत्रोदाहरणम् । अस्मिन् **हविर्गणे परं**—शुचिदेवतमुत्तरस्य–अग्नीषोमीयस्य विकार । पूर्वमग्नावैष्णवमपि पूर्वस्य आग्नेयस्य विकार । कुत ? **देशसामान्यात्**–क्रमसामान्यादित्यर्थ. । इहोदाहरणे शुचिदेवतो द्वितीय । प्रकृतौ चाग्नीषोमीयो द्वितीय । तथा आग्नावैष्णव प्रथमोऽत्र । प्रकृतावप्याऽऽग्नेय प्रथम इति देशसामान्यलिङ्गेन परमुत्तरस्य पूर्वं पूर्वस्य विकार इति भाव ॥ १ ॥

## सि० ॥ देवतया वा नियम्येत शब्दवत्त्वात् इतरस्य अश्रुतित्वात् ॥ २ ॥

नैवात्र देशनियम स्यात् । अपि तु **देवतया**— देवतासादृश्येन, **नियम्येत**— प्रकृतिर्नियम्येत । कुतः ? **शब्दवत्त्वात्**- देवतावाचक—आग्नावैष्णव-- अग्निरावक इति च प्रत्यक्षशब्दवत्त्वात् । **इतरस्य**— स्थानवाचकशब्दस्य, **अश्रुतत्वात्** । तस्मात्-शुचिदेवत्ये आग्नेयस्य धर्मा , आग्नावैष्णवे च अग्नीषोमीयस्येति निर्णय ॥२॥

जनकसप्तरात्रे त्रिवृत्सु अहःसु द्वादशाहधर्मातिदेशाधिकरणम् ॥ २ ॥

## गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताऽऽग्नेयवत् ॥ ३ ॥

**जनकसप्तरात्रे** ' चत्वारि त्रिवृति अहानि भवन्ती'ति श्रूयते । तथान्यत्र ' नव त्रिवृन्त्यहानि भवन्ती'ति च । तत्रैवविधाया **गणचोदनायां यस्य**-- प्रथमस्य अन्ह , **लिङ्ग** त्रिवृत्त्व, **तस्य**—प्रथमस्यान्ह , **आवृत्तिः प्रतीयेत** । **आग्नेयवत्**-- आग्नेयविध्यन्ताभ्यासवदित्यर्थ । यथा-- ' अग्नये पवमानाय, अग्नये पावकाय, अग्नये शुचये ' इत्यत्र देवतैक्याच्चोदनासादृश्याच्च आग्नेयविध्यन्ताभ्यासस्तथात्रापीति भाव ॥ ३ ॥

## सि० ॥ नाना अहानि वा सङ्ख्यातत्वात्प्रवृत्तिलिङ्गेन चोदनात् ॥ ४ ॥

**नाना अहानि वा**—द्वादशाहिकानि नाना अहान्येवात्र प्रवर्त्तन्ते । नत्वावृत्ति' प्रथमस्यान्ह । कुत ? **सङ्ख्यातत्वात्**--चत्वार्यहानीति सङ्ख्यया अन्हा समुदायस्य विधानात् । **प्रवृत्तिलिङ्गेन**—द्वादशाहिकाहश्चतुष्टयानुवादेन, **चोदनात्**—त्रिवृत्त्वविधानात् । चत्वारि त्रिवृन्त्यहानीति वचनस्य चारितार्थ्यमिति भाव ॥ ४ ॥

## तथा चान्यार्थदर्शनम् ॥ ५ ॥

तथा च — 'चत्वारि त्रिवृन्त्यहानि अग्निष्टोममुख्यानि । तेषामग्निष्टोमः प्रथमः, अनग्निष्टोमा इतरे'। अनेन भिन्नधर्मकत्वमन्हां सूचितम् । अयोमुख्यपिण्डच्छेदनवदिति भावः ॥ ५ ॥

### षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् ॥ ३ ॥

## कालाभ्यासे च बादरिः कर्मभेदात् ॥ ६ ॥

कश्चित्कर्मविशेषे षडहा भवन्तीति पाठत्वा 'चत्वारः षडहा भवन्ती'ति षट्त्रिंशद्रात्रे श्रूयते । तत्र **कालाभ्यासे**— कालाभ्यासबोधकमिदं वाक्यं, न षडहकर्माभ्यासार्थकमिति **बादरि**राचार्यो मनुते । तथा च चतुर्विंशतिरहानि भवन्ति । एवं चाहर्गणसाध्यत्वात् द्वादशाहधर्मप्रवृत्तिरेवेति तत्तात्पर्यम् ॥ ६ ॥

## सि० ॥ तदावृत्तिं तु जैमिनिरन्हामप्रत्यक्षसङ्ख्यत्वात् ॥ ७ ॥

**तदावृत्तिं**—षडहावृत्तिं, **जैमिनि**र्मनुते । कुतः ? **अन्हां**—चतुर्विंशतिसङ्ख्याविशिष्टानामन्हाम्, **अप्रत्यक्षसङ्ख्यत्वात्**— आनुमानिकसङ्ख्याकत्वात् । प्रथमं षडह बुद्ध्वा तस्मिन् चतुष्ट्वसङ्ख्याज्ञानेन हेतुना चतुर्विंशतिसङ्ख्या अनुमेया । ततः प्रथमज्ञातषडहसाध्यकर्मण एवात्र चतुष्ट्वसङ्ख्यान्वये तदभ्यासेन सङ्ख्यापूरणमिति षडहधर्मस्य प्रवृत्तिरिति ॥ ७ ॥

## तस्मात् षडहाभ्यासः ॥ ८ ॥

उक्तार्थोपसंहारार्थमिदं सूत्रं तस्मादिति ॥ ८ ॥

### संस्थागणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ॥ ४ ॥

## संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ॥ ९ ॥

' शतोक्थ्य भवति । शतातिरात्र भवति । पञ्चत्रिंशत्म पञ्चोक्थ्य ' । इत्यादय संस्थागणाः श्रुता । तेषु **संस्थागणेषु** विधीयमानेषु **तदभ्यासः**-- ज्योतिष्टोमाभ्यास **प्रतीयेत** । न सङ्ख्य विशिष्टस्य अह । कुत ? ज्योतिष्टोमस्यैव उक्थ्य अतिरात्र इति नाम । अत **कृतनाम्नः** ज्योतिष्टोमस्यैव **ग्रहणात्** ॥९॥

## सि० ॥ अधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्यादभिधानस्य तन्निमित्तत्वात् ॥१०॥

**तद्विशिष्टा**— उक्थ्यादिसंस्थाविशिष्टा प्रकृति स्यात् । **अधिकारात्** — चोदकशास्त्रेणाधिकृतत्वात् प्राप्तत्वात्, द्वादशाहसम्बधीनि अहानि विधीयन्ते । **अभिधानस्य** उक्थ्यादिनाम्न, **तन्निमित्तत्वात्**--येन साम्ना क्रतुसमाप्तिस्तन्निमित्तत्वात् । तथा च द्वादशाहिकाहर्गणेष्वपि तन्निमित्तत्वस्य अबाध इति भाव ॥ १० ॥

**शतोक्थ्यादौ ज्योतिष्टोमात् स्तोत्रोपचयाधिकरणम् ॥ ५ ॥**

## गणादुपचयस्तत्प्रकृतित्वात् ॥ ११ ॥

' शतोक्थ्य भवति । शतातिरात्र भवती'त्यत्र द्वादशाहसम्बन्धिदशरात्रावृत्तिरिति स्थित पूर्वाधिकरणे। तानि द्वादशाहदशाहानि प्रायेणोक्थ्यसंस्थानि । तदीयोक्थ्यस्तोत्र ज्योतिष्टोमोक्थ्यस्तोत्रापेक्षया अधिका केचन धर्मा आम्नाता । इत्थ शतोक्थ्यस्तोत्रे **गणात्**--द्वादशाहगणात्, **उपचयः**-धर्मप्राप्ति । कुत ? **तस्य शतोक्थ्यप्रकृतित्वात्** । न ज्योतिष्टोमोक्थ्यधर्मा इति ॥ ११ ॥

## सि० ॥ एकाहाद्वा तेषां समत्वात्स्यात् ॥१२॥

**एकाहात्**– ज्योतिष्टोमाद्धर्मग्रहणम्, **तेषां**- शतोक्थ्याना द्वादशाहिकानामह्ना च **समत्वात्**– भिक्षुकत्वेन तुल्यत्वात् । तथा हि-- द्वादशाहसम्बन्धीन्यहानि स्वधर्माणा स्तोत्रशस्त्राणा भिक्षामन्यत इच्छन्ति, शतोक्थ्यान्यपि तथैवेच्छन्तीति तुल्यत्वमुभयोः । ज्योतिष्टोमसमीपे तेषा पठितत्वाज्ज्योति-

ष्टोमो न भिक्षामपेक्षत इत्यभिक्षुक सः । तथा च ' न हि भिक्षुको भिक्षुकं याचते अभिक्षुके सतीति लोकप्रसिद्धन्यायेन ज्योतिष्टोमधर्मास्तत्रेति भावः ॥१२॥

गायत्रमेतदहर्भवतीत्यादावुत्पत्तिगायत्रीणामागमाधिकरणम् ॥ ६ ॥

## गायत्रीषु प्राकृतीनामवच्छेदः प्रकृत्याधिकारात् सङ्ख्यात्वादग्निष्टोमवदव्यतिरेकात्तदाख्यत्वम् ।१३।

' वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत ' इति श्रुते बृहस्पतिसवे ' गायत्रमेतदहर्भवती' ति श्रूयते । तत्र ज्योतिष्टोमादागतत्रिष्टुबनुष्टुबादिच्छन्दस्कानामृचामक्षरलोपं विधाय सर्वासां गायत्रीत्वं सम्पाद्यम । न दाशतयीस्थ गायत्रच्छन्दस्कानामृचां ग्रहणं कार्यम् । कुतः ? गायत्रीषु— गायत्रमेतदहर्भवती'ति श्रूयमाणासु, प्राकृतीनां—त्रिष्टुब्जगत्यादीनाम , अवच्छेदः— अधिकाक्षरलोपः । प्रकृत्याधिकारात्— प्रकृतिचोदनानुग्रहात् । गायत्र्यक्षराणां चतुर्विंशतिसङ्ख्यत्वात् । तदपि कुतः इति चेत्—अव्यतिरेकात्— गायत्रीत्वस्य चतुर्विंशतिसङ्ख्याऽव्यभिचरितत्वात्, तदाख्यत्वं—गायत्र्याख्यत्वं चतुर्विंशतिसङ्ख्याया । अग्निष्टोमवत्—यथाग्निष्टोमः शब्दः स्तुतौ द्वादशाहगतोक्थ्यस्य लोप इति पूर्वाधिकरणे प्रसिद्धस्तद्वदिति भावः ॥ १३ ॥

## नित्यवच्च पृथक्सतीषु तद्वचनम् ॥ १४ ॥

पृथक्सतीषु—गायत्र्यपेक्षया भिन्नासु जगतीषु ' ये हि द्वे गायत्र्यौ सैका जगती'ति नित्यवत्तद्वचनं—गायत्री वचनं सङ्गच्छते । यतो द्वे गायत्र्यौ अष्टाचत्वारिंशत्सङ्ख्या भवति । जगत्यपि तावत्सङ्ख्या इति गायत्रीशब्दस्य ऋक्परत्वे द्वे गायत्र्यौ एका जगतीति वचनमसङ्गतं स्यात् । ऋग्द्वयस्य जगतीत्वाभावादिति चतुर्विंशतिसङ्ख्यायाः गायत्र्यादिप्रवृत्तिनिमित्तत्वे साधकान्तरमिदमिति भावः ॥ १४ ॥

## न विंशतौ दशेति चेत् ॥ १५ ॥

यथा विंशतौ—विंशतिसङ्ख्यायां दशसङ्ख्या वर्तते तथा जगत्यां गायत्री । तथा हि शते पञ्चाशदितिवत्, अष्टाचत्वारिंशत्सङ्ख्यायां जगत्यां चतुर्विंशतिसङ्ख्या अस्त्येवेति जगत्यामपि कार्येऽनुष्ठिते तदन्तर्वर्तिगायत्र्यामपि तत्कृतं भवति । अतो नाक्षरलोपस्त्वेति चेत् न ॥ १५ ॥

## ऐकसङ्ख्यमेव स्यात् ॥ १६ ॥

तथा सति पराधसङ्ख्या एवैः स्यात् । यत इतरासां यावत्सङ्ख्यानां परार्धान्तःपातित्वादिति ॥ १६ ॥

## गुणाद्वा द्रव्यशब्दः स्यात् असर्वविषयत्वात् ॥१७॥

सङ्ख्यायां गायत्रीशब्द इति यदुक्तं तन्न । अपि तु गुणात्—पृथक्सङ्ख्यारूपगुणात, द्रव्यशब्दः—पृथग्द्रव्यवाचकः शब्दः, चतुर्विंशतिवर्णपरः स्यात् । असर्वविषयत्वात्— यावच्चतुर्विंशतिसङ्ख्याऽविषयत्वात । यदि केवलं यावच्चतुर्विंशतिसङ्ख्यापरः तर्हि घटादिवृत्तिचतुर्विंशतिसङ्ख्यायामपि गायत्रीति व्यवहारः स्यादिति भावः ॥ १७ ॥

## गोत्ववच्च समन्वयः ॥ १८ ॥

गोत्ववत्—यथा गच्छतीति गौः इति गमनकर्तृत्वनिमित्तस्य पुरुषादौ सत्त्वेऽपि रूढ्या सास्नादिमत्येव समन्वयः, नान्यत्र । तथा द्रव्यसामान्ये गायत्रीशब्दप्रवृत्तिनिमित्तचतुर्विंशतिसङ्ख्यायाः सत्त्वेऽपि तत्सङ्ख्याविशिष्टवर्णमात्रे समन्वयः । न घटादाविति तस्य द्रव्यपरत्वेऽपि नोक्तातिप्रसङ्गो दोष इति भावः ॥ १८ ॥

## सङ्ख्यायाश्च शब्दवत्त्वात् ॥ १९ ॥

किञ्च, सङ्ख्यायाः—उक्तसङ्ख्यायाः, शब्दवत्त्वात्—चतुर्विंशतिरिति शब्दबोध्यत्वात, तेनैवैकेन शब्देन व्यवहारसिद्धौ गायत्रीति तन्नामान्तरं व्यर्थम् ॥ १९ ॥

## इतरस्याश्रुतित्वाच्च ॥ २० ॥

न व्यर्थम् । **इतरस्य**-- ऋग्रूपद्रव्यस्य, **अश्रुतित्वात्**-- नामराहित्यात् सार्थकमिति भावः ॥ २० ॥

## द्रव्यान्तरे अनिवेशादुक्थ्यलोपे विशिष्टं स्यात् ॥ २१ ॥

अग्निष्टोमवदिति यदुक्तं तस्योत्तरमिदं सूत्रम् । अग्निष्टोमशब्दस्य **द्रव्यान्तरे अनिवेशात्** द्वादशाहिके अहर्गणे चरमस्तोत्रे उक्थ्यलोपं कृत्वा अग्निष्टोमसाम्ना क्रतुसमाप्तौ कृतायामेव **विशिष्टं**--अग्निष्टोमनामविशिष्टं स्यात्तत्कर्मेत्यर्थः ॥ २१ ॥

## अशास्त्रलक्षणत्वात् ॥ २२ ॥

*यथा शताग्निष्टाम इत्यत्र अग्निष्टोमातरस्य प्रत्यक्षशास्त्रगम्यत्वं*, तथा उक्थ्यस्य आनुमानिकत्वेन **अशास्त्रलक्षणत्वात्**— प्रत्यक्षश्रुतगम्यत्वाभावात्, उक्थ्यबाधो युक्त इति भावः ॥ २२ ॥

## उत्पत्तिनामधेयत्वात् भक्त्या पृथक्सतीषु स्यात् ।२३।

ऋचः गायत्रीति **उत्पत्तिनामधेयत्वात्**— स्वभावसिद्धनामत्वात्, **पृथक्सतीषु**—जगत्यवयवेषु, **भक्त्या** लक्षणया, गायत्रीशब्दप्रयोगः स्यात् । द्वे गायत्र्यौ एका जगतीति यल्लिङ्गमुक्तं तस्योत्तरमिदमिति भावः ॥ २३ ॥

## वचनमिति चेत् ॥ २४ ॥

अनुवादे लक्षणा युक्ता । इह तु द्वाभ्यां गायत्रीभ्यां यत् क्रियते जगत्यैव तत्कृतं भवतीत्यत्र विध्यंशे लक्षणया **वचनं**--विधिः, कथमिति चेत्—॥ २४ ॥

## यावदुक्तम् ॥ २५ ॥

**यावद्भिः** समभिव्याहृतिभिः **उक्तं** विधानं भवति । अत एव पृष्ठैरुपतिष्ठत इत्यत्र पृष्ठशब्दार्थस्य मन्त्रस्य विधेयत्वेऽपि लक्षणा पृष्ठशब्दस्य विधेये ॥ २५ ॥

## अपूर्वे च विकल्पः स्यात् यदि सङ्ख्याभिधानम् ॥ २६ ॥

अपूर्वे--प्रकृतौ दर्शपूर्णमासे 'जगत्या परिदध्यात्' इत्युक्त्वा गायत्र्या परिदध्यादित्युक्तम् । तत्रैवं जगत्या अक्षरलोपेन गायत्रीत्वसम्पादनं, 'आजुहोतादुवस्यते' त्यृक् च, अनयोर्विकल्पः स्यात् । यदि सङ्ख्याभिधानं-गायत्रीशब्दः सङ्ख्यापरश्चेदिति तस्य सङ्ख्यावाचकत्वे दूषणान्तरमिदामिति भावः ॥ २६ ॥

## ऋग्गुणत्वान्नेति चेत् ॥ २७ ॥

'पञ्चदशानुब्रूयात्' इति पञ्चदशानामृचां विहितत्वात् 'गायत्र्या परिदध्या'दिति परिधानस्य ऋग्धर्मत्वात् जगत्या अक्षरलोपे ऋगेकदेशस्य ऋक्त्वाभावात् परिधानस्य ऋग्धर्मत्वमृगेकदेशेन जगत्या परिधाने भज्येत । अत 'आजुहोतादुवस्यते' ति ऋचैव परिधानमिति परिधानस्य ऋग्धर्मत्वान्न विकल्प इति चेत्- ॥ २७ ॥

## तथा पूर्ववति स्यात् ॥ २८ ॥

पूर्ववति-- विकृतौ बृहस्पतिसवेऽपि, तथा स्यात्--गानस्यापि ऋग्गुणत्वं स्यात् । ज्योतिष्टोमे ऋक्ष्वेव गानस्य कल्पत्वेन चोदकशास्त्र नयैव प्राप्तौ गायत्रीच्छन्दस्कासु ऋक्षु कृते तच्छास्त्रमनुगृहीतं भवतीति भावः ॥२८॥

## गुणाविशश्च सर्वत्र ॥ २९ ॥

किञ्च, गुणस्य--चतुर्विंशतिसङ्ख्यायाः, आवेशः-समावेशः, सर्वत्र-ग्रहचमसादावपि स्यात् । ग्रहचमसादिनिष्ठसङ्ख्यायामपि गायत्रीशब्दव्यवहारः स्यादिति भावः ॥ २९ ॥

## निष्पन्नग्रहान्नेति चेत् ॥ ३० ॥

निष्पन्नस्य--छन्दोधर्मस्य, ग्रहात्--ग्रहणात् , नोक्तदोष । गायत्रीशब्दस्य यादृशसङ्ख्याया रूढिः तस्यैव गायत्रीशब्देन ग्रहणमिति नैव स दोष इति चेत्-- ॥ ३० ॥

## तथेहापि स्यात् ॥ ३१ ॥

यथा अक्षरगणनायामेव सङ्ख्याया गायत्रीशब्दव्यवहारः, तथा ऋगतिरिक्ते गायत्रीव्यवहाराभावात् सङ्ख्याविशिष्टा ऋक् गायत्रीपदवाच्येत्याह- तथा इहापि स्यादिति ॥ ३१ ॥

**यदि वाऽविशये नियमः प्रकृत्युपबन्धनात् शरेष्वपि प्रसिद्धः स्यात् ॥ ३२ ॥**

यदि वा अविशयेऽपि— गायत्रीशब्दस्य सङ्ख्याविशिष्ट-ऋगर्थत्वे संशयाभावेऽपि, प्रकृत्युपबन्धनात्— चोदकानुग्रहात्, नियमः— अगायत्र्यां गायत्रीशब्दार्थत्वनियमः । तर्हि 'शरमयं बर्हिर्भवती'त्यत्रापि शरशब्दः कुशेष्वपि प्रसिद्ध इति कल्प्यताम् । प्रकृत्यनुग्रहादेव ॥ ३२ ॥

**दृष्टः प्रयोग इति चेत् ॥ ३३ ॥**

'द्वे गायत्र्यौ एका जगती' इति सङ्ख्यायां व्यवहारो दृष्टः । तथा शरस्य कुशे व्यवहारो न दृष्ट इति चेत्— ॥ ३३ ॥

**तथा शरेष्वपि ॥ ३४ ॥**

शरवणमेवेदं कुशवनमित्यपि व्यवहारो दृष्टोऽस्तीत्यर्थः ॥३४॥

**भक्त्येति चेत् ॥३५॥**

दर्शितस्थले शरशब्दस्य लक्षणेति चेत्— ॥ ३५ ॥

**तथेतरस्मिन् ॥ ३६॥**

इतरस्मिन् — गायत्रीशब्देऽपि, तथा — लक्षणेति यावत् ॥३६॥

**अर्थस्य चासमाप्तत्वान्न तासामेकदेशे स्यात् ॥३७॥**

अक्षरलोपे वाक्यघटकीभूतपूर्वपदमात्रग्रहणात् उत्तरपदानां लुप्तत्वेन **अर्थस्य**— वाक्यार्थस्य, **असमाप्तत्वात्**— शाब्दबोधजनकत्वाभावात्, **तासां**— प्राकृतर्चानामेकदेशे गानादिकार्यं न स्यात् । किन्तु चतुर्विंशत्यक्षराणामन्यासामेवर्चां ग्रहणं शास्त्रसम्मतं कर्तव्यमिति सिद्धम् ॥ ३७ ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यामष्टमाध्यायस्य तृतीयः पादः ॥ ३ ॥ श्रीः ॥

## ॥ अथ अष्टमाध्यायस्य चतुर्थः पादः ॥

दर्विहोमशब्दस्य नामधेयत्वाधिकरणम् ॥ १ ॥

### दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥ १ ॥

' यदेकया जुहुयाद्दर्विहोमं कुर्यात् ' इत्यत्र **दर्विहोमशब्दः यज्ञाभिधानं**–यागनामधेयम् । **होमसंयोगात्**–होमशब्दार्थेन साकमभेदसम्बन्धात् ॥ १ ॥

दर्विहोमशब्दस्य लौकिकवैदिकोभयकर्मनामधेयत्वाधिकरणम् ॥ २ ॥

### स लौकिकानां स्यात् कर्तुस्तदाख्यत्वात् ॥२॥

**सः** सङ्केत, **लौकिकानां** स्थालीपाकादिकर्मणा, **स्यात्** । **कर्तुः**–दर्विहोमकर्तुः **तदाख्यत्वात्**– ' शिनीना दार्विहोमिको ब्राह्मणः अंवष्ठानां दार्विहोमिको ब्राह्मणः ' इति स्मृतत्वात् ॥ २ ॥

### सि० ॥ सर्वेषां वा दर्शनाद्वास्तुहोमे ॥ ३ ॥

**सर्वेषां**–श्रौतस्मार्तानां कर्मणामियं संज्ञा स्यात् । कुतः ? **वास्तुहोमे** वैदिके ' यदेकया जुहुयाद्दर्विहोमं कुर्यादिति प्रयोगदर्शनात् ॥ ३ ॥

दर्विहोमशब्दस्य होमनामधेयत्वाधिकरणम् ॥ ३ ॥

### जुहोतिचोदनानां वा तत्संयोगात् ॥ ४ ॥

**जुहोतिचोदनाचोदितानामेव** सर्वेषां सा संज्ञा । न यजतिचोदनाचोदितानाम् । **तत्संयोगात्**–दर्विहोम इति नाम्नि जुहोतिधातुयोगात् ॥४॥

### द्रव्योपदेशाद्वा गुणाभिधानं स्यात् ॥ ५ ॥

**द्रव्योपदेशात्**— दर्विरूपद्रव्योपदेशात् , **गुणाभिधानं**— गुणस्य दर्विरूपस्य विधिः इति प्रागपर्यवसिताधिकरणशेषसमापनोपक्रमपरमिदं सूत्रमिति ज्ञेयम् ॥ ५ ॥

## न लौकिकानामाचारग्रहणत्वाच्छब्दवतां चान्यार्थविधानात् ॥ ६ ॥

**न** दर्विरूपगुणविधिः । कस्मात् ' **लौकिकानां**—स्मार्तकर्मणां ' त्वग्-बिलया मूलदण्डया दर्व्या जुहोती'ति स्मृत्या **आचारग्रहणत्वात्** आचारेण ग्रहणं यत्र तदात्मकत्वात् । **शब्दवतां** वैदिकानाम**न्यार्थस्य** स्रुवेण जुहोति, ' जुह्वानारिष्टा जुहोती'ति जुह्वादेर्**विधानात्** । तैः सह दर्व्या विकल्प इति नैव शक्यम् । प्रत्यक्षानुमानिकविध्यात्मकत्वात्प्रबलत्वादिति भावः ॥ ६ ॥

## दर्शनाचान्यपात्रस्य ॥ ७ ॥

' भूतेभ्यस्त्वेत्यपूर्वां स्रुचमुद्गृह्णातीति दर्विहोमे **अन्यपात्रस्य दर्शनात्**— विधेः सत्त्वान्न दर्विरूपगुणविधिरिति भावः ॥ ७ ॥

## तथाग्निहविषोः ॥८॥

' आहवनीये जुहोती'ति होमाऽऽधारत्वेनाऽऽहवनीयाग्नेः प्रदेयद्रव्यत्वेन पुरोडाशादेश्च श्रुतत्वात् दर्वां होमः दर्व्यां होमः इति **अग्निहविषोः** कार्येऽपि **तथा**— नैवं दर्व्यांनिवेशः ॥ ८ ॥

## उक्तश्चार्थासम्बन्धः ॥९ ॥

**अर्थे** — अग्निकार्ये दाहादौ, दर्व्या **असम्बन्धः**--असामर्थ्यम्, **उक्तं** सुप्रसिद्धम् । अतोऽपि दर्व्या न विधानमित्यर्थः ॥ ९ ॥

दर्विहोमशब्दस्य अपूर्वत्वाधिकरणम् ॥ ४ ॥

## तस्मिन् सोमः प्रवर्तेत अव्यक्तत्वात् ॥१०॥

**तस्मिन्—** दर्विहोमनामके कर्मणि, **सोमः—** सोमधर्मः, प्रवर्तेत । **अव्यक्तत्वात् —** स्वार्थचोदितदेवतारहित्येनोभयोः साधर्म्यादित्यर्थः । 'सोमेन यजेत, भिन्ने जुहोतीत्येव श्रवणात् ॥ १० ॥

## न वा स्वाहाकारेण संयोगात् वषट्कारस्य च निर्देशात् तन्त्रे तेन विप्रतिषेधात् ॥ ११ ॥

**न वा—**नात्र दर्विहोमे सौमिको विध्यन्तः । कुतः ? **स्वाहाकारेण संयोगात्—** पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा, अग्नये स्वाहा, सोमाय स्वाहेति स्वाहाकारेण संयुक्ता दर्विहोमा । सोमादितन्त्रे तु **वषट्कारस्य निर्देशात् तेन-**स्वाहाकारेण सह वषट्कारस्य **विप्रतिषेधात्-**विरोधात्॥ ११॥

## शब्दान्तरत्वात् ॥ १२ ॥

'सोमेन यजेत'ति यजतिधातुचोदितत्वं सोमस्य । 'नारिष्ठान् जुहोती'ति जुहोतिचोदनाचोदितत्वं दर्विहोमस्येति **शब्दभेदात्** ॥ १२ ॥

## लिङ्गदर्शनाच्च ॥ १३ ॥

'सोमघृतेन द्यावापृथिवी आपृणेथामित्यौदुम्बर्यां जुहोति' इत्यौदुम्बरीहोमे 'आमूलादवस्तावयति भूमिगते स्वाहाकरोति'। यदि जुहोतिचोदनाचोदिते दर्विहोमे सौमिको विध्यन्तः स्यात् । तर्हि वषट्कारेण ब्रूयात् । न भूमिगते स्वाहाकरोतीति ब्रूयात् । इति स्वाहाकाररूपलिङ्गदर्शनादपि न दर्विहोमे सौमिको विध्यन्त इति भावः ॥ १३ ॥

## उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यन्तत्राविप्रतिषिद्धा पुनःप्रवृत्तिर्लिङ्गदर्शनात् पशुवत् ॥ १४ ॥

**स्वाहाकारः—**' भूमिगते स्वाहाकरोती'ति स्वाहाकारविधिः, **उत्तरार्थः—**कृतिमित्रार्थः । **यथा साप्तदश्यं—**' साप्तदशानुब्रूयादित्यनारभ्य

साप्तदश्यमनारभ्यवादानां प्रकृत्यर्थत्वमिति पर्णमय्यधिकरणोक्तन्यायेन दर्शपूर्णमासं प्रत्यागतम् । परं तत्र श्रूयमाणेन पाञ्चदश्येन प्रकरणपठितेनात एव बलवता निवारितं सत् विकृतिभूतेषु पशुमित्रविन्दादिषु 'सप्तदश सामिधेनीरन्वाह ' इति श्रूयमाणसाप्तदश्यवत्सु निविशते। तथा 'स्वाहाकारेण वषट्कारे पात्रादेवेभ्यो हविर्दीयते ' इति वाक्ये स्वाहाकारेण हविर्दानविधिः प्रकृतिभूतदर्शपूर्णमाससोमयोः वषट्कारमात्रदर्शनेः निवेशमलभमानः यत्र स्वाहाकारेण होमः श्रुतः तत्र उपसंहारं प्राप्नोति । इत्थं च **प्रवृत्तिलिङ्गात्**-स्वाहाकारप्रवृत्तिलिङ्गात्, प्रागुक्तात्सौमिकधर्मस्य **अविप्रतिषेधः**—न विरोधः । **पशुवत्**--पशौ ' सप्तदश सामिधेनीरन्वाहेति साप्तदश्यविधानेऽपि यथा दर्शपूर्णमासधर्माः प्रयाजानुयाजादयः नैव विरुध्यन्ते । तथा स्वाहाकार-विधानेऽपि न सोमधर्मविरोधस्तत्रेति भावः ॥ १४ ॥

## अनुत्तरार्थो वा अर्थवत्त्वात् आनर्थक्याद्धि प्राकृतस्य उपरोधः स्यात् ॥ १५ ॥

साप्तदश्यवदुत्तरार्थः--प्रकृतिभिन्नार्थः स्वाहाकारः इति यदाऽऽशङ्कितं तन्न युक्तम् । कुतः ? **अनुत्तरार्थत्वात्** स्वाहाकारस्य । कुतः उत्तरार्थत्वाभाव-स्तस्येति चेत् ' पूर्णमासाय सुराधसे स्वाहा ' इति प्रकृतावेव नारिष्टहोमेषु पार्वणहोमयोश्च अस्य स्वाहाकारस्य **अर्थवत्त्वात्**—सफलत्वात्, **आनर्थक्याद्धि प्राकृतस्योपरोधः स्यात्**—यदि प्रकृतावनर्थकः स्यात्स्वाहाकार-स्तदा प्राकृतस्य वषट्कारस्य विकृतौ प्राप्तस्य अनारभ्यवादेन **उपरोधः**-बाधः स्यात् । न त्वानर्थक्यं तस्य प्रकृतौ । तस्मान्नोत्तरार्थः सः । इत्यमुत्तरार्थ-त्वाभावादग्निहोमस्य सोमधर्मत्वाभावे लिङ्गं भवत्येव स्वाहाकार इति भावः ॥ १५ ॥

## न प्रकृतावपीति चेत् ॥ १६ ॥

' आश्रावयेति चतुरक्षरम् । अस्तु श्रौषट् इति चतुरक्षरम् । यजेति द्व्यक्षरम् । ये यजामहे इति पञ्चाक्षरम् । द्व्यक्षरो वषट्कारः । एष वै सप्तदशः प्रजापतिः यज्ञेऽन्वायत्तः ' इति दर्शपूर्णमासप्रकरणे अनुवषट्कारप्रकरणेन

साङ्गप्रधानार्थत्वेन नारिष्टहोमादिष्वपि वषट्कारस्य निवेशे तत्र प्रकृतावपि स्वाहाकारस्य समावेशो न सम्भवतीति चेत्—॥१६॥

## उक्तं समवाये पारदौर्बल्यम् ॥ १७ ॥

दर्शपूर्णमासप्रकरणे अनुवषट्कारविधानप्रकरणेन वषट्कारः प्राप्तः। स्वाहाकारस्तु 'भूमिमते स्वाहाकरोती'ति स्वाहाकारपाठेन शेषवाक्येन प्राप्तः। एवं प्रकरणवाक्यप्रमाणयोः समवाये 'पारदौर्बल्यमर्थविप्रकर्षादि'ति न्यायेन वाक्यात् परस्य प्रकरणस्य दौर्बल्यमिति स्वाहाकार एव तेषु नारिष्टहोमादिष्विति भावः ॥ १७ ॥

## तच्चोदना वेष्टेः प्रवृत्तत्वात्तद्विधिः स्यात् ॥ १८ ॥

वा पक्षान्तरद्योतकः । तच्चोदनाः—नारिष्टहोमचोदनाः, तद्धर्मा इत्यर्थः, दर्विहोमेषु—अग्निहोत्रादिषु प्रवर्तेरन् । इष्टेः—दर्शपूर्णमासादीष्टि-सामान्ये सोमत्वेष्टयागेषु च प्रधानोपकाराय प्रवृत्तत्वात् अग्निहोत्रादिष्वपि तद्विधिः—नारिष्टादिधर्मप्रापको विधिः स्यात् । यथा यः अमात्यादिः राजकुले स्थित्वा बहूनामुपकारं करोतीति जानाति कश्चनागतो नूनं, स ममाप्ययमुपकारं करिष्यतीति निश्चयं दधात्येव इति लोके अनुभवस्तथा इष्टि-पश्वादीनुपकुर्वन् अग्निहोत्रादिकमप्युपकुर्यादिति विधिः कल्प्यत इति भावः ॥ १८ ॥

## शब्दसामर्थ्याच्च ॥ १९ ॥

'शब्दसामर्थ्यात्— जुहोतिचोदनाचोदितत्वसामर्थ्यात्, यथा निर्वपतिचोदनाचोदितत्वसामर्थ्यात् निर्वापादयः सौर्ययागे प्रवर्तन्ते । तथा 'नारिष्टान् जुहोति, अग्निहोत्रं जुहोती'ति जुहोतिचोदनासाम्यादपि तद्धर्माणामग्निहोत्रादिषु निराबाधं प्रवृत्तिः स्यादिति भावः ॥ १९ ॥

## लिङ्गदर्शनाच्च ॥ २० ॥

नारिष्टहोमपूर्वत्वं दर्विहोमानामित्यत्र लिङ्गमपि दृश्यते । तथा हि—दर्शपूर्णमासयोः परिधयः अन्तर्वेदिश्च साङ्गप्रधानाङ्गमिति तृतीये स्थितत्वात् परिधिरन्तर्वेदिश्च नारिष्टानामप्यङ्गमित्यर्थात्सिद्धम् । सत्येवमग्निहोत्रे 'यदि

कीटोऽनुपचेत अन्तःपरिधि निनयेत्' तथा 'अग्नौ अन्तर्वेदि तिष्ठन् सावित्राणि जुहोती'ति श्रुतम्। तत्र यदि नारिष्टप्रकृतिकत्वं दर्विहोमेन स्यात तर्हि 'अन्तःपरिधि निनयति, अन्तर्वेदि तिष्ठन् जुहोतीत्यसङ्गतं स्यात। अन्तर्वेदिपरिध्योस्तत्राप्राप्तत्वात्। अतो नारिष्टप्रकृतिकत्वं दर्विहोमेष्वित्युक्तावेवैतल्लिङ्गदर्शनमुपपद्यते। तस्माचेषा धर्मास्तेष्विति भावः॥ २०॥

## तत्राभावस्य हेतुत्वाद्गुणार्थे स्याददर्शनम्॥ २१॥

**गुणार्थे**– अग्निहोत्रे नारिष्टधर्मसाधनविषये 'अन्तःपरिधि निनयेत् अन्तर्वेदि तिष्ठन्निति यन्नारिष्टहोमधर्माणा प्रवृत्तौ दर्शनमुक्तं तद्दर्शनम् **अदर्शनम्**— असाधन-साधकं न भवतीत्यर्थ.। कुतः? **तत्र**— असाधकत्वे, **अभावस्य हेतुत्वात्**। तथा हि-चातुर्मास्ये महापितृयज्ञानन्तरं 'चतुष्पथे जुहोती'ति दर्विहोमत्वेन त्र्यम्बकेष्टिं विधाय तस्या 'नेध्माबर्हिर्भवति, न, प्रयाजा इज्यन्ते, नानुयाजाः, न सामिधेनीरन्वाह' इत्यप्रतिष्ठितत्वं तस्या उक्त्वा तद्दोषापनोदार्थं 'आदित्यं चरुं पुनरेत्यनिर्वपेत' इत्याऽऽदित्येष्टिर्विहिता। इति त्र्यम्बकेष्ट्या अप्रतिष्ठितत्वोपपादनार्थमिध्मादीनामभावस्तत्रोपदिष्टः। यदि नारिष्टहोमधर्मास्तत्र प्रवर्तेरन्, ततस्तेषामङ्गप्रधानार्थत्वादिध्मादीना त्र्यम्बकेष्टया भाव एव स्यात्। तथा सति तेषामभावस्य तत्र कथनं, प्रवृत्त्यसाधकत्वे तस्य हेतुत्वप्रदर्शनं चासङ्गतं स्यादिति भावः॥ २१॥

## विधिरिति चेत्॥ २२॥

**विधिः**— निवर्तकविधि। यथा निर्वपतिचोदनाचोदितत्वेन लिङ्गेन महापितृयज्ञे प्रयाजाना प्राप्तौ 'न प्रयाजा इज्यन्ते' इत्यनेन तेषा निवृत्तिः, तथा नारिष्टधर्माणा जुहोतिचोदनयाप्राप्तौ तदङ्गानामिध्मादीनां निवृत्त्यर्थमेवेदं 'नेध्माबर्हिर्भवती'त्यादिकं वचनमिति चेत्—॥ २२॥

## न वाक्यशेषत्वात् गुणार्थे च समाधानं नानात्वेनोपपद्यते॥ २३॥

न निवर्तकविधिः । किन्त्वाऽऽदित्ययागस्तावकवाक्यशेषत्वाद्-र्थवादः सः । **गुणार्थे**—उक्तवाक्यस्य गुणविध्यर्थत्वे, तद्द्वयकं **समाधानं नानात्वेन**-नानावाक्यत्वेन, **वक्तुमुपपद्यते**- शक्यते । तथा हि—यदि इध्माबर्हिषोरभावात्मकगुणविध्यर्थमेवेदं वाक्यमिति ब्रूयात्तर्हि इध्माबर्हिर्निषेधकमेकं वाक्यं, न प्रयाजा इत्येकं, नानुयाजा इत्येकं, आदित्य चरुं निर्वपेदिति चैकमिति नानावाक्यानि स्युः । अर्थवादत्वे त्वाऽऽदित्ययागविध्येकवाक्यतापन्ने सत्येकं वाक्यं भवतीत्यर्थवाद एव युक्त इति भावः ॥ २३ ॥

## येषां वा अपरयोर्होमस्तेषां स्यादविरोधात् ॥ २४ ॥

**येषां** यागानां—पत्नीसंयाजपिष्टलेपफलीकरणहोमरूपाणाम् , **अपरयोः**—गार्हपत्यदाक्षिणाग्न्योर्**होमस्तेषां** धर्मप्राप्तिः **स्यात्** । **अविरोधात्**—तयोर्होमे इध्माबर्हिषोरनङ्गत्वेनोक्तदोषाभावात् उक्तप्रवृत्तत्वहेतोश्चेति ॥ २४ ॥

## तत्रौषधानि चोद्यन्ते तानि स्थानेन गम्येरन् ॥ २५ ॥

नेदं युक्तम् । यतस्तत्र—दर्विहोमे, **औषधानि**—ओषधिद्रव्याणि, **चोद्यन्ते**—विधीयन्ते । यथा त्र्यम्बकेषु पुरोडाश , करम्भपात्राणि, तण्डुलाः, इत्येवमादीनि । **तानि स्थानेन गम्येरन्**—आज्यस्थानापत्त्या आज्यधर्माः प्राप्येरन् । अकृतकार्यत्वात्ते न शक्यास्तत्रानुष्ठातुमिति चोदको बाध्येत । तस्मान्न तेषां प्रवृत्तौ किमपि प्रयोजनम् । वषट्कारादिरपि स्वाहाकारादिना निवर्त्यते । अतो न पत्नीसंयाजादिप्रकृतिकत्वं दर्विहोमानामिति भावः ॥२५॥

## लिङ्गाद्वा शेषहोमयोः ॥ २६ ॥

**लिङ्गाद्वा**—' पिष्टलेपफलीकरणहोमौ जुहोति ' इति जुहोतिचोदनालिङ्गात्, **शेषहोमयोः**— वद्धखलादौ प्रधानयागार्थं ग्रहणानन्तरमुर्वरितयोः पिष्टलेपफलीकरणहोमयोः धर्मांल्लभन्ते दर्विहोमा इति शेषः । तयोरोषधिद्रव्यकत्वेन नैव पूर्वोक्तदोष इति भावः ॥ २६ ॥

**प्रतिपत्ती तु ते भवतः तस्मादतद्विकारत्वम् ॥२७॥**

ते— पिष्टलेपफलीकरणहोमकर्मणी तु **प्रतिपत्ती**—शेषद्रव्य-सस्काररूपे गुणकर्मणी यतो **भवतः**, **तस्मात् अतद्विकारत्वं**—तद्विकारत्वाभाववत्त्वं, दर्विहोमाना प्रतिपत्तिकर्मणा कुत्राऽपि प्रकृतित्वं न दृष्टम् । तथा तद्धर्माणामतिदेशोऽपि न दृष्टः । तस्माद्दर्विहोमा अपूर्वा एवेति न कुतश्चिदपि तेषु धर्मप्राप्तिर्युज्यत इति भावः ॥ २७ ॥

**सन्निपाते विरोधिनामप्रवृत्तिः प्रतीयेत विध्युत्पत्तिव्यवस्थानात् अर्थस्यापरिणेयत्वात् वचनादतिदेशः स्यात् ॥ २८ ॥**

**विरोधिनां**—प्रदर्शितदोषयुक्ताना प्रागुक्ताना प्रवृत्तत्वादित्यादिहेतूना **सन्निपाते**—साधकत्वेनोपन्यासेऽपि साध्यस्य-नारिष्टहोमधर्मप्राप्तिरूपस्य असिद्धिरिति **प्रतीयेत**—ज्ञातव्यमित्यर्थः । कुतः ? **विध्युत्पत्तेः**—नारिष्टहोमतद्धर्मविधीना पाठस्य **व्यवस्थानात्**—दर्शपूर्णमासप्रकरणे एवेति नियमात् । तत्सन्निधिपठितान्यधर्मान्विहाय केवलस्य **अर्थस्य**—नारिष्टहोमधर्मस्य, **अपरिणेयत्वात्**--अनतिदेश्यत्वात्, दर्विहोमा अपूर्वा एव । ज्योतिष्टोमसन्निधिपठिताना राष्ट्रभृदादीना विवाहादावतिदेशस्तु ' जयाभ्यातानान् राष्ट्रभृतश्च हुत्वा ' इति वचनादतिदेशः । न त्वानुमानिकः स इति भावः ॥ २८ ॥

इति पूर्वमीमासासूत्रवृत्तौ भावबोधिन्यामष्टमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

सम्पूर्णश्चाष्टमोऽध्यायः ॥ ८ ॥ श्री ॥

## ॥ अथ नवमाध्यायस्य प्रथमः पादः ॥

अग्निहोत्रादिषु उपदिष्टानां धर्माणामपूर्वप्रयुक्तत्वाधिकरणम् ॥ १ ॥

**यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥**

अथ द्वारान्तरप्रयुक्तान्यथाभावरूपस्य ऊहस्य अतिदिष्टमन्त्रसामसंस्कारादिपदार्थगोचरत्वात्तस्मादष्टमयोरतिदेशनिरूपणानन्तरमस्मिन्नवमे लक्षणे ऊहनिरूपणं प्रस्तूयते । उपोद्घातप्रसङ्गाभ्यामन्यदपि विमृश्यते । अत्र दर्शपूर्णमासाग्निहोत्रज्योतिष्टोमेषु ये प्रयाजादयः पृथग्धर्माः समाम्नातास्ते यजिप्रयुक्ताः--यागार्थाः, उत अपूर्वप्रयुक्ता--अपूर्वार्था इति विशये तेषां यजिप्रयुक्तत्वे यागत्वावच्छिन्नमुद्दिश्य विधानात् सर्वयागार्थास्त इति प्रकृतौ यथा पाठस्तथा यागत्वावच्छिन्नेऽपि स्वोनामन्त्रपाठोऽस्तीत्यतिदेशाभावेनातिदिष्टपदार्थगोचर ऊहो नास्तीति ऊहनिरूपणाध्यायो नारम्भणीय इति स्यात् । अतः अपूर्वप्रयुक्ता एव ते धर्मा इति सिद्धान्तमाह—**यज्ञेति** । दर्शपूर्णमासादि**यज्ञस्य** यत **कर्म** कार्यम्—साध्यम् अपूर्वं तदेव प्रधानम् । **हि**— यतः, **तच्चोदनागम्यं**—कर्तव्यत्वेन विधिगम्यम् यत् कर्तव्यत्वेन ज्ञायते तस्यैव केन कर्तव्यं कथं कर्तव्यमित्याऽऽकाङ्क्षा विद्यते । नान्यस्य । **तस्य द्रव्येषु**-अपूर्वसाधनव्रीह्यादिद्रव्येषु यजतौ च यः **संस्कारः** सोऽपि **तत्प्रयुक्तः**-अपूर्वप्रयुक्तः । **तदर्थत्वात्**-अपूर्वार्थत्वात्संस्कारस्येत्यर्थः । इत्थं धर्माणामपूर्वार्थत्वस्य सिद्धत्वाद्दर्शपूर्णमासाद्यपूर्वप्रयुक्तत्वं तेषु प्रकरणेन क्लृप्तमिति तेषां तत्रैव नियतत्वादन्यत्र धर्माऽऽकाङ्क्षायामतिदेशेन तत्प्राप्तौ सत्यामतिदिष्टपदार्थगोचरः द्वारान्तरप्रयुक्तान्यथाभावात्मक ऊहः सिध्यतीति तदध्याय आरम्भणीय इति भावः ॥१॥

प्रोक्षणस्य अपूर्वप्रयुक्तत्वाधिकरणम् ॥ २ ॥

## संस्कारे युज्यमानानां तादर्थ्यात्तत्प्रयुक्तं स्यात् ॥२॥

दर्शपूर्णमासयोः 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' 'प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टी'ति · श्रुतम् । तत्र **संस्कारे**— अवहननादिसंस्कारे, **युज्यमानानां**—स्ववृत्तिजनकतानिरूपितजन्यतासम्बन्धेन सम्बध्यमानानां प्रोक्षणादीनां, **तादर्थ्यात्**— अवहननार्थत्वात्, **तत्प्रयुक्तं**— अवहननादिप्रयुक्तं प्रोक्षणादि स्यात् । नापूर्वप्रयुक्तम् । कुतः ? प्रोक्षिताभ्यामवहन्तीत्यादिवाक्येन उलूखलमुसलादिद्वारा प्रतीयमानं हन्त्यार्थत्वं त्यक्तुमशक्यमिति तदर्थत्वे तत्प्रयुक्तत्वमर्थात्सिद्धम् । इत्थं यत्रावहननस्य निवृत्तिस्तत्र प्रोक्षणस्यापि निवृत्तिरिति भावः पूर्वपक्षिणः ॥२॥

## सि० ॥ तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसम्बन्धस्तस्मात् यज्ञप्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात् ॥ ३ ॥

**तेन अर्थेन**—अवहननरूपकार्येण सह, **यज्ञस्य**—अपूर्वस्य पूर्वाधिकरणोक्तन्यायेन सम्बन्धात् । तस्मादेव हेतोः **धर्मस्य**—उलूखलमुसलधर्मस्य प्रोक्षणस्य **सम्बन्धः**--प्रयोगे अनुष्ठानं **यज्ञप्रयुक्तं**—अपूर्वप्रयुक्तं स्यात् । **संस्कारस्य**—प्रोक्षणस्य, **तदर्थत्वात्**—अपूर्वार्थत्वात् । प्रोक्षणस्य अवहननार्थत्वे प्रोक्षणं विनापि अवहननस्योत्पत्त्या व्यतिरेकव्यभिचारात् तदर्थत्वासम्भवेन श्रूयमाणमप्यवहननं परित्यज्य लक्षणया अवहननसाध्यतण्डुलवृत्त्यपूर्वजनकत्वं प्रोक्षणस्यापि भाव्यमित्यगत्या वाच्यम् । प्रोक्षिताभ्यामित्यत्रापि तथैव वक्तव्यम् । इत्थं प्रोक्षणस्य अपूर्वप्रयुक्तत्वाद्राजसूयादावपि तादृशापूर्वजनकत्वस्य प्रकृतितः प्राप्तत्वान्नखेषु प्रोक्षणस्य ऊह आवश्यक इति भावः ॥ ३ ॥

स्वरस्य दीक्षणीयापूर्वप्रयुक्तत्वे वर्णकान्तरम् ॥ २ ॥

## तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसम्बन्धस्तस्माद्यज्ञप्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात् ॥३॥

ज्योतिष्टोमे दीक्षणीयेष्टिसन्निधौ 'यावत्या वाचा कामयेत, तावत्या दीक्षणीयायामनुब्रूयात्। मन्द्रं प्रायणीयायाम्, मन्द्रतरमातिथ्यायाम्, उपांशु उपसत्सु, उच्चैरग्नीषोमीये' इति ध्वनेरुच्चावचभावः श्रुतः। स उच्चावचभावः दीक्षणीयापूर्वप्रयुक्तः। न परमापूर्वप्रयुक्तः। कुतः? **तेन त्वर्थेन**—दीक्षणीयेष्टिरूपार्थेन सह **यज्ञस्य**—दीक्षणीयापूर्वस्य **संयोगात्**—जन्यजनकभावसम्बन्धात्। तस्मादेव हेतोः **धर्मस्य**—ध्वनेरुच्चावचभावस्य **सम्बन्धः**—दीक्षणीयाप्रयोगेऽनुष्ठानं **यज्ञप्रयुक्तं**—दीक्षणीयाप्रयुक्तं स्यात्। **संस्कारस्य**—यजमानसंस्काररूपदीक्षणीयेष्टेः, **तदर्थत्वात्**—अपूर्वार्थत्वात्। स्वरस्य दीक्षणीयेष्टिस्वरूपार्थत्वं न सम्भवति। तेन विनापि तत्स्वरूपस्योपपत्तेः। अतो दीक्षणीयापदेन दीक्षणीयापूर्वं लक्षयित्वा तदर्थत्वं विधेयस्वरस्यावश्यं वाच्यम्। तस्य परमापूर्वार्थत्वे तु दीक्षणीयापदस्य दीक्षणीयापूर्वे लक्षणा। पुनश्च तस्य दीक्षणीयापूर्वजन्ये परमापूर्वे लक्षणेति लक्षितलक्षणाकल्पनमयुक्तम्। अतः सन्निकृष्टतया प्रथमोपस्थितदीक्षणीयापूर्वप्रयुक्तत्वमेव न्याय्यम्। अश्वमेधे दीक्षणीयेष्टेरभावान्न तदपूर्वप्रयुक्तस्वरस्य ऊह इति भावः ॥ ३ ॥

फलदेवतासम्बद्धधर्माणामप्यपूर्वप्रयुक्तत्वाधिकरणम् ॥ ३ ॥

## फलदेवतयोश्च ॥ ४ ॥

दर्शपूर्णमासयोः 'अगन्म सुवः सुवरगन्मेति। अग्नेरुज्जितिमनूज्जेषमिति' च फलदेवताप्रकाशकौ मन्त्रौ पठितौ। तत्र स्वर्गलब्धाग्नीयाग्निदेवताप्रकाशप्रयुक्तावेव एतौ मन्त्रौ। अर्थादपूर्वार्थमेव तयोः। नापूर्वप्रयुक्तत्वम्। तथाच सौर्ययागे स्वर्गरूपफलस्य अग्निरूपदेवतायाश्चाभावात् तयोर्मन्त्रयोर्निवृत्तौ तत्र ऊहप्रसक्तिर्नास्तीत्यर्थः ॥ ४ ॥

## सि० ॥ न चोदनातो हि तादृगुण्यम् ॥ ५ ॥

**न** तयोर्मन्त्रयोः फलदेवतास्वरूपमात्रप्रकाशनप्रयुक्तत्वम् । तथा सति तत्स्वरूपस्य सिद्धत्वात्तत्प्रकाशने मन्त्रोच्चारणमनर्थकं स्यात् । किन्तु **चोदनातः**--अपूर्वस्य कर्तव्यतया फलदेवताप्रकाशनद्वारा अपूर्वार्थत्वात् **तादृगुण्यं**— अपूर्वाङ्गत्वम् । अपूर्वार्थत्वमेव तयोः । इत्यमपूर्वार्थत्वे सिध्दे विकृतावपि प्रयोजकापूर्वस्य सत्त्वान्मन्त्रयोरतिदेशसिध्दौ अगन्म ब्रह्मवर्चसमित्याद्यूहस्य सिद्धिरिति भावः ॥ ५ ॥

धर्माणां देवताप्रयुक्तत्वाभावाधिकरणम् ॥ ४ ॥

## देवता वा प्रयोजयेत् अतिथिवत् भोजनस्य तदर्थत्वात् ॥ ६ ॥

यदुक्तं फलस्वरूपस्य प्रकाशनं व्यर्थमिति तत्स्वीकुर्मः । किन्तु देवतायाः स्मरणं व्यर्थमिति तु वक्तुमशक्यमेव । यतः सर्वस्य यागत्वावच्छिन्नस्य तदर्थत्वेन मन्त्रस्य तदर्थत्वे किमु वक्तव्यमिति पूर्वाधिकरणसिद्धान्तमाक्षिपन्नाह पूर्ववादी **देवता वेति । देवता**—इन्द्रादि., सर्वाणि साङ्गप्रधानरूपाणि कर्माणि प्रयोजयेत् । **भोजनस्य**--देवताभोजनात्मकयागस्य, **तदर्थत्वात्**- देवतार्थत्वात्, **अतिथिवत्** । यथा अतिथये दीयमानमन्नं तदर्थं, तथा देवतायै दीयमानं यागरूपमन्नं देवतार्थमिति ॥ ६ ॥

## अर्थपत्या च ॥ ७ ॥

**अर्थानां**—निखिलानां फलानां, **पत्या**—पतित्वात्-स्वामित्वात् देवतायाः । तथा हि—'इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत पर्वतानाम् ॥ इन्द्रो वृधामिन्द्र इन्मेधिराणामिन्द्रः क्षेमे योगे हव्यमिन्द्रः' । इति सर्वाधिपत्यमिन्द्रे प्रदर्शयत्ययं मन्त्रः । यस्य स्वर्गादेरधिपतिरिन्द्रस्तत्प्रसादमन्तरेण तल्लाभस्यासम्भवात्कर्मणां देवता प्रधानमिति भावः । किञ्च, यागो नाम देवतायाः पूजा । पूजा च पूजनीयं प्रति गुणभूता लोके दृश्यते । अतोऽपि देवतायाः प्राधान्यम् ॥ ७ ॥

## ततश्च तेन सम्बन्धः ॥ ८ ॥

यत सर्वफलाना स्वामी देवस्ततस्तस्य सकाशादेव स्वर्गादिना साकं कर्तु सम्बन्धः । देवताप्रसादेन तद्दत्तमेव फल लभते मानव इति भावः ॥ ८ ॥

## सि० ॥ अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्यात् गुणत्वे देवताश्रुतिः ॥९॥

अपि वेति पूर्वपक्षव्यावृत्ति । शब्दपूर्वत्वात् एकवदश्रुतिगम्यत्वात्- यागेन स्वर्गं भावयेदित्येव बोधात, यज्ञकर्म- यज्ञस्य यत् कर्म- कार्यम्- अपूर्वं तदेव प्रधानम् । तत्प्रति गुणत्वेन देवताश्रुतिः स्यात् । अपूर्वस्य प्राधान्येन तदर्थत्व देवताना युक्तम । अतो देवता अङ्गभूता । न प्रधानमिति भावः ॥ ९ ॥

## अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् तस्य प्रीतिप्रधानत्वात् ॥१०॥

अतिथौ- भोजनादिदाने, तत्प्रधानत्वं- अतिथिप्रधानत्वम् । तस्य आतिथ्यस्य, प्रीतिप्रधानत्वात् । तस्य च 'आतिथ्येन सन्तुष्टस्तथा कुर्यात्प्रयत्नत ' इति शब्दगम्यत्वात् । कर्मणि तु देवताप्रीतिनिधानस्य अभावः । अतो दृष्टान्तवैषम्यमिति भाव ॥ १० ॥

प्रोक्षणादीनामपूर्वप्रयुक्तत्वाधिकरणम् ॥ ५ ॥

## द्रव्यसङ्ख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥११॥

दर्शपूर्णमासयो ' व्रीहीन् प्रोक्षति, तथा ' त्रीन् परिधीन् , तिस्र. समिध', चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रा अमावास्यामभिमृशेत् ' । एव चातुर्मास्यीयद्वितीयपर्वणि ' शूर्पेण जुहोति, तेन ह्यन्नं क्रियते ' इति समामनन्ति । तत्र द्रव्यसङ्ख्याहेतुसमुदायं वा–प्रोक्षणे द्रव्यं व्रीह्यादि,

सङ्ख्यापरिमितत्वं त्रिरादि मन्त्रोच्चारणे, होमे शूर्पस्य स्वत्वहेतुत्वम् । अभिमर्शने पौर्णमासीयागनिष्ठममावास्यायागनिष्ठं च समुदायस्य 'प्रयोजकम्' । **श्रुतिसंयोगात्** । तत्रैतानि प्रयोजकानि न सन्ति । तत्र न तत्प्रयोज्यानां प्रवृत्तिरिति ॥ ११ ॥

## अर्थकारिते च द्रव्येण न व्यवस्था स्यात् ॥ १२ ॥

किञ्च, उक्तप्रोक्षणादिरूपे धर्मे **अर्थकारिते**—अर्थेन—अपूर्वेण कारिते-प्रयोजिते सति प्रोक्षणादिधर्माणामपूर्वप्रयुक्तत्वाङ्गीकार इत्यर्थः । 'पयसा मैत्रावरुणं श्रीणाति । सक्तुभिर्मन्थिनम् । धानाभिर्हारियोजनम् । हिरण्येन शुक्रम् । आज्येन पात्नीवतम्' इति या **द्रव्येण**—तत्तद्द्रव्येण, **व्यवस्था**—श्रयणधर्मस्य व्यवस्था श्रुत्युपदिष्टा सा **न स्यात्** । कस्मात्? अपूर्वप्रयुक्तत्वस्य—अपूर्वसाधनत्वस्य सर्वग्रहादिषु तुल्यत्वात् । यथा—मैत्रावरुणोऽपूर्वार्थस्तथा मन्थ्यादिरपि तदर्थ एवेति पयःसंयोज्यः स्यात् । अतो द्रव्यादिकमेव प्रयोजकमिति वाच्यम् ॥ १२ ॥

## सि०॥ अर्थो वा स्यात्प्रयोजनमितरेषामचोदना तस्य गुणभूतत्वात् ॥ १३ ॥

**अर्थो वेति** । **अर्थः**—अपूर्वं, **प्रयोजनं**—उक्तधर्मप्रयोजकं स्यात् । कस्मात्? **इतरेषां**—द्रव्यादीनां, कर्तव्यत्वेन **अचोदनात्**—अविधानात् । यस्य कर्तव्यत्वेन विधानमस्ति । तस्यैव धर्मोऽपेक्षितः । नान्यस्य । अतः **तस्य**—द्रव्यादेः, अपूर्वं प्रति **तस्य गुणभूतत्वात्**—अङ्गत्वान्न प्रयोजकत्वमिति भावः ॥ १३ ॥

## अपूर्वत्वाद् व्यवस्था स्यात् ॥ १४ ॥

अपूर्वार्थत्वे धर्माणां व्यवस्था न स्यादिति यदुक्तं तत्रोच्यते । **अपूर्वत्वात्**—मैत्रावरुणसंबन्ध्यपूर्वत्वस्योद्देश्यतावच्छेदकत्वात् **व्यवस्था स्यात्** । न हि मैत्रावरुणसंबन्ध्यपूर्वत्वं ग्रहान्तरापूर्वेऽस्ति । येनाव्यवस्था स्यादिति ॥ १४ ॥

## तत्प्रयुक्तत्वे च धर्मस्य सर्वविषयत्वम् ॥ १५ ॥

**तत्प्रयुक्तत्वे**--उक्तधर्माणां द्रव्यप्रयुक्तत्वे, **धर्मस्य**--प्रोक्षणादेः, **सर्वविषयत्वं**--आपणस्थव्रीहिविषयत्वमपि स्यात् । आपणस्थव्रीहीणामपि प्रोक्षणप्रसङ्ग इति भावः ॥ १५ ॥

## तद्युक्तस्येति चेत् ॥ १६ ॥

**तद्युक्तस्य**--प्रकरणयुक्तस्य व्रीहेरुद्देश्यत्वम् । आपणस्थव्रीहयस्तु न यागोद्देशेन परिगृहीता इत्यदोष इति चेत्--॥ १६ ॥

## नाश्रुतित्वात् ॥ १७ ॥

**न** *प्रकृतव्रीहीणामेवोद्देश्यत्वम्* । **अश्रुतित्वात्** *। तथा चोद्देश्यतावच्छेद*-कस्य संकोचे मानाभाव इति भावः ॥ १७ ॥

## अधिकारादिति चेत् ॥ १८ ॥

अविशेषप्रकरणेऽपि **अधिकारात्**--यागाधिकारात्, यागीयव्रीहीणामेव प्रोक्षणमिति ज्ञास्यत्यध्वर्युरिति चेत्--॥ १८ ॥

## तुल्येषु नाधिकारः स्यात् अचोदितश्च सम्बन्धः पृथक्सत्त्वां यज्ञार्थेनाभिसम्बन्धः तस्मात् यज्ञप्रयोजनम् ॥ १९ ॥

**तुल्येषु**--ये भोगार्थव्रीहयस्ते यागार्था अपि भवितुमर्हन्तीति **तुल्येषु**--अविशेषेषु, **अधिकारो न स्यात्** । यतो यज्ञार्था इमे इति यज्ञार्थत्वसम्बन्धः **अचोदितः**-- शास्त्रेण अनिर्दिष्टः, **पृथक्सत्त्वां**--उपभोगसाधनव्रीहिभ्यः पृथग्जातिं लोकतोऽपि नोपलभ्यते । अतः सर्वेषां व्रीहीणां **यज्ञार्थेनाभिसम्बन्धः** । **तस्माद्यज्ञप्रयोजनम्**-- **यज्ञस्य**-- यज्ञान्तर्वर्तिप्रोक्षणस्य **प्रयोजनं**--उद्देश्यं सर्व एव व्रीहय स्युरित्यर्थः । अस्मन्मते तु पुरोडाशनिष्पादनद्वारा अपूर्वजनकत्वं येषु व्रीहिषु तेष्वेव प्रोक्षणम् । नान्यत्रेति भावः ॥१९॥

**अग्निष्टोमे उपांशुत्वस्य प्राचीनपदार्थप्रयुक्तत्वाधिकरणम् ॥६॥**

## सि०॥ देशबद्धमुपांशुत्वं तेषां स्यात् श्रुतिनिर्देशात् तस्य च तत्र भावात् ॥२०॥

ज्योतिष्टोमे इत्थं समाम्नायते—'त्सरा वा एषा यज्ञस्य तस्माद्यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेन उपांशु चरन्ती'ति । अत्र **देशबद्धमुपांशुत्वम्**-अग्नीषोमीयात्प्रागूरूपो यो देशस्तेन निबद्धं यदुपांशुत्वं तत् **तेषां** — देशलक्षितदीक्षणीयादीनामग्नीषोमात्प्राचीनकर्मणां स्यात् । कुतः? **श्रुतिनिर्देशात्**-त्सरा वेत्युक्तवाक्यनिर्देशात् । **तस्य च तत्र भावात्**—तस्य कर्मणस्तत्र देशे सत्त्वादाधाराधेयभावरूपसम्बन्धस्य विद्यमानत्वेन न तस्मिन् कर्मणि देशलक्षणाया अनुपपत्तिः । तथा च अग्नीषोमीयात्प्राक् यानि प्रधानापूर्वस्य आरादुपकारकाणि कर्माणि समनुष्ठीयन्ते, यच्च प्रधानद्रव्यसंस्कारकं कर्म, तदपूर्वप्रयुक्तमुपांशुत्वम् । न परमापूर्वप्रयुक्तमिति भावः ॥ २० ॥

## यज्ञस्य वा तत्संयोगात् ॥ २१ ॥

**यज्ञस्य वा**—प्रधानापूर्वस्य प्रयोजकत्वं स्यात् । **तत्संयोगात्**—उक्तवाक्ये यज्ञशब्दस्य सत्त्वात् । वाक्ये श्रूयमाणयज्ञशब्दस्य त्सरेत्यनेन सम्बन्धे सत्यर्थवादघटकत्वं यज्ञशब्दस्य । यज्ञस्य प्राचीनमिति योजने तु विधिघटकत्वम् । विधिवाक्यं प्रधानम् । अर्थवादस्तच्छेषः । प्रधानसम्बन्धेच्छा सर्वेषामेवास्तीति विधिवाक्यघटकत्वमेव युक्तम् । अतः कुण्डपायिनामयने प्रागग्नीषोमीयान्मासाग्निहोत्रादीनां सत्त्वात्तत्रापि उपांशुधर्मस्य ऊहः कार्यः । तत्प्रयोजकपरमापूर्वसत्त्वादिति भावः ॥ २१ ॥

## अनुवादश्च तदर्थवत् ॥ २२ ॥

**अनुवादश्च**— अर्थवादश्चेदपि यज्ञस्य त्सरेत्यनेनान्वयेऽवीत्यर्थः । **तदर्थवत्**— तदर्थवादवाक्यमर्थवत्—परमापूर्वप्रयोजकत्वज्ञापकमेव । तथा हि-त्सरा वा एषा यज्ञस्येत्यत्र त्सराशब्दः छद्मगत्यर्थकः । शकुनिग्राही यत् पक्षिणा ग्रहणार्थं निःशब्दं पादं क्षिपति सा त्सरा—गतिः । सा शकुनिग्रहणार्थेति शकुनेः त्सरा । अत्र शकुनिस्थानापन्नो यज्ञः । इदमुपांशुत्वं तस्य त्सरा । अतो यज्ञार्थं परमापूर्वप्रयुक्तमुपांशुत्वमिति भावः ॥ २२ ॥

## वाङ्नियमस्य अवान्तरापूर्वप्रयुक्तत्वाधिकरणम् ॥ ७ ॥

## प्रणीतादि तथेति चेत् ॥ २३ ॥

तन्मध्ये विचारान्तरम् । दर्शपूर्णमासयोः 'यज्ञन्तनिष्पन्तावध्वर्युयजमानौ वाचं यच्छतः ता वाचं ह विसृजेयाताम्' इति श्रुतम् । तत्र **प्रणीतादि—** प्रणीताप्रणयनादिसम्बन्धिवाङ्नियमोऽपि **तथा—** परमापूर्वप्रयुक्तः । कुतः ? यज्ञशब्दश्रवणात् इति चेत्—॥ २३ ॥

## सि० ॥ न यज्ञस्य अश्रुतित्वात् ॥ २४ ॥

**न** परमापूर्वप्रयुक्तः । कुतो न तथेति चेत्—**यज्ञस्य अश्रुतित्वात्—** अविवक्षितत्वात् । वाङ्नियमस्य उद्देश्यौ अध्वर्युयजमानौ । तयोर्विशेषणं यज्ञन्तनिष्पन्ताविति । उद्देश्यविशेषणं तु संमार्गन्यायेन अविवक्षितम् । तस्मान्न परमापूर्वप्रयुक्तो वाङ्नियमः । अपि त्ववान्तरापूर्वप्रयुक्तः । हविष्कृदाव्हानकालीनवाग्विसर्गप्राक्कालीनप्रोक्षणाद्यवान्तरापूर्वप्रयुक्तं इति भाव॥२४॥

## सि०॥ तद्देशानां वा सङ्घातस्याचोदितत्वात् ।२५।

पूर्वोक्तपूर्वपक्षस्योत्तरमिदम् । **तद्देशानां—** स· अग्नीषोमीयप्राग्रूपो देशो येषां तेषां कर्मणामुपांशुत्वप्रयोक्तृत्वम्-अग्नीषोमीयप्राग्देशसम्बद्धदीक्षणीयायज्ञकर्मापूर्वप्रयुक्तमुपांशुत्वमित्यर्थः । न परमापूर्वप्रयुक्तम् । **सङ्घातस्य—** सङ्घातस्य—सङ्यागाम्नायसमङ्घातस्य, **अचोदितत्वात्—** यज्ञस्य तत्सम्बन्धराहित्यनयैनोपपत्तौ सम्भवन्त्या यज्ञस्य प्राचीनमिति व्यवहितान्वयासम्भवात् । अग्नीषोमीयादिति पञ्चम्यंतस्य अनन्वयप्रसङ्गाच्च । तस्मान्मर्यादावच्छिन्नपदार्थजन्यावान्तरापूर्वप्रयुक्तमेव उपांशुत्वमिति सिद्धान्तः ॥ २५ ॥

## इष्टकासु सकृद्विकर्षणाद्यनुष्ठानाधिकरणम् ॥ ८ ॥

## अग्निधर्मः प्रतीष्टकं सङ्घातात्पौर्णमासीवत् ॥२६॥

'य एवं विद्वानग्निं चिनुते' इतीष्टकाभिरग्निचयनं प्रस्तुत्य तत्रैव 'हिरण्यशकलसहस्रेणाग्निं प्रोक्षति । दध्ना मधुमिश्रेणाग्निं प्रोक्षति । वेतस-

शाखया अत्रकाभिश्चाग्निं निकीर्षति । मण्डूकेनाग्निं विकीर्षति ' इत्याम्नायते । तत्र **अग्निधर्मः**—प्रोक्षणं कर्षणं च **प्रतीष्टकं** स्यात् । न सकृत् । कुतः ? **सङ्घातात्**— चितेष्टिकासङ्घातात्पृथग् द्रव्यस्य तत्राभावात्तत्सङ्घातस्यैवाग्निपदवाच्यत्वात् । **पौर्णमासीवत्**—यथा आग्नेयोपांश्वग्नीषोमीयसङ्घाते पौर्णमासीशब्दस्तद्वदत्रापि चितेष्टकासङ्घाते अग्निशब्दः । सङ्घातस्तु न अत्रयावदतिरिक्त इति इष्टकानामेव तत्र प्राधान्यात्प्रतिप्रधानं गुणावृत्तिरिति न्यायेन प्रोक्षणकर्षणयोरावृत्तिरित्यायाति ॥ २६ ॥

## सि० ॥ अग्नेर्वा स्यात् द्रव्यैकत्वात् इतरासां तदर्थत्वात् ॥ २७ ॥

**अग्नेः**—इष्टकाभ्योऽतिरिक्तस्य ताभ्यो जातस्य अग्निशब्दवाच्यस्य **द्रव्यस्यैकत्वात्** सकृदेव प्रोक्षणं कर्षणं च । **इतरासां**—इष्टकानां **तदर्थत्वात्**—अग्न्यर्थत्वात् । ' इष्टकाभिरग्निं चिनुते ' इत्यत्र द्वितीयातृतीयाभ्यां साधनसाध्यभावप्रतीतेस्तयोर्भेद आवश्यक इति भाव. ॥ २७ ॥

## चोदनासमुदायात्तु पौर्णमास्यां तथात्वं स्यात ॥ २८ ॥

**चोदनासमुदायात्तु**—विधीनां समुदायात् **पौर्णमास्यां तथात्वं**-समुदायवाचकत्वं युक्तमेव । यथोक्तश्रुतिभ्यामवयवावयविनोः साध्यसाधनभावापन्नाविल्यवगतम । तथा अवयवावयविनो **तथात्वबोधकं**--समुदायप्रतिपादकं तत्र मानं विद्यते । प्रकृते नेति दृष्टान्तवैषम्यमिति भाव ॥ २८ ॥

उत्तमादन्येषामन्हां पत्नीसंयाजांतत्वाधिकरणम् ॥ ९ ॥

## पत्नीसंयाजांतत्वं सर्वेषामविशेषात् ॥ २९ ॥

द्वादशाहे ' पत्नीसंयाजातानि अहानि सन्तिष्ठंते ' इति श्रूयते । तत्र **सर्वेषामेवान्हां पत्नीसंयाजांतत्वम्** । न केषाचित् । कुतः ? **अविशेषात्**—विशेषाश्रवणादित्यर्थः ॥ २९ ॥

## सि० ॥ लिङ्गाद्वा प्रागुत्तमात् ॥३०॥

**प्रागुत्तमात्**—चरमदिनात् प्रागहःस्वेव तथात्वं--पत्नीसंयाजांतत्वम् । कुतः ? **लिङ्गात्**--अर्थवादस्थलिङ्गात् । ' पत्नीसंयाजातानि अहानि सन्ति-ष्ठन्ते । न बर्हिरनुप्रहरति । असंस्थितो हि यज्ञः ' इति । असंस्थितः—न समाप्तः । एतेन येष्वहःसु असंस्थितो यज्ञस्तेष्वहःसु पत्नीसंयाजांतत्वमिति सिध्यति । चरमेऽह्नि यज्ञस्य संस्थितत्वान्न तस्मिन् पत्नीसंयाजांतत्वमिति भावः ॥ ३० ॥

## अनुवादो वा दीक्षा यथा नक्तं संस्थापनस्य॥३१॥

**अनुवादो वा**—'असंस्थितो हि यज्ञः' इत्यर्थवादः पत्नीसंयाजांतता-स्तुत्यर्थः । **यथा दीक्षा**—' वरुणपाशाभ्यां वा एष बध्यते यो दीक्षितः । अहोरात्रे वै वरुणपाशौ यदिवा संस्थापयेत् । अनुन्मुक्तो वरुणपाशाभ्यां स्यात् । नक्तं संस्थाप्यो वरुणपाशाभ्यामेवोन्मुच्यन आत्मनो हिंसायाः , इति दीक्षोन्मोचनवचनं नक्तसंस्थापनविधेरर्थवादः । तद्वत्पत्नीसंया-जांततविधेरर्थवादोऽयं द्रष्टव्य इत्यभिप्रायः पूर्वपक्षिणः ॥ ३१ ॥

## स्याद्वा अनारभ्यविधानादन्ते लिङ्गविरोधात् ॥३२॥

**स्याद्वा**— उत्तमात्प्रागेव पत्नीसंयाजांतता स्यात् । **अन्ते लिङ्ग-विरोधात्**-- उत्तमेऽन्हि असंस्थितलिङ्गस्य विरोधात् । उत्तममहः **अनारभ्य**-- अनुद्दिश्य, **विधानात्तत्र** अपूर्वविधेरसम्भवः । तत्र तद्विधाने स्वेकेनैव विधिना क्वचिन्नियमः क्वचिदपूर्वमिति विधिवैरूप्यं स्यादिति चरमात्प्रागिति सङ्कोच एव न्याय्य इति भावः ॥ ३२ ॥

त्रिः प्रथमामन्वाहेत्यादिषु स्थानधर्मताधिकरणम् ॥ १० ॥

## अभ्यासः सामिधेनीनां प्राथम्यात् स्थानधर्मः स्यात् ॥ ३३ ॥

दर्शपूर्णमासयोः सामिधेनीः प्रकृत्य ' त्रिः प्रथमामन्वाह, त्रिरुत्तमाम् ' इत्याम्नातम् । तत्रायमभ्यासः स्थानधर्म एव स्यात् । न ' प्र वो वाजेति ऋग्धर्मः । कुत ' प्राथम्यात्— स्त्रीलिङ्गनिर्देशाचिटा-प्रत्ययोपस्थितोक्तर्चे प्रागेव प्रकृत्यर्थस्य स्थानस्य प्रथममुपस्थितत्वात् । तत्सम्बन्धतया तु ऋचि शक्यार्थस्थानसम्बन्धित्वरूपेणाजहत्स्वार्थलक्षणा । अजहत्स्वार्थलक्षणायान्तु शक्यार्थस्यात्यन्त बाध स्यात् । स चायुक्त. । उक्तलक्षणया ऋच एव ग्रहणात् स्त्रीलिङ्गनिर्देशोऽस्मत्पक्षेऽप्युपपन्नो भवति । तस्माद् या या प्रथमसम्बन्धिनी ऋक् तस्या अभ्यास इति भाव ॥ ३३ ॥

यावज्जीवदर्शपूर्णमासयोः आरम्भणीयेष्टेः सकृदनुष्ठाना-
धिकरणम् ॥ ११ ॥

## इष्ट्यावृत्तौ प्रयाजवदावर्तेत आरम्भणीया ॥ ३४ ॥

' आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमाण ' इति विहिता आरम्भणीयेष्टिः इष्ट्यावृत्तौ- दर्शपूर्णमासावृत्तौ सत्यां साप्याऽऽ-वर्तेत । कुत ' प्रयाजवत्तस्या अपि तदङ्गत्वादिति ॥ ३४ ॥

## सि० ॥ सकृद्वा आरम्भसंयोगात् एकः पुनरारम्भो यावज्जीवप्रयोगात् ॥ ३५ ॥

यावज्जीवप्रयोगात्--' यावज्जीवं दर्शपूर्णमासाभ्यां यक्ष्ये ' इति सङ्कल्पात्, प्राक् सकृदेव सा इष्टि । आरप्स्यमाण इति वाक्ये आरम्भ संयोगात् -आरम्भश्रवणात् । न प्रयाजादिवत् साक्षादङ्ग सा । किन्त्वा-रम्भद्वारा । स चारम्भः यावज्जीवसङ्कल्परूप एक । न प्रतिप्रयोगम् । अत सकृदेवेति भावः ॥ ३५ ॥

निर्वापमन्त्रगतसवित्रादिशब्दानामनूहाधिकरणम् ॥ १२ ॥

## अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात् तत्राचोदितमप्राप्तं चोदिताभिधानात् ॥ ३६ ॥

दर्शपूर्णमासयोः ' देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामी'ति निर्वापमन्त्र आम्नात । तत्र सवित्रादिदेवता-

वाचकाः शब्दाः कर्मसमवेतदेवताप्रकाशनार्था एव । न असमवेतस्वार्थप्रकाशनद्वारा निर्वापस्तावकाः । कुतः ? **अर्थाभिधानसंयोगात्**--देवतारूपार्थप्रकाशनसम्बन्धात्, कर्मसमवेतार्थस्मारकत्वेन तेषु ; **शेषभावः**-- अङ्गत्वं **स्यात्** । तथा च ' सवितुर्जुष्टं निर्वपामि, अश्विनोर्जुष्टं निर्वपामी'ति नानामन्त्राः । अत्र अग्निना साकं तेषां देवतानां विकल्प । सत्येवमस्य निर्वापमन्त्रस्यातिदेशेन सौर्ययागे प्राप्तौ सत्यां सवितृपदस्थाने सूर्यपदप्रक्षेपात्मक ऊहः कार्य इति चेत्तत्राह—मन्त्रस्य **चोदिताभिधानात्**--विधिविहितार्थस्मारकत्वनियमात् । **अचोदितमप्राप्तं तत्र**— दर्शपूर्णमासयोः, सवित्रादिदेवताकं कर्म अचोदितम् -अविहितम, अत एव अप्राप्तं - तत्कर्म । तद्देवताको यागस्तत्र नास्तीत्यर्थः । वाक्यभेदापत्तेः उत्पत्तिशिष्टाग्निदेवतायाः प्राबल्याच्च विकल्पासम्भवादगत्या निर्वापस्तावकत्वेनैव तस्य कृतार्थत्वं वाच्यम् । एवं विकृतावपि तैरेव शब्दैर्निर्वापस्तुतिसम्भवाच्चेषां तत्र ऊहो नास्तीति भावः ॥ ३६ ॥

विकृतावग्नये जुष्टमित्यग्निपदस्य ऊहाधिकरणम् ॥ १३ ॥

## गुणशब्दस्तथेति चेत् ॥ ३७ ॥

अस्मिन्नेव निर्वापमन्त्रे **गुणशब्दः**—जुष्टशब्दार्थे गुणभूताग्न्यादिवाचकः शब्दः, **तथा**—सवित्रादिशब्दवत् स्तावकः । न समवेतार्थस्मारक इति तस्यापि विकृतौ नास्त्यूह इति चेत्—॥ ३७ ॥

## न समवायात् ॥ ३८ ॥

**न** स्तावकोऽग्निशब्दः । **समवायात्**—अर्थस्य तत्र बाधितत्वाभावात् । अग्नये जुष्टमित्यस्य नाग्निकर्तृकभक्षणमर्थः । किन्तु यथा अग्निना जुष्टं स्यात्तथा निर्वापेण करोमीत्यर्थः । अग्निसेवितत्वस्य निर्वापसाध्यत्वान्न पूर्वोक्तदोष इति विकृतावस्त्यूह इति भावः ॥ ३८ ॥

तण्डुलावापमन्त्रे धान्यशब्दस्योहः । वर्णकान्तरम् ।

## गुणशब्दस्तथेति चेन्न समवायात् ॥ ३७ ॥ ३८ ॥

दर्शपूर्णमासयोः 'धान्यमसि धिनुहि देवानिति इत्यादि तण्डुलानावपति' इति मन्त्र आम्नायते । तत्र **गुणशब्दः—** मन्त्रघटकधान्यशब्दः, **तथा—** असमवेतार्थकः— सवित्रादिशब्दवत्स्तावकः । कुतः? धान्यशब्दस्य सतुषेष्वेव व्रीहिषु रूढत्वेन तण्डुलार्थत्वाभावादसमवेतार्थत्वं ज्ञेयम् । इत्थं च षट्त्रिंशद्वत्सरसाध्ये शाक्यानामयने 'संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति । स तत्र यान् मृगान् हन्ति, तेषां मांसानि तरसाः पुरोडाशा भवन्ति' इत्यत्र धान्यमसीत्यस्य मांसमसीत्यूहो न कार्यः, स्तावकत्वादिति चेन्न । ऊहेनैव तत्र मन्त्रपाठः कार्यः । **समवायात्—** अत्राभिधानार्थत्वात् । यद्यपि धान्यशब्दः शक्त्या व्रीहीन् वदति । तथापि शक्तिसद्लक्षया निरूढलक्षणया तण्डुलानपि बोधयति । अतो निरूढलक्षणया प्रतिपाद्यार्थस्थलेऽपि ऊहोऽस्तीति भावः ॥ ३८ ॥

## इडोपाह्वानमन्त्रे यज्ञपतिशब्दस्य अनूहाधिकरणम् ॥ १४ ॥

# चोदिते तु परार्थत्वाद्विधिवदविकारः स्यात् ॥३९॥

दर्शपूर्णमासयोः 'स यो हैवं विद्वानिडया चरति अथ प्रतिपद्यते, 'इडोपहूतोपहूतेडोपास्मा इडाह्वयामि इडोपहूता दैव्या आध्वर्यव उपहूता उपहूता मनुष्या य इमं यज्ञमवान् ये च यज्ञपतिं वर्धानिति इडानिगदः श्रूयते । अस्य इडानिगदस्य बहुयजमानके सत्रे अतिदेशेन प्राप्तौ सत्यां तत्र यजमानबहुत्वात् यज्ञपतीन् इति यज्ञपतिशब्दोत्तरं बहुवचनस्य ऊहः कर्तव्यः इति प्राप्ते आह-**चोदितेऽपि—**यज्ञपतिशब्दे पठितेऽपि, **परार्थत्वात्-** इडास्तुत्यर्थत्वात्, **अविकारः—**तस्य अनूहः—ऊहो न स्यात् । **विधिवत्-** यथा 'यजमानेन संमितौदुम्बरी भवतीत्यत्र एकयजमानसंमानेन चारितार्थ्यम् । तथा एव यज्ञपतिस्तुतिद्वाराऽपि इडास्तुतिसम्भवाच्चैव चारितार्थ्ये बहुवचनस्य ऊहो न कर्तव्योऽनेकयजमानके सत्र इति भावः ॥ ३९ ॥

## सूक्तवाके यजमानशब्दस्य ऊहाधिकरणम् ॥ १५ ॥

# विकारस्तत्प्रधाने स्यात् ॥ ४० ॥

दर्शपूर्णमासयोः 'सूक्तवाकेन प्रस्तरं प्रहरतीति सूक्तवाके 'अयं यजमानः आयुराशास्ते' इत्यत्र तत्प्रधाने— यजमानप्रधाने सूक्तवाके, विकारः— सत्रे 'एते यजमानाः' इति ऊहः स्यात् । पूर्वपक्षवादिन सिद्धान्ते ॥ ४० ॥

सुब्रह्मण्याह्वाननिगदे हरिवच्छब्दस्य अनूहाधिकरणम् ॥ १६ ॥

## सि० ॥ असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥४१॥

ज्योतिष्टोमे 'इन्द्र आगच्छ हरिव आगच्छ मेधातिथेर्मेषवृषणश्वस्य मेने गौरावस्कन्दिन्नहल्यायै जारः' इति सुब्रह्मण्याह्वानार्थे निगदमन्त्रः समाम्नातः । स च मन्त्रः अग्निष्टुन्नामके विकृतियागे चोदकेन प्राप्तः । तस्मिन् यागे 'आग्नेयी सुब्रह्मण्या भवतीति विधानात्, इन्द्रपदस्थाने 'अग्न आगच्छ इति ऊहो यथा क्रियते, तथा 'हरिव' इत्यादिपदानामपि ऊहः कार्य इत्याऽऽशङ्कायामाह—असंयोगादिति । हरिव इत्यादिपदानां तदर्थेषु— हरिवदादिषु अर्थेषु, असंयोगात्— असम्बन्धात्— असमवेतार्थत्वात्, तद्विशिष्टं— हरिवदादिशब्दैर्विशिष्टमेव प्रतीयेत । न रोहिताश्व वायुसखेत्याद्यूहः कार्यः । कुतः ? हरिवदादिधर्माणामिन्द्रवृत्तित्वे मानाभावेन अविद्यमानैरेव गुणैर्यथेन्द्रस्य स्तुतिस्तथा अग्नेरपि तैरेव गुणैः स्तुतिसम्भवान्न तेषां पदानां विकृतावूह इति भावः ॥ ४१ ॥

## कर्माभावादेवमिति चेत् ॥ ४२ ॥

कर्मणः—हरिवदादिशब्दप्रयोगनिमित्तक्रियायाः इन्द्रे अभावः स्याच्चेत् हरिवदादिशब्दाः असमवेतार्थका भवेयुः । परं तदेव न । यतः 'अहोरात्रे वा हरी ताभ्यामेष इन्द्रः सर्वं हरति'' एवं मेधातिथिं हि काण्वायनमिन्द्रः मेषो भूत्वा जहार' तथा ' वृषणश्वस्य मेनका नाम दुहिता बभूव तामिन्द्रश्चकमे । गौरेंऽवस्कन्दिन्निति गौरमृगो भूत्वा अरण्ये राजानं सोमं पिबति' । इत्याद्यर्थवादवचनप्रामाण्यात् हरिवदादिशब्दप्रवृत्तिनिमित्तक्रियाया इन्द्रे

सिद्धत्वात् पाचकादिपदस्य पाककर्तरीव इन्द्रे समवेतार्थका इमे शब्दाः । अग्नौ चासमवेतार्थकाः । अतस्तेषां स्थाने विकृतावूह आवश्यक इति सिद्धान्ताक्षेपः ॥ ४२ ॥

## न परार्थत्वात् ॥ ४३ ॥

न ऊहः । परार्थत्वात्— उक्तार्थवादस्य इन्द्रस्तुत्यर्थत्वात् । "यदन्तरिक्षे चिन्मीते" इतिपदसमवेतार्थका इति स्तोकका अर्थवादमन्त्रान्तरेषु हरिव इत्यादयः शब्दाश्चेति नास्त्यूह इति भावः ॥ ४३ ॥

तस्यै शृतमिति मन्त्रे अनूहः । वर्णकान्तरम् ।

## असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥ ४१ ॥
## कर्माभावादेवमिति चेन्न परार्थत्वात् ॥४२॥ ॥४३॥

ज्योतिष्टोमे 'एकहायन्या गवा क्रीणाती'ति सोमक्रयं विधाय तत्सन्निधौ 'इयं गौस्तया ते क्रीणामि तस्यै शृतम् । तस्यै शरः । तस्यै दधि । तस्यै मस्तु । तस्या आतञ्चनम् । तस्यै नवनीतम् । तस्यै घृतम् । तस्या आमिक्षा । तस्यै वाजिनमिति' श्रुतम् । तत् विकृतौ सायरके चोदकेन प्राप्तम् । तत्र तु 'त्रिवत्सरः साण्डः सोमक्रयण' इत्याम्नातम् । अत उक्तमन्त्रे इयं गौरिति स्थाने 'अयं वृषभः' इत्येतावन्मात्रमूह्यम् । न तस्य पय इत्यादिस्थाने तस्मै रेत इत्यादिकम् । कुतः ? तदर्थेष्वसंयोगात्—पयआदिषु अर्थेषु एकहायन्या अपि असम्बन्धात् । न हि एकहायन्याङ्गवि तदानीं पयोदध्यादिकं विद्यते । अतः केवला स्तुतिरेव सा तस्याः । एवं त्रिवत्सरे साण्डे तदर्थानां पयोदध्यादीनामसयोगेऽपि स्तुतिसम्भवात्तद्विशिष्टं--गोवाचकपदभिन्नदधिपयःप्रभृतिपदविशिष्टमेव वाक्यं प्रतीयेत । गोवाचकपदानां तु लिङ्गविरोधात् तस्यै इत्यत्र तस्मै इत्यूहः कार्य एव ।

आक्षेपः । यद्येकहायन्यां गवि कालत्रयेऽपि गोकार्यपयोदध्यादसम्भवः स्यात्तदा तत्र पयोदध्यादिशब्दः असमवेतार्थकवाक्ये स्तावको भवेत् । न तत तद्वेन भाविनि काले समवेतार्थकत्वात् । साण्डे कालत्रयेऽप्यसमवेतार्थ-

कत्वादस्यूह इति चेन्न । परार्थत्वात्— स्तुत्यर्थत्वात् । यथैकहायनीन्यार्थे पयोदध्यादि कालान्तरे भविष्यतीति समवेतार्थकं तद्वाक्यं तर्हि साण्डस्यापि स्वसजातीयस्त्रीव्यक्त्यां स्त्रीव्यक्तिमुत्पाद्य तद्द्वारा भाविकाले पयोदध्याद्युत्पादकत्वसम्भवात्समवेतार्थत्वापत्तिर्वाक्यस्येति भावः ॥ ४१ ॥ ४२ ॥४३॥

सारस्वत्यां मेष्यामध्रिगुवचनाभावाधिकरणम् ॥ १७ ॥

## लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात् ॥ ४४ ॥

ज्योतिष्टोमसंस्थासु ' आग्नेयः पशुरग्निष्टोमे आलब्धव्यः । ऐन्द्राग्नः पशुरुक्थ्ये । ऐन्द्रावृष्णिः षोडशिनि । सारस्वती मेषी अतिरात्रे ' इति पशुयागाः समाम्नाताः । तत्र प्रकृतिभूताग्निष्टोमान्तर्गताग्नीषोमीये पशुयागे ' दैव्याः शमितार आरभध्वमुत मनुष्या उपनयत मेध्यादुर आशासाना मेधपतिभ्यां मेध ' इति अध्रिगु प्रति प्रैषमन्त्रः हौत्रे पाशुके काण्डे पठितः । अयं मन्त्रः सारस्वतीं मेषीं प्रति न प्रवर्तते । कुतः ? समानविधानेषु पशुयागसामान्यमुद्दिश्य पशुधर्मेषु विहितेषु सत्स्वपि **लिङ्गविशेषनिर्देशात्**— ' प्र स्मा अग्निं भरतेति प्रैषमन्त्रे अस्मै इति चतुर्थ्यन्तपदेन पुल्लिङ्गनिर्देशात् मेष्याश्च स्त्रीत्वात् सा सारस्वती मेषी अध्रिगुप्रैषमन्त्रं प्रति अप्राप्ता । सारस्वतीदेवताकमेषीद्रव्यकयागे प्रैषमन्त्रो न प्रवर्तत इति भावः ॥ ४४ ॥

## पश्वभिधानाद्वा तद्धि चोदनाभूतं पुंविषयं पुनः पशुत्वम् ॥ ४५ ॥

**पश्वभिधानात्**— ' अग्नीषोमीयं पशुमालभेतेत्यत्र पशोः कथनात्, **चोदनाभूतं**— विधिघटकीभूतं, **तत्**— पशुपदं, **हि**—यतः, प्रैषमन्त्रे अस्मा इति **पुंविषयं**— पुंल्लिङ्गविशेष्यीभूतं **पशुत्वं**— पशुत्ववाचकं पशवे इति पदम् । अतो व्यक्तितात्पर्येण यथा इयं व्यक्तिरिति स्त्रिया निर्देशस्तथा मेष्यामपि पशुत्वस्य सत्त्वात् तत्तात्पर्येण अस्मा इति पुल्लिङ्गेन निर्देशो बोध्य इति भावः ॥ ४५ ॥

## विशेषो वा तदर्थनिर्देशात् ॥ ४६ ॥

**विशेषो वा**— मेषी अग्निगुम्फं लभत इति यः पूर्वपक्षस्तस्माद्विशेषः तद्विरुद्धः न लभते सा तमिति कल्पः । कस्मात् ? **तदर्थनिर्देशात्**— प्रैषमन्त्रे तदर्थनिर्देशात्—मेध्यामवृत्त्यर्थस्य पुंस्त्वस्य निर्देशादित्यर्थः ॥ ४६ ॥

## पशुत्वं चैकशब्द्यात् ॥ ४७ ॥

**पशुत्वं**—पशुत्वाचक पशुपदं विशेष्यम्, **ऐकशब्द्यात्**—पुंलिङ्गान्तत्वेन एकजातीयशब्दत्वात् ॥ ४७ ॥

## यथोक्तं वा सन्निधानात् ॥ ४८ ॥

**यथोक्तं** वा—अग्निगुम्फं मेषी न प्राप्नोतीति यदस्माभिरुक्तं तच्चैव कुतः ? **सन्निधानात्**—प्रयोगसमये विधिवाक्यगतशब्दस्यैव बुद्धावुपस्थितत्वात् । स च मेषीशब्द एव । न पशुशब्दः । इति तस्या विशेष्यत्वेन सर्वनाम्ना निर्देशो नैव सम्भवति । यस्या तस्य सम्भवत्तया तु पुंलिङ्गविरोधोऽस्ति । व्यक्त्यभिप्रायेणेति चेत् नीलो घटस्तामानयेति प्रयोगापत्तिरिति भावः ॥ ४८ ॥

यज्ञायज्ञीये गिरापदस्थाने इरापदस्यैव कर्तव्यत्वाधिकरणम् ॥ १८ ॥

## आम्नातादन्यदधिकारे वचनाद्विकारः स्यात् ॥ ४९ ॥

ज्योतिष्टोमे यज्ञायज्ञीयेन स्तुवीतेति यज्ञायज्ञीयस्तोत्रं गेयत्वेन श्रुतम् । 'यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे' इति यज्ञायज्ञशब्दयुक्तायामृचि स्वर्गं साम यज्ञायज्ञीयमित्युच्यते । तत्र सामगाः योनिगानमधीयानाः गायिरेति गकारेण सहैव गायन्ति । ब्राह्मणे तु गकारस्थाने स्थमाकारम् इरारिरं गानं विहितम् । 'न गिरागिरेति ब्रूयादैरं कृत्वोद्गेयम्' इति गिराशब्दे गकारलोपात् इराशब्दो भवति । इरायाः सम्बन्धि गानमैरम् । तथा कृत्वा प्रयोगसमये उद्गानं कर्तव्यमित्यर्थः । तत्र **अधिकारे**—दशाधिकारे **आम्नातात्**—

योनिभूतायामृचि पठितास्ताम्र, अन्यत्र विकारः क्वचि पठितवर्णानां नित्यं बाधकं स्यात् । वचनात्—'न गिरा गिरेति ब्रूयात् यद् गिरागिरेति चन्द्यादात्मानमेव तदुद्गाता "गिरेत्' इति गकारसहितगाने बाधकमुक्त्वा तद्रहितैरः कुर्वेद्देयमिति विशेषवचनात् । तथा च प्रयोगकाले इरापदस्याऽऽद्येः इकारस्य गानागमाकारो यकार ईकारश्चेति त्रीन् वर्णान् प्रयुज्य आयिर इत्येवं विकारेणैव गानपाठः । नोभयोर्विकल्प इति भावः ॥ ४९ ॥

## द्वैधं वा तुल्यहेतुत्वात् सामान्याद्विकल्पः स्यात् ॥ ५० ॥

तुल्यहेतुत्वात्— ज्योतिष्टोमप्रकरणे गिरापदस्य योनिभूतायामृचि पाठोऽस्ति । अतस्तत्र पठितवर्णानामपि ज्योतिष्टोमापूर्वसाधकत्वमित्येको हेतुः । ऐरं कृत्वोद्गेयमिति विधेरपि तत्प्रकरणस्थत्वेन इरापदमपि तदपूर्वेण सम्बद्धमित्यपरो हेतुः । एवं तुल्यबलाभ्यां द्वाभ्यां हेतुभ्यामनुष्ठानं द्वैधं— द्विप्रकारम् । सत्येवं द्वयोरपि सामान्यात् एकं सामान्यशास्त्रम् । अपरं विशेषशास्त्रमिति वक्तुमशक्यत्वात् विकल्प एव स्यादिति पूर्वपक्षः ॥ ५० ॥

## उपदेशाच्च साम्नः ॥ ५१ ॥

'यज्ञायज्ञीयेन स्तुवीतेति साम्न उपदेशात्— विधानात्, यज्ञायज्ञीयेन स्तुवीतेत्यस्य तेन साम्ना स्वयोनिभूतायामृचि यथा संस्कृताः स्युस्तथा स्तुवीतेति तात्पर्यम् । तस्यामृचि तु गिरेति वर्णाः पठिताः सन्ति, तेषां संस्कारः यज्ञायज्ञीयेन स्तुवीतेति प्रत्यक्षविधिगोचर इति तुल्यबलत्वं सुस्थिरमिति गिरापदस्य पाठेन विधिरनुमेयः । इरापदविधिस्तु प्रत्यक्ष इति प्रबलः । अतो न विकल्प इति शङ्का नोदेत्यत्र । तस्मात्समबलत्वाद्विकल्प एव न्याय्यमिति ॥ ५१ ॥

## नियमो वा श्रुतिविशेषादितरात्साप्तदश्यवत् ॥ ५२ ॥

नियमः— इरापदनियम एव श्रुतिविशेषात्— ऐरं कृत्वोद्गेयमिति श्रुतिविशेषात् । न हि केवलमैरं भवतीति । अपि तु ऐरं कृत्वेति श्रूयते

कर्तव्यत्वेन। गिरापदस्य पाठमात्रम्। न तु कर्तव्यतया श्रवणम्। तथा सति यज्ञायज्ञीयेन स्तुवीतेत्यत्रेतिकर्तव्यताऽऽकाङ्क्षायां गिरापदस्थाने इरापदं कृत्वा स्तुवीतेति वाक्यैकवाक्यतया न यज्ञायज्ञीयेन स्तुवीतेत्यनेन पूर्वोक्तरीत्या गिरापदघटितर्चा स्तुतिविधिः। किन्तु पाठेन कल्प्य। अतः प्रत्यक्षश्रुत्या तस्य नित्य बाध एव। **इतरत्**—मन्त्रघटक गिरापद, **साप्तदश्यवत्**—'सप्तदश स मिधेनीरन्वाह' इत्यनारभ्य पठितं साप्तदश्य प्रकृतौ निवेशार्थमागत सत् प्रकरणपठितेन पाञ्चदश्येन निरुद्ध सन्मित्रविन्दादौ निविशते। तथा ऐर कृत्वोद्गेयमित्यनेनैकवाक्यतापन्नेन यज्ञायज्ञीयेन स्तुवीतेति विधिना यज्ञायज्ञीयस्तोत्रोद्देशेन इरापदघटितमन्त्रस्य सिद्धौ सत्यामतिदेशेन विकृतिसामान्येऽपि यज्ञायज्ञीयस्तोत्रे तथैव प्राप्तौ गिरापदघटितमन्त्रस्तु महाग्निचयने 'गायत्रेण पुरस्तादुपतिष्ठते। बृहद्रथन्तराभ्यां पक्षौ। यज्ञायज्ञीयेन पुच्छम्'। इत्यत्र प्रविशतीति गिरापदघटितमन्त्रस्य चारितार्थ्ये सति गिरापदपाठानर्थक्येन 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन तुल्यबलत्व स्यादित्याऽऽशङ्का सुदूर निरस्तेति गिरापदस्थाने इरापदकृत्वैवोपस्थानं कार्यमिति सिद्धान्त समुज्जृम्भते इति बोध्यम्॥५२॥

## इरापदस्य प्रगीतत्वाधिकरणम्॥ १९॥

# अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशः स्यात्॥५३॥

'न गिरागिरेति ब्रूयात्, ऐरं कृत्वोद्गेयम्' इति गिरापदस्थाने यत् इरापदं विहितं तत् अप्रगीतमेव कर्तव्यम्। न तु प्रगीतम्। कुत? **शब्दान्यत्वे**—पाठेन श्रूयमाणशब्दात्- गिरापदात् विधीयमानस्य इरापदस्य अन्यत्वे सति **अप्रगाणात्**—अप्रगीतशब्दस्यैव तत्र विधानात्। **तथाभूतोपदेशः**—यथा विहित तथा उपदेश-पठितव्यमित्यर्थः। यदि गानविशिष्टमिरापदं विधिनाऽपर्यवसित इत्युच्येत। तर्हि गानशास्त्रपरिभाषया ईकारस्य आईभाव आईर इति प्रकृतित 'वृद्धाच्छ' इति छप्रत्यय आईरीयं कृत्वा उद्गेयमिति पठेत्। ऐरं कृत्वोद्गेयमिति यतः पठितम्। ततः गानरहितपाठ एव तस्येति भावः॥ ५३॥

## सि० ॥ यत्स्थाने वा तद्गीतिः स्यात् पदान्यत्वप्रधानत्वात् ॥ ५४ ॥

**यत्स्थाने वा तद्गीतिः स्यात्**—'तत्स्थानापन्नस्तद्धर्मं लभते' इति न्यायात् यस्य गिरापदस्य स्थाने यत् इरापदं विधीयते तस्मिन् इरापदे तत्पदवृत्तिगिरापदवृत्तिगानं स्यात् । कुतः? **पदान्यत्वप्रधानात्**—ऐरं कृत्वोद्गेयमिति विधेः 'यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे' इति मन्त्रे श्रूयमाणगिरापदप्रतियोगिकान्यत्ववदिरापदप्रधानत्वात् । तादृशेरापदविधिमात्रविषयत्वादित्यर्थः । उपायान्तरलभ्येऽर्थे विधिसम्बन्धासम्भवान्न गानविशिष्टेरापदविधिरिति भावः । अत एव 'ऐरमित्यत्र तद्धितो विकारार्थे विहित. । साम्नो योनिभूतऋग्वर्णानां विकारो गानमेव । तथा च गानविशिष्टवर्णविधानात् कथं न्यायलभ्यत्वं गानस्योच्यते भवतेति शङ्का नोदेत्यत्र । तद्धितस्तु न्यायप्राप्तानुवादक एव । इत्थं गानस्यान्यलभ्यत्वेन विध्यभावादेव न तत्र छप्रत्ययापत्तिरिति भाव· ॥ ५४ ॥

## गानसंयोगाच्च ॥ ५५ ॥

क्वचित्तदीयग्रंथे 'उद्गयनाङ्ग चादाक्षसा' इति गानसंयुतमपि इरापदं दृश्यते इति व्यक्तमेव साधकान्तरमिरायां गानविशिष्टत्वे । अतो गानविशिष्टमेव तत्पदं प्रयोक्तव्यमिति भावः ॥ ५५ ॥

## वचनमिति चेत् ॥ ५६ ॥

एवं चेद् **वचनं**—विधिरेवाय गानस्येति कस्मान्नोच्यते । कुतश्च न्यायप्राप्तमित्युच्यत इति चेत्— ॥ ५६ ॥

## न तत्प्रधानत्वात् ॥ ५७ ॥

न विधिः । **तत्प्रधानत्वात्**— तस्य इरापदस्य प्रधानत्वात्—विधितात्पर्यविषयत्वात् । अन्यलभ्ये विधिसम्बन्धासम्भवादिति भावः ॥ ५७ ॥

इति पूर्वमीमांसासूत्रवृत्तौ **भावबोधिन्यां** नवमाध्यायस्य प्रथमः पादः ॥ १ ॥ श्रीः ॥

# ॥ अथ नवमाध्यायस्य द्वितीयः पादः ॥

गीतीनां सामतानिराकरणाधिकरणम् ॥ १ ॥

## सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥१॥

रथन्तरं, बृहत्, वैरूपं, वैराजं, शाक्व, र, रैवतमितिनामकानि **सामानि** सामवेदे ' अभि त्वा शूर नो नुमः ' इत्यादिषु ऋक्षु श्रुतानि। तानि **मन्त्रमेके**—गानविशिष्टमन्त्रवाचकानीत्येके आचार्या मन्यन्ते । कुत. ? ' प्रगीतमन्त्रः साम ' इति स्मृतेः । रथन्तरं पठेति गुरुणा नियुक्तः शिष्यः गानयुतामृचं पठति च । अतः **स्मृत्युपदेशाभ्यां** गानयुतो मन्त्रः सामपद-वाच्य इत्यर्थः ॥ १ ॥

## सि० ॥ तदुक्तदोषम् ॥ २ ॥

**तदुक्तदोषं**—तत्—पूर्वपक्षिणोक्तं मतम्, उक्तदोषं—सप्तमस्य द्वितीय-पादे प्रदत्तदोषम् । इति तन्मतं न युक्तम् । किन्तु गानविशेष एव रथन्तरादिशब्दवाच्य इति भावः ॥ २ ॥

ऊह्ग्रन्थस्य पौरुषेयत्वे वर्णकान्तरम् ॥ १ ॥

कवतीषु ' कयानश्चित्र आभुवदूतीत्येतास्मिन् तृचेऽध्ययनतः प्राप्तस्य वामदेव्यसाम्नः स्थाने ' अभि त्वा शूर नो नुमः ' इत्येतास्मिन् तृचे श्रुतस्य रथन्तरसाम्नः ' कवतीषु रथन्तरं गायती'ति ऊहः श्रुत । स नित्यः पौरुषेयो वेति विशये **मन्त्रं**—मन्त्रभूतानि सामानि—ऊहितसामानि नित्यानी-त्येके आहुः । कुतः ? 'मन्त्रभूतानि आर्षाणि नित्यानी'ति **स्मृतिः** । ' अभि त्वा शूर नो नुम० ' इत्यत्र गीयमानानि सामानि ' कयानश्चित्रेत्यत्र योजयेदित्युपदेशः । नान्यामिति प्राप्ते सिद्धान्तः—**तदुक्तदोषम्** । तत—त्वदुक्तमुपदेशलिङ्गं त्वयैव दर्शितदोषकम् । तथा हियोजयेदित्युपदेशरूपो हेतुः प्रदर्शितः । युजधात्वर्थस्तु पुरुषप्रयत्नजन्यत्वघटितः । तादृशस्योपदेश

अथ नित्यत्वस्य सिद्धिरिति तमेव वक्ति । न हि सौर्ययागे निर्वापमन्त्रे सूर्यपदं योजयेदित्युक्ते पश्चात्तथाकृतनाहितमन्त्रस्य नित्यत्वं सिध्यतीति भावः ॥ १ ॥

साम्नः ऋक्संस्कारकर्मताधिकरणम् ॥ २ ॥

## कर्म वा विधिलक्षणम् ॥ ३ ॥

**कर्म** वा—रथन्तरादिशब्दवाच्यं गानं द्वितीये प्रतिपादितयोर्गुणप्रधान-कर्मणोर्मध्ये प्रधानकर्मैव-आरादुपकारकम् । यतः 'रथन्तरं गायती'त्यत्र 'प्रयाजान् यजती'तिवत् प्रधानकर्मलक्षणं द्वितीयाश्रवणमस्तीति ॥ ३ ॥

## तदृग्द्रव्यं वचनात् पाकयज्ञवत् ॥ ४ ॥

तत्—ऋग्रूपं द्रव्यमिवेति द्रव्यम् । सादृश्यमत्र गुणत्वेन ज्ञेयम् । तथा च—यथा द्रव्यनिरूपितं प्राधान्यं यागे, तथा ऋङ्निरूपितं प्राधान्यं साम्नः । वचनात्—'ऋचि साम गायती'ति श्रवणात् । पाकयज्ञवत्—यथा पाकयज्ञेषु—'लाजैर्जुहोती'त्यादिवचनैर्द्रव्याणामङ्गत्वं, तद्वदत्र ऋचोऽ-ङ्गत्वमिति ॥ ४ ॥

## तत्राविप्रतिपिद्धो द्रव्यान्तरे व्यतिरेकः प्रदेशश्च ॥ ५ ॥

तत्र—क्रतुविशेषे, द्रव्यान्तरे—ऋगन्तरे, प्रदेशः—कवतीष्वित्यति देशशास्त्रोपदेशः, तन्मूलश्च व्यतिरेकः, 'अभि त्वा शूरेति' ऋगभावः, तदुत्पत्तौ—कवतीषु रथन्तरोत्पत्तौ अविप्रतिपिद्धः—अविरुद्धः । कुत इति चेत्—अभित्वेति ऋचि रथन्तरं गायतीत्यस्य सामान्यशास्त्रत्वात् । क्रतु-विशेषे कवतीषु रथन्तरमित्यस्य विशेषशास्त्रत्वात् । कार्यतावच्छेदकसङ्कोचेन द्वयोः कारणयोः समावेशः सम्भवतीति रथन्तरादीनां साम्नां 'अभि त्वा शूरे-त्याद्या ऋचो यदि कारणं तर्हि तासां रथन्तरादिजन्यापूर्वसाधनत्वेनैव कारणत्वं वाच्यम् । तथा सति अभि त्वेति ऋचि रथन्तरं गायतीति वाक्यस्य

'अभित्वेति ऋचं विना तेन रूपेण तदुत्पत्तिर्नास्ती'ति नियमरूपेऽर्थो वाच्यः। तथा सति 'कवतीषु रथन्तरं गायति' 'कयानश्चित्रे'ति अतिदेशशास्त्रं बाधितं भवेत् । यतः अभित्वेति ऋचं विना तदपूर्वसाधनत्वेन रथन्तरसाम्नः उत्पत्तेरभावः पूर्ववाक्येन प्रदर्शित इति शङ्कापङ्कः दूरतरमुत्सारित इत्यवगन्तव्यम् । तस्मात्प्रधानकर्मत्वे न कोऽपि दोष इति पूर्वः पक्षः ॥ ५ ॥

## सि० ॥ शब्दार्थत्वात्तु नैवं स्यात् ॥ ६ ॥

**एवं**— प्रधानकर्म, इति **न स्यात्**— नैव भवत् । कुतः ? **शब्दार्थत्वात्**— गीतिरूपाणां रथन्तरादीनां ऋगर्थत्वात् । ऋग्वर्णसंस्कारः— वर्णाभिव्यक्तिः गीतिकार्यं दृष्टं फलं सम्भवति । एवं सत्यदृष्टकल्पनमन्याय्यमिति भावः ॥ ६ ॥

## परार्थत्वाच्च शब्दानाम् ॥ ७ ॥

**शब्दानां**— ऋचां, **परार्थत्वात्**— स्तुत्यर्थत्वात्, साम्ना गानरूपेणाक्षराभिव्यक्तिः, ऋगक्षरैर्देवतास्तुतिरिति उभयं दृष्टमेव फलम् । परमते साम्नः फलकल्पनापत्तिः । इष्टापत्तौ तु 'आज्यैः स्तुवते, पृष्ठैः स्तुवते' इति साम्नः ऋगक्षराभिव्यक्तिद्वारा स्तोत्रार्थत्वं प्रदिष्टं विरुध्येतेति भावः ॥ ७ ॥

## असम्बन्धश्च कर्मणा शब्दयोः पृथगर्थत्वात् ॥८॥

किञ्च, साम्नः प्रधानकर्मत्वे अर्थाद्दृचोऽगत्वे **कर्मणा**—स्तोत्ररूपकर्मणा, सार्कं साम्न. **असम्बन्धः**—सामानाधिकरण्यं न स्यात् । **शब्दयोः**— रथन्तरपृष्ठशब्दयोः, **पृथगर्थत्वात्**—भिन्नार्थत्वात् । 'रथन्तरं पृष्ठं भवती'त्यत्र रथन्तरशब्दो गीतिवाचकः । पृष्ठशब्दस्तु स्तोत्रवाचक इति भिन्नार्थयोस्तयोर्भेदान्वयो बाधितः पूर्वपक्षिमते । सिद्धान्ते—रथन्तरशब्दस्य रथन्तरगुणकमित्यर्थः । तथा च रथन्तरगुणकं पृष्ठं भवतीत्यभेदान्वय उपपद्यते । रथन्तरगुणकत्वं च स्तोत्रस्य । स्तोत्रसाधनभूतवर्णाभिव्यक्तिद्वारेति भावः ॥ ८ ॥

## संस्काराश्चाप्रकरणेऽग्निवत्स्यात्प्रयुक्तत्वात् ॥९॥

**संस्कारः**— स्तोत्रसाधनभूतवर्णाभिव्यक्तिरूपः **अप्रकरणे**—प्रयोगाद्बहिः अध्ययनकाले **प्रयुक्तत्वात्**— साम्नः एव । न ज्योतिष्टोमप्रयोगमध्ये पुनः संस्कारः । यथा—अग्निः प्रयोगाद्बहिः आधानेन संस्कृतः प्रयोगमध्ये न पुनः संस्क्रियते । तथा अयमपि संस्कार इति साम्नः ऋगर्थत्वमङ्गीकृत्य मतान्तरोत्थापनमिदम् ॥ ९ ॥

## अकार्यत्वाच्च शब्दानामप्रयोगः प्रतीयेत ॥ १० ॥

यदि प्रयोगाद्बहिः— अध्ययनकाले पठिता मन्त्राः गानेन संस्कृताः प्रयोगकाले आहवनीयाद्यग्निवदुपलभ्येरन् तर्हि संस्कृताना शब्दाना सत्त्वेन **अकार्यत्वात्**— पुनस्तत्संस्कारस्यानुत्पाद्यत्वात्, पुनस्तथापाठे फलाभावाच्च **अप्रयोगः**— प्रयोगकाले पाठमात्रः प्रतीयेत । तदेव न । अतः कर्मसमये पुनस्तथा पठितव्यमिति भावः ॥ १० ॥

## आश्रितत्वाच्च ॥ ११ ॥

किञ्च, **आश्रितत्वाच्च**— 'औदुम्बरीं स्पृष्ट्वा उद्गायेत' । इति विधिना औदुम्बरीस्पर्शमाश्रित्य गानविधानादपि प्रयोगकाले गानविशिष्टः पाठः सिध्यति । प्रयोगाद्बहिरौदुम्बर्या अभावादिति भावः ॥ ११ ॥

## प्रयुज्यत इति चेत् ॥ १२ ॥

तर्हि प्रयोगाद्बहिः अकर्मकाले पाठः कुतः **प्रयुज्यते** ? **इति चेत्**— ॥ १२ ॥

## ग्रहणार्थं प्रतीयेत ॥ १३ ॥

**ग्रहणार्थं**— अभ्यासार्थं, बहिः प्रयुज्यत इति प्रतीयेत । ज्ञेयमित्यर्थः ॥ १३ ॥

तृचे प्रत्यृचं कृत्स्नसाम्नः समापनाधिकरणम् ॥ ३ ॥

## तृचे स्यात् श्रुतिनिर्देशात् ॥ १४ ॥

ज्योतिष्टोमे 'एकं साम तृचे क्रियते स्तोत्रियम्' इत्याम्नातम् । तत्रैकं साम त्रेधा विभज्य त्रिषु ऋक्षु गातव्यम् । न तु प्रत्यृचं साम्नः परि-

समाप्तिः । तथा सति एकस्यामृचि समग्रं कृतं स्यात् । **श्रुतिनिर्देशस्तु—** एकं– एकसङ्ख्यावच्छिन्नं साम तृचे त्रित्वावच्छिन्ने कार्यमित्यस्ति । अतस्ता-दृशविधानात् विभज्यैव गेयम् ॥ १४ ॥

## शब्दार्थत्वाद्विकारस्य ॥ १५ ॥

**विकारस्य-** साम्नः, **शब्दार्थत्वात्—** तृचे क्रियत इति श्रूयमाणा-वच्छेदकीभूतत्रित्वावच्छिन्नऋगर्थत्वात्, विभज्यैव गेयम् । यथा त्रिभ्यः एक-मुद्रा देयेत्युक्ते समग्राया एकमुद्रायाः दातुमशक्यतया विभज्यैव दीयते । तद्वदत्रापि ज्ञेयमिति भावः ॥ १५ ॥

## दर्शयति च ॥ १६ ॥

अर्थवादोऽपि विभज्यैव गानं **दर्शयति** । तथा हि– " ऋक्साम प्रत्युवाच मिथुनीसम्भवाव इति । सोऽब्रवीन्न वै त्वं ममाऽमसि जायार्थम् । ततस्ते द्वे भूत्वा ऊचतुः सम्भवामेति । सोऽब्रवीन्न युवा ममालमिति । वेदो मम महिमेति । ततस्तिस्रो भूत्वा ऊचुर्मिथुनीसम्भवामेति । सोऽ-ब्रवीत्सम्भवामेति । तस्मादेकं साम तृचे क्रियते " । इत्येका ऋक् साम्नः सम्भोगाय नालमिति विभज्य गाने लिङ्गा दृष्टम्॥ १६ ॥

## सि० ॥ वाक्यानां तु विभक्तत्वात्प्रतिशब्दं समाप्तिः स्यात्संस्कारस्य तदर्थत्वात् ॥१७॥

**वाक्यानां—** ऋग्रूपवाक्यानां, **विभक्तत्वात्—** भिन्नत्वात्, ऋचां भिन्नत्वेन स्तोत्रस्यापि भेदः । न हि तिसृभिर्ऋग्भिः एकं स्तोत्रं क्वचि-त्प्रसिद्धम् । अतः **प्रतिशब्दं—** प्रत्यृचं साम्नः **समाप्तिः स्यात्** । सामजन्य-**संस्कारस्य** अक्षराभिव्यक्तिरूपस्य **तदर्थत्वात्—** ऋगर्थत्वात् ऋचा स्तुतिर्नि-र्वर्त्तते अक्षराभिव्यक्तिद्वारा । तत्र सामैवोपकारकम् । विभज्य स्तुतौ सामावयवः स्तोत्रोपकारकः स्यात् । न साम । अतः प्रत्यृचं साम्नः परिसमाप्तिरिति भावः ॥ १७ ॥

## तथा चान्यार्थदर्शनम् ॥ १८ ॥

**तथा च**— प्रत्यृचं साम्नः परिसमाप्तिसिद्धौ, **अन्यार्थस्य**— 'अष्टाक्षरेण प्रथमायामृचि स्तौति, द्व्यक्षरेण उत्तरयोः' इति प्रस्तावभेदस्य दर्शनमुपपन्नं भवति । प्रस्तावो नाम साम्नः आद्या भक्तिः । स तु एकस्यैक एव । यदि एकस्यैव साम्नो विभज्य विनियोगस्तदा प्रस्तावभेदविधानमनुपपन्नं स्यादिति भावः ॥ १८ ॥

## अनवानोपदेशश्च तद्वत् ॥ १९ ॥

'अनवानं गायती'त्यनवानोपदेशोऽपि **तद्वत्**—मन्मते उपपन्नः । न हि तिसृषु विभज्य गाने अनवानता उपपद्यत इति भावः ॥ १९ ॥

## अभ्यासेनेतरा श्रुतिः ॥ २० ॥

**अभ्यासेन**—सम्पूर्णस्य गानस्य आवर्तनेनापि **इतरा श्रुतिः**—'तिसृषु गायती'ति श्रुतिः उपपद्यते । यथा देवदत्तस्त्रिषु गृहेषु भोज्य इत्यत्राभ्यासस्तथा अत्रापीति भावः ॥ २० ॥

### समास्वेवेति त्रिसृषु ऋक्षु गानाधिकरणम् ॥ ४ ॥

## सि० ॥ तदभ्यासः समासु स्यात् ॥ २१ ॥

'एकं साम तृचे क्रियते स्तोत्रियम्' इति प्रत्यृचं **तदभ्यासः**—तस्य साम्नोऽभ्यासः, **समासु**— समच्छन्दस्कासु ऋक्ष्विति नियमः स्यात् । अन्यथा अनियमे स्वीकृते संशरविश्लेशदोषापत्तिः । यत्र साम्नो योनिभूता ऋगधिकाक्षरा उत्तरे ऋचौ न्यूनाक्षरे तत्र अधिकाक्षरसाम्नः भागेनैव तत्पूर्तेरवशिष्टः सामभागः आश्रयाभावाल्लुप्येत । अयं संशरदोषः । यत्र योनिभूता ऋगल्पाक्षरा उत्तरे अधिकाक्षरे तत्र अल्पाक्षरसाम्नः बह्वक्षरायामृचि मध्ये परिसमाप्तत्वेन शेषाक्षराण्यसंस्कृतानि स्युरित्ययं विश्लेशदोषः । अतः समास्वेव तदभ्यासः । तथा सति नोक्तदोषद्वयमिति भावः ॥ २१ ॥

## लिङ्गदर्शनाच्च ॥ २२ ॥

'स्थाल्यां सक्त्ववधीयते इत्याहुः, यद् बृहद् गायत्रीषु क्रियते, ऋक्त्वेनातरुजतीति, न चास्या सम्भवति' इति विषमच्छन्दस्कासु दोषश्रवणलिङ्गदर्शनादपि समच्छन्दस्कासु ऋक्षु गानं सिध्यतीति भावः ॥ २२॥

**उत्तरयोर्गायतीत्यत्र उत्तराग्रन्थपठितयोरेव ऋचोर्ग्रहणाधिकरणम् ॥५॥**

## नैमित्तिकं तूत्तरात्वमानन्तर्यात्प्रतीयेत ॥ २३ ॥

सामवेदिनामृक्पाठाय छन्दोग्रन्थः उत्तराग्रन्थश्चेति ग्रन्थद्वयं विद्यते । तत्र छन्दोग्रन्थे निखिलसाम्नां योनिभूता एव ऋचः पठिताः । अत एव तस्य योनिग्रन्थ इत्यपरं यौगिकं नाम विद्यते । उत्तराग्रन्थे तृचात्मकानि सूक्तानि पठितानि । एवं यस्मिन् तृचे छन्दोग्रन्थस्था तत्तत्साम्न योनिभूता ऋक् प्रथमा । इतरे द्वे ऋचावुत्तरे । तयोर्नाम्ना तद्ग्रन्थस्य उत्तराग्रन्थ इति संज्ञा वर्तते । एवं स्थिते 'रथन्तरमुत्तरयोर्गायति । बृहदुत्तरयोर्गायति । कवतीषु रथन्तरं गायति । यद्योन्या गायति तदुत्तरयोर्गायता' ति ज्योतिष्टोमप्रकरणपठितवाक्ये द्विविधे उत्तरे भवितुमर्हे । तथा हि—

छन्दोग्रन्थे 'अभि त्वा शूर नो नुमेति ऋक् रथंतरस्य योनित्वेन पठिता । तस्या उपरि 'त्वामिद्धि हवामहे' इत्यादयो बृहदादिसाम्नां योनयः पठिताः । उत्तराग्रन्थे तु 'अभि त्वा शूर नो नुमेति सूक्ते तस्या ऋच ऊर्ध्वे 'न त्वावामन्य' इत्येषा कस्यापि साम्नः अयोनिभूता ऋक् पठिता । तत्र छन्दोग्रन्थापेक्षया सामान्तरयोर्योनिभूते द्वे ऋचौ रथन्तरस्य स्वयोन्युत्तरे भवतः । उत्तराग्रन्थापेक्षया तु तृचगते द्वितीयतृतीये ऋचौ स्वयोन्युत्तरे भवतः । तत्र विशेषनियामकस्याभावादिच्छया ययोः कयोश्चिदुत्तरयोर्गानं कार्यमिति प्राप्ते आह सिद्धान्तं— **नैमित्तिकं त्विति । नैमित्तिकं—** यद्योन्यां तदुत्तरयोरिति वचनप्राप्तमुत्तरात्वं— उत्तरापदप्रतिपाद्यत्वमुत्तराग्रन्थे पठितासु ऋक्षु प्रतीयेत । **आनन्तर्यात्—**उत्तराशब्दोपस्थितेः शब्दश्रवणानन्तर्यात् । अत्रायं भावः— प्रतियोगिनिरपेक्षत्वेन उत्तरेति संज्ञा सहसा बुद्धिस्था

भवति । पूर्वपठितां योनिभूतामृचमपेक्ष्य यदुत्तगान्त तद्विलम्बेन प्रतीयमानत्वाद्दुर्बलम । ईदृशमेवोत्तरात्वं छन्दोग्रन्थे पठितयोः स्वयोन्यन्तरभाविन्योः, समान्तरयोन्योर्द्वयोर्ऋचोः । तृचगतयोस्तु द्वितीयतृतीययोर्ऋचोरुत्तरात्वं संज्ञया वर्तते । तस्मात्तयोरेव गानं कार्यम् । एवं सति समच्छन्दस्कात्वेन गानमिति यत्पूर्वाधिकरणे निर्णीतं तदनुगृहीतं भवतीति भावः ॥ २३ ॥

## ऐकार्थ्याच्च तदभ्यासः ॥ २४ ॥

**तदभ्यासः**—तासु उत्तराग्रन्थगतासु त्रिषु ऋक्षु अभ्यासः साम्नः पठनम् । **ऐकार्थ्यात्**—एकापूर्वार्थत्वेन पाठात् । अन्यथा तिसृणामेकत्र पाठैऽनर्थ्यं स्यादिति भावः ॥ २४ ॥ **इति प्रथमवर्णकम् ॥ १ ॥**

### अतिजगत्यामभ्यस्यमानायां त्रैशोकगानाधिकरणम् ॥ ५ ॥

## तदभ्यासः समासु स्यात् ॥ २१ ॥

'द्वादशाहेन प्रजाकामं याजयेत्' इति विहितद्वादशाहयागीयचतुर्थेऽहनि त्रैशोकाख्यं साम 'विश्वाः पृतना अभिभूतरं नरं सजूस्ततक्षुरिंद्रंजजनुश्च राजसे ॥ क्रत्वा वरिष्ठं वरआमुरीमुतोग्रमोजिष्ठं तवसन्तरस्विनम्' इत्यतिजगतीच्छन्दस्कायामृच्युत्पन्नं विहितमस्ति । उत्तरे द्वे ऋचौ बृहतीच्छन्दस्के । तयोः पूर्वा—'नेमिं नमन्ति चक्षसामेषं विप्रा अभिस्वरा ॥ सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः' ॥ उत्तरा- 'समी रेभासो अस्वरन्निन्द्रं सोमस्य पीतये ॥ स्वर्पतिं यदीं वृधे धृतव्रतो ह्योजसा समूतिभिः' ॥ इति । तत्र संशयविच्छेदोपयोरापत्तिर्मा भवत्विति अन्ये अतिजगतीच्छन्दस्के ऋचावुपादाय समास्वेवैतत्त्रैशोकं साम अभ्यसितव्यम् । न उत्तरे बृहत्यावुपादाय विषमासु गातव्यमिति ॥ २१ ॥

## लिङ्गदर्शनाच्च ॥ २२ ॥

'अतिजगतीषु स्तुवन्ति' इत्यत्र बहुवचनलिङ्गदर्शनादपि उक्तोऽर्थ एव सुदृढो भवति ॥ २२ ॥

## सि० ॥ नैमित्तिकं तूत्तरात्वमानन्तर्यात्प्रतीयेत ॥ २३ ॥

**नैमित्तिकं**— 'यद्योन्या तदुत्तरयोर्गायती'ति वचनप्राप्तमुत्तरात्वं— उत्तरापदप्राप्यत्वम्, **आनन्तर्यात्**--उत्तराशब्दोपस्थितेः शब्दश्रवणानन्तर्यात्, **प्रतीयेत**—उत्तराग्रन्थाधीतासु ऋक्षु प्रतीयेत । वाक्याच्छ्रुतेर्बलीयस्त्वादुत्तरे बृहत्यावेवोपादातव्ये । नान्ये आदातव्ये इति भावः ॥ २३ ॥

## ऐकार्थ्याच्च तदभ्यासः ॥ २४ ॥

**ऐकार्थ्यात्**—' एकदेवताके त्रैशोके तृचे ' इति शब्दस्वारस्यादयुक्तमेव सिध्यति । **तदभ्यासः**— त्रैशोकसाम्नः विंशतिकृत्वोऽभ्यासस्तत्रैव विहित इति तासां तिसृणामृचामेकविंशतित्वसिध्यर्थं सप्तवारमावृत्तिः कार्या । तासामावृत्तावतिजगत्या अपि सप्तवारमावृत्तिरिति तत्र बहुत्वान्वय उपपद्यत इति तदनुपपन्नत्वाक्षेपो निरवकाश इति भावः ॥ २४ ॥

इति द्वितीयवर्णकम् ॥ २ ॥

बृहतीपङ्क्त्योरेव प्रग्रथनेन रथन्तरस्य गानाधिकरणम् ॥ ६ ॥

## प्रागाथिकन्तु ॥ २५ ॥

' बृहत्पृष्ठं भवति, रथन्तरं पृष्ठं भवति ' इति ज्योतिष्टोमे श्रुतम् । तत्र रथन्तरस्य योनिः ' अभि त्वा शूर नो नुमो दुग्धा इव धेनवः ॥ ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ' इतीयं बृहतीच्छन्दस्का ककुप् । उत्तरा पङ्क्तिच्छन्दस्का । ' न त्वावान् अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ॥ अश्वायन्तोमघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ' इति । बृहतो योनिः ' त्वामिद्धि हवामहे सातावाजस्य कारवः ॥ त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ' ॥ उत्तरा पङ्क्तिरेव

' स त्वं नश्चित्र वज्रहस्त धृष्णुया महः स्तवानो अद्रिवः ॥ गामश्वं रथ्यमिन्द्र सङ्किर सत्रा वाजन्न जिग्युषे ' ॥ इति । तयोर्बृहच्छन्दस्कं गानमाम्नायते । ' न वै बृहद्रथन्तरेमकच्छन्दो यच्चैतयोः पूर्वा बृहती ककुभावुत्तरे ' इति । अस्यायमर्थः—बृहद्रथन्तरसाम्नोरस्ति. ऋचः नैकच्छन्दस्काः । किन्तु पूर्वा बृहतीच्छन्दस्का । उत्तरे ककुप्छन्दस्के इति । सत्येवमत्र गानन्तु **प्रागाथिकम्**—प्रथमाया ऋचः अविकृतमेव गानम् । ततः प्रथमाया ऋचः ' ईशानमिन्द्रेति पाठं पुनरुपादाय उत्तरायाः पङ्क्तेः पूर्वार्धेन ' न त्वावा-मिलनेन मेलनेन अष्टाविंशत्यक्षरा त्रिपादेका ककुप् सम्पद्यते । तथा ' न त्वामिस्तया द्वितीयः पादः न जात इत्यष्टाक्षरः । तस्य ' अश्वायन्त इति पङ्क्त्युत्तरार्धेन साकं योजने साप्येका ककुब्भवति । एवं **प्रागाथिकं**—पूर्वोत्तरयोः प्रग्रथनेन ककुभौ सम्पाद्य तयोर्गानं विधेयम् । न अन्ये उत्पत्ति-सिद्धककुप्छन्दस्के ऋचौ उत्तरपठितपङ्क्तिच्छन्दस्क-ककुप्स्थाने योज्ये इत्यर्थः ॥ २५ ॥

## स्वे च ॥ २६ ॥

एवं कृते स्वे—ककुभि गानं कृतं भवत्येवेति भावः ॥ २६ ॥

## प्रगाथे च ॥ २७ ॥

**प्रगाथे**—पूर्वपापृगत्वर्णाना पुनर्ग्रहणे प्रगाथशब्दोऽप्युपपन्नो भवति । प्रकर्षेण गानं हि प्रगाथपदस्यार्थः । प्रकर्षश्च तेषां वर्णानां पुनःपुनर्गान-मेव । अन्यासामीत्पत्तिकानां ककुभामानयने तु पुनःपुनर्गानानुपपत्तिरिति भावः ॥ २७ ॥

## लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥

' एषा वै प्रतिष्ठिता बृहती यत्पादं पुनरारभते ' इति बृहत्यर्थवादे पुनःपादारम्भ**लिङ्गदर्शनस्य अव्यतिरेकात्**—गत्यन्तराभावादपि उपर्युक्तोऽर्थः सिध्यतीति भावः ॥ २८ ॥ इति **प्रथमवर्णकम्** ॥ १ ॥

बृहतीविष्टारपङ्क्त्योः प्रग्रथनेन रौरवयौधाजयसाम्नोर्गाना-विकरणम् ॥ ६ ॥

## प्रागाथिकं तु ॥ २५ ॥ स्वे च ॥ २६ ॥ प्रगाथे च ॥ २७ ॥

प्रकृते ज्योतिष्टोम एव 'रौरवयौधाजययेबार्हततृचे भवतः' इति श्रुतम् । अस्यार्थः—रौरवयौधाजयनामके सामनी बृहतीच्छन्दस्कतृचे गातव्य इति । उत्तराग्रन्थे तस्य सामद्वयस्य आश्रयः एकः प्रगाथ आम्नातः। तस्मिन् पूर्वा—

'पुनानः सोम धारयापो वसानो अर्षसि ॥
आ रत्नधा योनिमृतस्य सीदस्युत्सो देव हिरण्ययः ॥ १ ॥

इति बृहती ऋक् ।

उत्तरा तु—

दुहान ऊधर्दिव्यं मधु प्रिय प्रत्नं सधस्थमासदत् ॥
आपृच्छय धरुणं वाज्यर्षति नृभिर्धौतो विचक्षणः ॥ १ ॥

इति विष्टारपङ्क्तिः ।

अत्रापि **प्रागाथिकं तु**—पूर्ववदेव प्रग्रथनेन तृचं विधाय तस्मिन् रौरवयौधाजयसामद्वय गेयम । नोत्पत्तिसिद्धस्य अन्यबृहतीद्वयस्यागमः कार्यः । 'बार्हतप्रगाथः' इति स्मृतेः प्रकृतयोरेव ऋचोः प्रग्रथनं कर्तव्यमिति सिध्यति । एवं सति स्वे छन्दसि प्रकृते गानं स्यात् । न प्रकृतहानाप्रकृतप्रक्रिया भविष्यति । तथा च प्रगाथशब्दः समुपपन्नो भविष्यति । प्रकर्षश्च पुन. पादे उपादीयमाने सिध्यति । नान्यथा । तस्मान्नान्ये बृहत्यावत्र ग्राह्ये ॥ २५ ॥ २६ ॥ २७ ॥

## लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥

'पङ्क्तिखिष्टुभौ माध्यन्दिनसवन' इति लिङ्गदर्शनस्य गत्यन्तराभावेनाव्यतिरेकादपि प्रकृतऋचोः प्रग्रथनेनैवोक्तसामद्वयस्य गानं निर्विचिकित्सं सिध्यतीति भावः । एव नौधसकालेयसाम्नोरपि द्रष्टव्यम । अस्य विस्तरस्तु आकरग्रन्थाज्ज्ञेयः ॥ २८ ॥ इति द्वितीयवर्णकम् ॥ २ ॥

अनुष्टुब्गायत्र्योः प्रग्रथनेन श्यावाश्वान्धीगवयोर्गानाधिकरणम् ॥६॥

## प्रागाथिकं तु ॥ २५ ॥ स्वे च ॥ २६ ॥ प्रगाथे च ॥ २७ ॥

तत्रैव तृतीयसवने ' पञ्च छन्दा आवापः। आर्भवः पवमानः सप्तसामा। गायत्रसंहिते गायत्रे तृचे भवतः। श्यावाश्वाधीगवे आनुष्टुभे तृचे भवतः। उष्णिहि सफं। ककुभि पौष्कलम्। काममन्त्यं जगतीषु ' इति श्रुतम्। तत्र यदेतत् श्यावाश्वं आन्धीगवं च द्वे सामनी तयोः पूर्वा—

' पुरोजिती वो अन्धसः सुताय मादयित्नवे ॥
अप श्वानं श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ '

इत्यनुष्टुबृक्।

उत्तरे द्वे गायत्र्यौ—

' यो धारया पावकया परिप्रस्यन्दते सुतः ॥ इन्दुरश्वो न कृत्व्यः ॥ तं दुरोषमभी नरः सोमं विश्वाच्या धिया ॥ यज्ञं हिन्वन्ति अद्रिभिः ॥ ' इति ॥

अत्रापि पूर्ववत्प्रागाथिकमनुष्टुभः पादं गायत्र्यां योजयित्वा आनुष्टुभं तृचं सम्पाद्य तस्मिन् श्यावाश्वं आधीगवं च साम गातव्यम्। न अन्ये अनुष्टुभौ आगमयितव्ये। आनुष्टुभः प्रगाथः इति स्मृतेः न स्मृतस्य तस्यापन्हवः कार्यः। इत्थं स्वे तृचे गानं भविष्यति। न प्रकृतहानमप्रकृतोपादानं च स्यात्। पुनः पादे गीयमाने प्रगाथशब्दोऽप्युपपन्नो द्रष्टव्यः ॥ २५ ॥ २६ ॥ २७ ॥

## लिङ्गदर्शनाच्च व्यतिरेकाच्च ॥ २८ ॥

' इत्थं चतुर्विंशतिर्जगत्यः ' इति लिङ्गदर्शनस्य उक्तरीत्या प्रगाथे सत्त्वेनोपपत्तिर्व्यतिरेकः सिध्यतीति प्रग्रथनेन तयोः साम्नोर्गानमिति भावः ॥ २८ ॥ इति तृतीयवर्णकम् ॥ ३ ॥

पादग्रथनेन अक्षसामगानाधिकरणम् ॥ ६ ॥

प्रागाथिकं तु ॥ २५ ॥ स्वे च ॥ २६ ॥ प्रगाथे च ॥२७॥ लिङ्गदर्शनाच्च व्यतिरेकाच्च ॥२८॥

गवामयने ' अभिवर्तो ब्रह्मसाम भवति ' इति विहितं ब्रह्मसाम प्रकृत्य ' चतुःशतमैन्द्रा बार्हताः प्रगाथास्त्रयस्त्रिंशतं च सतो बार्हतास्त्रिका ' इत्यामनंति । तत्रेदं ब्रह्मसाम द्वयोर्द्वयोर्ऋचोर्गातव्यम् । ' तस्मादेकं साम तृचे क्रियते ' इति प्रकृतितश्चोदकेनात्र प्राप्तमपि तृचे गानं ऋक्प्रग्रथनेन तिसृषु ऋक्षु न कर्तव्यम् । पादप्रग्रथनेन तृचं सम्पाद्य द्वयोर्द्वयोरेव गेयम् । यतः ' अन्या अन्या ऋचो भवन्ति तदेव साम ' इति ऋचामन्यत्वमत्र वर्ण्यते । तच्च पादप्रग्रथनेन सम्भवति । ऋक्प्रग्रथने तु येयं ऋक् पूर्वतृचस्यन्त्या सैवोत्तरस्य तृचस्य आद्येत्यन्यत्वमृचो न स्यात् । अतः पादप्रग्रथनमेव विधेयम् । एवं स्ये प्रगाथे गानं भविष्यति । तस्माद् ब्रह्मसाम्नः ' स्वप्रगाथ. ' इत्यनेन तस्य स्वत्वमावेद्यते । अन्या ऋचो भवन्तीति लिङ्गदर्शनस्य अव्यतिरेकादपि पादग्रथनं कृत्वा गानं कार्यमिति भाव.॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ इति चतुर्थवर्णकम् ॥

**गीतिसम्पादकानामक्षरविकारादीनां विकल्पाधिकरणम् ॥ ७ ॥**

## अर्थैकत्वाद्विकल्पः स्यात् ॥ २९ ॥

सामवेदे तलवकारादिशाखाभेदेन सहस्र गीत्युपायाः सन्ति । गीतिर्नाम क्रियाविशेषः । सा अभ्यन्तरप्रयत्नजन्यस्वरविशेषाणामभिव्यञ्जिका। सैव सामशब्दाभिलप्या । सा नियतपरिमाणे ऋचि च गीयते । तत्सम्पादनार्थमृक्षु अक्षरविकारः, विश्लेषः, विकर्षणं, अभ्यासः, विरामः, स्तोभः, इत्यादयः सर्वे उपायाः समाम्नायन्ते । तेषां **विकल्पः स्यात्** । **अर्थैकत्वात्**-कार्यैकत्वादित्यर्थः । न समुच्चय इति भावः ॥ २९ ॥

**साम्ना स्तुवते इत्यस्यैव विधित्वाधिकरणम् ॥ ८ ॥**

## अर्थैकत्वाद्विकल्पः स्यात् ऋक्सामयो-स्तदर्थत्वात् ॥ ३० ॥

' ऋचा स्तुवते । साम्ना स्तुवते । यदृचा स्तुवते तदसुरा अन्ववायन् । यत् साम्ना स्तुवते तदसुरा नान्ववायन् ' इति । अत्र

ऋक्सामयो तदर्थत्वात्– अर्थैकत्वात् - तुल्यतया स्तुत्यर्थत्वश्रवणात् विकल्प स्यात् । ऋचा साम्ना वेति तुल्यविधि स्यात् । इति ॥ ३० ॥

## सि०॥ वचनाद्विनियोगः स्यात् ॥ ३१ ॥

वचनात्— 'य एव विद्वान् साम्ना स्तवीत' इति प्रत्यक्ष-विधिवचनेन एकवाक्यत्वात् विनियोगः–साम्न एव नियमेन विनियोग । असुरा अवदायन् इति निन्दया साम्न स्तुतिसम्मत्रार्थवाद स इति भाव ॥ ३१ ॥ इति प्रथमवर्णकम् ॥

अयं सहस्रेति ऋचा प्रगीतयैवोपस्थानम् ॥ अ० ८ ॥

## अर्थैकत्वाद्विकल्पः स्यादृक्सामयो- ॥ स्तदर्थत्वात् ॥ ३० ॥

'अय सहस्रमानव' इत्येतया आहवनीयमुपतिष्ठते' इति क्वचित् कर्मविशेषे श्रुतम् । इयमृक् संहिताग्रन्थे अप्रगीता समाम्नाता । गानग्रन्थे तु प्रगीता । सत्येवम् अर्थैकत्वात्–उपस्थानरूपकार्यैकत्वात्, ऋक्सामयोश्च तदर्थत्वात्–उपस्थानार्थत्वात्, अप्रगीता प्रगीता वेति व्रीहियववद्विकल्प स्यात् । ततो ह्येकरूपस्थाने तस्यामृचि गान न नियतमिति ॥ ३० ॥

## सि० ॥ वचनाद्विनियोगः स्यात् ॥ ३१ ॥

, सामवेद गानस्यैव प्रकृतत्वेन गानग्रन्थे प्रगीतायाः पाठात् वचनात्-उपस्थानविधिवाक्ये 'एतयेति सर्वनामशब्दस्य सन्निहितबोधकत्वात् प्रगीत-मन्त्रस्यैव सन्निहित ।त तस्यैवोपस्थाने विनियोग । न अप्रकृतस्य अप्रगीतस्येति भाव ॥ ३१ ॥ इति द्वितीयवर्णकम् ॥

अग्निर्मूर्धेत्यादियाज्यानुवाक्यादीनां तानेन प्रयोगाधिकरणम् ॥८॥
( सामप्रसङ्गादिय चिन्ता ॥ )

## अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् ।३०।

निखिलवेदे ' उदात्तानुदात्तस्वरितेति त्रैस्वर्यं दृश्यते । तेभ्योऽतिरिक्तश्चतुर्थ स्वर एकश्रुति प्रवचनानेत्यपरपर्यायोऽपि दृश्यत । सत्येवम्-

कुसाम्नो **तदर्थत्वात्**–यज्ञार्थत्वात्, तयोर्द्वारा स्वरस्यापि यज्ञार्थत्वेन **अर्थैकत्वात्**–एककार्यार्थत्वाद्विकल्पः स्यात् । नैकश्रुतिनियम इति ॥ ३० ॥

## सि० ॥ वचनाद्विनियोगः स्यात् ॥ ३१ ॥

वचनात्– 'यज्ञकर्मण्यजपन्यूङ्खसामसु ' ( पा. सू १।२।३४ ) इति पाणिनीयस्मृत्यनुमित ' तानो यज्ञकर्मणि ' इति वचनात ' अग्निर्मूर्धे-त्यादियाज्यानुवाक्यामन्त्राणां तानेत्वपरपर्यायैकश्रुत्या विनियोग स्यात ॥३१॥

इति **तृतीयवर्णकम्** ॥

**रथन्तरमुत्तरयोर्गायतीत्यादौ उत्तरावर्णवशेन गानाधिकरणम् ॥ ९ ॥**

## सामप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात् ॥ ३२ ॥

' आम्नातादित्येतदध्यायस्याद्यपादस्यैकानपञ्चाशत्सूत्रमारभ्यैतावद्धातिक प्रासङ्गिक च विमर्शं निधायेदानीं प्रकृतत्वेन प्रतिज्ञात. सामेह प्रारभ्यते । ' रथन्तरमुत्तरयोर्गायति । यदेन्या स्दुत्तरयोर्गायती ' त्यादि देशेन ऋगन्तरे प्राप्यमाणसाम्न ऊहोऽस्ति न वा ? अस्ति चेत्तत योनिवर्णानुसारेण गातव्यमुतोत्तरागतवर्णानुसारत इति जिचिकित्सायामाह-**सामेति । सामप्रदेशे**-सामातिदेशे सति. **विकारः** आईभावादिलक्षण । स विकार **तदपेक्षः**— योनिगतवर्णापेक्ष स्यात । **शास्त्रकृतत्वात्**—' यद्वन्या तदुत्तरयोरिति शास्त्रेणोपदिष्टत्वात् । योनिभूतऋग्गतवर्णानुसारेणोत्तरास्थवर्णेषु आईभावादिक कृत्वा गान कार्यमित्यर्थः । तथा हि—' कयानश्चित्र आभुवदूती सदा वृध' सखा ॥ कया शचिष्ठया वृता ' इतीयं योनिभूता ऋक् । तस्यामुचि कयेत्यक्षरद्वयमाद्यो भागः । नश्चित्र आभुवदित्यक्षरषट्कं द्वितीयो भागः । तस्मिन् द्वितीयाक्षरे चकारस्योपरितनमिकारं विलोप्य तस्य स्थाने आईभावमाम्नाय गीतिर्निष्पादिता । ' कस्त्वासत्यो मदाना मंहिष्ठो म त्सदन्धसः ॥ दृळ्हाचि दारुजेवरित्यनन्तरभाविन्युत्तरा ऋक् । तस्या योनिन्यायेन चतुर्था-

क्षरे तकारस्योपरितनं यकारमोकारं लोपयित्वा तयोः स्थाने आईभावः कार्यः। एवं द्वितीयोत्तरायामपि कर्तव्यम। एवं योनिवद्गानं स्यात्। तथा च प्रकृतिवदेव गानं नोहप्रसक्तिरिति पूर्वपक्षः ॥ ३२ ॥

## सि०॥ वर्णे तु बादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात् ॥३३॥

बादरिराचार्यस्तु **वर्णे**— उत्तरायामृचि यत्र एकार आयाति तत्रैकाररूपवर्ण एव आईभाव मनुते। तथाह्ने **द्रव्यव्यतिरेकात्**— द्रव्यस्य— वर्णस्य-एकारस्य व्यतिरेकात्— आई इत्यस्य सन्धिरूपत्वात् **यथाद्रव्यं**— सन्धिरूपपूर्वर्णस्य विवरणं कृतं भवति। न ह्यत्र योनिभूयामृचि आई इति वर्णान्तरस्यागमः। अपि तु विद्यमान एव चकारस्थोपरितन इकार साम्प्रसिध्दप्रक्रियया वृध्द सन्नेकारो भवति। तस्य सन्ध्यक्षरत्वात् अकारः पूर्वभाग॰। इकार उत्तरभाग.। तौ विश्लेषेण गीयमानौ आईभाव प्रतिपद्येते। 'वृध्दं तालव्यं आई भवति' इति मायगानामुक्तिरेवात्र मानं ज्ञयम्। सत्सेवमुत्तरयाऋचोश्चतुर्थाक्षरे नास्ति तालव्य इकारः। अतस्तत्र आभावो न कर्तव्य। यत्र तु वृध्द तालव्यमस्ति तत्र पूर्ववत् आईभावो भवत्येव। सोऽयमाईभावः उक्तरीत्या वर्णाभिव्यञ्जकत्वात् उत्तरागतवर्णानुसारतः कर्तव्यः। न तु पूर्वर्क्षिच। यस्मिन् देशे आईभावः उत्तरत्रापि तस्मिन्नेव देशे इति नियमोऽस्ति। गीत्यर्भत्वाभावेन योनिक्रमे तेन विनापि गीतिर्न विनश्यति। तस्मात्सामोहः सिद्ध इति भावः ॥ ३३ ॥

उत्तरयोस्तोभातिदेशाधिकरणम् ॥१०॥

## स्तोभस्यैके द्रव्यान्तरे निवृत्तिं ऋग्वत् ॥३४॥

*वामदेव्यसाम्नः योनिभूतायामृचि द्वयोरर्धयोर्मध्ये 'ओ ओ हो हायी'* इति स्तोभः समाम्नातः। तस्य स्तोभस्य **द्रव्यान्तरे**—उत्तरयोर्ऋचोः, **निवृत्तिं**— अतिदेशस्याभावमेके आचार्या आहुः। कस्मात्? 'यथोन्या

तदुत्तरयोर्गायतीति गीतेर्वातिदेशश्रवणात् । ऋग्वत् — यथा प्रथमाया योन्यर्चो वर्णाः नातिदिश्यन्त तथा स्तोभा अपि नातिदिश्यन्त इति ॥३४॥

## सि० ॥ सर्वातिदेशस्तु सामान्याल्लोकवद्विकारः स्यात् ॥ ३५ ॥

**सर्वातिदेशस्तु**—स्तोभसहितस्यैव साम्नः अतिदेशः स्यात् । कुतः ? **सामान्यात्** — ऋक्स्तोभस्वरकालाभ्यासविशिष्टाया गीतेः सामशब्दार्थत्वात् । न च ऋक्शब्दार्थैरसम्बन्धान्न स्तोभानामतिदेश इति वाच्यम् । **लोकवद्विकारः स्यात्** — यथा लोके गायकैः गानशोभार्थमनर्थका वर्णा अपि मध्ये प्रयुज्यन्ते । तथा उत्तर–ऋचोरपि स्तोभवर्णप्रक्षेपात्मको विकारः स्यात् ॥ ३५ ॥

## अन्वयं चापि दर्शयति ॥ ३६ ॥

**अन्वयं चापि**— स्तोभा गेम्हाश्चानुयन्तीति वाक्यशेषः स्ताभाक्षराणामुत्तरऋचोरनुवृत्तिमपि दर्शयति । गेम्हा — स्वरा इत्यर्थः ॥३६॥

## निवृत्तिर्वा अर्थलोपात् ॥ ३७ ॥

**निवृत्तिर्वा**— 'अग्निष्टरती' इत्येवंजातीयकाना स्तोभानां निवृत्तिरेव । कुतः ? **अर्थलोपात्**— 'शीतकर्मा हीन्द्रो वाक्यशेष उपलभ्यते । अतः अर्थस्य शीतकर्मणः लोपात् एवंजातीयकाना स्तोभानामुत्तरऋग्भ्यो निवृत्तिरिति ॥ ३७ ॥

## अन्वयो वा अर्थवादः स्यात् ॥ ३८ ॥

एवंजातीयकानां स्तोभानामपि **अन्वयो वा**--अनुवृत्तिरेव । न निवृत्तिः । उक्तार्थवादो न स्वार्थे प्रमाणम् । यतोऽर्थलोपः स्यात् । नहीन्द्रस्य रूपं प्रत्यक्षमुपलभ्यते । अतः स्तोभमात्रस्यानुवृत्तिरिति भावः ॥ ३८ ॥

**स्तोभलक्षणाधिकरणम् ॥ ११ ॥**

## अधिकं च विवर्णं च जैमिनिः स्तोभशब्दत्वात् ॥ ३९ ॥

अधिकं—ऋगक्षरेभ्य अधिकं, विवर्णं च—ऋक्पाठकाले अविद्यमानं च वस्तु स्तोभशब्दवाच्यमिति जैमिनिराचार्यो मनुते । **स्तोभशब्दत्वात्**—सभायां प्रल्पता चनण बहुस्तोभं कथितमिति निरुक्तशब्दे एव स्तोभशब्दव्यवहारस्य दृष्टत्वादित्यर्थः । ऋगक्षरेभ्योऽधिकत्वे सति ऋग्विलक्षणवर्णत्वं स्तोभत्वमिति तल्लक्षणं पर्यवस्यति । अथ ऋगक्षरविलक्षणत्वमर्थानभिधायकत्वेन चेत्, अर्थाभिधायकेषु 'अग्निष्टपतीत्या'दिस्तोभेष्वव्याप्तिः स्यादतः स्तोभपदवाच्यत्वप्रकारकाभियुक्तप्रसिद्धिविशेष्यत्वमत्र स्तोभत्वं वाच्यम् । वाच्यतावच्छेदकं स्तोभत्वं त्वखण्डोपाधिरिति न वाच्यतावच्छेदकाप्रसिद्धिरिति भावः ॥ ३९ ॥

प्राकृतव्रीह्यादिस्थानापन्नेषु नीवारादिषु व्रीह्यादिधर्माणामूहेन अनुष्ठानाधिकरणम् ॥ १२ ॥

## धर्मस्यार्थकृतत्वात् द्रव्यगुणविकारव्यतिक्रम प्रतिषेधे चोदनानुबन्धः समवायात् ॥ ४० ॥

वाजपेये 'बार्हस्पत्यं नैवारं चरुं सप्तदशशरावं निर्वपती'ति श्रूयते । एवं 'सांस्थिते पृष्ठ्ये षडहे मध्वाशयेत् । घृतं वा' । तथा राजसूये 'नैर्ऋतं चरुं नखावपूनानां परिवृत्त्यै गृहे' । एवं चातुर्मास्येषु 'परिधौ पशुं नियुञ्जीत' । तथा ज्योतिष्टोमे 'न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयम्' इत्यादि श्रुतम् । तत्र **द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे**—द्रव्ये नीवारादौ, गुणे मध्वाशनादौ, विकारे नखादौ, व्यतिक्रमे परिध्यादौ, प्रतिषेधे प्रतिषिध्य विहिते इरापदादौ चोदनानुबन्धः विधीयमानप्रोक्षणादिधर्मस्य, व्रतनियमादिषडहधर्मस्य, उलूखलमुसलधर्मप्रोक्षणस्य, यूपधर्मपशुनियोजनस्य, आईभावादिगिरापदधर्मस्य च सम्बन्धः स्यात् । **समवायात्**—व्रीह्यादिस्थान-

सम्बन्धात् । धर्मस्यार्थकृतत्वात्—प्रोक्षणादेः व्रीह्यादौ अपूर्वसाधनत्वप्रयुक्तत्वात् । नीवारादौ सर्वत्रापूर्वप्रयोजकत्वसत्त्वात् उक्तस्थलेषु स्थानिनो धर्मा अनुष्ठेया इति भावः ॥ ४० ॥

परिधौ यूपधर्मानुष्ठानाधिकरणम् ॥ १३ ॥

## तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात् स्यात् ॥ ४१ ॥

पूर्वाधिकरणे परिधौ यूपधर्मानुष्ठानं कार्यमिति यन्निर्णीतं तदाक्षिप्यते। **तदुत्पत्तेः**—परिधेराहवनीयपरिधानार्थमुत्पत्तेः, **तत्कृतत्वात्**—यूपधर्माणां केवलपशुनियोजनार्थं यदुत्पन्नं तत्प्रयोज्यत्वात्, **निवृत्ति**— परिधौ यूपधर्माणां निवृत्तिः स्यात् । तस्य पशुबन्धनयूपप्रयोज्यत्वाभावादिति भावः ॥ ४१ ॥

## सि० ॥ आवेश्येरन् वा अर्थवत्त्वात् संस्कारस्य तदर्थत्वात् ॥ ४२ ॥

यूपधर्माणां **तदर्थत्वात्**—पशुबन्धनरूपकार्ये यान्नियुक्त तच्छेषत्वात्, **अर्थवत्त्वात्**— पशुनियोजनरूपकार्यत्वात् यूपधर्माः परिधौ **आवेश्येरन्**—अनुष्ठीयेरन्नेवेत्यर्थः ॥ ४२ ॥

## आख्या चैवं तदावेशात् विकृतौ स्यादपूर्वत्वात् ॥ ४३ ॥

**अपूर्वत्वात्**— यूपशब्दस्य आहवनीयवत्संस्कारनिमित्तत्वात् विहितपरिव्याणाजनादिसंस्काराणामेव यूपपदशक्यतावच्छेदकत्वात् **विकृतौ**—परिधौ **तदावेशात्**—संस्काररूपशक्यतावच्छेदकसत्त्वात्, **एवं**—प्रकृतिवत् आख्यायूपशब्दः परिधौ प्रवर्तेत । तथा च यूपधर्माञ्जनवेलायां प्रकृताविव 'यूपायाज्यमानायानुब्रूहीति प्रैषस्तत्र न परिधय इत्यूह इति भावः ॥४३॥

अभ्युदयेष्ट्यां शृतादौ प्रणीताधर्मानुष्ठानाधिकरणम् ॥ १४ ॥

## परार्थेन त्वर्थसामान्यं संस्कारस्य तदर्थत्वात् ॥४४॥

'वि वा एनं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति । स त्रेधा तण्डुलान् विभजेत् । ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत् । ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम् । ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम् ' इत्यभ्युदयेष्ट्या श्रूयते । अत्र **परार्थे**—प्रधानयागार्थे दधनि शृते च प्रणीता धर्मा उत्पवनादयः न कर्तव्याः । कुतः ? **न त्वर्थ-सामान्य**— एककार्यकारित्वं न । प्रणीताकार्यकारित्वाभावात्तयोरित्यर्थः । उत्पवनादेः **संस्कारस्य तदर्थत्वात्**— हविःश्रपणार्थत्वात् । दधिशृतयोश्च प्रधानयागार्थत्वेन विभिन्नकार्यकारित्वान्न तयोः प्रणीता धर्माः कार्या इति ॥ ४४ ॥

## सि० ॥ क्रियेरन् वा अर्थनिर्वृत्तेः ॥ ४५ ॥

तयोः दधिशृतयोः प्रणीता धर्मा उत्पवनादय क्रियेरन्नेव । कुतः ? तयोः प्रधानार्थत्वेऽपि **अर्थस्य**—हविःश्रपणस्य, **निर्वृत्तेः**—चाभ्यामुत्पत्तेः । एकेन कार्यद्वयसाधने बाधकाभावादिति भावः ॥ ४५ ॥

### बृहद्रथन्तरयोर्धर्मव्यवस्थाधिकरणम् ॥ १५ ॥

## एकार्थत्वादविभागः स्यात् ॥ ४६ ॥

ज्योतिष्टोमे ' बृहत्पृष्ठं भवति, रथन्तरं पृष्ठं भवति' इत्यनयोरेकार्थत्वाद्विकल्पेन विधानं विद्यते । ' रथन्तरे स्तूयमाने सम्मीलयेत् । बृहति स्तूयमाने समुद्रं ध्यायेत् ' इत्यादयस्तयोर्धर्माश्च श्रुताः । ते समुच्चयेन अनुष्ठेयाः, उत यत्र श्रुतास्तत्रैव नियम्यंत इति विचिकित्सायां बृहद्रथन्तरयोरे**कार्थत्वात्** पृष्ठस्तोत्ररूपैककार्यकारित्वात्तद्धर्मयोर**विभागः स्यात्**--विभागेन अनुष्ठानं न स्यात् । अपि तु समुच्चय एव भवेदिति ॥ ४६ ॥

## सि० ॥ निर्देशाद्वा व्यवतिष्ठेरन् ॥ ४७ ॥

**निर्देशात्**--विधिवाक्ययोः बृहद्रथन्तरमिति पृथङ्निर्देशात्, **व्यवतिष्ठेरन्**—यस्य धर्मास्तस्यैवेति नियम्येरन् । किञ्च, उच्चैर्गेयम्, बलवद्गेयमिति रथन्तरधर्मः । नोच्चैर्गेयम्, न बलवद्गेयमिति इति बृहद्धर्मः । तद्धर्मसाहित्यं विरुद्धम् । अतो न समुच्चयः । व्यवस्थैव धर्माणामिति भावः ॥ ४७ ॥

कण्वरथन्तरे अविरुद्धानां बृहद्रथन्तरधर्माणां समुच्चयाधिकरणम् ॥१६॥

## अप्राकृते तद्विकाराद् विरोधाद् व्यवतिष्ठेरन् ॥४८॥

'वैश्यो वैश्यस्तोमेन यजेतेति विहितवैश्यस्तोमे 'कण्वरथन्तरं पृष्ठं भवती'ति पृष्ठस्तोत्रत्वेन कण्वरथन्तरं विहितम् । तत्र **तद्विकारात्**—तस्य कण्वरथन्तरस्य विकारात्—बृहद्रथन्तरस्थानापन्नत्वात्, तस्मिन्नप्राकृते कण्वरथन्तरे उभयधर्माः स्युः । ये तु विरुध्दा धर्मास्ते विरोधाद् व्यवतिष्ठेरन् । अविरुध्देषु समुच्चय इति भावः ॥ ४८ ॥

द्विसामके बृहद्रथन्तरधर्मयोर्व्यवस्थाधिकरणम् ॥१७॥

## उभयसाम्नि चैवमेकार्थापत्तेः ॥ ४९ ॥

'ससव उभे कुर्यात्, गोसव उभे कुर्यात्, अपचितावप्येकाहे उभे बृहद्रथन्तरे कुर्यात्' इत्युभयसामानः क्रतव आम्नायन्ते । तेषु बृहद्रथन्तरधर्माः प्रकृतितश्चोदकेन प्राप्यन्ते । ते धर्माः **उभयसाम्नि**— संसवादिक्रतुषु, **एवं**—कण्वरथन्तरवत् प्रत्येकं समुच्चयेन कार्याः । न व्यवस्थयाऽनुष्ठेयाः । कुतः ? **एकार्थापत्तेः**— पृष्ठस्तोत्ररूपैककार्ये आपत्तेः प्राप्तत्वादिति ॥४९॥

## सि०॥ स्वार्थत्वाद्वा व्यवस्था स्यात्प्रकृतिवत् ॥५०॥

उक्तधर्माणां **स्वार्थत्वात्**--बृहद्रथन्तरादिरूपसामार्थत्वात्, **व्यवस्था**–रथन्तरे तद्धर्माः, बृहति बृहद्धर्मा इति व्यवस्था **स्यात्** । **प्रकृतिवत्**--यथा प्रकृतौ ज्योतिष्टोमे सामप्रयुक्ता व्यवस्था । अत्रापि तथैव व्यवस्था ज्ञेया । अन्यथा धर्माणां पृष्ठस्तोत्रार्थत्वे प्रकृतावपि धर्मसाङ्कर्यापत्तिरिति भावः ॥ ५० ॥

सौर्यादिषु पार्वणहोमाद्यननुष्ठानाधिकरणम् ॥ १८ ॥

## सि० ॥ पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात् तदभीज्या हि ॥ ५१ ॥

दर्शपूर्णमासयोः ' स्रुवेण पार्वणौ जुहोति ' इति पार्वणहोमौ विहितौ । तयोः सौर्यादिविकृतिषु अप्रवृत्तिः—अनतिदेशः—नानुष्ठानमित्यर्थः । कुतः ? समुदायार्थसंयोगात्—दर्शयागत्रिकपौर्णमासयागत्रिकसमुदायात्मको योऽर्थस्तेन साकं सम्बन्धत् । तदभीज्या हि—यतः तं समुदायमुद्दिश्य इज्या—याग' विहित । तत्र पार्वणाविति तद्धितो देवतावाचकः पर्वशब्दः प्रत्येक त्रिकद्वयवाचकः । पश्वङ्गपुरोडाशवत त्रिकसमुदायसंस्कारात्मको होमः समुदायोपकारकः । सौर्ययागे तु न त्रिकम् । न वा सौर्ययागः समुदायविकारः । किन्तु वैदलाग्नियागविकारः स इति तत्र समुदायोपकारकधर्मप्रसक्तिरेव नास्तीति भावः ॥ ५१ ॥

## कालस्येति चेत् ॥ ५२ ॥

' पर्वसु चोभयोरुपवास इति व्यवहारात् कालस्यापि वाचकः पर्वशब्दः । तथा च कालदेवताकः पार्वणहोमः प्रयाजादिवदारादुपकारकस्तद्वदेव तस्य विकृतावतिदेशो भविष्यतीति चेत्— ॥ ५२ ॥

## नाप्रकरणत्वात् ॥ ५३ ॥

नेदं सम्यक् । कस्मात ? कालस्य अप्रकरणत्वात् । यथा सैन्धवादिशब्दस्य नानार्थत्वेऽपि भोजनादिप्रकरण लवणादितात्पर्यग्राहकम् । तथा यागत्रिके तात्पर्यग्राहक दर्शपूर्णमासप्रकरणम् । कालस्य तु नैव प्रकरणमिति भावः ॥ ५३ ॥

## मन्त्रवर्णाच्च ॥ ५४ ॥

' ऋषभं वाजिनं वयं पूर्णमासं यजामहे, अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना ' इति मन्त्रवर्णादपि समुदायाभीज्येति सिध्यति । ततो न तयोः प्रवृत्तिर्विकृताविति भावः ॥ ५४ ॥

## तदभावेऽग्निवदिति चेत् ॥ ५५ ॥

**तदभावे**--सौर्ययागे अग्न्यादित्रिकाभावेन असन्निहितोऽपि समुदायः अग्निवदुपकरोतु । यथा 'आमम्न आवह' इति सन्निहितः असन्निहितो वा अग्निर्यागार्थमावाहने, तथा समुदायोऽप्युपकारकः स्यादिति **चेत्**-- ॥ ५५ ॥

## नाधिकारिकत्वात् ॥ ५६ ॥

नायं पक्षो युक्तः । यतः पार्वणहोमस्य प्रकृतत्रिकसंस्काररूपत्वमेव त्रिकमधिकृत्य पठितत्वात् । इत्थं च यस्याधिकारस्तस्यैव गुणं विदधाति नेतरस्येति भावः ॥ ५६ ॥

**दर्शपूर्णमासयोर्होमद्वयस्य व्यवस्थाधिकरणम् ॥ १९ ॥**

## उभयोरविशेषात् ॥ ५७ ॥

इद पार्वणहोमद्वयमु**भयोः**--दर्शपूर्णमासयोः, समुच्चितमेव कर्तव्यम् । **अविशेषात्**--नियामकाभावादिति ॥ ५७ ॥

## सि० ॥ यदभीज्या वा तद्विषयौ ॥ ५८ ॥

**यदभीज्या**-- यन्नामकयागो यत्र **तद्विषयौ** तदुपकारकावेव । तथा च--पौर्णमास्या पूर्णमासत्रिकस्मरणरूपसंस्कारार्थत्वात 'पूर्णमासाय स्वाहा' इति, अमावास्याया 'अमावास्यायै स्वाहा' इति व्यवस्थेति भावः ॥ ५८ ॥

**समिदादीनां यागनामताधिकरणम् ॥ २० ॥**

## प्रयाजेऽपीति चेत् ॥ ५९ ॥

दर्शपूर्णमासयोः 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति' इति **प्रयाजेष्वपि**--समिदादिदेवता उद्दिश्य विहितयागेष्वपि संस्काररूपत्वम् । पार्वणहोमवदिति **चेत्**-- ॥५९॥

## सि० ॥ नाचोदितत्वात् ॥ ६० ॥

न । अचोदितत्वात्— यथा प्रत्येकवाक्यैर्विहितानाग्न्यादियागत्रय-समुदायस्य स्मरणं दृष्टं प्रयोजनम् । तथा समिदादिदेवतानां पूर्वमविहितत्वेन न तदनुवादेन संस्कारार्थं यागविधानं सम्भवति । तस्मात्—देवताविध्य-सम्भवात्समिदादिनामका यागा एव दृष्टफलाभावादारादुपकारकाः समिदादि-मिर्वाक्यैर्विधीयन्त इति भावः ॥ ६० ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां नवमाध्यायस्य द्वितीयः पादः ॥ २ ॥ श्रीः ॥

---

## ॥ अथ नवमाध्यायस्य तृतीयः पादः ॥

सौर्यादिविकृतावतिदिष्टमन्त्रे वैकृतद्रव्यादिवाचकपदोहाधिकरणम् ॥१॥

## सि० ॥ प्रकृतौ यथोत्पत्तिवचनमर्थानां तथो-त्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात् ॥ १ ॥

दर्शपूर्णमासयोः 'अग्नये जुष्टं निर्वपामी'ति निर्वापमन्त्रः । तथा 'स्योनं ते सदनं कृणोमि, घृतस्य धारया सुशेवं कल्पयामि, तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इति व्रीहिलिङ्गो मन्त्रश्च श्रूयते । तदेतन्मन्त्रद्वयं 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' 'ऐन्द्राग्न-मेकादशकपालं निर्वपेत्प्रजाकामः' 'वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकामः' इत्यादिविकृतिषु चोदकेन यथार्थं प्राप्तम् । तत्र **प्रकृतौ** -दर्शपूर्णमासयोः, **यथोत्पत्तिवचनं**-यत्पदघटितत्वेन मन्त्राणामुत्पत्तिवचनं तत्पदघटितैरेव मन्त्रैः अर्थानामग्न्यादीनामभिधानं**मुत्तरस्यां**--सौर्यादिविकृतीष्ट्यां कार्यम् । तस्याः **तत्प्रकृतित्वात्**-दर्शपूर्णमासप्रकृतिकत्वात् 'प्रकृतिवद्विकृतिः कर्तव्ये'ति

चोदकशास्त्रबलादिति चेन्न । कुतः ? अर्थे--सूर्ये-प्रकाशनरूपे कार्ये प्रकृतिपठिताग्निपदघटितमन्त्रस्य अकार्यत्वात्--सूर्यादिप्रकाशनासमर्थत्वात्, तत्र सूर्यादिपदस्य ऊहः अवश्य कार्यः इति चकारेण सः दर्शित इति भावः ॥ १ ॥

## लिङ्गदर्शनाच्च ॥ २ ॥

' न माता वर्द्धते न पिता न भ्राता न स्वसा ' इति लिङ्गदर्शनादपि एतदतिरिक्तानामूहोऽस्तीत्यर्थात्सिध्यति । मात्रादिर्न वर्धते नोहं प्राप्नोतीति तदर्थः । तस्माद्विकृतौ द्वारान्तरप्रयुक्तान्यथाभावात्मक उहोऽस्तीति भावः ॥ २ ॥

**मौद्गे चरौ प्राकृतबर्हिस्तरणमन्त्रे हरितपदस्थाने रक्तपदोहाधिकरणम् ॥ २ ॥**

## सि० ॥ जातिनैमित्तिकं यथास्थानम् ॥ ३ ॥

' मौद्गं चरुं निर्वपेच्छ्रियै श्रीकामः ' इति श्रीकाममुद्दिश्य विहितेष्टया ' पौण्डरीकाणि बर्हींषि भवन्तीति श्रुतम् । प्रकृतौ ' स्तृणीत बर्हिः परिधत्त वेदिं जामि मा हिंसीरमुयाशयाना दर्भैस्तृणीत हरितैः सुपर्णैर्निष्का इमे यजमानस्य ब्रध्नः ' इति बर्हिस्तरणमन्त्र. श्रुतश्चोदकेनास्यामिष्टया प्राप्तः । तत्र दर्भस्थाने ' पौण्डरीके ' रित्यूहः उक्तश्रुते. क्लृप्त एव । तथा हरितैरित्यत्रापि ' रक्तै ' रित्यूहः कर्तव्य. । न सुब्रह्मण्या निगदे इन्द्रविशेषणीभूतहरिवेत्यादेः ' अग्नेयी सुब्रह्मण्या ' इत्यनूहपाठ इव अत्रापि अनूहः पाठ इति वाच्यम् । कुतः ? जातिनैमित्तिकं-- जातिवाचकधर्मशब्दे नैमित्तिकं विशेषणीभूतं हरितैरिति यत्पदं तत् यथास्थानं--यथायोग्यमूह्यमेव । तत्स्थाने रक्तैरिति प्रयोक्तव्यम् । इन्द्र हरिव इति गुणसत्त्वे प्रमाणाभावात्तत्पदं केवलमदृष्टार्थम् । अतः अनूहेन तथैवोक्तम् । अत्र तु दर्भेषु हरिद्वर्णः प्रत्यक्षप्रमाणगम्यः । तत्प्रकाशनं दृष्टं फलम् । अतो दृष्टान्तवैषम्यम् । तस्मादत्र रक्तैरित्यूह एवेति भावः ॥ ३ ॥

अपर्यवसिते पूर्वाधिकरणे विचारान्तराधिकरणमिदम् ॥

## लिङ्गदर्शनाच्च ॥ ४ ॥

'विश्वेषां देवानां उस्राणां छागानां वपानां मेदसोऽनुब्रूहि' इति क्वचिद्वैकृतपशौ ऊहेनैव मंत्रपाठो दृश्यते । ततो **लिङ्गदर्शनादपि** विकृतावूहः सिध्यति ॥ ४ ॥

## अविकारमेके अनार्षत्वात् ॥ ५ ॥

आद्यसूत्रे अनूह इत्यर्थमूत्रेण कृत पूर्वपक्ष द्रढयति--**अविकारमिति** । **अविकार—** अनूह प्रकृतिवदेव पठितव्यमित्येके आहु । **अनार्षत्वात्—** मन्त्रस्य अपौरुषेयत्वात् । ऊहे कृते तदपौरुषेयत्वं भज्येतेति ॥ ५ ॥

## लिङ्गदर्शनाच्च ॥ ६ ॥

'अग्नय छागस्य वपाया मेदसोऽनुब्रूहि' इति क्वचिद्वैकृते आग्नेये पशावाम्नायते । तत्र ऊहश्चेदूहेनैव एतन्मन्त्रस्वरूप सिध्यतीति अग्निपद-घटितमन्त्रपाठो व्यर्थ इति तादृशमन्त्रपाठरूपलिङ्गदर्शनादपि अविकारः अनूह सिध्यतीति भावः ॥ ६ ॥

## सि० ॥ विकारो वा तदुक्तो हेतुः ॥ ७ ॥

वा इति पक्षव्यावृत्त्यर्थः । **विकारः—** ऊहः स्यात् । **तदुक्तो हेतुः** तस्मिन्नर्थे 'अर्थैकत्वात्' इति प्रागुक्त एव हेतुर्बोध्यः । यतः अर्थपराणि मन्त्राक्षराणीति मन्त्रार्थानुसारी चोदक इति प्रागुक्तेन हेतुना ऊहः सिध्यतीति निष्कृष्टोऽर्थ ॥ ७ ॥

## लिङ्गं मन्त्रचिकीर्षार्थम् ॥ ८ ॥

**लिङ्गम्—** 'अग्नये छागस्य वपाया मेदसोऽनुब्रूहीति प्रागु-पन्यस्त **तन्मन्त्रचिकीर्षार्थं—** अत्र मन्त्र समाम्नातमितीच्छया तादृशमन्त्रपाठ इति भाव ॥ ८ ॥

## नियमो वा उभयभागित्वात् ॥ ९ ॥

अत्र 'यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्' 'यदि द्वौ एतौ ते वायू इति' 'यदि बहून् एते ते वायव इति ब्रूयात्' इत्यत्र **नियमो वा**—नियम एव । एतद्विधाभावे हि एकवचनान्तद्विवचनान्तमन्त्रपाठे एकयूपस्पर्शस्य **उभयभागित्वात्**—विकल्पेन मन्त्रद्वयभागित्वात्, एकयूपस्पर्शे एकवचनम् । यूपद्वयस्पर्शे द्विवचनम् । अनेकस्पर्शे बहुवचनमिति नियमः क्रियते अनेन विधिनेति न तस्य वैयर्थ्यमिति भावः ॥ ९ ॥

**अग्नीषोमीयपशौ लौकिकयूपस्पर्शे प्रायश्चित्तविधानाधिकरणम् ॥३॥**

## सि० ॥ लौकिके दोषसंयोगात् अपवृक्ते हि चोद्यते निमित्तेन प्रकृतौ स्यादभागित्वात् ॥१०॥

उक्तोऽयं यूपस्पर्शः वैदिके लौकिके च स्पर्शे मन्त्रपाठस्य निमित्तमुत लौकिके एव स्पर्शनिमित्तमिति सन्देहे आह-**लौकिके** यूपस्पर्शे अयं मन्त्रपाठः । कुतः ? **दोषसंयोगात्**—' यदि यूपं स्पृशेत् प्रतिष्ठायाश्च्यवेत ' इति दोषश्रवणात् । **अपवृक्ते**—निषिद्धे स्पर्शे निमित्ते सत्ययं मन्त्र**श्चोद्यते**—विधीयते । **प्रकृते**—क्रत्वर्थस्पर्शे तु निषेधस्य **अभागित्वात्**—' विधिस्पृष्टे निषेधानवकाशः ' इति न्यायेनाप्राप्तत्वात्तत्र मन्त्रपाठो न स्यादिति भावः ॥ १० ॥

**द्विपशुयागे पाशमन्त्रयोरेकवचनान्तबहुवचनान्तपदयोर्द्विवचनान्तेनोहाधिकरणम् ॥ ४ ॥**

## अन्यायस्त्वविकारेण दृष्टप्रतिघातित्वाद्विशेषाच्च तेनास्य ॥ ११ ॥

ज्योतिष्टोमे अग्नीषोमीयपशौ ' अदितिः पाशं प्रमुमोक्त्वेतम्, ' तथा ' अदितिः पाशान् प्रमुमोक्त्वेतान् ' इत्येकवचनान्तबहुवचनान्तं मन्त्रद्वयं पठितम् । प्रकरणान्मन्त्रद्वयस्यापि तत्रैव निवेश इति वक्ष्यति । सत्येवं ' मैत्रं श्वेतमालभेत वारुणं कृष्णमपाञ्चौषधीनां च सन्धावन्नकामः ' इति द्विपशुकाया पाशद्वयोपेताया विकृतौ तन्मन्त्रद्वयं चोदकेनातिदिष्टम् ।

अथ 'यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्' 'यदि द्वौ एतौ ते वायू इति' 'यदि बहून् एते ते वायव इति ब्रूयात्' इत्यत्र **नियमो वा**–नियम एव । एतद्विधमन्त्रे हि एकवचनान्तद्विवचनान्तमन्त्रपाठे एकयूपस्पर्शस्य **उभयभागित्वात्**—विकल्पेन मन्त्रद्वयभागित्वात्, एकयूपस्पर्शे एकवचनम् । यूपद्वयस्पर्शे द्विवचनम् । अनेकस्पर्शे बहुवचनमिति नियम क्रियते अनेन विधिनेति न तस्य वैयर्थ्यमिति भाव ॥ ९ ॥

**अग्नीषोमीयपशौ लौकिकयूपस्पर्शे प्रायश्चित्तविधानाधिकरणम् ॥३॥**

## सि० ॥ लौकिके दोषप्रसङ्गात् अपवृक्ते हि चोद्यते निमित्तेन प्रकृतौ स्यादभागित्वात् ॥१०॥

उक्तोऽय यूपस्पर्शे वैदिके लौकिके च स्पर्शे मन्त्रपाठस्य निमित्तमुत लौकिके एव स्पर्शनिमित्तमिति सन्देहे आह–**लौकिके** यूपस्पर्शे [illegible] ।

कुत '**दोषसंयोगात्**—' यदि यूपं स्पृशेत [illegible]मारुतं पशुमालभते ' इति श्रवणात्, अग्नीषोमीयप्रकरणे पठितौ पूर्वोक्तौ एकवचनान्तबहुवचनान्तमंत्रौ **प्रकृते**–नैव निविशेते, न बहुवचनमंत्र बहुपशुके यागे उत्कृष्यते । कुतः ? **विप्रतिपत्तौ**—विरोधे सति विकल्प स्यात । **समत्वात्** —उभयोरेकवचनानेकवचनान्तयोर्मंत्रयो प्रकरणपाठस्य तुल्यत्वात् । प्रकृतौ पाशस्य एकत्वाद्बहुत्वाभिधायिमन्त्रस्य विरोधे तु **एकदेशत्वात्**—अप्रधानत्वात् **गुणे**—अप्रधाने बहुवचने, **अन्यायस्य**–विवक्षाभावस्य कल्पना युक्ता । न त्वगानुसारत प्रधानस्य प्रातिपदिकार्थस्य पाशस्योत्कर्ष इति भाव. ॥१७॥

## प्रकरणविशेषाच्च ॥ १८ ॥

**प्रकरणविशेषात्**— पशुप्रकरणस्योभयोस्तुल्यत्वादपि नोत्कर्ष इति भावः ॥ १८ ॥

## उत्कर्षो वा द्वियज्ञवत् ॥ १९ ॥

बहुपशुके यागे उत्कर्ष एव । **द्वियज्ञवत्**— यथा सुवं [illegible] स्वर्पती, इति द्वयोर्यजमानयोः प्रतिपद कुर्याद' इत्यादिमन्त्रे [illegible]

यजमानगतद्वित्वस्य प्रकृतौ ज्योतिष्टोमे अन्वयासंभवात् । एतेन 'राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति बुलायनाख्ये द्वियजमानयागे उत्कर्ष इत्युक्तं तृतीयस्य तृतीयपादे चतुर्दशाधिकरणे । तद्वदत्राप्युत्कर्ष इति भावः ॥१९॥

## अर्थाभावात्तु नैवं स्याद् गुणमात्रमितरत् ॥२०॥

दृष्टान्तवैधर्म्यद्योतकस्तुः । **अर्थाभावात्**—अर्थस्य द्वित्वविशिष्टरूपार्थबोधकविधेः प्रकृते अभावात् केवलं **गुणमात्रं**- वचनबोध्यसंख्यारूपविशेषणमात्रं बोध्यते । **इतरत्**--युवं हि स्थः स्वर्पतीति मन्त्रवाक्यं **नैवं**—विनियोजकविधिहीनं न । अतो वैषम्यम् । यदि 'इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्' इति विधिर्न स्यात्तर्हि तत्राप्युत्कर्षो न भवेदिति ॥ २० ॥

## द्यावोस्तथेति चेत् ॥ २१ ॥

मास्तु द्वितीयदृष्टान्तः । तथापि 'द्यावापृथिव्योरहं देवयज्यया वृत्रहा भूयासम्' इति दर्शपूर्णमासप्रकरणपठित एव **द्यावो**—द्यावापदघटितमनुमन्त्रणं तस्योत्कर्षस्तृतीये उक्तः । तद्दृष्टान्तेन प्रकृते बहुवचनान्तमन्त्रस्य समुत्कर्षः स्यादिति चेत्—॥ २१ ॥

## नोत्पत्तिशब्दत्वात् ॥ २२ ॥

न । प्रकृते 'रशनया यूपं परिव्ययति' इति पाशस्य उत्पत्तिशब्दत्वात् पाशस्य प्रातिपदिकार्थस्य अंगत्वप्रतिपादकः शब्दो विद्यते । द्यावापृथिव्योस्तथा शब्दः दर्शपूर्णमासे नास्ति । अतः प्रातिपदिकार्थोऽपि तत्र बाधित इति दृष्टान्तवैधर्म्यमेवेति भावः ॥ २२ ॥

**दर्शपूर्णमासयोर्द्विपत्नीके प्रयोगे पत्नीं संनह्येतिमंत्रस्यानूहाधिकरणम् ॥ ६ ॥**

## सि० ॥ अपूर्वे त्वविकारोऽप्रदेशात्प्रतीयेत ॥२३॥

दर्शपूर्णमासयोः 'पत्नीं सन्नह्य आज्येनोदेहि' इति मन्त्रो विद्यते । तत्र बहुपत्नीकदर्शपूर्णमासप्रयोगे पत्नीशब्दो बहुवचनान्त ऊहितव्यो न

वेति संशये सति अपूर्वे तु—अप्रकृतिपूर्वके कर्मणि अर्थात्प्रकृतौ अविकारः—अनूहेन प्रयुज्येत । अप्रदेशात्—धर्माणामतिदेशेन प्राप्त्यभावात् । अतिदेशस्थले एव ऊहप्रसक्तिरिति भावः ॥ २३ ॥

द्विपत्नीके विकृतियागेऽपि मन्त्रस्यानूहाधिकरणम् ॥७॥

## सि० ॥ विकृतौ चापि तद्वचनात् ॥ २४ ॥

अयमेव मन्त्रः विकृतौ— बहुपत्नीके सौर्यादियागेऽपि न ऊह्यः । तद्वचनात्— पत्नीमात्रतात्पर्यकवचनात् । प्रकृतौ संख्याया अविवक्षितत्वात् विकृतावपि तथैव संभवान्नोहस्तत्रेति भावः ॥२४॥

सवनीयानामग्नीषोमीयसमानविधानत्वे तेषु प्रास्माऽग्निम्भरतेति मन्त्रस्यानूहाधिकरणम् ॥ ८ ॥

## अध्रिगुः सवनीयेषु तद्वत्समानविधानाश्चेत् ॥२५॥

सोमे अग्नीषोमीयपशौ प्रास्मा अग्निम्भरतेति अध्रिगोः प्रैषः समाम्नातः । सः सवनीयेषु संस्थापशुषु तद्वत्—पत्नीं सन्नह्येतिवत्, अविकारः—अनूह्यः । समानविधानस्य—तुरीये दूषितत्वात्समानविधानाश्चेत् धर्मा इत्यनेन कृत्वाचिन्ता सूचिताः ॥ २५ ॥

नीवाराणां व्रीहिप्रतिनिधित्वे व्रीहिशब्दस्यानूहाधिकरणम् ॥ ९ ॥

## सि० ॥ प्रतिनिधौ चाविकारात् ॥ २६ ॥

यत्र प्रकृतौ व्रीहिलाभे व्रीहिसदृशा नीवारा उपादीयन्ते तद्देशे तत्प्रतिनिधौ 'तस्मिन्सीद मृते प्रतिष्ठित व्रीहीणा मेध सुमनस्यमानः' इति मन्त्रस्य प्रतिनिधौ—नीवारादौ, अविकारात्—अनूहेनैव प्रयोगः कर्तव्यः, न तु 'नीवाराणा मेध' इत्यूहो विधेयः ॥ २६ ॥

## पू० प० ॥ अनाम्नानादशब्दत्वमभाव्यं चेतरस्य स्यात् ॥ २७ ॥

अनाम्नानादशब्दत्वम्—उक्तमन्त्रे यदि व्रीहिशब्दस्य पाठो न स्यात् । इतरस्य—नीवारस्य यदि अर्थान्तरत्वं न स्यात् ।

न चैतद्द्वयमपि । अतो मन्त्रे व्रीहिशब्दस्य पाठान्नीवारस्य द्रव्यान्तराभावाच्चाभिदानसिध्यर्थं नीवारशब्द ऊहितव्य इति ॥ २७ ॥

## सि० ॥ तादर्थ्याद्वा तदाख्यं स्यात्संस्कारैरविशिष्टत्वात् ॥ २८ ॥

**तादर्थ्यात्**--नीवाराणां व्रीह्यवयवत्वेन व्रीह्यर्थत्वात्, **संस्कारैः**—प्रोक्षणावहननादिव्रीहिसंस्कारै**रविशिष्टत्वात्**— अन्यूनानतिरिक्तत्वात्—व्रीहिसम्बन्धियावत्संस्कारयुक्तत्वाच्चेत्यर्थः । **तदाख्यम्**—नीवारद्रव्यमपि व्रीहिशब्दनामकं स्यात् । तस्मान्नोहः ॥ २८ ॥

## उक्तं च तत्त्वमस्य ॥ २९ ॥

**अस्य**—नीवारेषु व्रीहिसादृश्यस्य, **तत्त्व**— याथार्थ्यम् ' सामान्यं तच्चिकीर्षा हि ' इति षष्ठाध्यायस्य तृतीयपादे एकादशाधिकरणे सप्तविंशत्सूत्रेण ' यद्विषयिणी इच्छा तदलाभे तत्सदृशमेवेच्छतीत्यादिनोक्तमिति भाव. ॥ २९ ॥

द्विपशुयागे अध्रिगुप्रैषगतानां सूर्यं चक्षुर्गमयतादिति मंत्राणामनूहाधिकरणम् ॥ १० ॥

## संसर्गिषु चार्थस्यास्थितपरिणामत्वात् ॥ ३० ॥

अध्रिगुप्रैषे ' सूर्यं चक्षुर्गमयतात्, वात प्राणमन्ववसृजतात् ' इति एकवचनान्तत्वेन श्रुतेषु **संसर्गिषु**—शरीरसंसर्गिषु चक्षु प्राणप्रभृतिषु बहुपशुके विकृतियागे बहुवचनान्तत्वेन ऊहो न कर्तव्यः । कुत. ? **अर्थस्य**—तेजोरूपार्थस्य, **अस्थितपरिणामत्वात्**—अस्थितानेकसंख्यत्वात्—सर्वत्र एकसंख्यत्वादित्यर्थः । अत्र चक्षुःपदं न गोलकपरमपि तु तेजोविशेषपरम् । तच्चानेकपशूनामप्येकमेवेत्येकवचनस्य न विरोध इति भावः ॥ ३० ॥

## लिङ्गदर्शनाच्च ॥ ३१ ॥

'न माता वर्धते ( ऊह्यते ) न मज्जा न नाभिर्न प्राणः' इति लिङ्गदर्शनादपि चक्षुषस्तत्सदृशत्वेन न ऊहः बहुवचनान्तत्वेनानेकपशुयाग इति भावः ॥ ३१ ॥

द्विपशुयागे अध्रिगुप्रैषगतैकधेति शब्दस्याभ्यासाधिकरणम् ॥११॥

## सि० ॥ एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यादसर्वविषयत्वात् ॥ ३२ ॥

अध्रिगुप्रैष एव 'एकधास्य त्वचमाच्छ्यतादित्यस्ति प्रैषः । अस्य बहुपशुके अतिदेशे अस्येत्यत्र एषामित्यूहो निर्विवादः । एकधेति शब्दस्य तु अभ्यासेनाभिधानं स्यात् । कुतः ? **एकसंयोगात्**—सकृदुच्चारणात् । अभ्यासमन्तरेण **असर्वविषयत्वात्**—यावत्पशुविषयत्वासम्भवादित्यर्थः ॥३२॥

## पू० प० ॥ अविकारो वा बहूनामेककर्मवत् ॥ ३३ ॥

एकधाशब्दस्य **अविकारः**—न अभ्यासः । कस्मात् ? एकधा इत्यस्य एककाले इत्यर्थं कृत्वा एककाले बहूना त्वचा बहुभिः कर्तृभिः एकीकरणसम्भवात् । **बहूनामेककर्मवत्**—यथा एकधा एक एव पुरुषः एकक्षणे बह्वीः गाः पाययति । तत्र एकधा गाः पाययतीति प्रयोगःस्तथात्रापीति भावः ॥ ३३ ॥

## सकृत्त्वं त्वैकध्यं स्यात् एकत्वात्त्वचोऽनभिप्रेतं तत्प्रकृतित्वात्परेष्वभ्यासेनैव विवृद्धावभिधानं स्यात् ॥ ३४ ॥

ऐकध्यं **सकृत्वं**—एकप्रयत्नसाध्यत्वमेव । न कालः । प्रकृतौ त्वच एकत्वात् एककालस्य सिद्धत्वेन **तदनभिप्रेतं**—व्यर्थं स्यात् । अतः प्रकृतौ सफलत्वाय एकप्रयत्नसाध्यत्वमेव वक्तव्यम् । बहुपशुकयागस्य तत्प्रकृति-

त्वात् एकप्रयत्नसाध्यत्वं न सम्भवतीत्यत परेषु—विकृतिषु वृद्धौ—पशुवृद्धौ अभ्यासेनैवाभिधानं स्यादिति भावः ॥ ३४ ॥

### द्विपश्वादिपशुविकृतौ मेधपतिशब्दस्य देवतानुसारेणोहाधिकरणम् ॥ १२ ॥

**मेधपतित्वं स्वामिदेवतस्य समवायात्सर्वत्र च प्रयुक्तत्वात्तस्य चान्यायनिगदत्वात्सर्वत्रैवाविकारः स्यात् ॥ ३५ ॥**

अग्निषोमीयपशौ प्रैष एव ' आशासाना मेधपतिभ्यां मेधमिति द्विवचनान्तो निगदः क्वचित् । क्वचिच्च ' आशासाना मेधपतये मेधमित्येकवचनम् । विकृतौ द्वित्रादिपशुगणे कथं प्रयोक्तव्य इति विचारे प्रथमं पक्षमाह—मेधपतित्वं—अत्र मेधः पशुगतं सारभूतं वस्तु, तत्पतित्वं प्रकृतौ त्रिषु विद्यते । तत्र स्वामिनि-यजमाने प्रथमं देवते अग्नीषोमयोः प्रदानानन्तरं तदिति त्रिषु समवायात् त्रिषु स्वामित्वस्य विद्यमानत्वात् । सर्वत्र—सर्वदेशेषु तथा प्रयुक्तत्वात्-व्यवहृतत्वात् । इत्थं मेधपतिषु त्रिषु सत्सु त्रयाणामेकवचनघटितत्वेन द्विवचनघटितत्वेन वा बोधयितुमशक्यतया प्रकृतावेवान्याय्यनिगदत्वात्—वाचितार्थकमन्त्रत्वात्, सर्वत्र- प्रकृतौ विकृतौ च, अविकारः—अनूहः स्यात् । पत्नी सनह्येत्यिवदिति ॥ ३५ ॥

**अपि वा द्विसमवायोऽर्थान्यत्वे यथासङ्ख्यं प्रयोगः स्यात् ॥ ३६ ॥**

द्वितीयः पक्षः । अपि वा द्विसमवायः—द्विवचनान्तमन्त्रप्रयोगः अर्थान्यत्वे— अन्यार्थतात्पर्ये देवताबोधतात्पर्ये । एवमेकवचनान्तमन्त्रप्रयोगः यजमानतात्पर्ये तु उभयोरपि मन्त्रयोस्तात्पर्याधीनः प्रकृतावेव समावेशः । अत उभयोरप्यन्याय्यार्थत्वम् । अस्य पशुगणेऽतिदेशे यथासङ्ख्यं—देवतायजमानवृद्धौ बहुवचनान्तौ द्विवचनान्तश्च प्रयोगः— पाठः स्यादिति ॥३६॥

## स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात्पत्न्यां द्वितीयशब्दः स्यात् ॥ ३७ ॥

तृतीयः पक्षः। वाक्यद्वयेऽपि मेधपतिशब्देन **स्वामिनः**—यजमानस्य, ग्रहणम् **ऐकशब्द्यात्**— एकार्थप्रतिपादकशब्दत्वात्। पत्न्या सह द्विवचनं स्यात्। देवतायां वाच्यायां द्विवचनघटितमन्त्रयोरुपपत्तावपि एकवचनान्तस्य मन्त्रस्योत्कर्षः विकृतावेकदेवताके स्यात्। मन्यते तु केवलं यजमानं गृहीत्वा एकं, पत्नीं गृहीत्वा अपरमिति द्वयोः प्रकृतावेव निवेश इति। तथा च स्वामिवृद्धावेव ऊहः। अन्यथा नेति भावः ॥३७॥

## सि० ॥ देवता तु तदाशीष्ट्वात्सम्प्राप्तत्वात्स्वामिन्यनर्थिका स्यात् ॥ ३८ ॥

देवतैव मेधपतिशब्दवाच्या। कुतः? **तदाशीष्ट्वात्**—मेधपतिभ्यां मेधमाशासाना उपनयन ताभ्यामिति देवतोद्देश्यकेष्टाशीर्विषयत्वान्मेधं मेधपतिभ्यामिति वाक्यं सुसङ्गतम्। स्वामिपरत्वे यजमानस्यतस्य मेधे सम्प्राप्तत्वात् आशासाना इत्यनर्थकं स्यात्। तस्माद्देवताबहुत्व एव ऊह इति भावः ॥ ३८ ॥

## उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात् ॥ ३९ ॥

**उत्सर्गात्**--यजमानेन देवतोद्देशेन उत्सर्गस्य कृतत्वात्तस्मिन् **भक्त्या**-अमुख्यवृत्त्या, पतित्वं स्यात्। तस्य विनाशोन्मुखत्वात्। अतो देवताया एव पतित्वं स्वरससिद्धमिति भावः ॥ ३९ ॥

## एकस्तु समवायात्तस्य तल्लक्षणत्वात् ॥४०॥

**एकस्तु**—एकवचनान्तमेधपतिशब्दवाच्यो यो देवतागणस्तत्र **समवायात्**—एकत्वस्य सम्बन्धात्। **तस्य**—गणस्य, **तल्लक्षणत्वात्**—एकत्वसंख्यागुणविशिष्टत्वात्। न एकवचनमन्त्रस्य विकृतावूहः कार्य इति भावः ॥४०॥

## संसर्गित्वाच्च तस्मात्तेन विकल्पः स्यात् ॥४१॥

तस्माद्देवतापरत्वे बाधकाभावात् संसर्गित्वात्—उभयोः प्रकृतिसम्बन्धित्वात् एकार्थत्वाच्च द्वयोर्मन्त्रयोः विकल्पः स्यात् ॥ ४१ ॥

## एकत्वेऽपि गुणानपायात् ॥ ४२ ॥

एकत्वेऽपि—एकत्वे विवक्षितेऽपि—एकवचनस्यार्थवत्त्वेऽपीति यावत्। न मन्त्रस्य प्रकरणादुत्कर्षः। प्रत्येकस्मिन्नेकत्वसत्त्वेन तदनुवादसम्भवात्। गुणानपायात्—गुणस्य एकत्वस्य अपायात्—अविवक्षयापि नोत्कर्ष इति ॥ ४२ ॥

बहुदेवत्यपशावप्येकवचनान्तमेधपतिशब्दस्य विकल्पाधिकरणम् ॥ १३ ॥

## नियमो बहुदेवते विकारः स्यात् ॥ ४३ ॥

'वैश्वदेवीं बहुरूपामालभेत' इति बहुदेवताकायां विकृतावतिदेशेनोभयोः प्राप्तौ सत्यां तत्र नियमः—द्विवचनान्तस्यैव निगदस्यातिदेशः। कुतः ? तस्य प्रकृतौ समवेतार्थत्वात्। अत्र बहुवचनान्ततया विकारः ऊहश्च स्यात्। इतरस्य तु निवृत्तिरिति ॥ ४३ ॥

## सि० ॥ विकल्पो वा प्रकृतिवत् ॥ ४४ ॥

विकल्पो वा—प्रकृतौ यथा विकल्पेन द्वयोः समावेशस्तथात्रापि समावेशः। नैव निवृत्तिः। द्विवचनान्तस्य बहुवचनान्ततया ऊह इत्येवान् केवलमत्र विशेष इति भावः ॥ ४४ ॥

एकादशिन्यामेकवचनान्तमेधशब्दस्योहाधिकरणम् ॥ १४ ॥

## सि०॥अर्थान्तरे विकारः स्याद्देवतापृथक्त्वात् एकाभिसमवायात्स्यात् ॥ ४५ ॥

' आग्नेयः कृष्ण ग्रीवः। सारस्वती मेषी बभ्रुः सौम्यः। पौष्णः श्याम ' इति विहितायामेकादशिन्यां प्रकृतिवद्गणे एकत्वा-

न्वयः । न ऊह इति प्राप्ते सिद्धान्तः । **अर्थान्तरे—** भिन्नदेवताके यागसमुदाये तद्धितवाच्यदेवतात्वस्य **एकाभिसमवायात्—** एकस्मिन्नेव पर्याप्तेः देवतानां **पृथक्त्वात्**—भिन्नत्वात् एकतद्धितवाच्यदेवतापर्याप्त्यधिकरणगणस्याभावेन प्रकृतिवैषम्यात् एकवचनान्तमन्त्रस्यापि बहुवचनान्तत्वेन ऊहः स्यादिति भावः ॥ ४५ ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां नवमाध्यायस्य तृतीयः पादः ॥ ३ ॥ श्रीः ॥

---

## ॥ अथ नवमाध्यायस्य चतुर्थः पादः ॥

षड्विंशतिरस्य वङ्क्रय इत्यादौ समस्योहाधिकरणम् ॥ १ ॥

### षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद्गुणस्य प्रविभक्तत्वादविकारे हि तासामकार्त्स्न्येनाभिसम्बन्धो विकारान्न समासः स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥

ज्योतिष्टोमे अग्नीषोमीयपशुमुद्दिश्य अध्रिगुप्रैषे 'षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयतात्' इत्याम्नातम् । अयं मन्त्रः 'मैत्रं श्वेतमालभेत, वारुणं कृष्णमपाञ्चौषधीनां च सन्धावन्नकामः' इति द्विपशुकादि पशुगणे चोदकेन प्राप्तः । अत्र षड्विंशतिरस्येत्यनयोः पदयोरभ्यासः, उत अविकारः, आहोस्विद षड्विंशतिपदे वचन-स्योहः, किंवा अस्येतिपदस्योहः, अथवा **समासः** इति पञ्चपक्षाः ज्ञेयाः । तत्र प्रथमः **पशुगणे—**

## सि० ॥ तासां च कृत्स्नवचनात् ॥ ८ ॥

साधकान्तरम् ॥

'ता अनुष्ठ्योच्याययनात्' ता गणयित्वा प्रयत्नेन उद्धर्तव्या इति तासां—वङ्क्रीणां कृत्स्नवचनात्—कार्त्स्न्येन उद्धरणवचनात् प्राधान्यम्। यदि वङ्क्रीणां प्राधान्यं न स्यात्तर्हि ता इत्यनेन वङ्क्रिग्रहणं न स्यात्। सर्वनाम्ना प्रधानपरामर्शकत्वादिति भावः ॥ ८ ॥

## अपि त्वसन्निपातित्वात्पत्नीवदाम्नातेनाभिधानं स्यात् ॥ ९ ॥

अपि त्विति पक्षान्तरज्ञापकम्। आम्नातेन—प्राकृतरूपेणैवाभिधानं पशुगणेऽपि स्यात्। असन्निपातित्वात्—मन्त्रस्मारितक्रियाया असन्निकृष्टत्वात्। जीवतिपशावभिगुप्रैषः वङ्क्र्युद्धरणं च पशुसंज्ञापनानन्तरम्। इत्थं च स्मरणाव्यवहितोत्तरक्षणे अनुष्ठानासम्भवात्प्रकृतानेकादृष्टार्थत्वं क्लृप्तम्। पत्नीवत्—यथा पत्नीं सन्नह्येति, मन्त्रस्य बहुपत्नीकप्रयोगे अविवक्षितमेकवचनमदृष्टार्थं प्रयुज्यते। तद्वदिहाप्यदृष्टार्थमन्त्रपाठः प्रकृतौ। अतो विकृतावपि तथैव पाठ इति भावः ॥ ९ ॥

## विकारस्तु प्रदेशत्वाद्यजमानवत् ॥ १० ॥

विकारस्तु— ऊह एव। प्रदेशत्वात्— शमितुः ज्ञानसामान्यार्थत्वात्। यजमानवत्—यथा प्रकृतौ यजमानः हविर्निर्वप्स्यामीत्येकवचनान्तं द्वियजमानके कुलायादौ यजमानौ हविर्निर्वप्स्यामीति यजमानसामान्यस्य ज्ञानार्थत्वं तथात्रापीति ॥ १० ॥

## अपूर्वत्वात्तथा पत्न्याम् ॥ ११ ॥

पत्न्यां— पत्नीशब्दोच्चरैकवचनप्रयोगे, अपूर्वत्वात्— अपूर्वार्थत्वात्, तथा— ऊहाभावः। पत्नीशब्दस्यैकवचनान्तस्य दर्शपूर्णमासप्रकरणे पाठात् यावद्दर्शपूर्णमासाङ्गत्वं क्लृप्तम्। तदनुसारतः पाशाधिकरणन्यायेन

वचनस्याविवक्षितत्वमात्र केवला प्रकृतिः प्रयोक्तव्येति शास्त्रादहष्टार्थफलं तदुच्चारणम् । इह तु शमितुः कृत्स्नवङ्क्र्युद्धरणज्ञानरूपदृष्टफलसम्भवात् तल्लाभस्योहमन्तरेणासम्भवादूह आवश्यकः । यथा लोके राजाज्ञा श्रुत्वा तमर्थं कालान्तरे स्मृत्वा करोति । तथा कालान्तरानुष्ठानेऽपि उक्तवाक्यज्ञानस्योपयोगसम्भव इति पत्नीदृष्टान्तवैषम्यमत्रेति भावः ॥ ११ ॥

## आम्नातस्त्वविकारात्सङ्ख्यासु सर्वगामित्वात् ॥१२॥

आम्नातः--प्रकृतौ प्रातिपदिकशब्दो यथा आम्नातः तथा अविकारात्—अनूहेन विकृतौ पठितव्यः । सङ्ख्यासु—सङ्ख्यावाचकपदेषु एकवचनादिषु विकारः इति मण्डूकप्लुत्या दशमसूत्रादनुवृत्तिः । इत्थं च षड्विंशतिरनयोर्वङ्क्रय इत्येवमूहेनापि सर्ववङ्क्रीणामि त्यकृत्स्नवङ्क्र्यभिधानं सिध्यतीति भावः ॥ १२ ॥

## सङ्ख्या त्वेवं प्रधानं स्याद् वङ्क्रयः पुनः प्रधानम् ॥ १३ ॥

एवं—वचनस्य ऊहः इति मते सङ्ख्या प्रधान स्यात् । न चैतदमिहितम् । वङ्क्रीणा तु प्रधानत्वादितिसूत्रे (९।४।७) वङ्क्र्यतिरिक्ते प्राधान्यनिरास कृत्वा पुनः वङ्क्रय. प्रधानमित्यभिहितम ॥ १३ ॥

## अनाम्नातवचनमवचनेन हि वङ्क्रीणां स्यान्निर्देशः ॥ १४ ॥

' षड्विंशती षड्विंशतयः ' इति अनाम्नातवचनमप्यस्मिन् सङ्ख्याविकारपक्षे प्रतीयते । यदनार्षतया तदनाम्नातवचनं न क्रियते तदा वङ्क्रीणां कात्स्न्येन निर्देशो न स्यात् ॥ १४ ॥

## अभ्यासो वाऽविकारात्स्यात् ॥ १५ ॥

अभ्यासः— केवलमयं पदाभ्यासः स्यात् । अविकारात्—प्राकृतषड्विंशतिशब्दस्य प्रत्यावृत्तिविशिष्टस्याविकारात् प्रकृतौ ' श्रुमाणवर्गानामबाधादिति ॥ १५ ॥

२ **सि०॥ पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात्तस्मात्समासशब्दः स्यात् ॥ १६ ॥**

तु पूर्वोक्तव्यावर्तकः । एवं—अयं पदाभ्यासे पशुः प्रधानं स्यात् । अयमयमित्यभ्यासे यो यः पशुः षड्विंशतिरङ्क्रीक इति वाक्यार्थः । **अभ्यासस्य**—अयपदाभ्यासस्य, **तन्निमित्तत्वात्**—पशुनिमित्तत्वात्—यावत्पशुबोधार्थत्वात्, तत्र पशोः प्राधान्यं वाच्यम् । तस्मादस्यापि पक्षस्या-दृष्टार्थतारूपदूषणेन पूर्ववन्निरस्तत्वात्**समासशब्दः**—द्विपञ्चाशच्छब्द एव स्यादिति निष्कर्षः ॥ १६ ॥

अश्वमेधेऽश्वविषये वङ्क्रीयत्ताप्रकाशनार्थं वैशेषिकमन्त्राकरण-पक्षे त्रयाणां सवनीयपशूनामर्थे षडशीतिरेषा वङ्क्रय इति समास-वचनाधिकरणम् ॥ २ ॥

**अश्वस्य चतुस्त्रिंशत्तस्य वचनाद्वैशेषिकम् ॥ १७ ॥**

अश्वमेधे 'अश्वस्तूपरो गोमृग' इति त्रयः सवनीयाः पशवः सन्ति। प्रकृतावग्नीषोमीये 'षड्विंशतिरस्य वङ्क्रयः' इति वचनं चोदकेनात्र प्राप्तम् । तत्र अश्वस्य चतुस्त्रिंशद्वङ्क्रयः । तूपरगोमृगयोः षड्विंशतिः । तत्र 'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति । अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या विशस्त' इति ऋक् समाम्नाता । तत्र अश्वस्य चतुस्त्रिंशद्वचनं, तूपरगोमृगयोः पूर्ववत्समस्य वचनं, किंवा सर्वेषामेव समासवचनमिति संशये अश्वस्य 'चतुस्त्रिंशद्वङ्क्रयः' इति तस्य वैशेषिकं वचनं कर्तव्यम् । **वचनात्**—'चतुस्त्रिंशद्वाजिनो देवबन्धोः' रिति वचनात् । अन्यथा तद्वचनमनर्थकं स्यात् । तस्मात् वैशेषिकमश्वस्य । इतरयोस्तु समस्य द्विपञ्चाशत् इति वक्तव्यम् ॥ १७ ॥

**सि० ॥ तत्प्रतिषिध्य प्रकृतिः नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् ॥ १८ ॥**

'न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात्' इति वचनेन तत्-वैशेषिकं चतुस्त्रिंशदिति वचनं प्रतिषिध्य प्रकृतिः-चोदकविहितं समस्यकथनं नियुज्यते-विधीयते । सा नियुज्यमाना प्रकृतिः सङ्ख्याविशेषबोधकचतुस्त्रिंशदिति शब्दं वाच्यत्वान्निवारयति । प्रकृतौ पार्श्वद्वयवृत्तीन्यस्थीनि समस्य षड्विंशतिशब्देनोक्तानि । तद्वदत्रापि पशुत्रयास्थ्नां समासेन 'षडशीतिरेषा वङ्क्रयः' इति चोदकशास्त्रप्राप्तं सामासिकं वचनं कर्तव्यमिति भावः ॥ १८ ॥

## ऋग्वा स्यादाम्नातत्वादविकल्पश्च न्याय्यः ॥१९॥

वा पक्षान्तरार्थकः । प्रतिषेधानन्तरं या वैशेषिकी प्राप्तिः सा षडशीतिरिति समासं न प्रयोजयति । किन्तु तत्स्थाने तत्प्रकरणे समाम्नाता प्रागुक्ता समग्रा ऋगेव विधीयते । आम्नातत्वात्—प्रकरणपाठात् अप्रतिषिद्धत्वाच्चानेकदोषयुक्तविकल्पापेक्षया अविकल्प एव न्याय्यः । अतो वैशेषिकं वचनं कर्तव्यमिति भावः ॥ १९ ॥

## तस्यां तु वचनादैरवत्पदविकारः स्यात् ॥२०॥

तस्यामृचि वचनात्—'न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात्' इति निषेधवचनात्, पदविकारः— चतुस्त्रिंशत्पदस्थाने षड्विंशतिपदप्रक्षेपः स्यात् । ऐरवत्— गिरापदस्थाने इरापदवत् । अत्रोक्तश्रुत्या चतुस्त्रिंशदिति पदमात्रस्य निषेधः । न ऋच इति भावः ॥ २० ॥

## सर्वप्रतिषेधो वा संयोगात्पदेन स्यात् ॥ २१ ॥

सर्वप्रतिषेधो वा— न चतुस्त्रिंशदित्युक्तो निषेधः सर्वस्या एव ऋचः प्रतिषेधं ब्रूते । न पदमात्रनिषेधम् । कुत ? पदेन— ऋचः प्रथमपदेन, संयोगात्— निषेधवाक्येन ग्रहणात् । सर्वत्र आदिपदस्य प्रतीकग्रहणेन सर्वग्रहणं लक्षणया विनैव सम्भवति । गिरापदस्य ऋगादित्वाभावात् प्रतीकत्वं नेति वैषम्यमिति भावः ॥ २१ ॥

## सि०॥ पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात्तस्मात्समासशब्दः स्यात् ॥ १६ ॥

तु पूर्वोक्तव्यावर्तकः । एवं—अयं पदाभ्यासे पशुः प्रधानं स्यात् । अयमयमित्यभ्यासे यो यः पशुः षड्विंशतिरङ्कीक इति वाक्यार्थः । अभ्यासस्य—अयपदाभ्यासस्य, तन्निमित्तत्वात्—पशुनिमित्तत्वात्—यावत्पशुबोधार्थत्वात्, तत्र पशोः प्राधान्यं वाच्यम् । तस्मादस्यापि पक्षस्यादृष्टार्थतारूपदूषणेन पूर्वमेव निरस्तत्वात्समासशब्दः—द्विपञ्चाशच्छब्द एव स्यादिति निष्कर्षः ॥ १६ ॥

अश्वमेधेऽश्वविषये बह्वङ्कीयताप्रकाशनार्थं वैशेषिकमन्त्राकरणपक्षे त्रयाणां सवनीयपशूनामर्थे षडशीतिरेषां वङ्क्रय इति समासवचनाधिकरणम् ॥ २ ॥

## अश्वस्य चतुस्त्रिंशत्तस्य वचनाद्वैशेषिकम् ॥ १७ ॥

अश्वमेधे 'अश्वस्तूपरो गोमृगः' इति त्रयः सवनीयाः पशवः सन्ति। प्रकृतावग्नीषोमीये 'षड्विंशतिरस्य वङ्क्रयः' इति वचनं चोदकेनात्र प्राप्तम् । तत्र अश्वस्य चतुस्त्रिंशद्वङ्क्रयः । तूपरगोमृगयोः षड्विंशतिः । तत्र 'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति । अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या विशस्त' इति ऋक् समाम्नाता । तत्र अश्वस्य चतुस्त्रिंशद्वचनं, तूपरगोमृगयोः पूर्ववत्समस्य वचनं, किंवा सर्वेषामेव समासवचनमिति संशये अश्वस्य 'चतुस्त्रिंशद्वङ्क्रयः' इति तस्य वैशेषिकं वचनं वक्तव्यम् । वचनात्—'चतुस्त्रिंशद्वाजिनो देवबन्धो'रिति वचनात् । अन्यथा, तद्वचनमनर्थकं स्यात् । तस्मात् वैशेषिकमश्वस्य । इतरयोस्तु समस्य द्विपञ्चाशत् इति वक्तव्यम् ॥ १७ ॥

## सि० ॥ तत्प्रतिषिध्य प्रकृतिः नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् ॥ १८ ॥

अस्मिन्नेवाध्रिगुप्रैषे 'श्येनमस्य वक्षः कृणुतात् । शला दोषणी । कश्यपेवांसौ । कवषोरू । स्रेकपर्णाऽष्ठीवन्ता ' इत्याम्नायते। तत्र प्रसिद्धसंनिधानात् श्येनादिशब्दानां आकृतिवचनं—आकृत्यर्थत्वं वक्तव्यम्। न कार्त्स्न्योद्धरणम् । यतः प्रसिद्धस्य संनिधौ यदभिधीयते किञ्चिदिदं कर्तव्यमिति । तत्र आकृत्यर्थत्वं गम्यते । यथा— अमी नपिष्टपिण्डाः सिंहाः क्रियन्ताम्, अर्जुनबदराः मेखलाः क्रियन्तामिति सिंहाकृतिवचनं मेखलाकृतिवचनं च गम्यते । तथात्रापि श्येनाकृतिवक्षः कर्तव्यम् । शलाकृती दोषणी । कश्यपाकृती अंसौ । कवषाकृती ऊरू । करवीरपर्णाकृती ष्ठीवन्ताविस्येव ज्ञायत इति ॥ २५ ॥

## सि० ॥ कार्त्स्न्यं वा स्यात्तथाभावात् ॥२६॥

कार्त्स्न्यं वा— उक्तवाक्ये श्येनादिपद लक्षणया कृत्स्नार्थकमेव । नाऽऽकृत्यर्थकम् । कृत्स्नं वक्षः कृणुतादित्यादिस्तदर्थः। कृत्स्नवक्षादिच्छेदने सति तथा— श्येनाद्याकृतेः, भावात्— स्थितत्वात्, तदाद्याकृतिकानां तेषां यागार्थमवत्तत्वरूपं प्रयोजनं सेत्स्यति । अन्यथा अदृष्टार्थत्वं स्यात् । तद्युक्तमिति भावः ॥ २६ ॥

## अध्रिगोश्च तदर्थत्वात् ॥ २७ ॥

अध्रिगोः—शमितुः, तदर्थत्वात्— कृत्स्नावयवोद्धरणज्ञानार्थत्वाच्छ्येनादिशब्दानाम् ।" गात्रं गात्रमस्या नूनं कृणुतात्' इत्यनेन प्राप्तं यदुद्धरणं तस्य लक्षणरूपं श्येनेत्यादि । यदि वक्षाद्युद्धरणं सत् श्येनाद्याकृतिर्दृश्येत । तदा कृत्स्नमवत्तं भवति । अतः श्येनाद्याकृतिर्यथा स्यात्तथा कृणुतादिति तस्य वाक्यस्य ज्ञानार्थत्वमिति भावः ॥ २७ ॥

दर्शपूर्णमासाथोऽवत्ताग्निनाशे प्रायश्चित्तरूपज्योतिष्मतीष्टेरननुष्ठानाधिकरणम् ॥ ६ ॥

## सि० ॥ प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थे हि विधीयते ॥ २८ ॥

अग्नीषोमीयपशावध्रिगु प्रैषगत उरूकशब्देन वपाभिधानाधिकरणम् ॥ ३ ॥

## सि० ॥ वनिष्टुसन्निधानादुरुकेण वपाभिधानम् ॥ २२ ॥

तत्रैव 'वनिष्टुमस्य मा राविष्ट उरूकं मन्यमाना' इति श्रुतम्। तत्र उरूक- वपाया अभिधानम्। न रोमाणि लोमानीत्यादौ रलयोरैक्यादुलूककार्यत्वं तस्य। कुतः ? वनिष्टोः—पक्षयकृतः, सान्निधानात् वपायाः। उरूकशब्दस्य उलूकार्थत्वे तु उलूकं मन्यमाना इत्यनेन उलूकत्वादस्यप्रतिषेधो वाच्यः। तथा सत्यदृष्टार्थः प्रतिषेधः स्यात्। वपार्थत्वे तु वपावनिष्ट्वोः सानिध्याद्वपा- भ्रान्त्या वपोद्धरणवेलायां वनिष्टोरपि छेदनं कुर्यात्कदाचित्। इति भ्रान्ति- निवृत्तिरूपं दृष्टं फलं सम्भवतीति वपार्थत्वमेवोरूकशब्दस्येति भावः ॥२२॥

अध्रिगुप्रैषगतप्रशसाशब्दस्य बाहुप्रशंसापरत्वाधिकरणम् ॥ ४ ॥

## प्रशसाऽस्याभिधानम् ॥ २३ ॥

तत्रैव 'प्रशसा बाहू' इति श्रुतम्। तत्र प्रशसाशब्दः अस्यर्थकः। न प्रशंसापरः। कुतः ? 'दश प्रयाजानिष्ट्वाऽऽह' शासमाहरेति असिं वै शासमाचक्षते, अतस्तामग्नि शासहस्तं शासेन विशसनत्वान्न द्रष्टुमुत्सहे'। इति शासशब्दः असौ खड्गे प्रसिद्ध इत्यसिपरस्तृतीयान्तः प्रशसाशब्द इति गम्यते ॥ २३ ॥

## सि० ॥ बाहुप्रशंसा वा ॥ २४ ॥

प्रशसा—प्रशस्तौ बाहू' इति बाहुविशेषणमिदम्। न तृतीया। बाह्वोः प्रशंसा स्तुतिरनेन प्रशंसेति विशेषणेन क्रियत इत्यर्थः ॥ २४ ॥

अध्रिगुप्रैषगतश्येनशलाकश्यपादिशब्दानां कात्स्न्येनोद्धरण- प्रकाशकत्वाधिकरणम् ॥ ५ ॥

## श्येनशलाकश्यपकवषस्रेकपर्णेष्वाकृतिवचनं प्रसिद्धसंनिधानात् ॥ २५ ॥

अस्मिन्नेवाग्निगुप्रैषे ' श्येनमस्य वक्षः कृणुतात् । शला दोषणी । कश्यपेवांसौ । कवषोरू । स्नेकपर्णाऽष्ठीवन्ता ' इत्याम्नायते । तत्र प्रसिद्धसंनिधानात् श्येनादिशब्दानां आकृतिवचनं—आकृत्यर्थत्वं वक्तव्यम् । न कात्स्न्योद्धरणम् । यतः प्रसिद्धस्य संनिधौ यदभिधीयते किञ्चिदिदं कर्तव्यमिति । तत्र आकृत्यर्थत्वं गम्यते । यथा— अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम्, अर्जुनबदराः मेखलाः क्रियन्तामिति सिंहाकृतिवचनं मेखलाकृतिवचनं च गम्यते । तथात्रापि श्येनाकृतिवक्षः कर्तव्यम् । शलाकृती दोषणी । कश्यपाकृती अंसौ । कवषाकृती ऊरू । स्नेकपर्णाकृती ष्ठीवन्ताविस्येव ज्ञायत इति ॥ २५ ॥

## सि० ॥ कार्त्स्न्यं वा स्यात्तथाभावात् ॥२६॥

कार्त्स्न्यं वा— उक्तशब्देन श्येनादिपद लक्षणया कृत्स्नार्थकमेव । नाऽऽकृत्यर्थकम् । कृत्स्नं वक्षः कृणुतादित्यादिस्तदर्थः। कृत्स्नवक्षादिच्छेदने सति तथा— श्येनाद्याकृतेः, भावात्— स्थितत्वात्, तदाद्याकृतिकानां तेषां यागार्थमवत्तत्वं दृष्टं प्रयोजनं सिध्यति । अन्यथा अदृष्टार्थत्वं स्यात् न तद्युक्तमिति भावः ॥ २६ ॥

## अध्रिगोश्च तदर्थत्वात् ॥ २७ ॥

अध्रिगोः—शमितुः, तदर्थत्वात्— कृत्स्नावयवोद्धरणज्ञानार्थत्वाच्छ्येनादिशब्दानाम् ।" गात्रं गात्रमस्या नूनं कृणुतात ' इत्यनेन प्राप्तं यदुद्धरणं तस्य लक्षणरूप श्येनेत्यादि । यदि वक्षाद्युध्दनं सत् श्येनाद्याकृतिर्दृश्येत । तदा कृत्स्नमवत्तं भवति । अतः श्येनाद्याकृतिर्यथा स्यात्तथा कृणुतादिति तस्य वाक्यस्य ज्ञानार्थत्वमिति भावः ॥ २७ ॥

दर्शपूर्णमासाथोध्दृताग्निनाशे प्रायश्चित्तरूपज्योतिष्मतीष्टेरननुष्ठानाधिकरणम् ॥ ६ ॥

## सि० ॥ प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थे हि विधीयते ॥ २८ ॥

'य एवं विद्वानग्निहोत्रं जुहोती'ति विधाय तत्रायमाम्नायते—'अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्रे उद्वायात्' इति। तत्र प्रासङ्गिके— दर्शपूर्णमासानुष्ठानसिध्यर्थं कृते अग्न्युद्धरणे तेनैवाग्निहोत्रार्थोद्धारणकार्यस्य प्रसङ्गेन सिद्धत्वात्पृथक् तदर्थोद्धरणस्याभावात् कृतोद्धरणस्य परार्थत्वेनाग्निहोत्रार्थोद्धरणरूपनिमित्तस्याभावान्नैमित्तिकं निर्दिष्टेष्टिरूपं प्रायश्चित्तं तत्रोद्धृताग्निव्यापत्तौ न विद्यते। न कार्यमित्यर्थः। यतः प्रायश्चित्तेष्टिविधायकवाक्यस्याग्निहोत्रप्रकरणाम्नातत्वेनाग्निहोत्रार्थमुद्धृताग्निव्यापत्तावेवेयमिष्टिरुपकारिकेति गम्यत इति भावः ॥ २८ ॥

धार्याग्निनाशे ज्योतिष्मतीष्टेरननुष्ठानाधिकरणम् ॥ ७ ॥

## सि० ॥ धारणे च परार्थत्वात् ॥ २९ ॥

'गतश्रिय आहवनीयो नित्यं धार्य' इत्याधानसंस्कृतस्याहवनीयस्य सर्वकर्मार्थं नित्यमेव धारणं विहितम्। तत्र यथाविधि धृतेऽग्नावनुगते उक्तेष्टिर्न कार्या। कुतः? तदुद्धरणस्य परार्थत्वात्—सर्वकर्मार्थत्वात्, केवलमग्निहोत्रार्थमुद्धृताग्निनाश एव प्रायश्चित्तेष्टेर्विधानात्। निमित्तस्याभावान्नैमित्तिकं न कार्यमिति भावः ॥ २९ ॥

## क्रियार्थत्वादितरेषु कर्म स्यात् ॥ ३० ॥

**इतरेषु** — परिसमूहनपर्युक्षणादिषु अग्निसंस्कारार्थत्वेन विहितत्वात् अनुष्ठिते धार्येऽप्यग्नौ तत्संस्कारकर्म स्यादेव। उक्तेष्टिस्तु उद्धृताहवनीयस्योद्वायने प्रायश्चित्तार्थमेव विहितत्वात्तस्या अग्निसंस्कारार्थत्वाभावाच्च उद्धृताग्निविनाशरूपनिमित्ताभावे तन्नैमित्तिकं कर्म न स्यादिति भावः ॥ ३० ॥

दर्शपूर्णमासार्थोद्धरणकाले अग्निहोत्रार्थोद्धरणाङ्गमन्त्राननुष्ठानाधिकरणम् ॥ ८ ॥

## न तूत्पन्ने यस्य चोदना अप्राप्तकालत्वात् ॥ ३१ ॥

'वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाध्वर्युणा मनसा ब्रह्मणा श्रोत्रेणाग्नीध्रा एतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुद्धरामि' इत्यग्निहोत्रे अग्न्युद्धरणमन्त्रो विद्यते। अथ मन्त्रः दर्शपूर्णमासार्थाग्न्युद्धरणे पठनीयो न वेति विशये तत्राप्यग्निहोत्रस्य क्रियमाणत्वात्तदुद्धरणमन्त्रः पठनीय इति प्राप्ते सिद्धान्तः। **उत्पन्ने**—परार्थं दर्शपूर्णमासार्थमुत्पन्नेऽग्नौ **यस्य**—अग्निहोत्रस्य, **चोदना**—विधिः, तत्रायं मन्त्रो न प्रयोक्तव्यः। कुतः? **अप्राप्तकालत्वात्**—'अभिवृक्षसूर्ये अविः काले' अनेन मन्त्रेणाग्निहोत्रार्थे वन्ह्युद्धरणं विहितम्। दर्शपूर्णमासीयोद्धरणं तु पर्वणि प्रातरग्निहोत्रहोमानन्तरं पश्चात्क्रियते। अतस्तन्निमित्तभूतस्य कालस्याभावात्नैमित्तिकं समन्त्रकमुद्धरणं तत्र नास्तीति मन्त्रो न पठनीय इति भावः॥ ३१॥

## प्रायणीयेष्टिचरौ प्रदेयपयोधर्माननुष्ठानाधिकरणम्॥ १०॥

## प्रदानदर्शनं श्रपणे तद्धर्मभोजनार्थत्वात्संसर्गाच्च मधूकवत्॥ ३२॥

ज्योतिष्टोमे 'आदित्यः प्रायणीयः पयसि चरुः' इत्याम्नातम्। तत्र पयोऽपि चरुवद्देवतासम्बद्धं प्रदेयद्रव्यमेव। न श्रपणार्थमेव तत्। कुतः? पयसि श्रपणेऽपि तस्य प्रदानदर्शनं विद्यत एव। यथा चरोः देवतोद्देशेन प्रदानं दृश्यते तथा पयसोऽपि तदस्ति। यतः पयसा विभज्य चरुनं प्रदीयत इति। अतो **मधूकवत्**—चित्रायागे दधिमधुपयसा यथा संसर्गस्तद्वच्चरुपयसोः **ससर्गात्**—मिलितत्वात्, **भोजनार्थत्वात्**—यागार्थत्वाच्च **तद्धर्माः**—तस्य—प्रकृताविन्द्राय प्रदेयद्रव्यभूतस्य पयस. ये धर्माः वत्सापाकरणादयस्तद्वदिदमपि पय इति पूर्वपक्षः॥ ३२॥

## संस्कारप्रतिषेधश्च तद्वत्॥ ३३॥

**संस्कारप्रतिषेधः**—'अयजुषा वत्सानपाकरोति, अपवित्रवति गां दोहयति' इति केषांचित्प्रदेयद्रव्यसंस्काराणां प्रतिषेधोऽपि **तद्वत्**—उक्तार्थसाधकः। यतः प्राप्तस्यैव प्रतिषेधो न्याय्य इति॥ ३३॥

## तत्प्रतिषेधे च तथाभूतस्य वर्जनात् ॥ ३४ ॥

**तत्प्रतिषेधे च**— तस्य-पयस प्रदेयद्रव्यत्वप्रतिषेधे, **तथाभूतस्य**— पयोमिश्रितद्रव्यान्तरस्य, **वर्जनात्** — सर्वेऽपि द्रव्यविधयो नियमार्था इति सिद्धान्तात् चरुणैव याग इति विधाने पयस प्रतिषेध सिद्धः । यत्प्रतिषेधस्तत्संयुक्तस्यापि प्रतिषेध इति सुप्रसिद्धम् । यथा नित्यं पयसा सहौदनं भुङ्क्ते । तत्र ज्वरादौ निमित्ते सति भिषजा पयं सेवनं मा कुर्वित्युक्ते पय ससृष्टमोदन वर्जयति । यथा ब्रह्मचारिणो मधुप्रतिषेधे मधुमिश्रितचरोरपि प्रतिषेधमिच्छन्ति । तद्वत्प्रकृते पयोयुक्तचरोरपि प्रतिषेध स्यादिति साधकान्तर पयोधर्मानुष्ठान इति भावः ॥ ३४ ॥

## सि० ॥ अधर्मत्वमप्रदानात्प्रणीतार्थे विधानादतुल्यत्वादसंसर्गः ॥ ३५ ॥

**अधर्मत्वम्**—पयस प्रदेयद्रव्यधर्मत्व नास्ति । **अप्रदानात्**—तस्य प्रदेयत्वेन विधानाभावात् । पयसोऽनि संस्म्यो **प्रणीतार्थे**—प्रणीतार्थे विधानात् । प्रणीताधर्म एवत्यर्थ । दधिमधु घृतमापो धाना इत्यनेन **अतुल्यत्वादसंसर्गः**—तत्र सर्वं प्रयमातामिति सर्वेषां प्रदेयत्वं ससृष्टत्वं च । इह तु पयसीति सप्तम्या चरोरधिकरणत्व पयसि प्रतीयते इति वैषम्यमिति भाव ॥ ३५ ॥

## परो नित्यानुवादः स्यात् ॥ ३६ ॥

'यजुषेत्यादिपरः—अर्थवाद, नित्यानुवाद स्यात् ॥ ३६ ॥

## विहितप्रतिषेधो वा ॥ ३७ ॥

अथवा शाखान्तरे 'यजुषा वत्सानपाकरोती'ति विहितस्य प्रतिषेध इत्यर्थ ॥ ३७ ॥

## वर्जने गुणभावित्वात्तदुक्तप्रतिषेधात्स्यात्कारणात्केवलाशनम् ॥ ३८ ॥

**उक्तप्रतिषेधात्**—पयो मा भुङ्क्ष्वेति प्रतिषेधात्, **वर्जने**—पयः-संसृष्टान्नवर्जने, पयसो **गुणभावित्वात्**—अप्रधानत्वात्कारणात्, **केवलाशनम्**—केवलौदनाशनं स्यात् । भोजने ओदनं प्रधानं, पयो गुणः । नित्यमोदनस्य गुणत्वेन पयसः प्राप्तौ निषेधोऽपि गुणभूतस्यैव न प्रधानस्योदनस्येत्युक्तदृष्टान्तपरिहारो ज्ञेयः। प्रकृते प्रायणीयचरौ चरुणा सह प्रदेयद्रव्यत्वेन प्राप्तं तुल्यत्वं निषिध्यते । अप्रधानत्वेन संसृष्टत्वेऽपि न बाधकं तदिति भावः ॥३८॥

## व्रतधर्माच्च लेपवत् ॥ ३९ ॥

**लेपवत्**—मधुलिप्तदर्व्यादिना परिवेषणे सति यथा ब्रह्मचारिव्रतलोपस्तथा निषिद्धपयःसंयुक्तचरुहोमे अदृष्टलोपः स्यादिति शङ्कासूत्रम् ॥ ३९ ॥

## रसप्रतिषेधो वा पुरुषधर्मत्वात् ॥ ४० ॥

**पुरुषधर्मत्वात्**— पुरुषधर्मः रागः तेन गधो प्राप्तत्वात् **रसप्रतिषेधः**— अयं मधुरस इति यावत् उपलब्धिस्तावतो लेपस्यापि निषेधः। पयसि चरुरिति शास्त्रप्राप्तस्य पयःसंयोगस्य न निषेध इति भावः ॥४०॥

अभ्युदयेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम् ॥ ११ ॥

## सि०॥ अभ्युदयेष्टौ दोहापनयः स्वधर्मा स्यात्प्रवृत्तत्वात् ॥ ४१ ॥

अभ्युदयेष्टौ ' शृते चरुं दधन्यश्चरुमिति सप्तमीश्रवणात्प्रदेयधर्माः पूर्ववन्नेति पूर्वपक्षे सिद्धान्तः । **अभ्युदये**— चन्द्रोदये निमित्ते सति, **दोहात्**— दधिशृतरूपद्रव्यात्, **अपनयः**— पूर्वदेवताविभागमात्रे देवतान्तरसम्बन्धश्च विधीयते यथा अतः, **प्रवृत्तत्वात्**— यागार्थं पूर्वमेव प्रवृत्तत्वात् , **स्वधर्मा**—प्रदेयद्रव्यधर्मा स्यात् । न तद्धर्माभाव इत्यर्थः ॥ ४१ ॥

## शृतोपदेशाच्च ॥ ४२ ॥

शृतोपदेशात्—शृते चरुं दधंश्चरुमिति सिद्धवच्छ्रनोपदेशोऽस्ति। स प्रदेयद्रव्य एव सन्नु धर्मेष्ववकल्पते। अतस्तस्माल्लिङ्गदर्शनादपि यागार्थो दधिपयसोर्धर्माः कर्तव्या इति निर्णयः ॥ ४२ ॥

पशुकामेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम् ॥१२॥

## सि० ॥ अपनयो वार्थान्तरे विधानाच्चरुपयोवत् ॥ ४३ ॥

"यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्। ये क्षोदिष्ठास्तानग्नये सनिमते अष्टाकपालं निर्वपेत्। ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुम्। ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्" इति विहितपशुकामेष्टौ शृते चरुं दधंश्चरुमित्यत्रापि समानश्रुतित्वात्पूर्वाधिकरणन्यायेन इज्यार्थाः प्रदेयद्रव्यधर्माः कार्या इति प्राप्ते सिद्धान्तः। चरुपयोवत्—'आदित्यः प्रायणीयः पयसि चरुरि'तिवच्छ्रपणार्थे सप्तमीश्रवणात् अर्थान्तरे—श्रपणरूपकार्यान्तरे विधानात्, अपनयः—प्रदेयद्रव्यधर्माभाव इत्यर्थः ॥ ४३ ॥

## लक्षणार्था शृतश्रुतिः ॥ ४४ ॥

शृतश्रुतिः—सिद्धवच्छ्रनोपदेशस्तु अर्थप्राप्तश्रपणवच्चरुद्रव्यलक्षणार्था स्यादिति भावः ॥ ४४ ॥

ज्योतिष्टोमे श्रपणार्थेषु पयआदिषु प्रदेयधर्माननुष्ठानाधिकरणम् ॥ १३ ॥

## श्रपणानां त्वपूर्वत्वात्प्रदानार्थे विधानं स्यात्॥४५॥

ज्योतिष्टोमे 'पयसा मैत्रावरुणं श्रीणाति। सक्तुभिर्मान्थिनम्। धानाभिर्हारियोजनम्। हिरण्येन शुक्रम्। आज्येन पात्नीवतम्' इति पयआदिभिर्द्रव्यैः ग्रहपात्रनिष्ठसोमस्य संमिश्रणमाम्नातम्। तत्र श्रपणानां पयःप्रभृतीनां प्रदानार्थे सोमयागार्थं विधानमपूर्वत्वात्तस्य। अतः इज्याद्रव्यधर्माः पयःप्रभृतिषु कर्तव्या इति ॥ ४५ ॥

## सि०॥ गुणो वा श्रपणार्थत्वात् ॥ ४६ ॥

**गुणो वा**—सोमस्य गुणभूतमेव पयआदिद्रव्यम् । **श्रपणार्थत्वात्**-श्रपणं—मिश्रणं तदर्थत्वात् । न तत्प्रदेयद्रव्यं तत्वेनाविधानादिति भावः ॥४६॥

## अनिर्देशाच्च ॥ ४७ ॥

'मैत्रावरुणं पयः' इति द्रव्येण देवतासम्बन्धस्य **अनिर्देशात्**—निर्देशाभावादपि न पयआदेः प्रदेयद्रव्यत्वम् ॥ ४७ ॥

## श्रुतेश्च तत्प्रधानत्वात् ॥ ४८ ॥

**श्रुतेः**—सोममिति द्वितीयाश्रुतेः, **तत्प्रधानत्वात्**—तस्य सोमस्य प्रधानत्वादपि पयस्तद्गुणत्वं बोध्यम् ॥ ४८ ॥

## अर्थवादश्च तदर्थवत् ॥ ४९ ॥

'समित्रोऽब्रवीत् पयसैव मे सोमं श्रीणातु' इत्यर्थवादोऽपि **तदर्थवत्**—सोमार्थं श्रपणमित्यावेदयति ॥ ४९ ॥

## संस्कारं प्रतिभावाच्च तस्मादप्यप्रधानं स्यात् ॥५०॥

यत्र संस्कारा विधीयन्ते तत्रेदं 'पयसा मैत्रावरुणं श्रीणाती'त्यादिवाक्यजातं श्रूयते । अतः **संस्कारं प्रतिभावात्**—संस्कारप्रायपाठात्, अयमपि संस्कार एवेति गम्यते । यथा अन्यप्राये लिखितोऽन्य इति ज्ञायते । **तस्मात्** अप्रधानं स्यात्पयआदिद्रव्यम् । इति प्रदेयद्रव्यधर्मैर्न तेषां सम्बन्ध इति निष्कर्षः ॥ ५० ॥

**पशुयागे पर्यग्निकरणान्ताङ्गरीतिविधाने न तदुत्तराङ्गप्रतिषेधाधिकरणम् ॥ १४**

## पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥५१॥

अश्वमेधे 'ईशानाय परस्वत आलभेत' इति परस्वद्यागं प्रकृत्य 'पर्यग्निकृतानारण्यानुत्सृजन्तीति श्रूयते । परस्वच्छब्देन आरण्याः पशुविशेषा उच्यन्ते। अत्र आलभतिधातोः केवलस्पर्शार्थत्वं मत्वा अग्रिमवाक्ये विहितोत्सर्गा-

र्थत्वमुत प्रथमवाक्ये यागान्तरविधिः, उत्तरवाक्येन शेषानिवृत्तिविधिरिति संशये सति उत्तरवाक्येन पर्यग्निकृतानामुत्सर्गे विहिते तादर्थ्ये—उत्सर्गार्थत्वमेवाऽऽलम्भस्येति वाच्यम्। उपधानवत्— यथा 'चरुमुपदधाती-त्यत्र चरोरुपधानार्थत्वं तद्वत्। न यागान्तरविधिरिति पूर्वः पक्षः ॥५१॥

सि० ॥ शेषप्रतिषेधो वा अर्थाभावादिडान्तवत् ॥ ५२ ॥

शेषप्रतिषेधो वा— शेषस्य पर्यग्निकरणोत्तरकालीनप्राकृताङ्गप्रतिषेध एव। अर्थाभावात्— उत्तरवाक्ये पर्यग्निकरणेतराङ्गनिषेधादन्यस्य विधेयांशस्याभावान्निष्फलत्वापत्तेः। इडान्तावत्— आतिथ्याया मिडान्ता भवतीतीतरनिवर्तकं यथा तद्वदत्रापीतराङ्गनिवृत्तिरेव। प्रथमवाक्ये ईशानाय परस्वत इति यागस्वरूपस्य सत्त्वादालभतियोगविधायकः। न केवलं स्पर्श इति भावः ॥ ५२ ॥

पूर्ववत्त्वाच्च शब्दस्य संस्थापयतीति चाप्रवृत्ते नोपपद्यते ॥ ५३ ॥

किञ्च, 'आज्येन शेषं संस्थापयतीति समाप्तिद्योतकशब्दस्य पूर्ववत्त्वात्—यागप्रवृत्तिपूर्वकत्वात्, यागः प्रवृत्तश्चेदेव संस्थापयतीत्युपपद्यते। अप्रवृत्ते तु पूर्वयागे तदनुपपन्नं स्यात्केवलमुत्सर्गमात्रश्चेत्। अतः शेषकर्मप्रतिषेधः ॥५३॥

प्रवृत्तेर्यज्ञहेतुत्वात्प्रतिषेधे संस्काराणामकर्म स्यात्तत्कारित्वाद्यथा प्रयाजप्रतिषेधे ग्रहण-माज्यस्य ॥ ५४ ॥

द्रव्योत्सर्गमात्रविधाने संस्काराणां द्रव्ये अकर्म—अननुष्ठानं स्यात्। कुतः? प्रवृत्तेः—द्रव्ये संस्कारप्रवृत्तेः यज्ञहेतुत्वात्—देवतोद्देश्यकद्रव्यत्याग-रूपप्रधानयागजन्यापूर्वकारणत्वात्। तत्कारित्वात्—प्रधानयागानुष्ठानपुरुषा-नुष्ठितत्वात्। प्रतिषेधे—प्रधानयागप्रतिषेधे अर्थात्तदभावे किमिति संस्काराः

क्रियेरन् । नैव क्रियेरन्नित्यर्थः । यथा गृहमेधीये 'न प्रयाजा इज्यन्ते' इति प्रयाजप्रतिषेधे तदर्थं प्राप्तमाज्यं न गृह्यते तथेहापि संस्कारा न स्युरिति भावः ॥ ५४ ॥

## क्रिया वा स्यादवच्छेदादकर्म सर्वहानं स्यात्॥५५॥

कर्मशेषप्रतिषेधपक्षे क्रिया—पर्यग्निकरणप्राक्कालीनाङ्गक्रिया स्यादेव । कुतः ? अवच्छेदात्—पर्यग्निकरणोत्तराङ्गमात्रस्य व्यवच्छेदात् । यागो न चेत् अकर्म—संस्काराणां सर्वहानं स्यात् । यागस्तु तदा—कर्मशेषप्रतिषेधपक्षे भवत्येव । अतो न सर्वहानमिति भाव. ॥ ५५ ॥

आज्येन शेषं संस्थापयतीति वाक्ये कर्मान्तरविधानाधिकरणम्॥१५॥

## आज्यसंस्थाप्रतिनिधिः स्याद् द्रव्योत्सर्गात् ॥ ५६ ॥

'त्वाष्ट्रं पात्नीवतमालभते । पर्यग्निकृतं पात्नीवतमुत्सृजति' इति प्रकृत्य 'आज्येन शेषं संस्थापयती'ति श्रूयते । तत्र आज्यसंस्था—आज्येन समाप्तिः, आज्यं पूर्वकर्मणि प्रतिनिधिः स्यात् । पात्नीवतमिति द्रव्यमुच्यते । उत्सृजतीत्युत्सर्गः श्रूयते । शेषमित्युपयुक्तेतरदवशिष्टं गम्यते । ततः पूर्व-द्रव्यपरित्यागात्पूर्वकर्मणि प्रतिनिधिभूतमाज्यम् । नेदं कर्मान्तरमिति ॥५६॥

## समाप्तिवचनात् ॥ ५७ ॥

'आज्येन शेषं संस्थापयतीति यत्पूर्वं पशुद्रव्येणारब्धमुत्सृष्टे पशौ तत्कर्म आज्येन संस्थापयेदिति समाप्तिवचनान्न कर्मान्तरम्। अन्यथा आज्येन कर्म आरभेदिति स्यात् ॥ ५७ ॥

## सि० ॥ चोदना वा कर्मोत्सर्गादन्यैः स्यादविशिष्टत्वात् ॥ ५८ ॥

चोदना वा— अपूर्वकर्मविधिरेव । कर्मोत्सर्गात्— पूर्वकर्मणः समाप्तत्वात् । अन्यैरविशिष्टत्वात्— सौर्यं चरुं निर्वपेत्, आग्नेयोऽष्टाक-

पाप्तो भवतीत्यादौ यथा निर्वपत्यादयो यागविधायकास्तथा तैः सादृश्यात्संस्थापयतिरपि यागान्तरविधायक इति भावः ॥ ५८ ॥

## अनिज्यां च वनस्पतेः प्रसिध्दान्तेन दर्शयति ॥ ५९ ॥

शेषपरिसमाप्तौ सत्यां 'वनस्पतिं जुहोती'ति वनस्पतीज्या क्रियते। 'यत्त्वष्टारं च वनस्पतिमावाहयसि। अथैतौ यक्ष्यसि। त्वाष्ट्री नवमी प्रयाज्येज्या। वानस्पत्या दशमी' इति। अथ 'अत्रैवेताविष्टौ विधात्' इत्यंगान्तरेणानुग्रहं ब्रुवन् वनस्पतीज्याया अभावं दर्शयति। तत्र पूर्वं कर्म परिसमाप्तं चेदेव सा लुप्ता स्यादित्यभावदर्शनं तत्रोपपद्यते। अतः परिसमाप्तं पूर्वं कर्म। इदं कर्मान्तरमेवेति ॥ ५९ ॥

## संस्था तद्देवतात्वात्स्यात् ॥ ६० ॥

यच्च संस्थापयतीति चापूर्वे कर्मणि नोपपद्यत इत्युक्तम्। तत्रोच्यते— असंस्थायां संस्थावचनमिदं तत्पूर्वमपि पत्नीवद्देवताकमिति समानदेवताकत्वात्समाप्तिसादृश्यं ज्ञायते। तत्र तत्पात्नीवतमारब्धमत्र परिसमाप्तमिति सादृश्यात्संस्थापयतीति शब्दः स्यात्। 'आज्येन शेषमिति कर्मान्तरपक्षेऽपि देवताश्रवणात्सन्निहितपत्नीवद्देवताया एव पशुपुरोडाशवद् ग्रहणम्। इत्थं च तद्देवताकत्वेन पूर्वोत्तरकर्मणोः साजात्यात् पत्नीवद्देवताकं कर्म तत्रारब्धमनेन कर्मणा समाप्तमिति पत्नीवद्देवताकत्वेन साजात्यं गृहीत्वा उपपन्नमिति भावः ॥ ६० ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां नवमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

सम्पूर्णश्च नवमाध्यायः ॥ श्रीः ॥

---

# ॥ अथ दशमाध्यायस्य प्रथमः पादः ॥

सामान्यविशेषतथातिदिष्टप्राकृतपदार्थस्वरूपनिरूपणानन्तरं द्वारान्तर-प्रयुक्ततदन्यथाभावरूपस्योहस्य सन्निकृष्टत्वान्नवमे सप्रपञ्चं तन्निरूपणं वृत्तम्। अथावसरसङ्गत्या चोदकप्राप्तं पदार्थस्यार्थलोपात्तन्निवृत्तिरूपबाधस्य निरूपणमस्मिन् दशमेऽध्याये क्रियते । तत्र विकृतौ लुप्तार्थानां प्राकृतपदार्थानां बाधाधिकरणमाद्यम् ॥ १ ॥

तत्र प्रथमवर्णकम् ॥ १ ॥

## विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥१॥

विधेः— प्राकृतविधेः, प्रकरणान्तरे– विकृतौ प्रकृतिवदेव कर्तव्यमित्यविशेषेणातिदेशात्सर्वं प्राकृतं कर्मजातं प्रधानेतरद्विकृतौ स्यात् । अतो बाधस्य पदार्थनिवृत्तिलक्षणस्यावसर एव नास्तीति तन्निरूपकोऽयं दशमोऽध्यायो नारम्भणीय इति पूर्वपक्षाभिप्रायः ॥ १ ॥

## सि० ॥ अपि वाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥

अपि वेति पूर्वपक्षव्यावृत्तिः । अभिधानसंस्कारद्रव्यं–वचनैः उक्तसंस्कारविशिष्टं द्रव्यम्, अर्थे– प्रयोजने सति, क्रियेत—आद्रियेत । तादर्थ्यात्—प्रयोजनार्थत्वात्तस्येत्यर्थः । अत्रायं भावः—राजसूये ' रत्नीनामेतानि हवींषि ' इति रत्निनामकदेवसम्बन्धीनि दर्शपूर्णमासेष्टिविकृतिरूपाणि कानिचिद्धवींषि विहितानि । तेषु मैत्राबार्हस्पत्ये हविषि ' स्वयंकृता वेदिर्भवति । स्वयंदिनं बर्हिः । स्वयंकृत इध्मः ' । इति श्रूयते । प्रकृतौ ' स्फ्येनोद्धन्तीत्यादिभिरुद्धननखननपरिलेखनादिभिर्वेदिर्निष्पाद्यते । दात्रच्छिन्नं बर्हिः सम्पाद्यते । मन्त्रोपेताक्रियया इध्मः सिध्यति । सर्वत्र मन्त्रयुक्ततत्तत्क्रियया उक्तपदार्थसिद्धिः । निर्दिष्टविकृतिहविःषु

उद्धननाद्यपेक्षा धारयितुं 'स्वयंकृता वेदिर्भवति, स्वयंदिनं बर्हिः । स्वयंकृत इध्मः' इत्युक्तम् । तेन विकृतौ सप्रयोजनानामुद्धननादीनां लोपात् तत्कृतोपकारकत्वमपि तत्र नास्ति । अतः प्रयोजनलोपात् प्रकृतिवद्विकृतौ कर्तव्यमित्यविशेषेण प्राप्तस्यापि तस्य तत्र बाध एवेति बाधाध्याय आरम्भणीय इति सिद्धान्तः ॥ २ ॥

## तेषामप्रत्यक्षशिष्टत्वात् ॥ ३ ॥

ननु, मास्तूद्धननादिकं प्राकृतं कार्यं तत्र । अथापि वचनबलाददृष्टद्वारा परमापूर्वं प्रति प्रयाजादिवदारादुपकारकं तत्स्यादित्याशङ्कायामाह- तेषामिति । तेषां- मंत्रसंस्कारक्रियाद्रव्याणाम्, अप्रत्यक्षेण-आनुमानिकशास्त्रेण, शिष्टत्वात्- विकृत्यङ्गत्वेन विहितत्वात् प्रयाजादीनां प्रकृतौ साक्षाद्वचनविहितत्वेन तददृष्टान्तत्वेऽप्यत्र तद्द्वारकत्वम् तेषामिति भावः ॥ ३ ॥ ( इति प्रथमवर्णकम् ॥ १ ॥ )

अथ द्वितीयवर्णकम् ॥ २ ॥

## विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥

'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इति विकृतिरूपकाम्येष्टिकाण्डे समाम्नायते । तत्र कृष्णलं इत्यस्य सुवर्णशकलमर्थः । प्रकृतौ 'व्रीहीनवहन्तीति व्रीहिष्ववघातो विहितः । स कृष्णलेषु कर्तव्यो वा नेति विशये विधेः—अवहननादिविधेः, प्रकरणान्तरे--शतकृष्णलचरुद्रव्यकप्राजापत्येष्टौ, अतिदेशात्-- अग्निहोत्रनामवच्चरुनाम्नाऽतिदेशात्सर्वकर्म-अवहननादियावच्चरुकर्म कर्तव्यमिति ॥ १ ॥

## सि० ॥ अपि वाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥

अपि वेति पूर्वोक्तव्यावृत्तिः । अर्थे-दृष्टप्रयोजने सति क्रियेत । तादर्थ्यात्-दृष्टप्रयोजनार्थत्वादभिधानसंस्कारद्रव्यस्य । यथा द्वारं पुरस्कृत्य

आनुमानिकातिदेशः प्रवर्तते । तथा द्वारं पुरस्कृत्यैव नामातिदेशोऽपि प्रवर्तते । प्रकृते त्रितुषीकरणरूपद्वारलोपान्नामातिदेशोऽपि कृष्णलेष्ववघातादिबाध इति भावः ॥ २ ॥

## तेषामप्रत्यक्षशिष्टत्वात् ॥ ३ ॥

तेषामवघातादिसंस्काराणां विकृतौ अप्रत्यक्षशिष्टत्वात्—आनुमानिकेन विहितत्वात्, कृष्णलेषु तु प्राजापत्यं 'घृते चरुम्, घृते श्रायती'ति प्रत्यक्षविहितत्वात् अदृष्टोपकारकत्वं युक्तं प्रयाजादिवत् । अवघातस्य तत्रानुमानिकत्वेन तद्वैयर्थ्याद्द्वारलोपाच्च बाध एव । न आरादुपकारकत्वं युक्तमिति भावः ॥ ३ ॥ ( इति द्वितीयवर्णकम् ॥ २ ॥ )

अथ तृतीयवर्णकम् ॥ ३ ॥

## विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥

काम्येष्टिष्वेव 'वैश्वदेवं चरुं निर्वपेद् भ्रातृव्यवान्' बर्हिषदं कृत्वा शम्यया स्फ्येन व्यूहेदिदमहममुं व्यूहामीति यं द्विष्यात्तं ध्यायन् यदधोऽवमृजेत यच्च स्फ्य आश्लिष्येत द्विष्णव उरुक्रमायावद्यती'ति श्रूयते । अयं शत्रुक्षयार्थश्चरुः । अस्य प्रकृतिभूताऽऽग्नेयपुरोडाशादिर्द्वैरपस्त्वित्यम् । प्रकृतावाग्नेयपुरोडाशभेदं तथाप्योत्तरं बर्हिष्यासाद्य चतुर्णामृत्विजां भक्षविभागार्थं हस्तेन चतुर्धा कृत्वा 'इदं ब्रह्मणः, इदं होतुः, इदमध्वर्योः' इदमाग्नीध्र' इति तत्तद्भागान् पृथगुपादिशेत् । इति स्थितम् । अत्र वैश्वदेवचरोरुभयमंशयोर्हस्तेन विभागः । किन्तु तीक्ष्णाग्रेण शम्या स्फ्येति यज्ञायुधद्वयेनैव । 'मन्त्रं चेदमिदमहं अहमागं व्यूहामीत्येवमादिरूपं पठेदिति । ततो यदि व्यूहनसमये चरुलेशो भूमौ पतेत् यज्ञायुधेन वा लिप्येत । तदा तं पतितं लिप्तं चरुलेशं तीव्रपराक्रमाय शत्रुक्षयसमर्थाय विष्णवेऽवद्येत् । व्यूहनकाले अवदानकाले च शत्रुं क्षीणं ध्यायेदिति । तत्र वैश्वदेविकतन्त्रमध्ये चरुलेशस्याधःपातनान्तेऽपरपक्षे वैष्णवयागो विहितः ।

अतो वैश्वदेविके अनुष्ठितानि 'आघारप्रयाजाज्यभागादीन्यङ्गानि वैष्णवयागस्यापि स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गादुपकारकाणीति' न पृथक् क्रियन्ते। आवाहनं तु अनुष्ठानवैषम्यान्न प्रसङ्गतः सिध्यति। तथा हि— विश्वान् देवानावहेति तत्र आवाहनम्। अत्र तु विष्णुमावहेत्। इति वैषम्यम्। किञ्च, सामिधेनीप्रयाजयोर्मध्यकाले होत्रा देवतावाहनार्थो निगदः पठ्यते। स वैश्वदेवावाहनस्य कालः। न तदानीं विष्णुः प्रसक्तः। प्रयाजाज्यभागप्रधानयागनारिष्टहोमचतुर्धाकरणेष्वनुष्ठितेष्वाक्षेपणे सति वैष्णवयागस्य प्राप्यमाणत्वात्। अतोऽप्रसक्तोऽपि विष्णुर्भविष्यद्यागसिध्यर्थं पूर्वकालेऽप्यावाह्यः। कुत इति चेत् **विधेः**-प्राकृतविधेः, **प्रकरणान्तरे**— विष्णोरुरुक्रमस्य यागे, **अतिदेशात्**— प्रकृतिवद्विकृतिः कार्येत्यतिदेशात्— **स्सर्वकर्म**— *आवाहनादि सर्वं कर्म स्यात्। न चाप्यत्र द्वारलोपोऽस्ति।* आवाहनेनादृष्टरूपो देवतासंस्कार अवश्यमपेक्षित एव। न च विष्णुयागस्य वैश्वदेवयागप्रकृतित्वान्नास्ति चोदकातिदेश इति वाच्यम्। तयोरुभयोरपि आग्नेययागविकृतित्वेनोभयत्राप्याग्नेययागाङ्गानामतिदेशात्। तस्मात् वैश्वदेवावाहनकाले विष्णोरप्यावाहनं कार्यमिति पूर्वपक्षः॥ १॥

## सि० ॥ अपि वा अभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥

अपि वेति पूर्ववदेव पूर्वपक्षव्यावर्तकः। **अभिधानसंस्कारद्रव्यं**— अभिधानेन—'विष्णुमुरुक्रममावहेति' मन्त्रेण देवतास्मरणरूपः **संस्कारः द्रव्यं च अर्थे**—कार्ये सत्येव क्रियेत। नासति तस्मिन्। **तादर्थ्यात्**— कार्यार्थत्वात्तस्य–संस्कारद्रव्यस्य। अत्रायं भावः—उरुक्रमस्य विष्णोरावाहनं, किं चतुर्धाकरणानन्तरमिष्यते। उत प्रयाजेभ्यः प्राक्। चतुर्धाकरणादूर्ध्वं चेत्तदकाले कृताकृतमेवेति न्यायादनुपकारकत्वेन व्यर्थमेव। सामिधेनीप्रयाजयोर्मध्यकालो हि देवतावाहनस्य काल इत्युक्तमेव प्राक्। प्रयाजेभ्यः पुरा क्रियते चेत् विष्णुयागनिमित्तभूतस्य भविष्य-

दधःपतनाश्लेषणस्य तदानीमभावात्सति निमित्ते नैमित्तिकमिति न्यायान्निमित्तस्याभावान्नैमित्तिको विष्णुयागोऽपि तदानीमप्राप्त इति यागाभावे तदर्थं कृतमावाहनमनिष्टायैव भवेत् । न हि निमन्त्रितो विप्रः अभोजितश्चेत्तुष्यति । प्रत्युत शपत्येव । अत एवेत्थं श्रूयते—'देवताभ्यो वा एष आवृश्चते । यो यक्ष्य इत्युक्त्वा न यजते' इति । यागपक्षे तु आवाहनमन्तरेणापि याग उपपद्यते । यथा कदाचिदनिमन्त्रिता अपि पूज्याः स्नेहातिशयवशात्स्वयमेव भोक्तुमागच्छन्तीति लोकव्यवहारे दृष्टम् । तथा विनाप्यावाहनं यागः संसिध्येदिति नास्त्युरुकमस्य विष्णोरावाहनमिति सिद्धम् ॥ २ ॥

## तेषामप्रत्यक्षशिष्टत्वात् ॥ ३ ॥

विकृतावावाहनादीनामानुमानिकत्वात्प्रकृतौ तेषां प्रत्यक्षेण विहितत्वाद्वैषम्यमिति न चोदकस्तत्र विष्णुयागे अवकाशं लभत इति भावः ॥ ३ ॥

( इति तृतीयवर्णकम् ॥ ३ ॥ )

ज्योतिष्टोमाद्यङ्गभूतदीक्षणीयादिविकृतौ अन्वारम्भणीयायाः बाधाधिकरणम् ॥ २ ॥

## इष्टिरारम्भसंयोगादङ्गभूतान्निवर्तेतारम्भस्य प्रधानसंयोगात् ॥ ४ ॥

ज्योतिष्टोमे 'आग्नावैष्णवमेकादशकपालं निर्वपेत्' इत्येवमादीनि दर्शपूर्णमासप्रकृतिकानि दीक्षणीयादीनि कर्माणि सन्ति । प्रकृतौ तु-'आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः' इति कर्तृपुरुषसंस्कारार्था आरम्भणीयेष्टिर्विहितास्ति । सेष्टिः ज्योतिष्टोमाङ्गभूतासु दर्शपूर्णमासविकृतिषु दीक्षणीयादीष्टिषु कार्या वा नेति संशये 'विधेः प्रकरणान्तरेऽतिदेशात्सर्वं कर्म स्यादि'त्याद्यसूत्रानुसारतः कार्येति प्राप्ते सिद्धान्तः इष्टिरिति । इयमारम्भणीयेष्टिस्तत्र नैव कार्या । कस्मात् ? आरम्भसंयोगात्—उक्तविधिवाक्ये 'आरप्स्यमानः' इत्यत्र आरम्भशब्दसंश्रवणादारम्भार्थं सा इष्टिः । आरम्भो नाम प्रधानोद्देश्यिका प्रथमा कृतिः । कृतौ प्राथम्यं च

स्वसजातीयकृतिध्वंसानधिकरणकालवृत्तित्वम् । साजात्यं च साक्षात् परंपरया वा तत्प्रधानोद्देश्यत्वेन ज्ञेयम् । अत ईदृगारम्भो दीक्षणीयायां नास्ति । तस्याः ज्योतिष्टोमाङ्गत्वात् । यतः सेष्टिरारम्भाङ्गम् । आरम्भस्तु **प्रधानेन संयुक्त**—प्रधानोद्देश्यक इत्यर्थः । एतादृशारम्भस्याङ्गभूतदीक्षणीयायामभावाद् द्वारलोपेन अङ्गभूताद्दीक्षणीयादितः अन्वारम्भणीयेष्टिर्निवर्तत इति भावः । इष्टिः—आरम्भणीयेष्टिः, आरम्भसंयोगात्, आरम्भस्य च प्रधानसंयोगात् अङ्गभूतान्निवर्तेत इति सूत्रान्वयो बोध्यः ॥ ४ ॥

राजसूयान्तर्गतानुमत्यादीष्टौ अन्वारम्भणीयाया बाधाधिकरणम् ॥३॥

## सि० ॥ प्रधानाच्चान्यसंयुक्तात्सर्वारम्भान्निवर्तेतानङ्गत्वात् ॥ ५ ॥

राजसूये—सोमपशुयागेष्टिदर्विहोमाः प्रधानभूताः । तत्र 'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपती' त्यादिना विहितासु ऐष्टिकासु दर्शपूर्णमासेष्टिविकृतिष्वनुमत्यादिषु आरम्भणीयेष्टिः कार्या न वेति संशये सति अन्वारम्भणीयायाः इष्ट्यात्मकप्रधानारम्भो द्वारमिति पूर्वाधिकरणे स्थितत्वात् राजसूयारम्भस्य चेष्ट्यात्मकप्रधानार्थत्वेन द्वारस्य विद्यमानत्वात्तासु विकृतिषु अन्वारम्भणीयेष्टिश्चोदकेनातिदिश्यत इति कार्या एवेति प्राप्ते सिद्धान्तः । **अन्यसंयुक्तात्**— अन्येन सोमादिप्रधानेन संयुक्तात्, **प्रधानात्**— इष्ट्यात्मकप्रधानात्, **इष्टिः**— अन्वारम्भणीयेष्टिः, **निवर्तेत** । कुतः ? **सर्वारम्भात्**— यतः सर्वार्थमारम्भस्तस्मात्केवलेष्टेरनङ्गत्वात्— द्वारं न भवति स आरम्भस्तस्मादित्यर्थः । प्रकृतावन्वारम्भणीयायाः द्वारं केवलं स्वविषय आरम्भः । राजसूये य आरम्भः स केवलमिष्ट्यर्थो न अपि तु सोमाद्यर्थोऽपीति वैषम्यान्न सोऽन्वारम्भणीयेष्टेः द्वारभवितुमर्हतीति द्वारलोपात्तस्या इष्टेस्ततो निवृत्तिरेवेति भाव. ॥ ५ ॥

आरम्भणीयायामारम्भणीयाबाधाधिकरणम् ॥ ४ ॥

## तस्यां तु स्यात्प्रयाजवत् ॥ ६ ॥

तस्यां तु— अन्वारम्भणीयायामपि अन्वारम्भणीयेष्टिः स्यात् । प्रयाजवत्— यथा प्रयाजाः अन्वारम्भणीयायामतिदिष्टास्तथास्या अप्यतिदेशे बाधकाभावादिति ॥ ६ ॥

## सि० ॥ न चाङ्गभूतत्वात् ॥ ७ ॥

न चेति । तस्यामन्वारम्भणीयायां तदङ्गभूतमन्वारम्भणीयान्तरं नास्तीत्यर्थः । कुतः ? अङ्गभूतत्वात्—' आरम्भो वरणं यज्ञे ' इति वचनात् ऋत्विग्वरणमिव यज्ञे आरम्भः । स चारम्भः प्रधानस्यैव क्रियते । न त्वङ्गार्थे पृथगनुष्ठीयते । यथा ज्योतिष्टोमे प्रधानार्थं वृता एव ऋत्विजस्तदङ्गेषु । न तत्र पृथग् क्रियते । एवमत्रापि दर्शपूर्णमासाङ्गभूतारम्भेणैव प्रसङ्गेनतत्सिद्धेर्न तस्याः पृथगारम्भोऽस्ति । येनान्वारम्भणीयान्तरं तस्यामापद्येत इति । इत्थं च बाधकाभावादिति पूर्वोक्तो हेतुः स्वरूपासिद्ध इति भावः ॥ ७ ॥

## एकवाक्यत्वाच ॥ ८ ॥

ननु, दीक्षणीयादिप्रयोगाणां ज्योतिष्टोमप्रयोगान्तर्गतत्वात् प्रधानारम्भेण तत्र प्रसङ्गो युक्तः । इह तु दर्शपूर्णमासावारप्स्यमाण इति लटा दर्शपूर्णमासस्य भावित्वसूचनात्तत्प्रयोगबहिर्भूतत्वं तस्याः सिद्धम् । तथा च बहिर्भूते प्रसङ्गासम्भवात् ' वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत ' इत्यत्रेव पृथगारम्भो वाच्यः । सत्येवं ज्योतिष्टोमारम्भेण दीक्षणीयायारम्भस्य प्रसङ्गसिद्धिरिति दृष्टान्तोऽत्र विषमः । तस्मादत्र द्वारलोपो नास्तीत्याशङ्कायामाह-एकवाक्यत्वाच्चेति । अत्र दर्शपूर्णमासयोर्विहितत्वदारम्भाङ्गत्वेन विधायकं ' आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमाणः ' इति एकमेव वाक्यम् । न तस्यामारम्भणीयायामपरस्या आरम्भणीयायाः विधायकं द्वितीयं वाक्यमस्ति । अतः अविहितायास्तस्यास्तदङ्गत्वेन कार्यत्वोक्तिरनवस्थादोषदुष्टत्वात्त्याज्यैव । प्रयाजस्य तु विधायकं वाक्यं भिन्नं विद्यते इति तेषां तस्यां

प्रवेशो युक्त एव । न च तदेव वाक्यं तस्या विधायकमिति वाच्यम् । स्वोत्पत्तिवाक्यार्थघटकतया स्वप्रवेशासम्भवात् विहितवदपेक्षणमविहितवद्विधानेन नैव पूर्यते इति भावः ॥ ८ ॥

खलेवाल्यां यूपाहुतेरननुष्ठानाधिकरणम् ॥ ५ ॥

## सि० ॥ कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्तेत तादर्थ्यं श्रुतिसंयोगात् ॥ ९ ॥

'सद्यस्क्रियानुक्रिया परिक्रिया वा स्वर्गकामः' इति वाक्यविहितः साद्यस्क्रो नाम कश्चिद्यागोऽस्ति । तस्मिन् यागे 'सह पशूनालभते' इति श्रुतेः साद्यस्क्राः पशवो विधन्ते । तेषु पशुषु 'साद्यस्क्रेषु उपरावेदिः खलेवाली यूप.' इतिवचनात् वेद्युत्तरवेदियूपाः शास्त्रीयसंस्काररहिता एव गृह्यन्ते । खले—धान्यमर्दनस्थले, वृषीवलैर्बलीवर्दबन्धनार्थं निखातो मेढिः खलेवालीपदेनोच्यते । प्रकृतौ ज्योतिष्टोमान्तर्गताग्नीषोमीयपशौ 'यूपमच्छेष्यता होतव्यं न हि दीक्षितस्याग्नौ जुहोति । आज्य चारणिं चादाय यूपस्यान्तिके अग्निं मथित्वा 'उरु विष्णो विक्रमस्व' इति सुवेणाहवनीये यूपाहुतिं जुहोति । इति श्रुतम् । सेयं यूपाहुतिः साद्यस्क्रयागीयखलेवाल्यां यूपधर्मातिदेशाद् द्वारलोपासम्भवाच्च तस्या पशुनियोजनादिवत्साऽपि कर्तव्येति प्राप्ते सिद्धान्तः—कर्म चेति । कर्म—यूपाहुतिरूपं, यद् यूपपदवाच्याहृष्टशरीरं द्रव्यं तत्संयोगार्थं—तदुत्पत्तिप्रयोजनं कर्म अर्थाभावात्—खलेवाल्या मीदृशादृष्टशरीरयूपपदवाच्यद्रव्योत्पत्त्यभावात्तत् आहुतिरूपं कर्म निवर्तेत—निवृत्तं स्यात् । न कार्यमित्यर्थः । यतः तादर्थ्यं—यूपोत्पत्त्यर्थं तदिति श्रुतिसंयोगात्—अहृत्वार्थकश्रुतिसंयोगवशादवगम्यते । 'यूपमच्छेष्यता' यूपमुत्पिपादयिषयागच्छता होतव्यमिति श्रौतवाक्येनाङ्गत्वं निःसन्दिग्धं ज्ञायत इत्यभिप्रायः । ततस्तत्र नैव कार्या सा आहुतिर्द्वारलोपादिति भावः ॥ ९ ॥

साद्यस्क्रे स्थाण्वाहुतिबाधाधिकरणम् ॥ ६ ॥

## स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत ॥१०॥

तस्मिन्नेवाग्नीषोमीययूपप्रकरणे 'स्थाणौ स्थाण्वाहुतिं जुहोती'ति श्रूयते। यूपे वृक्णे सत्यवशिष्टं वृक्षमूलं काष्ठरूपत्वात् स्थाणुरित्युच्यते। तस्मिन्नाहुतिविशेष इत्थं श्रूयते— 'वनस्पते शतवल्शो विरोहेत्याव्रश्चने जुहोति' इति। अस्याः स्थाण्वाहुत्याः खलेवाल्या **अनिवृत्तिः**— निवृत्त्यभावः, **प्रतीयेत**— तस्या सा कार्येत्यर्थः। कुतः? **स्थाणौ**— अवशिष्टवृक्षमूले, **देशमात्रत्वात्**— आहवनीयबाधपूर्वकदेशमात्रनियमात् खलेवाल्या स्थाणुत्वाविशेषादित्यर्थः। अत्रेयं स्थाण्वाहुतिः यूपे सन्निपत्योपकारकेति वक्तुमशक्यमेव। यूपस्य स्थाणोर्विभक्तत्वेन स्थाणौ स्थाण्वाहुत्या तद्विभक्तयूपसंस्कारासम्भवात्। सम्बद्धे क्रियमाणं कर्म सम्बन्धिनि समुपकुर्यात्। न त्वसम्बद्धे क्रियमाणम्। तस्मादग्नीषोमीयापूर्वस्यारादुपकारकं तदिति वाच्यम्। एवं तद्द्वारस्य पशुपूर्वस्यापि सत्त्वात् आव्रश्चने जुहोतीति देशस्य नियमनात् खलेवाल्यामस्ति सा आहुतिरिति भावः॥ १०॥

## सि० ॥ अपि वा शेषभूतत्वात्संस्कारः प्रतीयेत ॥ ११ ॥

अपि वेति पक्षव्यावृत्तिः। **शेषभूतत्वात्**—अङ्गभूतत्वात्तत्संस्कारः तस्य--यूपस्य **संस्कारः प्रतीयेत**—न्यायेन। अङ्गत्ववोधकयूपान्तरप्रकरणात्। अभिक्रमणवदित्यर्थः। यच्चोक्तं सम्बद्धे क्रियमाणमेव सम्बन्धिनि कार्यं जनयतीति। तन्न। गुर्वादार्पितसुमनाग तस्माद्वियोगे सत्यपि स्वशिरसि धारणेन गुर्वादेर्गौरवापादनस्य दृष्टत्वात्तद्व्यभिचारोऽत्र ज्ञेयः॥ ११॥

## समाख्यानं च तद्वत् ॥ १२ ॥

यथावान्तरप्रकरणमङ्गत्वसाधकं तथा स्थाण्वाहुतिरिति समाख्यानमपि श्रुत्यादिषु षष्ठ प्रमाणमाहुतेस्तदङ्गत्वे मानम्॥ १२॥

## मन्त्रवर्णश्च तद्वत् ॥ १३ ॥

सद्वत्–समाख्यानवत्, मन्त्रवर्णश्च–मन्त्रवर्णलिङ्गमप्यङ्गत्वे प्रमाणम्। तथा हि—स्थाण्वाहुतेर्मन्त्र एवं पठ्यते—' वनस्पते शतवल्शो विरोह ' हे वनस्पते—हे यूपसम्बन्धिवृक्ष, यतो मया वृक्णः अनस्त्वं शतवल्शः—शतशाखः सन् विरोह—वर्धस्वेत्यर्थः। स्थाणाविति देशनियमश्चेत् स्वकृतच्छेदनापराधनिवृत्तये आहुत्या वर्धस्वेति प्रार्थनमनुपपन्नं स्यात्। अतोऽपि सन्निपत्योपकारकमङ्गं स्थाण्वाहुतिरिति भावः ॥ १३ ॥

## उत्तमप्रयाजस्य संस्कारकर्मताधिकरणम् ॥ ७ ॥

## सि० ॥ प्रयाजे च तन्न्यायत्वात् ॥१४॥

दर्शपूर्णमासयोः ' स्वाहाकारं यजतीत्युत्तमः प्रयाजो विहितः। सोऽपि प्रथमादिप्रयाजवत्प्रधानकर्म भवितुमर्हः। प्रयाजत्वात्। तथा च ' विकृतावपि ' स्वाहाग्निं, स्वाहा सोमं, स्वाहा प्रजापतिं, स्वाहाग्नीषोमाविव्यादेर्मन्त्रस्याविकृतः पाठ इति प्राप्ते सिद्धान्तः। प्रयाजे च–उत्तमप्रयाजेऽपि, तन्न्यायत्वात्–अपि वा शेषभूतत्वात्संस्कारः प्रतीयेतेति (१०।१।११) सूत्रे यः प्रतिज्ञाहेतूदाहरणसमुदायात्मको न्याय उक्तः, अत्रापि तद्वत्त्वात्संस्कारकर्मत्वमेव। न प्रधानकर्मत्वम्। तथा हि-स्वाहाकारो न प्रधानकर्म। तथाभीय मन्त्रलिङ्गे यां वक्ष्यमाणा अग्न्यादिदेवतास्तासामेवोपलब्धेः यागेन तत्संस्कारस्वरूपे दृष्टफले सम्भवति सत्याशदुपकारकत्वकल्पनस्यान्याय्यत्वात्। न च ' माता पुत्रेषु समा ' इत्यत्र पुत्रपदसमभिव्याहारान्मातृपदं जननीमुपस्थापयति। ' माता समं धान्यं मिमीते ' इत्यत्र तु स एव मातृशब्दः अन्यं धान्यमातारमुपस्थापयति। तद्वत्स एवाग्न्यादिशब्दः अन्यमेवाग्निं बोधयतीति वाच्यम्। मातृशब्दो हि रूढ्या जननीमुपस्थापयति। धान्यमातारं तु योगेन तथा स्वाहाकारसान्निध्यादग्निशब्दस्यान्याग्निदेवतोपस्थापकत्वेऽग्निशब्दस्य तत्र स्वातन्त्र्येण शक्तिः कल्पनीया। सा प्रमाणे सति सिध्येत्। तन्नास्त्येव। येनार्थान्तरं स्यात्। तस्मात् स्थाण्वाहुतिर्यथा यूप-

द्वारा सन्निपत्योपकारकमङ्गम् । तथोत्तमप्रयाजोऽपि वक्ष्यमाणाग्न्यादिदेवता-संस्कारद्वारा सन्निपत्योपकारक इति भावः ॥ १४ ॥

## लिङ्गदर्शनाच्च ॥ १५ ॥

'चातुर्मास्ये संप्रतिपन्नदेवताको निगदः—' स्वाहाग्निं, स्वाहा सोमं, स्वाहा सवितारं, स्वाहा सरस्वतीं, स्वाहा पूषाणम् ' इति यः पठ्यते स देवतासंस्कारपक्ष एवावकल्पते । अन्यथा अतिदेशतः प्राकृतनिगदप्राप्तौ एत-न्निगदपाठस्य वैयर्थ्यं स्यात् । न हि यागोत्पत्तिवाक्योदितदेवतापाठनिग-देन तत्तद्देवतास्मरणरूपे दृष्टकार्ये सम्भवति सति तस्यादृष्टार्थत्वकल्पनं न्याय्यम् । तस्मादुक्तलिङ्गदर्शनमपि तस्य सन्निपत्योपकारकाङ्गत्वसाधकमिति भावः ॥ १५ ॥

अग्नियागस्यारादुपकारकत्वाधिकरणम् ॥ ८ ॥

## तथाज्यभागाग्निरपीति चेत् ॥ १६ ॥

दर्शपूर्णमासप्रकरणे ' आज्यभागौ यजती'ति श्रूयते । तथा—' तौ होचतुः, किमावयोस्ततः स्यादिति । यस्यै कस्यैचिद्देवतायै हविर्निर्वपं-स्तद्वान् पुरस्तादाज्यस्य यजानिति । तस्माद्यस्यै कस्यैचिद्देवतायै हविर्निर्वपन्ति ते पुरस्तादाज्यभागावग्नीषोमाभ्यां यजंति । तौ न सौम्येऽध्वरे न पशौ ' इति । अत्र आज्यभागाग्निः—आज्यभागान्तर्गताग्नियागः, तथा—उत्तम-प्रयाजवत् सन्निपत्योपकारकः । उत्तमप्रयाजसिद्धान्तसाधकहेतुनेति शेषः । इति चेत्—॥ १६ ॥

## सि० ॥ व्यपदेशाद्देवतान्तरम् ॥ १७ ॥

न । ' अग्निमग्न आवह, सोममावह, अग्निमावह ' इति निगदेषु भेदेन व्यपदेशात्—निर्देशात्, देवतान्तरं—प्रधानदेवतातः भिन्नमित्यर्थः । लोकेऽपि ब्राह्मण आगतः, शूद्र आगतः, ब्राह्मण आगत इति श्रुत्वा प्रथम-वाक्यवैयर्थ्यभिया ब्राह्मणद्वयागमनं प्रत्येति । तस्मादाज्यभागाग्निः संनिपत्यो-पकारक इति विकृतौ न तस्य भावः ॥ १७ ॥

## समत्वाच्च ॥ १८ ॥

समत्वात्—' अभीषू वा एतौ यज्ञस्य यदाघारौ, चक्षुषी वा एते यज्ञस्य यदाज्यभागौ, यत्प्रयाजानुयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते' इत्यारादुपकारकप्रङ्क्तिनीवद्धत्वादपि आरादुपकारकावाज्यभागाविति सिद्धम् ॥ १८ ॥

पशुपुरोडाशयागस्य तद्यागीयदेवतासंस्कारकत्वाधिकरणम् ॥९॥

## पू० प० ॥ पशावपीति चेत् ॥ १९ ॥

ज्योतिष्टोमाङ्गभूताग्नीषोमीयपशौ ' अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति ' इति श्रूयते । अत्र पशावपि— पशुपुरोडाशेऽपि आरादुपकारकत्वम् । यथा आज्यभागयोरारादुपकारकत्वं तथास्यापीत्यर्थः । व्यपदेशात्— आग्नीषोमीयमिति द्विरभ्यासात् । ' आसोमं वहंत्यग्निना प्रतितिष्ठते ' इत्यर्थवादेन - देवताभेद-प्रतिपादनाच्चारादुपकारकत्वम् । न संस्कारकर्मत्वमिति चेत् ॥ १९ ॥

## न तद्भूतवचनात् ॥ २० ॥

न देवतयाभेदः । अपि त्वभेद एव । कस्मात् ? ' यदेवत्यः पशु-स्तद्देवत्यः पशुपुरोडाशः ' इति तद्भूतवचनात्—देवतैक्यप्रतिपादक-वचनात् ॥ २० ॥

## लिङ्गदर्शनाच्च ॥ २१ ॥

' इन्द्राय वज्रिणे ललाम वृषभमालभेत ' इत्यस्य पशुयागस्य पशु-पुरोडाशकर्मे ' इन्द्रं स्तुहि वज्रिणं स्तोमपृष्ठम् । स्तुहि शूरं वज्रिणं सुप्रती-तम् ' इति सम्प्रतिपन्नैकदेवतार्थ याज्यानुवाक्याद्वय समाम्नातम् । तत्संस्कार-पक्ष एवोपपद्यते । न देवताभेदे । तस्मात् पशुयागीयदेवतासंस्कारार्थः पशुपुरोडाशयाग इति भावः ॥ २१ ॥

## गुणो वा स्यात्कपालवद्गुणभूतविकाराच्च ॥२२॥

प्रकारान्तरेण पुनः पूर्वपक्षः। **गुणो वा**— एकैव देवता यागद्वये अङ्गं स्यात्। **कपालवत्**— यथा एकमेव कपालं हविःश्रपणे तुषोपवापे चांगम्, तद्वदेकैवाग्नीषोमदेवता पशुयागे पुरोडाशयागे च गुणभूता भविष्यति। **गुणभूतविकाराच्च**— अयं पशुपुरोडाशयागः प्राकृताग्नीषोमीयविकारः। प्रकृतौ अग्नीषोमीयदेवता अङ्गम्। अत्र संस्कारपक्षे तस्याः प्रधानत्वं वाच्यम्। तथा च *विसदृशत्वात्*— द्वयोः सादृश्याभावात्तद्धर्माणामत्रातिदेशो न स्यात्। अतोऽप्यंगं देवतेत्यर्थः। किंच, संस्कारपक्षे सौत्रामण्यामाश्विनसारस्वतसुत्रामदेवताकेषु पशुषु भिन्नदेवताका ऐन्द्रवारुणसावित्राः पुरोडाशाः संस्कारासम्भवात्पशुप्रकरणात्प्रयाजानुमन्त्रणवदुत्कृष्येरन्। नैवोत्कृष्यंते। तत्रैवानुष्ठीयन्ते। तदारादुपकारकपक्ष एवोपपन्नं भवति। तद्वदत्राप्यारादुपकारकत्वं वाच्यम्। न संनिपत्योपकारकत्वमिति॥ २२॥

## अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत स्वाहाकारवदङ्गानामर्थसंयोगात्॥ २३॥

अपि वेत्युक्तपक्षव्यावृत्तिः। **शेषभूतत्वात्**—यागस्य देवताङ्गत्वात्, **तत्संस्कारः**—देवतासंस्कारः प्रतीयेत। **स्वाहाकारवत्**—उत्तमप्रयाजवदङ्गानामर्थेन प्रयोजनेन संयोगात्। यथोत्तमप्रयाजे देवतासंस्कारद्वारा गुणकर्मत्वे सम्भवति सति प्रधानकर्मत्वमनुचितम्। सम्भवति दृष्टफले अन्याय्यादृष्टकल्पनापत्तेः। एवं प्रकृतेऽपि तथाऽङ्गत्वमित्यभिप्रायः॥ २३॥

## व्यृद्धवचनं च विप्रतिपत्तौ तदर्थत्वात्॥ २४॥

सौत्रामण्यां पशुपुरोडाशीयदेवताया विप्रतिपत्तौ सत्यां 'यद्वै सौत्रामण्या व्यृद्धं तदस्याः समृद्धम्' व्यृद्धं तु—'यदन्यदेवत्याः पुरोडाशा अन्यदेवत्याः पशवः' इति व्यृद्धत्ववचनं देवतासंस्कारपक्षे उपपन्नं भवति। नारादुपकारकत्वे अर्थात्प्रधानपक्षे। तत्पक्षे अङ्गत्वाभावादिति बोध्यम्॥ २४॥

## गुणेऽपीति चेत्॥ २५॥

गुणेऽपि—पुरोडाशयागे देवताया गुणेऽपि-अङ्गत्वेऽपि तल्लोपाभावा-द्वुभयोः पक्षयोः समानो दोषो व्यङ्गत्वरूप इति चेत्—॥ २५ ॥

## नासंहानात्कपालवत् ॥ २६ ॥

वैषम्यान्न दोषः समः। तथा हि—यथा एकेन कपालेन तुषोप-वापे क्रियमाणे अन्यस्य हानिर्नास्ति। तथारादुपकारकपक्षे अन्यदेवताया पुरोडाशयागे क्रियमाणे पशुयागदेवताया असंहानात्— हानेरभावात्। स्वपक्षे तु पशुयागदेवतायाः संस्काररूपपशुपुरोडाशयागः अन्यदेवतया इति तथा पशुयागीयदेवतास्मरणासम्भवात्संस्कारलोप इति व्यङ्गशब्दस्वारस्यं बोध्यमिति भावः ॥ २६ ॥

## ग्रहाणां च सम्प्रतिपत्तौ तद्वचनं तदर्थत्वात् ॥२७॥

सौत्रामण्यां ग्रहाणां— सुराग्रहाणां, सम्प्रतिपत्तौ तद्वचनं— समदेवताकत्वविषयकं 'नैतेषां पशूनां पुरोडाशा भवन्ति, ग्रहपुरोडा ह्येते' इति वचनं संस्कारपक्ष एवोपपन्नं भवति। तदर्थत्वात्— पशुयागदेवता-संस्काररूपतद्देवताकपुरोडाशाभावात् व्यङ्गमिति शङ्कानिवारकं हीदं ग्रह-पुरोडाशा' इति वाक्यं संस्कारभावपक्षे नोपपद्यत इति भावः ॥ २७ ॥

## ग्रहाभावे तद्वचनम् ॥ २८ ॥

सौत्रामण्यामाश्विनसारस्वतैन्द्रान् त्रीन् पशुयागान् विधाय तेषां ग्रह-पुराडाशांश्च विधाय बार्हस्पत्यश्चतुर्थः पशुयागो विहितः। तत्र 'पुरोडाश-वानेष पशुर्भवति। न ह्येतस्य ग्रहं गृह्णति' इति श्रुतम्। तत्र ग्रहाभावे पुरोडाशवत्त्वं हेतुत्वेन कथितम्। तेन पुरोडाशग्र-हान्यतरसंस्कृताया एव देवताया. पशुयागाङ्गत्वं, नान्यथेति सिध्यति। अतस्तद्वचनमपि प्रकृतार्थसाधकं लिङ्गमिति भावः ॥ २८ ॥

## देवतायाश्च हेतुत्वं प्रसिद्धं तेन दर्शयति ॥ २९ ॥

किञ्च, 'अग्निभ्यः कामेभ्यः पशव आलभ्यन्ते। कामाय वा अग्नये पुरोडाशा भवन्ति' इति श्रुतम्। तत्रोत्तरवाक्ये यतः पुरोडाशयागे अग्निकामो देवता अतः पशुयागेऽपि सैव देवतेति देवतायाः प्रसिद्धं हेतुत्वं तेन—वै इत्यनेन दर्शयतीतीदमपि संस्कारार्थत्वे अपरं लिङ्गमित्यर्थः ॥२९॥

## अविरुद्धोपपत्तिरर्थापत्तेः शृतवद्गुणभूतविकारः स्यात् ॥ ३० ॥

गुणभूतयोर्धर्मस्य प्रधानभूतदेवताकयागेनानुवृत्तिरिति यदुक्तं तन्न। अङ्गभूतयोरप्यग्नीषोमयोर्धर्माणाम् उपपत्तिः—तत्रानुवृत्तिरविरुद्धा। अर्थापत्तेः-अर्थस्य-तत्तद्वारस्य-आपत्तेः--प्राप्तेस्सत्त्वादित्यर्थः। यथा 'शृते चरुम्, दधंश्चरुम्' इति प्रधानार्थयोः दधिशृतयोः प्रणीताकार्यकारित्वात्प्रणीताधर्मप्राप्तिस्तद्वत्। यतो गुणभूतविकारः—गुणभूतस्य प्राकृताग्नीषोमीयस्य विकारः विकृतिः पशुयागो विधत्त इति ॥ ३० ॥

## स ह्यर्थः स्यादुभयोः श्रुतिभूतत्वाद्विप्रतिपत्तौ तादर्थ्याद्विकारत्वमुक्तं तस्यार्थवादत्वात् ॥ ३१ ॥

गुणो वा स्यादिति (१०।१।२२) सूत्रस्यचकारसूचितदूषणपरिहारार्थकमिदं सूत्रम्। सः—पशुपुरोडाशः, ह्यर्थः— देवतासंस्कारार्थः छिद्रापिधानार्थश्चेति द्विप्रयोजनः। इत्युभयोरपि कार्ययोः श्रुतिभूतत्वात्संस्कारस्य श्रौतत्वं दर्शितं— 'अथो पशोरेव छिद्रमपि दधाति' इत्यनेन वाक्येन। इत्थं चान्यदेवताके यागे देवतासंस्काररूपकार्याभावेऽपि तादर्थ्यात्— छिद्रापिधानात्मककार्यार्थत्वात् विकारत्वं— तदङ्गत्वं पशुपुरोडाशस्येति पूषानुमन्त्रणवत्रोत्कर्षस्तस्येति भावः ॥ ३१ ॥

## विप्रतिपत्तौ तासामाख्याविकारः स्यात् ॥३२॥

'आश्विनं धूम्रमालभेत, सारस्वतं मेषम्, ऐन्द्रमृषभम्' इति पशुयागोत्पत्तिवाक्यम्। 'ऐन्द्रमेकादशकपालं निर्वपति, सावित्रं द्वादशकपालम्,

वारुण दशकपालम्' इति च पशुपुरोडाशयागोत्पत्तिवाक्यमिति **विप्रतिपत्तौ**—पशुयागपशुपुरोडाशयागसम्बन्धिदेवताबोधकशब्दानां भिन्नानुपूर्वीकत्वेऽपि **तासां**—देवतानाम् **आख्याविकारः**—समाख्याविकार—पशुयागदेवतानामेव पशुपुरोडाशयागदेवतानामामास स्यात्। गोशब्दस्य गावीतिवत्। ऐन्द्रशब्दस्तूभयत्राविकृत एव। वचनादिन्द्र पुरोडाशयागानां प्रथम इति स्थानभेदमात्रम्। सारस्वतमित्यत्र सकारवकारादिवर्णषट्कघटित त्वात्साविवत्स्य तदाभासत्वम्। आश्विनमित्यत्र वकारादिवर्णचतुष्टयघटितत्वाद्वारुणस्य तदाभासत्वम्। इत्थं पुरोडाशवाक्यस्थशब्दरूपैराभासैरपि पशुयागीया एव देवता बुध्यन्त इति न कोऽप्यनुपपत्तिगन्ध इति भाव ॥ ३२ ॥

## अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवत्यः ॥ ३३ ॥

**अभ्यासः** प्रकृतित प्राप्तस्य पुरोडाशयागस्यायमभ्यास आवृत्ति। तत्र **एकदेशः**—महयाग पशुदेवत्य एव। तद्भिन्नांशस्त्वन्यदेवत्य पुरोडाश। **प्रयाजवत्**—यथा एकादशप्रयाजे पशुयागे प्राकृता एव प्रयाजा अभ्यस्यन्ते। तत्र चैकदेशे पञ्चपर्यन्त प्राकृतदेवतासम्बन्ध, तदन्यैकदेशे 'दुरुषासानक्तेत्येवमादय भिन्नदेवता एव सम्बध्यन्ते तद्वत्। अत्र प्रकृतितश्चादकशास्त्रेण पुरोडाशद्रव्यक पशुयागदेवताको याग प्राप्त। तत्र आश्विनं ग्रह गृह्णातीति देवतासम्बन्ध द्रव्यं च विहितम्। तस्य यागाकाङ्क्षाया यागबोधकाभावा प्राकृतेन सम्बध्यते। तदंशेन देवतासंस्कार सम्भवति। तत्रैन्द्रमेकादशकपाल निर्वपतीति प्राकृतद्रव्यविशिष्टयागमनूद्य देवताविधिरिति अभ्यास उपपन्न इति समाधानान्तरं बोध्यमिति भाव ॥ ३३ ॥

### सौर्ययागे चरुशब्दवाच्यौदनेन प्राकृतहविर्बाधाधिकरणम् ॥१०॥

## सि० ॥ चरुर्हविर्विकारः स्यादिज्यासंयोगात् ॥३४॥

'सौर्यं चरु निर्वपेद् ब्रह्मवर्चसकाम' इत्याग्नेयप्रकृतिक सूर्यदेवताकश्चरुद्रव्यको विकृतियागो विहित, ब्रह्मवर्चसफलक। अस्मिन् वाक्ये श्रूयमाणश्चरुशब्द हव्यविकार—'अग्निमुखेन देवेभ्यो दीयमान-

मन्नं हवि ' रिति वचनात् हविर्विकारवाची ओदनं ब्रूते । उत ' चरुर्हव्यान्नभाण्डयोः ' इति कोशात् कपालविकृतिं स्थालीं बोधयतीति संशये सिद्धान्तः । **चरुः**— चरुपदवाच्यः **हविर्विकारः** ओदनः प्रकृतपुरोडाशकार्यकारी स्यात् । कुतः ? **इज्यासंयोगात्**—प्रकृतौ पुरोडाशे यागसम्बन्धोऽस्ति । अत्रापि तद्वत्सौर्यमिति तद्धितेन यागसंयोगबोधनात् अनवस्रावितान्तरूष्मपाकौदनबोधकश्चरुशब्द इति भावः ॥ ३४ ॥

## पू० प० ॥ प्रसिद्धग्रहणत्वाच्च ॥ ३५ ॥

निघण्टुकाराः उखा स्थाली चरुरिति शब्दान् पर्यायतयोपदिशन्ति । *लोके च चरुशब्दः स्थाल्यां प्रसिद्धः । अतस्तस्यैव ग्रहणयोग्यत्वात् स्थाली* एव पुरोडाशकार्यकारी स्यादित्यर्थः ॥ ३५ ॥

## ओदनो वान्नसंयोगात् ॥ ३६ ॥

**ओदनो वा**—ओदन एव पुरोडाशकार्यकारी । न स्थाली । **अन्नसंयोगात्**—अन्नस्यादनयोग्यस्य संयोगात्—यागेन सम्बन्धात् । अदनीयेनैव द्रव्येण शिष्टा यागान् कुर्वन्ति । नान्येनेति भावः ॥ ३६ ॥

## न द्व्यर्थत्वात् ॥ ३७ ॥

न ओदनो हविर्विकारः । **द्व्यर्थत्वात्**—चरुशब्दस्य नानार्थत्वापत्तेरित्यर्थः ॥ ३७ ॥

## कपालविकारो वा विशये अर्थोपपत्तिभ्याम् ॥३८॥

उक्तरीत्या पक्षद्वयेऽपि दोषदर्शनात् पूर्वोक्तसंशये हविर्विकारपक्षस्यासम्भवात् कपालविकार एव स्याच्चरुः । कुतः ? **अर्थोपपत्तिभ्याम्**—अर्थस्य-सौर्यमित्यत्र सूर्यदेवतोद्देश्यकं यद्धविस्तदाधारत्वरूपसम्बन्धस्य, श्रपणयोग्यतायाश्च सत्त्वात् । प्राकृतपुरोडाशवदत्र कपाले न श्रपणम् । किन्तु स्थाल्याम् । अतः कपालविकारश्चरुरिति भावः ॥ ३८ ॥

## गुणमुख्यविशेषाच्च ॥ ३९ ॥

प्रकृतौ कपालं गुणः, पुरोडाशः प्रधानम् । तयोरतिदेशः सौर्ययागे । तत्र चरुशब्देनान्यतरस्य बाधे कर्तव्ये प्रधानबाधापेक्षया तदङ्गकपालबाध एव न्याय्यः । इति गुणमुख्यविशेषादङ्गलोप इत्यर्थः । इति युक्त्यन्तरमत्र पक्षे ॥ ३९ ॥

## तच्छ्रुतौ चान्यहविष्ट्वात् ॥ ४० ॥

' प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः ' इत्यत्र **तच्छ्रुतौ**– श्रुतचरुशब्दार्थे, **अन्यहविष्ट्वात्**– अन्यस्य— चरुविशेषणीभूतान्यस्य शतकृष्णलस्य हविष्ट्वात्—हविर्द्रव्यत्वाच्चरुरपि हविर्विकारः । अतश्चरुशब्दस्य स्थालीपरत्वार्थक. प्रागुक्तपक्षोऽसम्भवीति भावः ॥ ४० ॥

## लिङ्गदर्शनाच्च ॥ ४१ ॥

' पृश्नीनां दुग्धे प्रैयंगवं चरुं निर्वपेन्मरुद्भ्यो ग्रामकामः ' इत्यत्र प्रैयंगवं प्रियङ्गुविकारमिदं चरोर्विशेषणं श्रुतम् । न हि स्थाली प्रियङ्गुविकारो भवितुमर्हतीति लिङ्गदर्शनादपि न कपालविकारश्चरुः ॥ ४१ ॥

## ओदनो वा प्रयुक्तत्वात् ॥ ४२ ॥

**ओदनो वा**–ओदन एव चरुशब्दार्थः हविर्विकारः । कुतः ? **प्रयुक्तत्वात्**—' सास्य देवतेति ( पा. सू. ४।२।२४। ) देवतार्थे तद्धितप्रयोगात् । यदि देवतातद्धितो न स्यात्तर्हि देवताया अलाभात् ' ईषामालभेत, वत्समालभेतेतिवद्यागो न स्यात । इति कपालविकारप्रत्याख्यानमेवेदं ज्ञेयम ॥४२॥

## अपूर्वव्यपदेशाच्च ॥ ४३ ॥

' पुरोडाशेन वै देवा अमुष्मिल्लोक आर्ध्नुवन् चरुणाऽस्मिन्, यः कामयेतामुष्मिन् लोक ऋध्नुयामिति स पुरोडाशं कुर्वीत । यः कामयेताऽस्मिल्लोक ऋध्नुयामिति स चरुं कुर्वीत ' इत्यत्र **अपूर्वव्यपदेशात्**— चरौ पुरोडाशापूर्वसदृशापूर्वजनकत्वव्यपदेशादपि चरुः पुरोडाशसदृशो भवितुमर्हति । न कपालसदृश इत्यपि साधकान्तरमत्रेति बोध्यम् ॥ ४३ ॥

## तथा च लिङ्गदर्शनम् ॥ ४४ ॥

**तथा च**— इत्थं कपालविकारदूषणेन ओदनश्चरुशब्दार्थः, न स्थालीति सिद्धान्तितम् । तत्रैव ज्योतिष्टोमाङ्गप्रायणीयेष्टया ' आदित्यः प्रायणीयश्चरुरिति विधायानन्तरं–' आज्यस्यैव चरुमभिपूर्य चतुर आज्यभागान् यजति । पथ्यां स्वस्तिमिष्ट्वा अग्नीषोमौ यजति । अग्नीषोमाविष्ट्वा सवितारं यजति । आदितिमोदनेन ' इत्यत्रादित्यश्चरुरिति प्राप्तं चरुमोदनशब्देन ब्रुवन्नोदनेन हविर्विक्रियते, न कपालेनेति लिङ्गदर्शनात्सिध्यति । तस्माच्चरुरोदनः । न स्थालीति भावः ॥ ४४ ॥

### सौर्यचरोः स्थाल्यामेव पाकाधिकरणम् ॥ ११ ॥

## स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात् ॥४५॥

सः ओदनश्चरुः कुत्र पक्तव्य इत्याशङ्कायां पूर्वपक्षः । **सः**— ओदनशब्दवाच्यश्चरुः, **कपाले**—कपालेषु **स्यात्**—पक्तव्य इत्यर्थः । कुतः ? **प्रकृत्या**— दर्शपूर्णमासप्रकृतिकत्वस्य प्राप्तत्वात् तद्बाधकस्यान्यस्य **चाश्रुतित्वात्**–शास्त्राभावात् ॥ ४५ ॥

## एकस्मिन् वा विप्रतिषेधात् ॥ ४६ ॥

**विप्रतिषेधात्**–यदि बहुषु कपालेषु जलधारणपूर्वकौदननिष्पत्तेर्वाधितत्वेन विरोधान्न शक्यते पक्तुं तर्ह्यष्टसङ्ख्यां बाधित्वा **एकस्मिन्वा**— अतिदिष्टे कपालमात्रे पक्तव्य इति द्वितीयः पक्षः ॥ ४६ ॥

## न वार्थान्तरसंयोगादपूपे पाकसंयुक्तं धारणार्थं चरौ भवति तत्राथात्पात्रलाभः स्यादनियमोऽविशेषात् ॥ ४७ ॥

द्वितीयं निरस्य तृतीयं पक्षमुत्थापयति । न वा कपाले पक्तव्यश्चरुः । कुतः ? **अर्थान्तरसंयोगात् अपूपे**–पुरोडाशपाके यत्कपालमुपादीयते तद्गतोष्मणः संयोगात् अपूपस्य पाकः सम्पद्यते । चरौ तु **पाकसंयुक्तं**—

पाकसाधनोष्मणा संयुक्तं यत् तद्धारणार्थे—धारणयोग्यत्रस्त्वपेक्षितं भवति । तत्र–चरौ, अर्थात्—अर्थापत्तिप्रमाणात्, पात्रलाभः—तत्प्राप्तिः स्यात । तत्र स्थाल्येवेत्यनियमः । अविशेषात्–नियामकविशेषाभावात् । पाकसाधनोष्मसंयुक्तजलादिधारणयोग्ये स्थाल्यां कटाहादौ वा यत्रकुत्रापि पक्तव्यमित्याशयः ॥ ४७ ॥

## सि० ॥ चरौ वा लिङ्गदर्शनात् ॥ ४८ ॥

स्थाल्यामेव चरुः पक्तव्यः । कुतः ? चरौ—चरुपाकविषये, लिङ्गदर्शनात्–' यासु स्थालीषु सोमाः स्युस्तासु चरवः स्युः ' इति सोमस्थालीषु चरुपाकं ब्रुवन् पाकसाधनं स्थालीति दर्शयति लिङ्गम् ॥ ४८ ॥

सौर्यचरौ पेषणबाधाधिकरणम् ॥ १२ ॥

## तस्मिन् पेषणमनर्थलोपात्स्यात् ॥ ४९ ॥

तस्मिन्–चरौ पेषणं–चूर्णनं स्यात् । अनर्थलोपात्-अर्थस्य-चूर्णाभावस्य कृष्णलेष्विव लोपाभावात् । कर्तुं शक्यत्वादिति यावत् ॥ ४९ ॥

## सि० ॥ अक्रिया वा अपूपहेतुत्वात् ॥५०॥

अक्रिया वा–चरौ पेषणं नैव कर्तव्यम् । कुतः ? अपूपहेतुत्वात्–प्राकृतपेषणस्यापूपहेतुत्वेन चरौ अपूपाभावादिति भावः ॥ ५० ॥

सौर्यचरौ संयवनबाधाधिकरणम् ॥ १३ ॥

## पिण्डार्थत्वाच्च संयवनम् ॥ ५१ ॥

' प्रणीताभिः हवींषि संयौतीति विहितसंयवनस्य-पिष्टेउदकमिश्रणस्य, प्रकृतौ पिण्डार्थत्वाच्चरौ पिण्डाभावात्संयवनं निवर्तत इत्यर्थः ॥ ५१ ॥

सौर्यचरौ संवपनबाधाधिकरणम् ॥ १४ ॥

## संवपनं च तादर्थ्यात् ॥ ५२ ॥

'देवस्य त्वा संवपामीति विहितं **संवपनमपि**—उदकमिश्रणाय पिष्टस्य पात्रे प्रक्षेपः, चरौ निवर्तते । **तादर्थ्यात्**—तस्य पिण्डार्थत्वाच्चरौ तत्प्रयोजनाभावादित्यर्थः ॥ ५२ ॥

### सौर्यचरौ सन्तापनबाधाधिकरणम् ॥ १५ ॥

## सन्तापनमधःश्रपणात् ॥ ५३ ॥

वसूनां रुद्राणामादित्यानां भृगूणामङ्गिरसां घर्मस्य तपसा तप्यध्वम्' इत्युपदिष्टं **सन्तापनं**—कपालानामङ्गारैः प्रतापनम्, चरौ निवर्तते । कुतः ? प्रकृताविदं कपालानामुपरि क्रियते । अत्र त्वधः । अतो न प्राकृतं तच्चोदकोऽत्र प्रापयतीति भावः ॥ ५३ ॥

### सौर्यचरावुपधानबाधाधिकरणम् ॥ १६ ॥

## उपधानं च तादर्थ्यात् ॥ ५४ ॥

कपालोपधानस्य—अङ्गारेषु कपालस्थापनस्य, **तादर्थ्यात्**—हविष्या-कार्यत्वात् तस्य स्थाल्यैव निर्वाहात्तन्निवर्तत इत्यर्थः ॥ ५४ ॥

### सौर्यचरौ प्रथनश्लक्ष्णीकरणयोर्बाधाधिकरणम् ॥ १७ ॥

## पृथुश्लक्ष्णे चानपूपत्वात् ॥ ५५ ॥

प्रथनं—प्रसारणम् । श्लक्ष्णीकरणं— मार्जनम् ।

'उरु प्रथस्वेति प्रथनम् । 'सं ते तन्वा तनूः सृज्यतामिति त्रिः परिमार्ष्टीति' मार्जनं च चरौ निवर्तते । **अनपूपत्वात्**—चरोरपूपाभिन्नत्वात् । तयोरपूपार्थत्वादिति ॥ ५५ ॥

### सौर्यचरौ भस्माङ्गाराध्यारोपबाधाधिकरणम् ॥ १८ ॥

## अभ्यूहश्चोपरिपाकार्थत्वात् ॥ ५६ ॥

'वेदेन भस्माङ्गारानभ्यूहति' इति प्रकृतौ श्रुतमभ्यूहनमपि-- भस्मना अङ्गारैश्चोपर्याच्छादनम्, चरौ निवर्तते । तस्य उपरिपाकार्थत्वाच्चरौ उपरिपाकाभावादिति भावः ॥ ५६ ॥

सौर्यचरौ ज्वलनबाधाधिकरणम् ॥ १९ ॥

## तथा च ज्वलनम् ॥ ५७ ॥

प्रकृतौ 'दर्भपिञ्जूलैरवज्वलयतीति' श्रुतमवज्वलनं—दर्भपिञ्जूलैः प्रज्वालनम्, चरौ निवर्तते। तथा—उपरिष्टाकाभावादित्यर्थः ॥ ५७ ॥

सौर्यचराबुध्दत्यासादनबाधाधिकरणम् ॥ २० ॥

## व्युध्दृत्याऽऽसादनं च प्रकृतावश्रुतित्वात् ॥५८॥

आसादनम्— कपालेभ्यः पुरोडाशं पृथक्कृत्वा तर्वेद्यामवस्थापनम्। प्रकृतौ 'अन्तर्वेद्यां हवींष्यासादयतीत्येतावन्मात्रं श्रुतम्। उध्दृत्येति न श्रुतम्। उद्धरणं स्वार्थिकं पुरोडाशस्य, कपालेष्ववस्थापितत्वात्तस्य आर्थिकं चोदको न प्रापयति। अतः अश्रुतित्वात्—श्रुतिबोधितत्वाभावात् चरौ उध्दृत्याऽऽसादनं नास्ति। आसादनं परमस्तीत्यर्थः ॥ ५८ ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां दशमाध्यायस्य प्रथमः पादः ॥ १ ॥ श्रीः ॥

---

# ॥ अथ दशमाध्यायस्य द्वितीयः पादः ॥

कृष्णले चरौ पाकानुष्ठानाधिकरणम् ॥ १ ॥

## कृष्णलेष्वर्थलोपादपाकः स्यात् ॥ १ ॥

प्रथमे पादे द्वारलोपप्रयुक्तो बाधो विचारितः। द्वितीयेऽस्मिंस्तदपवादो विमृश्यते। 'प्राजापत्यं चरुं निर्वपेद् घृते शतकृष्णलमायुष्कामः' इति विहितायुष्कामेष्टौ शतकृष्णलेषु द्रव्येषु अपाकः— पाको न स्यात्,

**अर्थलोपात्** — अर्थस्य— पाककार्यस्य विक्लृत्यादेर्लोपेन चोदकप्राप्त्य-भावात्। पूषानुमन्त्रणवदुत्कर्षेणापि चारितार्थ्याद् 'घृते श्रपयती' त्यस्य न वैयर्थ्यमिति भावः ॥ १ ॥

## सि० ॥ स्याद्वा प्रत्यक्षशिष्टत्वात्प्रदानवत् ॥२॥

**स्याद्वा**— यथा अनदनीयस्य द्रव्यस्य प्रत्यक्षवचनविहितत्वात्प्रदानं सिद्धं तथा ' घृते श्रपयतीति प्रत्यक्षवचनेन पाकस्य विहितत्वात् स्यादेव कृष्णलेषु पाकः। न चोत्कर्षेण सार्थक्यं तस्य। यत्रोत्कर्षस्तत्रापि चोदकादेव प्राप्तिसम्भवेन तद्वचनस्य वैयर्थ्यं दुर्वारमिति भावः ॥ २ ॥

कृष्णलेषूपस्तरणाभिघारणयोरभावाधिकरणम् ॥ २ ॥

## सि० ॥ उपस्तरणाभिघारयोरमृतार्थत्वाद-कर्म स्यात् ॥ ३ ॥

' यदुपस्तृणाति । अभिघारयति । अमृताहुतिमेवैनां करोति ' इत्यमृतेनोपमितयोरुपस्तरणाभिघारणयोरमृतार्थत्वात्–स्वाद्वर्थत्वात्,कृष्ण-लेषु तदभावात् अकर्म—प्राकृतयोरपि तयोरननुष्ठानं स्यात् ॥ ३ ॥

## पू० प० ॥ क्रियेत वार्थवादत्वात्तयोः संसर्ग-हेतुत्वात् ॥ ४ ॥

अमृतीभाववाक्यस्य अर्थवादत्वात् तयोः— उपस्तरणाभिघारयोः, हविःसम्बन्धमात्रहेतुत्वस्य प्रतीयमानत्वात्ते क्रियेत एवेति ॥ ४ ॥

## अकर्म वा चतुर्भिराप्तिवचनात्सह पूर्णं पुन-श्चतुरवत्तम् ॥ ५ ॥

**अकर्म वा**— उपस्तरणाभिघारयोरननुष्ठानमेव। कुतः ? चतुर्भिराप्तिवचनात्–प्रकृतौ चतुरवत्तसम्पत्तये ते क्रियेते। अत्र तु ' चत्वारि कृष्णलानि अवद्यति। चतुरवत्तस्याप्त्यै ' इति वचनात्तेनैव चतुरवत्तलाभात्

पुनस्ताभ्यां सह पूर्णं चतुरवत्तं चेत् कृष्णलचतुष्टयावदानेन चतुरवत्तासम्पत्तिबोधकं वचनं व्यर्थं स्यात्। अविद्यमानस्यैवार्थान्तरेणानुग्रहो भवति। न तु विद्यमानस्येति तयोर्निवृत्तिरेवेति भावः ॥ ५ ॥

## क्रिया वा मुख्यावदानपरिमाणात्सामान्यात् तद्गुणत्वम् ॥ ६ ॥

**क्रिया वा**— उपस्तरणाभिघारयोः अनुष्ठानमेव। कुतः? **मुख्यावदानपरिमाणात्** — मुख्यस्य हविषः यदवदानं तत् कियत्कर्तव्यमित्याकाङ्क्षाया प्रकृतित. अङ्गुष्ठपर्वमात्रप्राप्तौ तद्बाधकत्वेन चतुःसङ्ख्यारूपपरिमाणबोधकत्वात्। **सामान्यात्**— कियदवदेयमित्याकाङ्क्षापूरकत्वेन साजात्यात्, तस्य परिमाणस्य **तद्गुणत्वम्**--द्रव्याङ्गत्वम्। न तद्बोधकं शास्त्रं मुख्यं द्रव्यं बाधितुं समर्थमिति पुनः पूर्वपक्षोत्थापनमिति ॥ ६ ॥

## तेषां चैकावदानत्वात् ॥ ७ ॥

**तेषां**—चतुर्णां कृष्णलानाम्, **एकावदानत्वात्**— एकावदानत्वविधानान्न तयोर्निवृत्तिः। 'चत्वारि कृष्णलान्येकमवदान' मिति तद्विधायकं वाक्यं तत्र साधकोत्तरम् ॥ ७ ॥

## आप्तिः सङ्ख्यासमानत्वात् ॥ ८ ॥

**आप्तिः**—आप्तिवचनं **सङ्ख्यासमानत्वात्**--चतुष्ट्वमुभयत्र समानमिति तेन कृष्णलनिष्ठसङ्ख्या स्तूयते। 'द्वादश द्वादशानि जुहोति द्वादशमासाः संवत्सरः' इतिवदित्यर्थः ॥ ८ ॥

## सतोस्त्वाप्तिवचनं व्यर्थम् ॥ ९ ॥

तयोः सतोः प्राप्तिवचनं, व्यर्थमेव। तथा हि—अविद्यमाने वसिष्ठत्वे अयं वसिष्ठ इति तेन रूपेण स्तुतिः सम्भवति। न वसिष्ठे वसिष्ठत्वेन रूपेण स्तुतिः। तथा अविद्यमाने चतुरवत्ते तेन रूपेण स्तुतिः सङ्गच्छते। न विद्यमाने। इत्याप्तिवचनं तयोः सतो व्यर्थमेवेति भावः ॥ ९ ॥

## विकल्पस्त्वेकावदानत्वात् ॥१०॥

विकल्पस्तु—यथा आप्तिवचनं तौ निवर्तयति । एवमेकावदानवचनं तौ व्यवस्थापयतीति साम्याद्विकल्प एव स्यादिति पुनः पूर्वपक्षोत्थितिः ॥१०॥

## सर्वविकारे त्वभ्यासानर्थक्यं हविषो हीतरस्य स्यादपि वा स्विष्टकृतः स्यादितरस्यान्याय्यत्वात् ॥ ११ ॥

**सर्वविकारे**—सर्वस्य चतुरवदानस्य विकारे सति तु—प्राकृतचतुरवदानबाधके सकृदवदाने सतीति यावत् । ' चत्वारि चत्वारि कृष्णलान्यवद्यतीति **अभ्यासस्य आनर्थक्यम्** । कृष्णलचतुष्टयसकृदवदानं चतुरवत्तं सम्पादयति । तदा द्वितीयावदानाभावादभ्यासो व्यर्थः स्यादित्यर्थः । अस्मन्मते प्राकृतावदानचतुष्टयस्याभावात् **इतरस्य हविषः**—द्वितीयहविरवदानस्य मानप्राप्त्यर्थमभ्यास उपपद्यते । **अपि वा**— त्वन्मतेऽपि स्विष्टकृदवदानार्थत्वेन अभ्यास उपपन्नः स्यादिति चेन्न । **इतरस्य**—स्विष्टकृदर्थस्य अन्याय्यत्वेन वक्तुमशक्यत्वात् । प्रधानप्रकरणं परित्यज्य अन्यार्थत्वकल्पनमन्याय्यमेवेति भावः । तस्मादुपस्तरणाभिघारणे स्यातामिति ॥ ११ ॥

## सि० ॥ अकर्म वा संसर्गार्थनिवृत्तित्वात्तस्मादाप्तिसमर्थत्वम् ॥ १२ ॥

**अकर्म वा**—उपस्तरणाभिघारणयोरननुष्ठानमेव । कुतः ? **संसर्गार्थनिवृत्तित्वात्**— संसर्गः स्रुचि स्रुक्स्थानां पुरोडाशावयवानां मा भूदिति उपस्तरणेन स्रुक् स्निग्धीक्रियते । अभिघारणेन च स्रुच्यसंयुक्तं सत्कृत्स्नं हविर्यथाग्नौ पतेदिति । अत्र तु विशदस्य कृष्णलस्य न स्रुचि संयोगो भवति । यदर्थमुपस्तरणमभिघारणं च स्नेहार्थं सुवर्णस्य क्रियेत । तस्मात् प्राप्ति-

तस्य प्रयोजनस्य निवृत्तत्वा कृष्णलेषूपस्तरणाभिघारणे निवर्तेते । एवं च आप्तिसमर्थत्वम्—‘ चत्वारि कृष्णाला यवयति चतुरवत्तस्याऽऽप्त्यै ’ इत्याप्तिवचन समुपपन्न भविष्यति ॥ १२ ॥

कृष्णलचरौ भक्षणकर्तव्यत्वाधिकरणम् ॥ ३ ॥

## पू० ॥ भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यात् ॥१३॥

प्रकृतौ भक्षाणा—पुरोडाशादिभक्षाणां, प्रीत्यर्थत्वात्—सामर्थ्यजनकत्वात्, कृष्णलचरौ तदभावात् अकर्म— कृष्णलभक्षण न स्यात् ॥ १३ ॥

## सि०॥ स्याद्वा निर्धानदर्शनात् ॥१४॥

स्यादेव कृष्णलेषु भक्ष । कुतः ? ‘ निरवधयन्तो भक्षयन्ति । चुच्चुषाकार भक्षयन्ती ’ ति प्राकृत भक्षमनूद्य गुणविशेषोपायविधिदर्शनात् । निरवधयन्त दन्तै पीडनमकुर्वन्त इत्यर्थ ॥ १४ ॥

## वचनं वाऽऽज्यभक्षस्य प्रकृतौ स्यादभागित्वात् ॥ १५ ॥

पूर्वोक्त वचन वा—निरवधयन्तो भक्षयन्त्याज्य चुच्चुषाकार भक्षयन्त्याज्यमिति आज्यभक्षणस्य विधायक स्यात् । कुत ? प्रकृतौ आज्यभक्षस्य अभागित्वात्—अप्राप्तत्वात् । तत्र निर्धानादेरप्राप्तत्वात्तदनूद्य भक्षमात्रस्य विधिरिति न वाक्यभेदोऽपीति कृष्णले भक्षो नास्तीति पुन पूर्वपक्षोत्थापनम् ॥ १५ ॥

## सि० ॥ वचनं वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात् ॥ १६ ॥

वचनं वा—तद्वचन हिरण्यस्य भक्षण कथयति । नाऽऽज्यस्य । अनिर्दिष्टत्वात्—‘ निरवधयन्तो भक्षयन्तीत्येतावन्मात्र श्रूयते । न इद वा तद्वेति । अनिर्देशस्योभयत्र—आज्ये हिरण्ये च समानत्वेऽपि गृह्यमाणाकाङ्क्षाया

प्रदानत्वेन प्रकृतस्य प्रधानस्यैव ग्रहणं न्याय्यम् । न अप्रधानस्य — प्रदेयत्वेनाप्रकृतस्य । आज्यस्य **गुणभूतत्वात्**—आज्यं हि तत्र प्रदेयद्रव्ये कृष्णले गुणभूतमप्रधानम् । अतस्तस्य न ग्रहणम् । यथा एव इदक्कूटे दण्डास्तिप्रति । प्रहर चोरमनेनेयुक्ते प्रधानो दण्ड एव गृह्यते नेदक्म । तद्वदत्रापीति भावः ॥ १६ ॥

कृष्णलचरौ ब्रह्मभक्षाणां युगपत् परिहारविधानाधिकरणम् ॥ ४ ॥

## सि० ॥ एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहितत्वात् ॥ १७ ॥

तस्यामेवायुष्कामेष्ट्या ' एकधा ब्रह्मणे परिहरती'ति श्रुतम् । तत्र धाप्रत्ययः सकृत्वे सहत्वे च शक्त । यथा यः सकृद्रा प्रापयति स एकधा प्रापयतीत्युच्यते । यश्च सह प्रापयति सोऽप्येकधा प्रापयतीत्यभिधीयते । अथ एकधेत्यस्य सकृत्वं सहत्वं वार्थो यथेष्ठ ग्राह्य इति प्राप्ते सिद्धान्तः— **एकधा**—युगपदेकस्मिन्नेव काले प्राकृतानिडाचतुर्धाकरणशंयुवाकभक्षाणा**मुपहारे** सति सर्वेषां ब्रह्मभक्षाणां सहत्वं सम्पद्यते । **प्रकृतौ विहितत्वात्**—दर्शपूर्णमासे भक्षचतुष्टयस्य विधानात् । प्रकृतौ विहितं भक्षचतुष्टयं चोदकेनात्र प्राप्तम् । तत्र एकधेत्यस्य सकृदित्यर्थत्वे भक्षत्रयस्य बाधः । सहार्थत्वे भक्षांगभूतकालबाध । प्रधानबाधादङ्गबाध कल्पना युक्तेति भावः ॥१७॥

कृष्णलचरौ सर्वभक्षाणां पुरुषान्तरस्योऽपनीय ब्रह्मणः परिहाराधिकरणम् ॥ ५ ॥

## पू० ॥ सर्वत्वं च तेषामधिकारात्स्यात् ॥ १८ ॥

कृष्णलचरावेव ' सर्वं ब्रह्मणे परिहरति ' इति श्रुतम् । तत्र किं सर्वेषां ब्रह्मभक्षाणामेवैष परिहारः, उत पुरुषान्तरेभ्यः शेषापनयः । अर्थात् सर्वशब्दो ब्रह्मभक्षाणामेव वाचकः, उत पुरुषान्तरशेषबोधकोऽपीति संशये ' ब्रह्मणे परिहरती'त्यनेन वचनेन प्राप्तं ब्रह्मपरिहारमनूद्य अप्राप्तं सर्वत्वं

' सर्वं ब्रह्मणे परिहरतीत्येनन विधीयते । यद्ब्रह्मणे तत्सर्वमेवेति । अर्थाद्यावद्ब्रह्मवाचकः सर्वशब्दः । न इतरशेषापनयबोधक इति प्राप्ते सिद्धान्त ॥ १८ ॥

## सि० ॥ पुरुषापनयो वा तेषामवाच्यत्वात् ॥ १९ ॥

**पुरुषापनयो वा**—पुरुषान्तरस्य ब्रह्मातिरिक्तर्त्विक्पुरुषसम्बन्धस्यापनय एव स्यात् । ' सर्वं ब्रह्मणे परिहरतीत्यनेन वाक्येन **तेषां**— ब्रह्मभागानाम्, **अवाच्यत्वात्**—कथनेन प्रयोजनाभावात । हविःशेषस्य हि ऋत्विग्भक्षणेन संस्कार्यत्वात् सर्वभक्षः प्राप्त एवेति न विधेय. । किन्तु सर्वस्मिन् हविःशेषे अप्राप्तो ब्रह्मसम्बन्धो विधीयते निर्दिष्टेन वचनेन । तेनेतरसम्बन्धनिवृत्तिरिति ब्रह्मातिरिक्तऋत्विक्शेषापनयबोधक सर्वपदमिति भाव. ॥१९॥

### युगपदुपाहृतानां भक्षभागानां स्वस्वकाले ब्रह्मणा भक्षणाधिकरणम् ॥ ६ ॥

## सि० ॥ पुरुषापनयनात्स्वकालत्वम् ॥ २० ॥

कृष्णलचरौ युगपत्परिहाराद् भक्षणमप्येकस्मिन् काल एव स्यादिति प्राप्ते आह — **पुरुषापनयात्**—तत्तत्पुरुषभक्षेभ्योऽपनयेनैव विधे कृतार्थत्वात्, **स्वकालत्व**—प्रकृतौ यस्य यस्य विहितो यः कालस्तत्काले एव भक्षणम् । यत. पुरुषापनयेन चरितार्थो विधिः प्राकृतकालं बाधितुमसमर्थस्तत इति भावः ॥ २० ॥

### ब्रह्मभक्षे चतुर्धाकरणादीनामननुष्ठानाधिकरणम् ॥ ७ ॥

## सि० ॥ एकार्थत्वादविभागः स्यात् ॥ २१ ॥

**एकार्थत्वात्**—एकब्रह्मार्थत्वात्तद्भक्षे **अविभागः**—' इदं ब्रह्मणः, इदं होतुः, इदमध्वर्यो, इदमग्नीध्र ' इति विभागो **न स्यात्**— न कर्तव्यः । कुतः ? ' प्रकृतौ हविःशेषस्य यावद्वृत्विगर्थत्वात । तथा निर्देशाभावे परस्परं कदाचित् कलहं कुर्युः । इह एक एवेति कलहाभावान्न निर्देश इति भावः ॥ २१ ॥

ऋत्विग्दानस्य आनत्यर्थताधिकरणम् ॥ ८ ॥

## पू० ॥ ऋत्विग्दानं धर्ममात्रार्थं स्याद्ददाति-सामर्थ्यात् ॥ २२ ॥

ऋत्विग्दानम्—यज्ञे ऋत्विग्भ्यो दक्षिणादानम्, धर्ममात्रार्थ—केवलधर्मार्थमेव स्यात् । ददातिसामर्थ्यात्—यथा यजतीत्यत्रादृष्टार्थता तथा ददातेरपि तादर्थ्यात्—अदृष्टार्थत्वादिति ॥ २२ ॥

## सि० ॥ परिक्रयार्थं वा कर्मसंयोगाल्लोकवत् ॥२३॥

परिक्रयार्थं वा— ऋत्विजा परिक्रयार्थमेव दक्षिणा । न धर्मार्थम् । कुतः ? कर्मसंयोगात् — कर्मकर्तृसम्बन्धात् । लोकवत्— लोके हि क्रियाकर्तुः दानं भृतिरूपं दृष्टम् । तद्वदत्रापीत्यर्थः ॥ २३ ॥

## दक्षिणायुक्तवचनाच्च ॥ २४ ॥

' दक्षिणायुक्ता वहन्ति ऋत्विजः ' इति वचने दक्षिणायुक्ता वहन्तीति लिङ्गादपि परिक्रयार्थं दक्षिणादानमिति गम्यते ॥ २४ ॥

## परिक्रीतवचनाच्च ॥ २५ ॥

' दक्षिणापरिक्रीता ऋत्विजो याजयन्ति ' इति विस्पष्टलिङ्गकवचनादपि परिक्रयार्थत्वं दक्षिणाया इति निर्धीयते ॥ २५ ॥

## न चान्येनाऽऽनम्येत परिक्रयात् कर्मणः परार्थत्वात् ॥ २६ ॥

परार्थे कर्मणि परः परिक्रयातिरिक्तेनोपायेन तथा नानम्येत— न प्रवर्तेत । यथा परिक्रयेण प्रवर्तते । प्रकृतेऽपि कर्मणः परार्थत्वात् क्रयार्थत्वमेव दक्षिणादानस्य सिद्ध्यति । न धर्मार्थत्वमिति भावः ॥ २६ ॥

## सनिवन्ये च भृतिवचनात् ॥ २७ ॥

' यज्ञो वै देवतानां न समभवत । तं भृत्या समभावयन् । यद्भृतिं वनुते, यज्ञस्य भृत्यै द्वादशरात्रीर्दीक्षितो भृतिं वन्वीत ' इति सनिवन्ये—यज्ञार्थ

भिक्षिते याचांप्राप्ते, भृतिवचनात् । भृतिश्च कर्मकृद्भ्य आनत्यर्थं दीयते । अतोऽपि परिक्रयार्थं दक्षिणादानम् ॥ ॥ २७ ॥

## नैष्कर्तृकेण संस्तवाच्च ॥ २८ ॥

' यथा वै दारहारो नैष्कर्तृको नैष्कर्तनभृतः कर्मयोगे वर्तते एव वा एते यज्ञस्य ऋत्विजः ' इति ऋत्विक्षु नैष्कर्तृकेण— दारहारसादृश्यप्रदर्शनेन ऋत्विग्दक्षिणा भृतिरूपेणैव सिध्यति । किं च ' दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयेयु ' इति श्रुति मूल्यापरिक्रीय वशीकाररूपानत्यर्थं बभृति दक्षिणायाः स्पष्टमेव कथयति । तस्मान्न केवलधर्मार्थं दक्षिणादानमपि त्वानत्यर्थमेवेति निष्कर्षः । विचारफलं तु सत्रे ऋत्विजामेव यजमानत्वात्तत्र दक्षिणाया बाधः । नैष्कर्तृक वृक्षच्छेदनकर्ता । निष्कर्तनभृत —च्छेदनभृतियुक्त । कर्मयोगे- च्छेदनकर्मणि । इमुदाहृत-श्रुतिस्थपदत्रयस्यार्थो ज्ञेय ॥ २८ ॥

ज्योतिष्टोमादौ शेषभक्षस्य शेषप्रतिपत्त्यर्थत्वाधिकरणम् ॥९॥

## पू० ॥ शेषभक्षाश्च तद्वत् ॥ २९ ॥

हवि शेषभक्षा अपि तद्वत्—दक्षिणावत् परिक्रयार्था । न शेषहविः—संस्कार इति ॥ २९ ॥

## सि० ॥ संस्कारो वा द्रव्यस्य परार्थत्वात् ॥ ३० ॥

' संस्कारो वा—' शेषहविषः संस्कार एव शेषभक्ष । कुत ? द्रव्यस्य— पुरोडाशादिद्रव्यस्य, परार्थत्वात्— यागार्थत्वात् । यदि पुरोडाशादिद्रव्यं भक्षार्थं स्यात् तदा परिक्रयार्थं भवेत् । यागार्थं त्वात्तु नैवमिति भाव ॥ ३० ॥

## शेषे च समत्वात् ॥ ३१ ॥

शेषे— हुतशेषे द्रव्ये, समत्वात्— यजमानऋत्विजां स्वाम्याभावस्य साम्यादपि न परिक्रयाधिकारस्तेषाम । यतो यजमानेन ' अग्नये जुष्टं निर्वपामी ' ति दवतोद्देशेन निर्वाप कृत । अतस्तस्य तत्र स्वत्वं नास्ति ।

ऋत्विजा तु नास्त्येव। इत्थं यत्र सत्त्वमेव नास्ति तत्र परिक्रयः कथं भवेत्। तस्मान्न परिक्रयार्थं हविःशेषभक्षणम्। किन्तु संस्कारस्तस्येति भावः॥ ३१॥

## स्वामिनि च दर्शनात्तत्सामान्यादितरेषां तथात्वम्॥ ३२॥

'यजमानपञ्चमाः समुपहूता इडा भक्षयन्ती' ति स्वामिनि इतरेषु चेडाभक्षणं विहितं दृश्यते। अतस्तत्सामान्यात्— भक्षणे यजमानसादृश्यात्, **इतरेषामपि तथात्वं**— यजमानवत् परिक्रयाभावः समान इत्यर्थः ३२॥

## तथा चान्यार्थदर्शनम्॥ ३३॥

कुण्डपायिनामयने चोदकेन भक्षे प्राप्ते सति तत्र 'अत्सरुकैश्चमसैः सोमान् भक्षयन्ती' ति विशेषः श्रूयते। एवं सत्रेऽपि भक्षणं दृश्यते। इत्थं चेदमन्यार्थदर्शनं संस्कारपक्षे समुपपद्यते। न परिक्रयपक्षे। तस्मात्संस्कारार्थं हविःशेषभक्षणम्। न परिक्रयार्थमिति सिद्धम्॥ ३३॥

### सत्रे ऋत्विग्वरणाननुष्ठानाधिकरणम्॥ १०॥

## सि०॥ वरणमृत्विजामानमनार्थत्वात्सत्रे न स्यात्स्वकर्मत्वात्॥ ३४॥

'द्वादशाहमृद्धिकामा उपेयुः' इत्येवमादीनि सत्राणि वर्तन्ते। प्रकृतौ ज्योतिष्टोमे 'अग्निर्मे होता स मे होता, होतस्त्वं मे होताऽसीति होतारमित्यादिभिर्वाक्यैः होत्रादीनामृत्विजां वरणं श्रुतम्। तद्वरणं सत्रेषु न स्यात्— न कर्तव्यम्। कुतः? **आनमनार्थत्वात्**–वरणस्यानमनरूपदृष्टप्रयोजनार्थत्वात। **स्वकर्मत्वात्**—सत्रे 'ये यजमानास्त एव ऋत्विजः' इति यजमाने ऋत्विक्त्वनिर्देशेन न सर्वं कर्म यजमानस्यैवेति न तत्र ऋत्विग्वरणम्। तेषां स्वातंत्र्येणाभावादेव। न कोऽप्यानमनं वृणीते इति भावः॥३४॥

सत्रे परिक्रयानुष्ठानाधिकरणम् ॥ ११ ॥

## सि० ॥ परिक्रयश्च तादर्थ्यात् ॥ ३५ ॥

सत्रे ऋत्विग्वरणं यथा नास्ति तथा **परिक्रयोऽपि** न विद्यते। **तादर्थ्यात्**—आत्मार्थत्वादेव। न हि कोऽप्यात्मानं क्रीणाति ॥ ३५ ॥

## प्रतिषेधश्च कर्मवत् ॥ ३६ ॥

ननु 'न ह्यत्र गौर्दीयते न वासो न हिरण्यं, अदक्षिणानि सत्राणि भवन्ति' इति दक्षिणायाः प्रतिषेधः सत्रे श्रूयते। स च प्राप्तिपूर्वकः। दक्षिणायामप्राप्तौ त्वनुपपन्नः स्यादित्याशङ्कायामाह ॥ ३६ ॥

## स्याद्वा प्रासर्पिकस्य धर्ममात्रत्वात् ॥ ३७ ॥

**प्रासर्पिकस्य**—प्रसर्पकेभ्यो लोमानीति चोदकप्राप्तस्य **धर्ममात्रत्वात्**—अदृष्टार्थत्वात्, तत्प्राप्तौ सत्यां तस्य निषेधेनैवोक्तप्रतिषेध उपपद्यते ॥ ३७ ॥

## सि० ॥ न दक्षिणाशब्दात्तस्मान्नित्यानुवादः स्यात् ॥ ३८ ॥

न प्रसर्पकेभ्यो विहितदानस्यायं निषेधः। **दक्षिणाशब्दात्**—आनत्यर्थऋत्विग्दाने रूढस्य दक्षिणाशब्दस्य सत्त्वात्। **तस्मात्** अदक्षिणानीति प्रतिषेधः **नित्यानुवादः स्यात्**—नित्यप्राप्तस्यैव गवादिदानस्य निषेधः। इत्थं च तत्र प्रसर्पकदक्षिणाबाधो नेति भावः ॥ ३८ ॥

उदवसानीये दक्षिणादानस्य ऋत्विक्परिक्रयार्थत्वाधिकरणम् ॥ १२ ॥

## उदवसानीयः सत्रधर्मा स्यात्तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥ ३९ ॥

**उदवसानीयः**— सत्रसमाप्त्यनन्तरं 'सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्' इत्यनेन विहित उदवसानीययागः।

स सत्रधर्मा स्यात् । तदङ्गत्वात्— सत्राङ्गत्वात् । वाजपेयोत्तरानुष्ठीयमानबृहस्पतिसववत् । अतस्तत्र दक्षिणादानं धर्ममात्रम्— अदृष्टार्थमेव स्यात् । नाऽऽनत्यर्थमिति ॥ ३९ ॥

## सि०॥ न त्वतत्प्रकृतित्वाद्विभक्तचोदितत्वात् ॥४०॥

नैवादृष्टार्थं तत्र दानम् । अपि तु क्रयार्थम् । अतत्प्रकृतित्वात्— सत्रप्रकृतित्वाभावादुदवसानीयस्य । विभक्तचोदितत्वात्— 'सत्रादुदवसाय उत्थाय समाप्येति सत्रात्पार्थक्येन विहितत्वदर्शनान्नापि सत्राङ्गत्वं तस्य । बृहस्पतिसवदृष्टान्तस्तु 'यथोक्ताङ्गं कृत्वा नैव सन्तोष्टव्यम् । इदमपरं तस्याङ्गं कर्तव्य' मिति तत्र श्रवणाद्विषमो ज्ञेयः ॥ ४० ॥

**पृष्ठशमनीयस्य ( उदवसानीयस्य ) ऋत्विगन्तरं सम्पाद्य प्रत्येककर्तृत्वाधिकरणम् ॥ १३ ॥**

## तेषां तु वचनाद्द्वियज्ञवत्सहप्रयोगः स्यात् ॥४१॥

स पृष्ठशमनीयः सर्वैः संहत्य कार्यः, किंवा प्रत्येकेनेति संशये वचनात्—'सहस्रदक्षिणेन यजेरन्' इति बहुवचनात्, तेषां सत्रकर्तृणां मिलित्वानुष्ठानं स्यात् । द्वियज्ञवत्—एतेन 'राजपुरोहितौ सायुज्यकामौ यजेयातामितिवत् ॥४१॥ एवं स्थिते सिद्धान्तमनुक्त्वा मध्ये विचारान्तरारम्भः—

**पृष्ठशमनीयऋत्विजां सत्रिभ्यो भिन्नत्वाधिकरणम् ॥ १४ ॥**

## सि० ॥ तत्रान्यानृत्विजो वृणीरन् ॥४२॥

तत्र—पृष्ठशमनीये, सत्रिभ्योऽन्य एव ऋत्विजः स्युः । 'एतेन सहस्रदक्षिणेनेति श्रवणात् ॥ ४२ ॥

**पृष्ठशमनीये प्रत्येकं यष्टृत्वाधिकरणम् ॥ १५ ॥**

## सि० ॥ एकैकशस्त्वविप्रतिषेधात् प्रकृतेश्चैकसंयोगात् ॥ ४३ ॥

विचारान्तरं कृत्वा स्थितस्योत्तरमाह--

**एकैकशः**—पृष्ठशमनीयं यागमेकैकशः प्रत्येकं कुर्युः । **अविप्रतिषेधात्**— बाधकाभावात् । ननु, ' यजेरन् ' इति बहूनां प्रयोगः श्रूयते । सत्येवं कथमेकैकस्य स्यादिति चेन्न तेन एकैकस्य प्रयोगो बाध्यते । चोदकसामर्थ्यादेकैकस्यापि भवेत् । बहुसंयुक्तः प्रयोगो नैकैकेन कर्तुं शक्यत इति चेन्नात्र बहुत्वं विधित्सितम् । प्राप्तस्यानुवादोऽयम् । ' सत्रादुदवसाय यजेरन्निति ये उदवसातारस्तेऽत्र प्राप्ता एवेत्यनुवादः सः । निध्यभावाच्च एकैकेनाऽपि कर्तुं शक्यम् । प्रकृतेरेककर्तृसयोगाच्चोदकशास्त्रमप्युपपन्नं भवति । राजपुरोहितावित्यत्र धात्वर्थकर्त्रादीनां सर्वेषामप्राप्तत्वाद्विधिरेव तत्र । अत्र न तथेति वैषम्यमिति भावः ॥ ४३ ॥

कामेष्टौ दानस्यादृष्टत्वाधिकरणम् ॥ १६ ॥

## पू० ॥ कामेष्टौ च दानशब्दात् ॥ ४४ ॥

' प्लाक्ष प्रस्रवणं प्राप्याग्नये कामायाष्टाकपालं पुरोडाशं निर्वपन्ति । तस्यामश्वां पुरुषीं च धेनुके च दत्वा प्रति यमुनामवभृथमभ्यवयन्ति ' इति सारस्वतसत्रमध्ये विहितायां कामेष्टौ तुरगमानुषगोजातीयानां स्त्रीणां दक्षिणात्वेन यद्दानं श्रुतं तदाऽऽनत्यर्थं— परिक्रियार्थमुत धर्ममात्रम्-अदृष्टार्थमिति संशये यथा पृष्ठशमनीये ऋत्वर्थदानं तथास्यां कामेष्टावपि परिक्रयार्थं दानमिति चशब्देन सूच्यते । **दानशब्दात्**—कर्मकरेषु परिक्रयार्थत्व दानशब्दस्येत्युक्तत्वादाऽऽनत्यर्थमेवात्र दानमिति ॥ ४४ ॥

## सि० ॥ वचनं वा सत्रत्वात् ॥ ४५ ॥

नात्र परिक्रयार्थं दानम् । **सत्रत्वात्** । सत्रेषु ऋत्विजामभावात् परिक्रयो निवर्तत एव । ननु, नेयमिष्टि- सत्रम् । किन्तु सत्राङ्गं, तन्मध्यपतित्वादिति चेद्बाढम् । अथापि सत्रस्य साङ्गस्य स्वयंकर्तृकत्वात्तदङ्गभूताया इष्टेः कर्तारः सिद्धा एवेति न तत्र परिक्रयेण प्रयोजनमिति धर्ममात्रमदृष्टार्थं तद्दानमिति सिध्यति ॥ ४५ ॥

वैश्वानरेष्टौ द्वेष्यसम्प्रदानकदानस्यादृष्टार्थत्वाधिकरणम् ॥ १७ ॥

## सि० ॥ द्वेष्ये चाचोदनाद्दक्षिणापनयः स्यात् ॥४६॥

दर्शपूर्णमासयोरिदमाम्नायते– ' यदि पत्नीः संयाजयन् कपालमभि-जुहुयाद् वैश्वानरं द्वादशकपालं निर्वपेत् । तस्यैकहायनी गौर्दक्षिणा । तां द्वेष्याय दद्यादिति । अत्र दक्षिणाश्रवणात् परिक्रयार्थं तद्दानम् । न धर्म-मात्रम् । तथा चास्यामिष्टौ द्वेष्या ऋत्विजः कार्या इति प्राप्ते आह--द्वेष्ये इति । द्वेष्ये दक्षिणा अदृष्टार्था । अचोदनात्— ' ऋत्विगाचार्यौ नातिचरितव्यौ ' इति द्वेष्यस्य ऋत्विक्त्वनिषेधात् । एवमृत्विग्भ्य उक्तदक्षिणाया अपनयात् प्राकृतमन्वाहार्यमेव तेभ्यो दक्षिणेति भावः ॥ ४६ ॥

अस्थियज्ञस्य जीवदधिकारिकत्वाधिकरणम् ॥ १८ ॥

## सि० ॥ अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद्विप्रतिषेधादस्थ्नाम् ॥ ४७ ॥

' यदि सत्राय सन्दीक्षितानां कश्चन प्रमीयेत तं दग्ध्वा कृष्णाजिने अस्थीन्युपनह्य योऽस्य नेदिष्ठस्तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् । ततः संवत्सरे अस्थीनि याजयेत्' इति सत्रप्रकरणे श्रूयते । तत्र संवत्सरानन्तरं श्रुते यागे अस्थ्नां कर्तृत्वमुतेतरेषां जीवतामिति संशये अस्थिशब्दस्य मुख्या-र्थत्वाद्याजयेदिति णिचः श्रवणाच्चास्थ्नामेव तत्कर्तृत्वमिति प्राप्ते आह-अस्थि-यज्ञ इतरेषां जीवतामेव स्यात् । त एव तत्र कर्तारः । नास्थीनि । अविप्र-तिषेधात्—जीवत्सु कर्तृत्वस्य बाधाभावात् । अस्थिषु विप्रतिषेधात्—अचे-तनत्वेन तद्बाधात् । अस्थिशब्दस्य अस्थिमन्नेदिष्ठजीवत्पुरुषे लक्षणा । तेन सह यष्टुं प्रक्रान्तत्वात् । ननु, यष्टारस्ते न याजकाः । सत्येवं याजयेदिति णि-जर्थस्य का गतिरिति चेत्त एव परस्परं याजकाः ॥ ४७ ॥

## यावदुक्तमुपयोगः स्यात् ॥ ४८ ॥

ननु, अस्थिकुम्भमुपनिधाय स्तुवीतेति वाक्यमस्थ्ना याजमानत्वं दर्शयति । तस्य का गतिरिति चेद्यावदुक्तमिति न्यायात्स्तोत्र एव तस्याप्रयोगः स्यात् । नान्येषु कर्मसु । तत्रापि न यजमानत्वेन । किन्तु तत्सादृश्येन । अचेतनत्वात्तेषामिति भावः ॥ ४८ ॥

अस्थियागस्य मृताधिकारत्वपक्षे जपसंस्कारेष्टीनां लोपाधिकरणम् ॥ १९ ॥

## यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं सेष्टि तदर्थत्वात् ॥ ४९ ॥

यदि वचनबलात्तेषाम्— अस्थ्ना यागविकारः स्यात्तदा **जपसंस्कारं**— मन्त्रोच्चारणं केशश्मश्रुवपनादिसंस्कारं, **सेष्टि**— दीक्षणीयेष्टिसहितमेतत् सर्वमर्थलुप्तम्—, द्वारलोपाल्लुप्तं भवति । **तदर्थत्वात्**— कर्तृसंस्कारार्थत्वात्तेषामिति कृत्वाचिन्तेयम् ॥ ४९ ॥

तस्यैव तदधिकारित्वपक्षे क्रत्वर्थानामनुष्ठानाधिकरणम् ॥२०॥

## क्रत्वर्थं तु क्रियेत गुणभूतत्वात् ॥ ५० ॥

'शुक्रं यजमानोऽन्वारभते । यजमानेन संमितौदुम्बरी भवती'ति शुक्रान्वारम्भणादिकं यत् क्रत्वर्थं कर्म तत् क्रियेत—अनुष्ठेयम् । तेषु यजमानस्य **गुणभूतत्वात्** । अन्यथा क्रतोर्वैगुण्यं स्यादिति भावः ॥ ५० ॥

तस्यैव तदधिकारित्वपक्षे गुणकामकर्माद्यननुष्ठानाधिकरणम् ॥ २१ ॥

## काम्यानि तु न विद्यन्ते कामाज्ञानाद्यथेतरस्यानुच्यमानानि ॥ ५१ ॥

'यदि कामयेत वर्षुकः पर्जन्यः स्यान्नीचैः सदो मिनुयात्' इत्यादीनि काम्यानि कर्माणि अस्थियज्ञे **न विद्यन्ते**—नानुष्ठेयानि । कस्मात्? **कामाज्ञानात्**—यजमानकामस्याज्ञानात् । **यथेतरस्यानुच्यमानानि**—

जीवतोऽपि पुरुषान्तरस्यानुच्यमानानि ज्ञानादीनि परो न जानाति । किमु वक्तव्यमचेतनानामस्थ्नां न जानातीति ॥ ५१ ॥

तस्यैव तदधिकारित्वपक्षे सूक्तवाकांतर्गताऽऽशासनस्याननुष्ठाना-धिकरणम् ॥ २२ ॥

## ईहार्थाश्चाभावात्सूक्तवाकवत् ॥ ५२ ॥

अस्मिन्नस्थियज्ञे दर्शपूर्णमासप्रकृतिकानि चोदकप्राप्तानि प्रायणीये-ष्ट्यादीनि कर्माणि सन्ति । तस्यामिष्टौ 'सूक्तवाकेन प्रस्तरं प्रहरती'ति प्रस्तरप्रहरणांगत्वेन विहितः 'इदं द्यावापृथिवी भद्रमभूदित्यादिः सूक्तवा-कोऽपि चोदकात् तत्र प्राप्तः । तस्मिन् सूक्तवाके 'अयं यजमान आयुरा-शास्ते । सुप्रजास्त्वमाशास्ते । प्रियं प्रियमाशास्ते यदनेन हविषाऽऽशास्ते तदश्यात् तदृध्यात्, तदस्मै देवा रासन्ताम् ' इति **ईहार्थाः**--सूक्तवाकभागाः, **सूक्तवाकवत्**—सूक्तवाकार्हाः । अर्हार्थे वतिः निवर्तन्ते । कामयितुरभावात् अचेतनास्थिषु ईहाया असम्भवादित्यर्थः ॥ ५२ ॥ '

## स्युर्वाऽर्थवादत्वात् ॥ ५३ ॥

**स्युर्वा** ते कामाः । कुतः ? **अर्थवादत्वात्**-अर्थवादाः खल्वेते न विधयः। अनस्त्येषां कर्तव्यता चोदकः प्रापयतीति न निवृत्तिरेषामिति ॥ ५३ ॥

## नेच्छाभिधानात्तदभावादितरस्मिन् ॥ ५४ ॥

न कर्तव्या । मन्त्रेषु इच्छाभिधानात् **इतरस्मिन्**— अस्थिषु तदभा-वात्— इच्छाया अभावादित्यर्थः ॥ ५४ ॥

प्रकृतौ होत्रकामनयाऽनुद्यमानानां गुणकामानामस्थियज्ञेऽनुष्ठाना-धिकरणम् ॥ २३ ॥

## स्युर्वा होतृकामाः ॥ ५५ ॥

'यं कामयेतापशुमान् स्यादिति' पराचीं तस्येडामुपह्वयेत्, अपशु-मानेव भवति यं कामयेत प्रमायुकः स्यादिति, तस्योच्चैस्तरां वषट्कुर्यात् ।

यं कामयेत पापीयान् स्यादिति नीचैस्तरां तस्य याज्यया वषट्कुर्यात् । यं कामयेत वसीयान् स्यादिति उच्चैस्तरां तस्य याज्यया वषट्कुर्यात्' इति प्रकृतौ होतृकामाः श्रूयन्ते । ते अग्निचयनेऽपि स्युर्होतृकामाः । कुतः ? चोदकप्राप्तत्वात् बाधाभावाच्चेति प्राप्ते सिद्धान्तः ॥ ५५ ॥

## न तदाशीष्ट्वात् ॥ ५६ ॥

तत्र नानुष्ठेयास्ते कामाः । तदाशीष्ट्वात्—यजमानाशीष्ट्वात् कामानाम् । "या वै काचन ऋत्विज आशिषमाशासते सा सर्वा यजमानस्य" इति यजमानविषयत्वमाशिषो दर्शयति वचनम् । न ह्यचेतनानामस्थ्नां कामः सम्भवति । अतश्चोदकप्राप्तत्वेऽपि बाध एव तेषां तत्र ॥ ५६ ॥

**यजमानमृत्युत्तरमपि सर्वस्वारस्य समापनाधिकरणम् ॥ २४॥**

## सर्वस्वारस्य दिष्टे गतौ समापनं न विद्यते कर्मणो जीवसंयोगात् ॥ ५७ ॥

'मरणकामो ह्येतेन यजेत, यः कामयेत अनामयः स्वर्गं लोकमियाम्' इति सर्वस्वारस्य क्रतुविशेष श्रूयते ज्योतिष्टोमविकारः । तस्य तृतीयसवने आर्भवपवमानस्तोत्रे प्रस्तूयमाने 'औदुम्बरीं दक्षिणेन देशेनाऽऽहतेन वाससा परिवेष्ट्य ब्राह्मणाः समापयत मे यज्ञमिति सम्प्रेष्य अग्नौ संविशतीति श्रुतम् । तत्र यजमानस्य दिष्टगतौ—मरणोत्तरं सर्वस्वारस्य क्रतोरवशिष्टं कर्म न समापनीयम् । उत्स्रष्टव्यमेव । कुतः ? कर्मणो जीवसंयोगात्—जीवतैव शक्यते किमपि कर्म कर्तुं, न मृतेन । अतो दिष्टगत्यंत एव सर्वस्वारो याग इति ॥ ५७ ॥

## सि० ॥ स्याद्वोभयोः प्रत्यक्षशिष्टत्वात् ॥ ५८ ॥

स्यादेव परिसमापनम् । न दिष्टगत्यन्तमेव । कुतः ? उभयोः—'मरणकामो ह्येतेन यजेत, ब्राह्मणाः परिसमापयत मे यज्ञम्' इति क्रतोः परिसमाप्तेश्च प्रत्यक्षशिष्टत्वात्—विहितत्वात् । यच्च जीवसंयोगादित्युक्तं

तदप्यविरुद्धम् । यतो जीवता 'आरब्धं परिसमापयत मे यज्ञमिति वचनं प्रोक्तम् । अतस्तत्कृतैवेयं सर्वस्वारयज्ञस्य परिसमाप्तिरित्यवगन्तव्यमिति भावः ॥ ५८ ॥

सर्वस्वारे बाध्याबाध्यविवेकाधिकरणम् ॥ २५ ॥

## गते कर्मास्थियज्ञवत् ॥ ५९ ॥

**गते**— दिष्टां गतिं यजमाने गते सति किं कार्यं किं चाकार्यमित्यस्य निर्णयः **अस्थियज्ञवत्** बोध्यः । क्रत्वर्थं यत्तदबाध्यं-- कर्तव्यम् । यजमानकर्तृकं तद्बाध्यम् । नानुष्ठेयमिति सिद्धान्तः ॥ ५९ ॥

सर्वस्वारे आयुराशंसनाधिकरणम् ॥ २६ ॥

## पू० ॥ जीवत्यवचनमायुराशिषस्तदर्थत्वात् ॥६०॥

सर्वस्वारयज्ञे 'अय यजमान आयुराशास्ते' इत्यादिमन्त्रो न पठनीयः । कुतः ? **जीवत्यवचनं**—'आयुराशास्त' इति जिजीविषोर्वचनम् । **आशिषः तदर्थत्वात्**— यजमानार्थत्वात् । यजमानस्य च आयुषि इच्छाया अभावादिति ॥ ६० ॥

## सि० ॥ वचनं वा भागित्वात् प्राग्यथोक्तात् ॥६१॥

**वचनं वा**— वक्तव्यैव आयुराशीः । तासामाशिषां **यथोक्तात्**— आर्भवपवमानस्तोत्रात् **प्राग् भागित्वात्**— तादृशेच्छाभागित्वात् । तावत्पर्यन्तजीवनेच्छासत्त्वादिति भावः ॥ ६१ ॥

द्वादशाहे ऋतुयाज्यावरणादेरनुष्ठानाधिकरणम् ॥ २७ ॥

## सि० ॥ क्रिया स्याद्धर्ममात्राणाम् ॥ ६२ ॥

द्वादशाहादिसत्रमत्रोदाहरणम् । सत्रस्य स्वयकर्तृक यद्वरणं दानं च तत्र निवर्तत इत्युक्तं प्राक् । तथा च सत्रे चोदकप्राप्तमृतुयाज्यावरणं, आत्रेयाय हिरण्यदानं चेति धर्मद्वयमपि न कार्यम् । वरणत्वादानत्वाचेति प्राप्ते आह—अदृष्टप्रयोजनानां **धर्ममात्राणां क्रिया स्यात्** । अनुष्ठानं कुर्यादित्यर्थः । न चेदं वरणं दानं चाऽऽनत्यर्थम् । अदृष्टार्थत्वात् । अतः क्रतुसाद्गुण्याय तत्कर्तव्यमिति भावः ॥ ६२ ॥

पवमानेष्टौ निर्वापानुष्ठानाधिकरणम् ॥ २८ ॥

## गुणलोपे तु मुख्यस्य ॥ ६३ ॥

प्रथमपवमानेष्टौ निर्वापसाधनस्याग्निहोत्रहवण्या अभावेन निर्वापो निवर्तेत इति चेन्न । **गुणस्य**—अग्निहोत्रहवण्याः, लोपेऽपि **मुख्यस्य**—प्रधाननिर्वापस्य न लोपः । तदनुष्ठानं कार्यमित्यर्थः ॥ ६३ ॥

वाजपेये मुष्टिलोपाधिकरणम् ॥ २९ ॥

## मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वात् स्यात् ॥६४॥

' शरदि वाजपेयेन स्वाराज्यकामो यजेत ' इति विहितवाजपेयक्रतौ ' नैवारः सप्तदशशरावः क्षीरे चरुर्भवति ' इति श्रूयते । प्रकृतौ ' चतुरो मुष्टीन्निर्वपति ' ति संख्यामुष्टयश्च श्रुताः । तदुभयं चोदकेनात्र प्राप्तम् । तत्र सप्तदशशरावः इत्यनेन कस्य बाध इत्याकाङ्क्षायां प्रथमश्रुतसंख्याया असञ्जातविरोधित्वात् तद्बाधापेक्षयानन्तरश्रुतमुष्टेरेव सञ्जातविरोधिनो बाधो न्याय्यः । तदुक्तं—' मुख्यं वा पूर्वचोदनाल्लोकवदिति (१२।२।२३) प्राप्ते प्रथमः पूर्वपक्षः । **मुष्टिलोपात्तु संख्यालोपः**— मुष्टिबाधापेक्षया संख्याबाध एव तत्र उचितः । कुतः ? **तद्गुणत्वात्**— संख्यायाः मुष्टिधर्मत्वात् । धर्मिबाधापेक्षया धर्मबाधस्य न्याय्यत्वाच्चतुःसंख्याया एव बाधः । न धर्मिणो मुष्टेः । तदुक्तं—अंगगुणविरोधे च तादर्थ्यादिति ( १२।२।२५ )॥ ६४ ॥

## न निर्वापशेषत्वात् ॥ ६५ ॥

न मुष्टिगुणः संख्या । अपि तु निर्वापस्य । चतुरो निर्वपतीति द्वितीयया तस्याः कारकत्वबोधनात्, कारकस्य क्रियासाधनत्वात् क्रियाशेषत्वम् । न द्रव्यगुण कारकम् । अतो मुष्टिगुणत्वाभावान्न धर्मबाधन्यायस्यात्र प्रसर इत्यसञ्जातविरोधिन्यायान्मुष्टेरेव बाधः । न संख्याया इति ॥ ६५॥

## सङ्ख्या तु चोदनां प्रति सामान्यात्तद्विकारः संयोगाच्च परं मुष्टेः ॥ ६६ ॥

**सङ्ख्या तु**—सप्तदशसङ्ख्या, **चोदनां प्रति**--चतुर इति सङ्ख्यां प्रति, **सामान्यात्**—द्रव्यपरिच्छेदकतया सादृश्यात्, **तद्विकारः**--चतुःसङ्ख्याविकार—बाधिका स्यात्। **परं**- शरावः, **संयोगात्**—द्रव्यमानसंयोगात, मुष्टेर्विकारः। एवमुभयस्य- सङ्ख्यायाः मुष्टेश्च बाध इति द्वितीयः पूर्वपक्षः ॥ ६६ ॥

## सि०॥ न चोदनाभिसम्बन्धात्प्रकृतौ संस्कारयोगात् ॥ ६७ ॥

नोभयबाध.। **चोदनाभिसम्बन्धात्**—वाजपेये -' नैवारः सप्तदशशरावश्चरुर्भवती'ति वाक्ये सङ्ख्याशरावौ उत्पत्तिवाक्यस्थत्वात् **चोदनया**—यागभावनया, **अभिसम्बन्धात्**— अभिसम्बद्धौ। प्रकृतौ तु निर्वापरूपद्रव्यसंस्कारभावनया योगान्न द्वयोरपि बाधः सम्भवति शास्त्रेण । किन्तु द्वयोर्मेलनानुपपत्त्यान्यतरस्य बाधे कर्तव्ये असञ्जातविरोधन्यायेन प्रथमोपस्थितसङ्ख्या न बाध्यते। पाश्चात्त्यमुष्टिरेव बाध्यत इति भावः ॥६७॥

धेन्वादिशब्दानां गोत्वाचित्वेन प्राकृताजाद्रव्यबाधाधिकरणम् ॥ ३० ॥

## सि० ॥ औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्यत्वात् ॥ ६८ ॥

' द्यावापृथिव्यां धेनुमालभेत। मारुतं वत्सम् । ऐन्द्रमृषभम् ' इति क्वचिच्छ्रुतम्। तत्र यद्यपि सकृत्प्रसूतत्वरूपगुणविशिष्टगोत्वे धेनुशब्दस्य रूढिस्तथापि चोदकानुग्रहाय जातिमपहाय गुणमात्रमजायां विधीयत इति प्राप्ते आह—**औत्पत्तिके इति**। उत्पत्तिवेलायामेव गुणविशिष्टजातिवाचके शब्दे सति **द्रव्यत** - प्राकृतस्य द्रव्यस्य **विकारः**--बाधः स्यात। **अकार्यत्वात्**। प्राकृते द्रव्ये अकार्यत्वात् गुणविशिष्टदशजातिमद्द्रव्यत्वस्य सम्पादयितुमशक्यत्वादिति भावः ॥ ६८ ॥

वायव्यपशावुपदिष्टश्वेतगुणेन प्राकृताजाद्रव्यस्याबाधाधिकरणम् ॥ ३१ ॥

## सि० ॥ नैमित्तिके तु कार्यत्वात्प्रकृतेः स्यात्तदापत्तेः ॥ ६९ ॥

'वायव्यं श्वेतमालभेत भूतिकामः' इत्यत्र **नैमित्तिके तु**—केवलं गुणमात्रं निमित्तीकृत्य प्रवृत्ते श्वेतशब्दे सति **कार्यत्वात्**—प्राकृते द्रव्ये गुणयोगस्य कर्तुं शक्यत्वात् प्राकृत एव स्यात् । कुतः ? **तदापत्तेः**-तस्य—चोदकशास्त्रस्य **आपत्तेः**—उपपत्तेः । अनुग्रहस्य सिद्धेरित्यर्थः ॥६९॥

साद्यस्के खलेवाल्यां चित्रायागे तण्डुलेषु च प्राकृतखादिरत्व-वैहत्वनियमस्याभावाधिकरणम् ॥ ३२ ॥

## सि० ॥ विप्रतिषेधे तद्वचनात्प्राकृतगुणलोपः स्यात्तेन च कर्मसंयोगात् ॥ ७० ॥

साद्यस्के 'खलेवाली यूपो भवती' त्याम्नायते । तथा चित्रायागे 'दधि मधु घृतमापो धानास्तण्डुलाः पयस्तत्संसृष्टं प्राजापत्यमिति' च । तत्र चोदकानुग्रहाय खलेवाल्या खादिरत्वं तण्डुलेषु च वैहत्वं सम्पादनीयमिति प्राप्ते आह— **विप्रतिषेध** इति । प्राकृतगुणवैकृतगुणयोर्विप्रतिषेधे- विरोधे सति **तद्वचनात्**-तस्य-वैकृतस्य वचनात्-प्रत्यक्षवचनात्, **प्राकृतगुणलोपः**-प्राकृतगुणबाधः स्यात् । **तेन**— यूपेन समीपवर्तिना **कर्मसंयोगात्**— भावनान्वयात् तस्यैव विधान युक्तम् । न खलेवाल्याः । विप्रकृष्टविधान-प्रसङ्गादिति भावः ॥ ७० ॥

खलेवाल्यां तक्षणाद्यनुष्ठानाधिकरणम् ॥ ३३ ॥

## परेषां प्रतिषेधः स्यात् ॥ ७१ ॥

तत्रैव खलेवाल्या **परेषां**— तक्षणादिधर्माणा, **प्रतिषेधः**— बाधः स्यात् । तक्षणाष्टाश्रीकरणादिकं यूपोत्पत्तिसाधनम् । अत्र तदभावादिति यावत् ॥ ७१ ॥

## विप्रतिषेधाच्च ॥ ७२ ॥

**विप्रतिषेधा**द्विरोधादपि नैषा बाधः सिध्यति । तक्षणादिषु क्रियमाणेषु रूपान्तरोत्पत्त्या खलेवालीत्वं भग्नं स्यादिति भावः ॥ ७२ ॥

खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानाधिकरणम् ॥३४॥

## सि०॥ अर्थाभावे संस्कारत्वं स्यात् ॥ ७३ ॥

' ब्रह्मवनिं त्वा क्षत्रवनिमिति प्रदक्षिणं पांसुभिः पर्यूह्य, ब्रह्म दृंह क्षत्रं दृंहेति मैत्रावरुणदण्डेन भूमिदृंहणं कृत्वा, ' उत्तभान पृथिवीमित्यद्भिः परिषिञ्चती'ति प्रकृतौ यूपं प्रकृत्य क्रियमाणं पर्यूहणसमीकरणजलसेचनादिकमपि खलेवाल्यां छेदनतक्षणादिवन्न कर्तव्यमिति प्राप्ते **अर्थाभावे**—अर्थस्य—यूपत्वस्य खलेवाल्यामभावेऽपि, मेढ्रीकरणादिदृष्टफलसंस्कारत्वं स्यादेव चोदकप्राप्तं । दृष्टप्रयोजनसत्त्वान्नादृष्टार्थता नश्यतीति भावः ॥७३॥

महापितृयज्ञे धानास्ववघातानुष्ठानाधिकरणम् ॥ ३५ ॥

## अर्थेन च विपर्यासे तादर्थ्यात्तत्त्वमेव स्यात् ॥७४॥

महापितृयज्ञे श्रूयते—' सोमाय पितृमते षट्कपालं पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धं मन्थम् ' इति । धाना भर्जितयवाः । धानाः पिष्टाः सक्तवः । तत्र धानास्ववहननं खलेवाल्यां तक्षणादिवन्नानुष्ठेयम् । कुतः ' तस्य चोदकप्राप्तत्वेऽपि कृते तस्मिन् धानात्वं भज्येत— सक्तवः भवेयुरिति प्राप्ते आह-**अर्थेनेति** । **विपर्यासे**—वैपरीत्यक्रमतानि **अर्थे**—पदार्थे कृते सति न धानात्वं भज्येत । **तादर्थ्यात्** क्रमस्य पदार्थाङ्गत्वात्पदार्थप्राबल्याधिकरणोक्तदिशा तद्बाध एव न्याय्यः । **अतस्त्वस्त्वमेव**—क्रमविपर्यास एव स्यात् । अत्र धानासम्पादनमवहननं चेति द्वयं पदार्थः । तत्र प्राकृतवाक्यादुपात्तावघातस्य धानोद्देशेन अवहननविधायकं वाक्यं तु ' धाना अवघ्नन्ती'ति । अत्र प्रथमं धानात्वनिर्माणं पश्चादव-

हननमिति प्राकृतक्रमानुसरणे धानाभङ्गप्रसङ्ग इति प्रथममवहननं पश्चाद्धाना-सम्पादनमिति विपर्यासः । सत्येवं पदार्थशेषभूतक्रमबाध एव । न पदार्थबाध इति भावः ॥ ७४ ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां दशमाध्यायस्य द्वितीयः पादः ॥ २ ॥ ॥ श्रीः ॥

## ॥ अथ दशमाध्यायस्य तृतीयः पादः ॥

पश्वादिविकृतावुपदिष्टेतरसामिधेन्यादिप्राकृतेतिकर्तव्यताया अनुष्ठानाधिकरणम् ॥ १ ॥

### विकृतौ शब्दवत्त्वात्प्रधानस्य गुणानामधिकोत्पत्तिः सन्निधानात् ॥ १ ॥

ज्योतिष्टोमे 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति विहिताग्नीषोमीयपशौ 'एकादश प्रयाजान् यजति, एकादशानुयाजान् यजती'ति च श्रूयते । तथा 'चातुर्मास्यैः स्वर्गकामो यजेत' इत्यत्रापि 'नव प्रयाजान् यजति, नवानुयाजानित्याम्नायते । एवं 'वायव्यं श्वेतमालभेत भूतिकामः'-इत्यत्र 'हिरण्यगर्भः समवर्तताग्रे' इत्याघारमाघारयति । अवभृते च 'अप्सु तृणं प्रास्य आघारमाघारयती'ति श्रूयते। सर्वेष्वेतेषु प्राकृतेतिकर्तव्यता प्राप्यते वा नेति संशये विकृतौ—प्राकृतगुणविलक्षण-गुणकप्राकृताङ्गके अग्नीषोमीयपश्वादौ शब्दवत्त्वात्— एकादशत्वादि-विशिष्टप्रयाजादिविधायकशब्दवत्त्वात् , गुणानां— प्राकृतगुणानां, अधिकोत्पत्तिः—स्वातन्त्र्येणोत्पत्तिः स्यात् । प्रधानस्य-मुख्यविशेष्यस्य— भावनायाः सांनिधानात् पदश्रुत्या धात्वर्थविधिरेव युक्तः । न प्राकृत-

प्रयाजाद्यनुवादेन सङ्ख्यामात्रविधिः । तथा च गृहमेधीयवत् यावत्प्राकृताङ्गनिवृत्तिर्यात्प्राकृतेतिकर्तता तेषु न प्राप्यत इत्याशयः पूर्ववादिनः ॥ १ ॥

## प्रकृतिवत्त्वस्य चानुपरोधः ॥ २ ॥

**प्रकृतिवत्त्वस्य**—' पशुमालभेतेति वाक्ये प्रकृतिवादीतिपदस्य, **अनुपरोधः**—अकल्पनम् । प्रयाजादिवाक्यैरेव कथंभावाकाङ्क्षायाः शान्तत्वादिति ॥ २ ॥

## चोदनाप्रभुत्वाच्च ॥ ३ ॥

**चोदनाया**—प्रयाजादिविधौ, उक्तवाक्यस्य एकादशेत्यादिवाक्यस-मूहस्य **प्रभुत्वात्**—तत्र तत्र समर्थत्वात् । इत्युक्तार्थे साधकान्तरोपन्यासः ॥३॥

## सि० ॥ प्रधानं त्वङ्गसंयुक्तं तथा भूतमपूर्वं स्यात्तस्य विध्युपलक्षणात् सर्वो हि पूर्ववान् विधिर-विशेषात्प्रवर्तितः ॥ ४ ॥

**प्रधानं**—प्रकृतं प्रधानं यथा **अङ्गसंयुक्तं**- यादृशाङ्गसंयुक्तं, अपूर्व-विकृतिमात्रमपि **तथाभूतं**—तादृशाङ्गसंयुक्तं स्यात् । ननु, यत्र विकृतिवि-शेषे सौर्ययागादौ अपूर्वमङ्गं न श्रूयते तत्रास्तु नाम प्राकृतधर्मः । प्रकृते त्वपूर्वाङ्गस्य श्रवणान्न तथेति चेदाह— **क्वचिद्विकृतौ तस्य विध्युपलक्षणात्**-प्राकृतविधेः—अङ्गस्य उपलक्षणात्—उपलब्धे **सर्वो हि**— सर्वविकृतियागो-ऽपि **पूर्ववान्**—प्रकृतिमान् । यतः **विधिः**—प्रकृतिवद्विकृतिरिति विधिः, **अविशेषात्**—विकृतियागसामान्यसाधारण्येन प्रवर्तितः । प्रकृतिवदित्यस्य विशेष्याकाङ्क्षायां विकृतित्वावच्छिन्नं तद्विशेष्यत्वेनान्वेति । तत्र वैजात्य-निवेशे प्रमाणाभावादिति भावः ॥ ४ ॥

## न चाङ्गविधिरनङ्गे स्यात् ॥ ५ ॥

अनङ्गे—प्राकृतप्रयाजाद्यङ्गशून्ये कर्मणि, अङ्गविधिः—एकादश-प्रयाजाद्यङ्गविशेषविधिः न च सम्भवति। न ह्यसति प्रस्तरे 'अश्ववालः प्रस्तर' इति विशेषविधिर्दृष्टः। विशेषस्य सामान्यापेक्षत्वादित्याशयः ॥५॥

## कर्मणश्चैकशब्द्यात्सन्निधाने विधेराख्यासंयोगो गुणेन तद्विकारः स्याच्छब्दस्य विधिगामित्वाद्गुणस्य चोपदेश्यत्वात् ॥ ६ ॥

कर्मणश्चैकशब्द्यात्— प्रधानकर्मणः गुणकर्मणश्च ऐकशब्द्यात्— पशुयागप्रयाजयोः प्रयोगवचनादेकैकशब्दप्रतिपाद्यत्वात, समीपवृत्तिनोः परस्परविरुद्धार्थबोधकत्वासम्भवात तत्सन्निधाने— प्रधानविधिसन्निधाने सति, विधेः— अङ्गविधेः, आख्यासंयोगः— गुणविधेर्नाम; गृहीत्वा तत्र सम्बन्धो भवति। यः प्रयाजसंज्ञको यागस्तत्रायं गुण इति। एवं सर्वत्र यागे, गुणेन तद्विकारः— सङ्ख्यया मन्त्रेण च प्रयाजादियागविकारः- सङ्ख्यान्तरं मन्त्रान्तरं च स्यात्। शब्दस्य विधिगामित्वात्— एकादशेत्यादि-शब्दस्य प्रयाजादिविधिसम्बन्धात, गुणस्य च उपदेश्यत्वात्-एकादशत्वादेः विधेयत्वात्सामर्थ्यस्य पुनर्वचनस्य। तस्मादितिकर्तव्यता प्राप्यते सर्वत्रेति भावः ॥ ६ ॥

## अकार्यत्वाच्च नाम्नः ॥ ७ ॥

नामनामिसम्बन्धस्य अकार्यत्वात्—वाक्यभेदादिदोषप्रसक्त्या अविधेयत्वान्न नाम्नः सम्बन्धो विधीयते इति वक्तुं शक्यम् ॥ ७ ॥

## तुल्या च प्रभुता गुणे ॥ ८ ॥

गुणे—गुणविशिष्टापूर्वकर्मविधाने प्राकृते च कर्मणि गुणविशेषविधाने विधिप्रत्ययस्य प्रभुता -शक्तिः, तुल्या—समानेत्यर्थः। तत्र विशिष्टविध्यपेक्षया गुणमात्रविधाने लाघवात्स एव पक्षो युक्त इति भावः ॥ ८ ॥

## सर्वमेवं प्रधानमिति चेत् ॥ ९ ॥

एवं सति आख्यातवाच्यत्वात् **सर्वमेव प्रधानं**— सर्वेऽपि प्रधानविषयः स्युरिति चेत्—॥ ९ ॥

## तथाभूतेन संयोगाद्यथार्थविधयः स्युः॥१०॥

**तथाभूतेन**--द्वितीयाध्यायस्य गुणप्रधानकर्मलक्षणभूतेन, **संयोगात्**--सम्बन्धात्, **यथार्थविधयः**--यत् प्रधानं तत्प्रधानमेव, यद् गुणभूतं तद्गुणभूतमेवेति व्यवस्थितविधयः स्युरित्यर्थः ॥ १० ॥

## विधित्वं चाविशिष्टं वैकृतैः कर्मणा योगात्तस्मात्सर्वं प्रधानार्थम् ॥ ११ ॥

*प्राकृतानां* **वैकृतैः** *सह* **कर्मणा**-*आर्थवादिकेन* **योगात्**--सम्बन्धात्, श्रूयमाणप्रयाजादिविधित्वम् **अविशिष्टम्**—एकरूपम् । यथा प्रकृतौ 'यदाज्यभागौ यजति चक्षुषी एव यज्ञस्य प्रतिदधाति' इति । तथा विकृतावपि 'आज्यभागौ यजति यज्ञस्यैव चक्षुषी नान्तरेति । अग्निं स्विष्टकृतं यजति । यज्ञस्य प्रतिष्ठित्यै' इति प्रकृतौ । 'अग्निं स्विष्टकृतं यजति । यज्ञमेव प्रतिष्ठापयती'ति च विकृतौ । तस्मात्सर्वमेवजातीयकं न प्रधानं, किन्तु *प्रधानार्थं तदङ्गमिति प्रकृष्टार्थं इत्यवगन्तव्यम्* ॥ ११ ॥

## समत्वाच्च तदुत्पत्तेः संस्कारैरधिकारः स्यात् ॥१२॥

**तदुत्पत्तेः**— प्रयाजादिक्रमस्य संस्कारैः सह प्रकृतिविकृत्योः **समत्वात्**— तुल्यत्वादपि न सर्वं *प्रधानम् । अपि त्वङ्गं प्रधानार्थमपि* किञ्चिदस्तीति सिध्यति । तथा हि— प्रकृतौ प्रथमं प्रयाजाः, मध्ये प्रधानम् । तदनन्तरमनुयाजाः इति क्रमो दृष्टः । विकृतावपि 'प्रजापतिर्यज्ञमसृजत । स आज्यं पुरस्तादसृजत । पशुं मध्यतः । पृषदाज्यं पश्चात् । तस्मादाज्येन प्रयाजा इज्यन्ते । पशुना मध्यतः । पश्चात् पृषदाज्येन अनुयाजा वर्तन्ते' इति प्रकृतौ यथा प्रधानार्थं पाठः, एवमेव विकृतावपि **अधिकारः**— पाठः स्यात् । तत्सर्वमेवंजातीयकं विकृतौ प्रधानार्थं तदङ्गभूतमिति भावः ॥ १२ ॥

गुणविधिः कर्मान्तरं वेति अज्ञातज्ञापनस्यैव विधिस्वरूपाचोदकेनाऽऽसादन-नियोजनयोस्तत्रज्ञातत्वान्न कर्मान्तरविधानं युक्तम्। किन्तु यस्य उत्कर-परिधिरूपगुणस्य ज्ञापकः शब्दः तदर्थः स एव तस्यार्थः । तस्यैव विधानं तत्र स्यात्। तस्मात् समीपानयनपश्चनपगमरूपदृष्टप्रयोजनः गुणविधिरेवा-यमिति भावः ॥ २० ॥

## संस्कारसामर्थ्याद्गुणसंयोगाच्च ॥ २१ ॥

**गुणसंयोगात्**—तीक्ष्णाग्रे उत्करे पृथग्रत्वसम्पादनात् सूक्ष्मे परिधौ च महत्त्वसम्पादनात् दृष्टप्रयोजने आसादननियोजने पश्चमतया स्थविम्ना च सम्बन्धात् **संस्कारसामर्थ्यात्**— संस्कारोत्पादनसमर्थे भविष्यत इत्यभिप्रायः ॥२१॥

## विप्रतिषेधात् क्रियाप्रकरणे स्यात् ॥ २२ ॥

ननु, **प्रकरणे**—सौत्रामणिप्रकरणे 'ब्राह्मणस्य मस्तके हवींष्यासा-दयति' इति विहितं हविरासादनं धर्ममात्रमदृष्टार्थम् । अत्रापि तथैव स्यादिति चेन्न । सौत्रामण्यां तत्र हविषामासादनस्य **विप्रतिषेधात्**— अश-क्यतया दृष्टासम्भवादगत्या धर्ममात्रत्वं तस्याङ्गीकृतम् । अत्र सम्भवति दृष्टा-र्थत्वे अदृष्टार्थत्वकल्पनं न्यायपराहतमिति भावः ॥ २२ ॥

अग्निचयने प्राकृतवैकृतदीक्षाहुतिमन्त्राणां समुच्चयाधिकरणम् ॥ ४ ॥

## पू० ॥ षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् ॥ २३ ॥

'य एवं विद्वानग्निं चिनुते' इति विहिताग्निचयनप्रकरणे "आकूतिमग्निं प्रयुजं स्वाहा । मनोमेधामग्निं प्रयुजं स्वाहा । चित्तं विज्ञातमग्निं प्रयुजं स्वाहा । वाचो विधृतिमग्निं प्रयुजं स्वाहा । प्रजापतये मनवे स्वाहा । अग्नये वैश्वानराय स्वाहा", इति प्राकृत्यः दीक्षाहुतयः

श्रुताः। तथा वैकृत्यः " आकूत्यै प्रयुजे ऽग्नये स्वाहा। मेधायै मनसेऽग्नये स्वाहा। दीक्षायै तपसेऽग्नये स्वाहा। सरस्वत्यै पूष्णेऽग्नये स्वाहा। आपो देवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवीउर्वन्तरिक्षं बृहस्पतिर्नो हविषा विधातु स्वाहा। विश्वेदेवस्य नेतुर्मर्तोवृणीत सख्यं विश्वेराय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा" इति दीक्षाहुतयश्च श्रुताः। एताः प्रकृत्य 'षड्भिर्दीक्षयती'ति श्रूयते। तत्र श्रुतिसंयोगात्— षड्भिर्दीक्षयतीति प्रत्यक्षश्रुतिसंयोगात्, वैकृतैर्मन्त्रैः प्राकृता मन्त्रा निर्वर्तेरन् इति तासां प्राकृतीनामाहुतीनां मन्त्रविकारः—प्राकृतमन्त्रादन्यमन्त्रः स्यात्। तस्माद्वैकृतैः प्राकृतानां बाधः स्यात्। न समुच्चय इति ॥ २३ ॥

## सि०॥ अभ्यासात्तु प्रधानस्य ॥ २४ ॥

तत्र द्वादश जुहोतीति श्रवणात् प्रधानस्य—प्राकृतदीक्षाहुतीनामभ्यासात्—आवृत्त्या, द्वयोः प्राकृतवैकृतषण्मन्त्रयोरुपपत्तौ न तेषां बाधः। अपि तु समुच्चय एव ॥ २४ ॥

## आवृत्त्या मन्त्रकर्म स्यात् ॥ २५ ॥

आवृत्त्या—प्राकृतदीक्षाहुतीनामावृत्तिरूपं यत्कर्म तदपि मन्त्रकर्म-वैकृतमन्त्रैरेव स्यात्। न प्राकृतमन्त्रैः। तथा च बाध एवेति सुरषः पूर्वपक्षः ॥ २५ ॥

## सि० ॥ अपि वा प्रतिमन्त्रत्वात् प्राकृतानामहानिः स्यादन्यायश्च कृतेऽभ्यासः ॥ २६ ॥

अपि वेति— बाधपक्षव्यावृत्तिः। प्रतिमन्त्रत्वात्— प्रतिमन्त्रमाहुतयो भवन्ति— यावत्य आहुत्य आहुतयः तासां प्रत्येकमेकैकमन्त्रापेक्षत्वात्। प्राकृताना मन्त्राणां द्विवाराभ्यासे तेषां अहानिः— न बाधः, श्रुतद्वादशाहुत्युपपत्तिश्च स्यात्। एवमबाधेन सामंजस्ये बाधोऽन्याय्यः। अतोऽभ्यासः ॥ २६ ॥

## पौर्वापर्यं वा अभ्यासे नोपपद्यते नैमित्तिकत्वात् ॥ २७ ॥

' षट् पूर्वाञ्जुहोति, षड्त्तरान् ' इति श्रुतं पौर्वापर्यमभ्यासेन समुपपद्यते । पूर्वान्-प्राकृतान् । उत्तरान्नैमित्तिकान् । नैमित्तिकास्याग-न्तुकत्वेनान्ते निवेश इति प्राकृते पूर्वत्वमुपपन्नमिति भावः ॥ २७ ॥

## तद् पृथक्त्वं दर्शयति ॥ २८ ॥

' उभयीर्जुहोति । अग्निकीराध्वरीश्चेति ' आग्निकीः—अग्नि-सम्बन्धिनीः । आध्वरीः—प्राकृताः । इत्याहुतीनां पार्थक्यं श्रूयमाणं बाध-पक्षे अनुपपन्नमिति ज्ञेयम् ॥ २८ ॥

## न चाविशेषाद्व्यपदेशः स्यात् ॥ २९ ॥

' अध्वरस्य पूर्वम् । अथाग्ने उपाग्निदेतत्कर्म यदग्निकर्म ' इति पूर्ववाक्यसंनिधावेव श्रुतो व्यपदेशः अविशेषात्—विशेषे असति न च सम्भवति—समुच्चयमन्तरा न सम्भवतीति यावत् । तस्मान्न बाध इति निष्कर्षः ॥ २९ ॥

नैमित्तिके पुनराधाने श्रुतदक्षिणाया निवृत्त्यधिकरणम् ॥ ५ ॥

## आग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ॥ ३० ॥

' भाग्यमशःश्रीकामाना पुनराधानम् । योऽग्नीनाधाय भाग्यजानिं पुत्रजानिं वा जीयेत स पुनरादधीत ' इति नैमित्तिकं पुनराधानं श्रूयते । तत्र ' पुनरुत्स्यूतं वासो दक्षिणा । पुनरुत्सृष्टोऽनड्वान् दक्षिणेति । तथा आधाने ' एका देया । षड् देया । द्वादश दयाश्चतुर्विंशतिर्देया । शतं देयम् । सहस्रं देयम् । अपरमितं देयम् ' इति दक्षिणाः श्रूयन्ते । तत्र

अन्याध्येयस्य पुनराधाने **नैमित्तिके गुणविकारे**—गुणस्य-दक्षिणायाः पुनरुत्स्यूतं वासः इत्यादिविकारे प्राप्तेऽपि एका देयेत्याधाने यथा धेर्यांय-दक्षिणादान पुनरधिक समुच्चित स्यात्। न तस्य निवृत्तिः। कुतः? **वाक्यसंयोगात्**— 'उभयीर्ददाति अन्याधेयिकीश्च पुनराधेयिकीश्चेति' वाक्येन विहितत्वादित्यर्थः ॥ ३० ॥

## शिष्टत्वाच्चेतरासां यथास्थानम् ॥ ३१ ॥

'अन्याधेयिकीर्दत्वा पुनराधेयिकीर्ददाति' इतीतरासां प्राकृतीनां दक्षिणानां **यथास्थानं**—यथाक्रमं, **शिष्टत्वात्**—विहितत्वादपि तयोः समुच्चयः ॥ ३१ ॥

## सि० ॥ विकारस्त्वप्रकरणे हि काम्यानि ॥ ३२ ॥

हि—तस्मात् कारणात्, काम्यानि पुनराधेयानि। अतः अप्रकरणे-अप्रकृतौ विहितदक्षिणायाः विकारः—बाधः प्राकृतदक्षिणाया इत्यर्थः॥३२॥

## शंकते च निवृत्तेरुभयत्वं हि श्रूयते ॥३३॥

हि—यस्मात् शंकते। निवृत्तेः—प्राकृतदक्षिणानिवृत्तेराशंकां कुरुते। ततस्तस्या निवृत्तिरेव पुनराधेय इति गम्यते। तथा हि—' उभयीर्ददाति, आन्याधेयिकीः पुनराधेयिकीश्चेति पूर्वोक्तवाक्यसमीप एव 'यद्देकृतीर्ददाति दक्षिणा उभयोरपि दक्षिणास्तेन प्रत्ता भवन्ति इति श्रूयते। अत्र वाक्ये प्रत्ता भवन्तीति शब्देन 'उभयीर्ददाति वाक्ये आन्याधेये अन्याधेयिकीं दत्वा पुनराधेये पुनराधेयिकीर्ददाति' इति एकार्थः सूच्यते इति पुनराधेये निवृत्तिः प्राकृतदक्षिणायाः नैव समुच्चय इति भावः ॥३३॥

आग्रयणे उपदिष्टवासोवत्सदक्षिणया प्राकृतान्वाहार्यदक्षिणाया निवृत्त्यधिकरणम् ॥ ६ ॥

## सि० ॥ वासोवत्सं च सामान्यात् ॥३४॥

हुताधाययजमानस्यापराभवाय । न वा नामैन्द्राग्नः । सौम्यः श्यामाकः । वैश्वदेवः पयसि चरुः । द्यावापृथिव्य एककपालः इति विहिताग्रयणे श्रूयते । 'वासो दक्षिणा । वत्सः प्रथमजो दक्षिणा इति । अत्र पूर्ववद्विरोधाभावाच्चोदकप्राप्तप्राकृतान्वाहार्यदक्षिणाया न-- निवृत्तिरपि, तु समुच्चय इति प्राप्ते आह—यथा पुनराधेयदक्षिणया प्राकृतदक्षिणानिवृत्तिः, तथा वासोवत्सेनापि अन्वाहार्यस्य निवृत्तिः बाधः । न समुच्चयः । कुतः ? सामान्यात्—दक्षिणारूपैककार्यकारित्वात् ॥ ३४ ॥

आग्रयणे वासोवत्सयोः प्राकृतान्वाहार्यधर्मानुष्ठानाधिकरणम् ॥ ७ ॥

## सि० ॥ अर्थापत्तेस्तद्धर्मस्यान्निमित्ताख्याभिसंयोगात् ॥ ३५ ॥

॥ प्रकृतौ अन्वाहार्यमुद्दिश्य प्रवृत्तार्थे मन्त्रादयो धर्माः । दक्षिणसद्भ्यउपहर्तव्य इति सम्प्रेष्यति । ये ब्राह्मणा उत्तरतस्तान् यमान् आह । दाक्षिणत एत इति । तेभ्यो--------रवानि ब्राह्मणाः अयं वो ------तगृह्णीत । उत्तरतः परीत इति संप्रेष्यति इत्यादयः ते धर्माः आग्रयणे वासोवत्सयोर्नानुष्ठेयाः । अन्वाहार्योद्देशेन प्रवृत्तत्वात् तत्र तद्धर्मोद्देश्यस्यान्वाहार्यस्याभावादिति चेन्न । न हि अन्वाहार्यमुद्दिश्य उक्तधर्मप्रवृत्तिः । अपि तु आनतिसाधनदक्षिणामुद्दिश्य । तथा च तत्र **अर्थापत्तेः**—अर्थस्य प्राकृतमन्त्राद्युदक्षिणायाः समापत्तेः तत्स्थाने पातितत्वात् **तद्धर्मः**—उक्तान्वाहार्यधर्मसमूहः वासोवत्सयोः स्यात् अनुष्ठेय एव । तन्निमित्तस्य वासोदक्षिणा वत्सोदक्षिणा इति दक्षिणानाम्ना **अभिसंयोगात्**—संयुक्तत्वात् ॥ ३५ ॥

अन्वाहार्यस्थानापन्नेऽपि वत्से पाकाभावाधिकरणम् ॥ ८ ॥

## दाने पाकोऽर्थलक्षणः ॥ ३६ ॥

वत्से चोदकेन प्राकृतपाकप्राप्तौ सत्यां तत्राह--दाने दानसाधनवत्से पाकः निवर्तते । अर्थलक्षणः हेतुगर्भमिदं पाकस्य विशेषणम् । यतः पाक-

शब्दस्य शास्त्रलोकप्रसिद्धो योऽर्थस्तल्लक्षणस्तद्बोधकः पाकशब्दः। अतो निवर्तते। पाके सति वत्सस्य नष्टत्वात् वत्सो दक्षिणेति श्रौतदक्षिणालोपः, अश्रुतमांसदक्षिणापत्तिरिति तत्कर्तुः पातित्यप्रसंग इति भावः ॥ ३६ ॥

वाससि पाकाभावाधिकरणम् ॥ ९ ॥

## पाकस्य चान्नकारित्वात् ॥ ३७ ॥

**पाकस्य अन्नकारित्वात्**--अन्नसाधनत्वात्, वाससि तदभावात् तत्र तन्निवृत्तिरिति भावः ॥ ३७ ॥

वासोवत्सयोरभिघारणाभावाधिकरणम् ॥ १० ॥

## तथाऽभिघारणस्य ॥ ३८ ॥

यथा पाकस्य तथा अभिघारणस्यापि निवृत्तिः। स्वादुतासम्पादकत्वात्तस्येति भावः ॥ ३८ ॥

ज्योतिष्टोमे गवामेव द्वादशशतस्य दक्षिणात्वाधिकरणम् ॥ ११ ॥

## द्रव्यविधिसंनिधौ सङ्ख्या तेषां गुणत्वात्स्यात् ॥ ३९ ॥

'ज्योतिष्टोमे इत्यमाम्नायते— '*गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्च* व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' इति। समाम्नातेऽस्मिन् दक्षिणावाक्ये **द्रव्यविधिसंनिधौ**— दक्षिणात्वेन विधीयमानानां गवादिद्रव्याणां संनिधौ 'तस्य द्वादशशतं दक्षिणा' इति श्रूयमाणा सङ्ख्या तेषां गवादीनां प्रत्येकस्य—एकैकस्य सङ्ख्या स्यात्। कुतः? **गुणत्वात्**— *गवादिद्रव्यगुणत्वेन तस्या विधीयमानत्वात्*। '*प्रतिप्रधानं गुणावृत्तिरिति* न्यायात् प्रत्येकं सर्वैः साकं तस्याः सम्बन्ध इति प्रत्येकं गवादिद्रव्यं द्वादशाधिकशतसङ्ख्यं दक्षिणात्वेन ऋत्विग्भ्यो देयमिति ॥ ३९ ॥

प्रथमः पक्षः

## समत्वात्तु गुणानामेकस्य श्रुतिसंयोगात् ॥४०॥

तुशब्दः प्रथमपूर्वपक्षनिषेधकः। न प्रत्येकस्य गवादिद्रव्यस्य द्वादशाधिकशतम्। अपि तु एकस्य कस्यचिद्द्रव्यस्यैव तत्। कुतः? **समत्वाद्गुणानां** माषान्तानां देयद्रव्याणां सङ्ख्यायाश्च गुणत्वेन समत्वात्। अस्मिन् यज्ञे दक्षिणायाः परिमाणं कियदित्याकाङ्क्षायां 'द्वादशशतं' इति द्वादशाधिकशतसङ्ख्या दक्षिणया सम्बध्यते। कस्येति, सङ्ख्येयाकाङ्क्षायां तु श्रुतगवादिषु मध्ये यस्य कस्यचिदेकस्य सम्बन्धेऽपि तद्द्वारा उक्तसङ्ख्यायाः दक्षिणासम्बन्धः समुपपद्यते। इति **श्रुतसंयोगात्**–श्रुतस्य द्वादशशतशब्दस्य संनिहितदक्षिणाशब्देन सह सम्बन्धात् इच्छानुसारं एकस्यैव कस्यचिद्द्वादशशतं दक्षिणात्वेन उक्तयज्ञे देयमिति। द्वितीयः पक्षः ॥ ४० ॥

## यस्य वा सन्निधाने स्याद्वाक्यतोऽत्द्यभिसम्बन्धः ॥ ४१ ॥

वा–शब्दः द्वितीयपक्षस्य अनियमपराहतत्वेन त्याज्यत्वार्थकः। **यस्य**–सङ्ख्येयस्य संनिधाने सङ्ख्याशब्दः स्यात् तेनैव तस्य सम्बन्धो **वाक्यतः**–वाक्यप्रमाणेन भविष्यतीति इच्छापेक्षयाऽनिमापादियां सान्निध्यस्य ज्यायस्त्वमिति तृतीयः पक्षः ॥ ४१ ॥

## असंयुक्ता तु तुल्यवदितराभिर्विधीयन्ते तस्मात्सर्वाधिकारः स्यात् ॥ ४२ ॥

तुशब्दः सान्निध्यस्यानियामकत्वद्योतकः। **असंयुक्ता**–केवलैर्माषैरसंयुक्ता उक्तसङ्ख्या। यत इतराभिर्द्रव्यश्रुतिभिस्तुल्यवत्तया विधीयन्ते माषाः। तथा हि—गौरित्यारभ्य माषान्तद्रव्यवाचकशब्देषु चकारयोगो दृश्यते। तेन न कस्यापि पृथक्स्वातन्त्र्यम्। किन्तु इतरसहितस्यैव सङ्ख्यया सम्बन्धः। **तस्मात् सर्वाधिकारः स्यात्**–गवादिमाषान्तराशौ सङ्ख्यान्वयः स्यादिति तुरीयः पक्षः ॥ ४२ ॥

## सि० ॥ असंयोगाद्विधिश्रुतावेकजाताधिकारः स्याच्छ्रुत्याकोपात् क्रतोः ॥ ४३ ॥

न गवादिमाषान्तराशौ सङ्ख्यान्वयः । विधिश्रुतौ—'तस्य द्वादशशतं दक्षिणेति विधिवाक्ये, असंयोगात्—राशिवाचकशब्दाश्रवणात् । न हि गवादिमाषान्तराशिस्तत्र शब्देनोच्यते । यस्तस्येति प्रकृतपरामर्शकेन सर्वनाम्ना निर्दिश्येत । गवादयः शब्देनोक्ताः, त एव प्रत्येकं प्रकृताः । अतस्त एव तस्येति सर्वनाम्ना निर्देशार्हाः । एवं स्थिते परामृष्टेष्वनेकेषु मध्ये एकजाताधिकारः— एकजातीयकं किमप्येकमेव द्रव्यं ग्रहणार्हम् । अन्यथा तस्येत्येकवचनश्रुतिव्याकोपः स्यात् । यद्येकवचनश्रुतेरव्याकोपाय कतोर्ग्रहणं कुर्यात्तस्येतिशब्दस्तदा तस्य क्रतोर्द्वादशशतं दक्षिणा इति स्यात् । तथा सति नित्यं सङ्ख्येयसापेक्षा संख्या सङ्ख्येयस्याभावान्निरवलम्बा व्यर्थैव भवेत् । तस्मात्--श्रुतेरव्याकोपायोक्तसङ्ख्यावैयर्थ्यपरिहाराय च एकजातीये एकस्मिन् द्रव्य एव सङ्ख्यान्वय इति भावः ॥ ४३ ॥

## शब्दार्थश्चापि लोकवत् ॥ ४४ ॥

शब्दार्थश्च—'य एव लौकिकास्त एव वैदिकाः' इति लोकवेदयोः पदपदार्थैक्यस्य प्रथमाध्याये निर्णीतत्वात् वेदे शब्दार्थो लोकवदेव ग्राह्यः । लोके 'शतमस्मै दीयतामित्युक्ते एकजातीयानामेव शतं प्रतीयते, न भिन्नजातीयानाम् । यथा वा 'शतं गावः' इत्यत्र अश्वादिवृत्तिरसहितगोवृत्तिसङ्ख्या न प्रतीयते । तथा प्रकृतेऽप्येकजातीयवृत्तिरुक्तसङ्ख्यैव गृहीतव्या । न भिन्नजातीयवृत्तिः । तदेव लोकवदिति सौत्रदृष्टान्तः सङ्गच्छते नान्यथेति भावः ॥ ४४ ॥

तस्य द्वादशशतमित्यनेन पशुगतसङ्ख्याभिधानाधिकरणम् ॥१२॥

## सि० ॥ सा पशूनामुत्पत्तितो विभागात् ॥४५॥

इत्थमेकजातीयसङ्ख्यासिद्धावपि पशूनां माषाणां वा सेति संशये सा—द्वादशशतसङ्ख्या पशूनामेव ग्राह्या । न माषादीनाम् । कुतः ? उत्पत्तितो विभागात्—औत्पत्तिकेन लोकप्रसिद्धेन विभागेन पशव एव व्यवहारे सङ्ख्यायन्ते । यथा पञ्चभिरश्वैः क्रीत , पञ्चभिः गोभिः क्रीता

इत्यत्र अश्वादिगतसङ्ख्यैव प्रतीयते । माषादानामौत्पत्तिकविभागेन व्यवहारेषु सङ्ख्या न सङ्कीर्त्यते । न हि भवति पञ्चभिर्माषैः क्रीतः, पञ्चभिस्तिलैर्वा क्रीत इति । तस्मात् पशुनिष्ठैवोक्तसङ्ख्या दक्षिणादानार्थं ग्राह्या । न व्रीहिमाषादिवृत्तिरिति भावः ॥ ४५ ॥

पशुषु गवामेवेति नियमाधिकरणम् ॥ १३ ॥

## पू०॥ अनियमोऽविशेषात् ॥ ४६ ॥

पशूनामेव सा सङ्ख्येति सिद्धेऽपि गवादीनां पशुत्वाविशेषात् तदन्यतमस्य यस्य कस्यचित् पशोर्द्वादशशतमित्यनियम इति चेन्न ॥ ४६ ॥

## सि० ॥ भागित्वाद्वा गवां स्यात् ॥ ४७ ॥

भागित्वात्—महदुपकारकत्वात् गवामेव सा संख्येति नियमः स्यात्। अश्वानां तादृशोपकारकत्वेऽपि ' न केसरिणो ददाति प्रतिगृह्णाति वा ' इति निषेधान्नोक्तनियमव्याघात इति भावः ॥ ४७ ॥

## प्रत्ययात् ॥ ४८ ॥

सङ्ख्यान्वयार्थं विशेष्याकाङ्क्षायां प्रकृतवचनेन प्रथमं गोः प्रत्ययात् असति बाधके तत्परित्यागस्यानुचितत्वात्। नियमे साधकान्तरमिदम्॥४८॥

## लिङ्गदर्शनाच्च ॥ ४९ ॥

तैत्तिरीयसंहितायां सप्तमाष्टकस्य प्रथमप्रपाठके सहस्रदक्षिणार्थवादे 'ते संवत्सर एकां गामसृजन्त । सा त्रीणि च शतानि असृजत त्रयस्त्रिंशतं च ' इति भूयो भूयो गोमहिमैव श्रूयते । इदमपि, गोनियमे लिङ्गं द्रष्टव्यम् ॥ ४९ ॥

द्वादशशतगोदक्षिणायाः विभागेन दानाधिकरणम् ॥१४॥

## तत्र दानं विभागेन प्रदानानां पृथक्त्वात् ॥५०॥

तत्र—क्रतौ, दानं—स्वत्वनिवृत्तिपुरस्सरपरस्वत्वापादनात्मकं गोद्वादशशतदक्षिणारूपं दानं, विभागेन—एतावदमुष्मै अस्मै चैतावदिति विभज्य

स्वयं यजमानेन दातव्यम्। न मध्ये सत्याप्य समुदायोद्देशेन। कुतः? प्रदानानां—सम्प्रदानानां प्रतिगृहीतॄणां, पृथक्त्वात्—भिन्नत्वात्॥५०॥

## परिक्रयाच्च लोकवत् ॥ ५१ ॥

लोके यथा काष्ठवाहप्रभृतिभ्य 'इदं तुभ्यमिदं च तुभ्यमिदमिति विभज्य स्वामिना दीयते। ऋत्विग्दानस्यापि परिक्रयरूपत्वात्तथैव दयम् ॥ ५१ ॥

## विभागं चापि दर्शयति ॥ ५२ ॥

'तुषो नो विश्वेदा विभजतु। कृष्णाजिनेन मित्राय दक्षिणा ददाति। आग्नीध्रेऽग्रे ददाति। अग्निमुखानेव पितॄन् प्रीणाति। होतृभ्यो ददाति। हविर्धान आसीनेभ्य अध्वर्युभ्यो ददाति। उद्गातृभ्यो ददाति'। इत्यादिश्रुतिरपि विभज्य दानं ज्ञापयति ॥ ५२ ॥

अध्वर्य्वादिसमाख्यानुसारेण दक्षिणाविभागाधिकरणम् ॥ १५ ॥

## समं स्यादश्रुतित्वात् ॥ ५३ ॥

विभज्य दानमिति अधिगतम्। तत्र समो विषमो वा विभाग इति विशये अश्रुतित्वात्-विशेषस्याश्रवणात्, सर्वेभ्य समविभागेनैव दानं स्यात्। लोके पुत्राणां पितृधने समविभागवदिति ॥ ५३ ॥

## अपि वा कर्मवैषम्यात ॥ ५४ ॥

अपि वेति पक्षान्तरम्। कर्मवैषम्यात्-लघुगुरुकर्मतुल्यया भृतिरिति लोके दृष्टत्वादत्रापि विभागे कर्मानुसारता वैषम्यं स्यात् ॥ ५४ ॥

## सि० ॥ अतुल्याः स्युः परिक्रये विषमाख्या विधिश्रुतौ परिक्रयान्न कर्मण्युपपद्यते दर्शनाद्विशेषस्य तथाभ्युदये ॥ ५५ ॥

अस्त्यत्र वैषम्यम्। अथापि न तत् कर्मानुसारेण। अपि तु श्रुत्यभिहितमिति श्रुत्यनुसारत एव। तेन परिक्रये दक्षिणादाने, अतुल्याः-विषमाख्या.

स्युः ऋत्विज इत्यर्थः। यतः **अभ्युदये**-अभ्युदयफलके द्वादशाहे, **विधिश्रुतौ**-दीक्षाविधिश्रुतौ ' अर्धिनो दीक्षयति । तृतीयिनो दीक्षयति । पादिनो दीक्षयति ' इति विशेषस्य दर्शनात् **विषमाख्या**—'अर्धिनः तृतीयिनः, पादिन इति विषमसमाख्या तेषामृत्विजामुपलभ्यते । सा **कर्मणि**— कर्मानुसारतः कृतौ **परिक्रये**— दक्षिणादाने नोपपद्यते । तस्मात् समाख्याश्रुतिकृतं दक्षिणावैषम्यं न कर्मकृतमिति भावः । तच्च वैषम्यं ' यावदध्वर्यवे ददाति । तस्यार्धं प्रतिप्रस्थात्रे । तृतीयं नेष्ट्रे । चतुर्थमुन्नेत्रे ' इत्यादिना वाक्येन कल्पसूत्रकारैर्व्याख्यातमेव ॥ ५५ ॥

भूनामकैकाहे औपदेशिकधेनुदक्षिणया आतिदेशिककृत्स्नक्रतुदक्षिणाबाधाधिकरणम् ॥ १६ ॥

## तस्य धेनुरिति गवां प्रकृतौ विभक्तचोदितत्वात् सामान्यात्तद्विकारः स्याद्यथेष्टिर्गुणशब्देन ॥ ५६ ॥

' अथैष भूर्भुवस्स्वरेवस्त्रिवृदेव सर्वस्तस्य विश्ववत्यस्तोत्रीया धेनुर्दक्षिणा ' इत्यनेन वाक्येन ज्योतिष्टोमविकृतिर्भूसंज्ञक एकाहः क्रतुर्विहितः । तत्र ' धेनुर्दक्षिणा ' इति श्रूयते । अत्र धेनुशब्दः ' गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणेति चोदकप्राप्तप्राकृतदक्षिणामध्ये गोत्वावच्छिन्नस्यैव निवर्तकः । कुतः ? तस्य धेनुरित्यनेन शब्देन प्राकृतगौरेवातिदेशप्राप्ता विक्रियते । नाश्वादयमापांता विक्रियंते । यतः प्रकृतौ **विभक्तचोदित्वात्**—ज्योतिष्टोमे प्रत्येकं विभज्य दक्षिणात्वेन विहितत्वात् । ' या गौः सा धेनुरिति गोसामान्यस्य धेन्वां सत्त्वाद्गोविकृतिर्धेनुरिति धेनुदक्षिणया गोदक्षिणैव निवर्त्यते । नाश्वादिदक्षिणा । यथा ' सौर्यं चरुं निर्वपेत् ' इतीष्टिः कथंभावाकाङ्क्षायां **गुणशब्देन**—निर्वापशब्देन--निर्वापशब्दघटितोत्पत्तिवाक्येन, क्लृप्तनिर्वापकदर्शपूर्णमासीयविध्यन्तमुपस्थापयति तद्वद्धेनुशब्दः - सामानाधिकरण्याद गामेवोपस्थापयतीति गोदक्षिणैव निवर्त्यते धेनुदक्षिणया । नेतरदक्षिणेति गोदक्षिणाया एव बाधस्तस्मिन्नेकाह इति ॥ ५६ ॥

**सि० ॥ सर्वस्य वा क्रतुसंयोगादेकत्वं दक्षिणार्थस्य गुणानां कार्यैकत्वादर्थे विकृतौ श्रुतिभूतं स्यात्तस्मात्समवायाद्धि कर्मभिः ॥ ५७ ॥**

यतः प्रकृतौ ज्योतिष्टोमे दक्षिणामुद्दिश्य तच्छेषत्वेन गवादयो विधीयन्ते । ततः द्वादशशतसङ्ख्याविशिष्टगौस्तदितरे चाश्वादयः सर्वे परस्परसहिताः दक्षिणया सम्बध्यन्त इति **सर्वस्य**—गवादिमात्रस्य विकारः सा धेनुः । **दक्षिणार्थस्य**— दक्षिणाकार्यस्य ऋत्विगानतेः **क्रतुसंयोगात्**-क्रतुना सम्बन्धादेकत्वं यथा क्लृप्तम् । तथा **गुणानाम्**-गवादीनामपि, **कार्यैकत्वात्**—दक्षिणारूपैककार्यार्थत्वमपि प्रकृतौ क्लृप्तम् । अतः **विकृतौ**-निर्दिष्टैकाहे, **अर्थे**—धेनुर्दक्षिणेति विहिते वैकृते धेनुरूपार्थे प्रकृतौ दक्षिणासाधनत्वेन क्लृप्ता यावन्तः पदार्थास्तावन्तो मिलित्वा यत् कार्यं तत्कारित्वं **श्रुतिभूतम्**— श्रुतितात्पर्यविषयं स्यात् । **तया**—दक्षिणया, **समवायात्**-ऋत्विक्सम्बन्धात् । ऋत्विजस्तु **कर्मभिः**—क्रतुसम्बन्धकर्मभिः सम्बध्यन्ते । तस्मात्- धेनुदक्षिणया गवादिमात्रान्तकृत्स्नक्रतुदक्षिणैव बाध्यते निर्दिष्टायां विकृताविति भावः ॥ ५७ ॥

**चोदनानामनाश्रयाल्लिङ्गेन नियमः स्यात् ॥५८॥**

'यथेष्टिर्गुणशब्देनेत्यस्यायमभिप्रायः । **चोदनानां**— विकृतीष्टिविधीनाम्, **अनाश्रयात्**— इतिकर्तव्यताकाङ्क्षापूरकशब्दानाश्रयात् तासु तादृशशब्दाभावादित्यर्थः । **लिङ्गेन**—निर्वपतीत्यादिलिङ्गेन **नियमः**—तत्प्रकृतिकत्वनियमः स्यात् । धेनुर्दक्षिणेत्यत्र तु प्राकृतदक्षिणामतिदेशप्राप्तामुद्दिश्य धेन्वाः प्रत्यक्षविधानाच्च लिङ्गेन प्रकृतिविकृतिभावनिर्णय इति ॥५८॥

**ज्योतिष्टोमे नैमित्तिकगोदक्षिणया प्राकृतसङ्ख्यामात्रबाधाधिकरणम् ॥ १७ ॥**

**पू० ॥ एका पञ्चेति धेनुवत् ॥ ५९ ॥**

' यस्य सोममपहरेयुरेका गा दक्षिणां दद्यात् । अभिदग्धे पञ्च गा इति ' अत्र एका पञ्च च गावः श्रूयमाणा धेनुवत्—यथा धेनुः कृत्स्नदक्षिणाया निवर्तिका तथा इमा अपि स्युः । यतस्तासां दक्षिणासम्बन्धः प्रत्यक्षः श्रूयते । प्राकृतीना त्वानुमानिकः । स प्रत्यक्षेण बाध्यत इत्यपर्यवसिते अधिकरणान्तरम् ॥ ५९ ॥

## साद्यस्के त्रिवत्सरेण सोमक्रयार्थेन साण्डेन प्राकृतकृत्स्नक्रयद्रव्यबाधाधिकरणम् ॥ १८ ॥

## सि० ॥ त्रिवत्सश्च ॥ ६० ॥

साद्यस्के ' साण्डस्त्रिवत्सः सोमक्रयणस्पर्धमानानाम् ' इति श्रुतम् । त्रिवत्सः—त्रिवत्सर इत्यर्थः । तत्र ' अजया क्रीणाति, हिरण्येन क्रीणाति, ऋषभेण क्रीणाति, वाससा क्रीणातीत्यादीनि दश क्रयार्थानि द्रव्याणि चोदकप्राप्तानि सन्ति । तत्र त्रिवत्स. कृत्स्नस्य चोदकप्राप्तस्य क्रयार्थद्रव्यस्य निवर्तकः । न ऋषभस्यैव केवलम् । यतः स क्रीणातिना प्रत्यक्षतः सम्बद्ध । अतश्चोदकप्राप्तं सर्वं निवर्तयति ॥ ६० ॥

## तथा च लिङ्गदर्शनम् ॥ ६१ ॥

अपरस्मिन् साद्यस्के ' स्त्री गौः सोमक्रयणी व्यावृत्ता होषा स्पर्धा ' इति स्पर्धाव्यवहारादेर्निवृत्तिः श्रुता । सा च निवृत्तिस्तदैव सङ्गच्छते । यदाजादिदशसोमक्रयसाधनद्रव्यं बाधित्वा तत्स्थाने सैव एका गौः समवस्थिता स्यात् । अन्यथा वृषभमात्रबाधे स्वमूढघस्थितवृषभबाधिते तस्यै शेषाः क्रय्येत्युरिति स्पर्धा स्यादेव । सत्येवं व्यावृत्ता स्पर्धेति वचनमनुपपन्नं भवेत् । तस्मात् प्राकृतकृत्स्नदक्षिणाबाधे इदं लिङ्गदर्शनमप्यस्तीति ज्ञेयम् ॥६१॥

## एके तु श्रुतिभूतत्वात्सङ्ख्यया गवां लिङ्गविशेषेण ॥ ६२ ॥

अपर्यवसितस्योत्तरमिदं **एके** त्विति । 'एका गौः, पञ्च गावो दक्षिणे'त्यनेन प्राकृतद्वादशशतसङ्ख्यायुक्तगाव एव निवर्तन्ते । नाश्वादयः । कुतः ? **श्रुतिभूतत्वात्**— प्राकृतसङ्ख्याविशिष्टगवां स्थाने एका गौरित्येकस्या एव गावः श्रुतिनासमर्पितविषयत्वात् । तद्वृत्तिसङ्ख्यया स्त्रीलिङ्गेन च प्राकृतसङ्ख्याविशिष्टगवां बाधः । न हि एकामित्यस्य दक्षिणयान्वयः सम्भवति । अन्यवहितेनान्वययोग्येन च गोपदेन व्यवधानात् , प्राकृतविकदक्षिणायाः क्लृप्तत्वेनातिदेशादेव प्राप्तौ वाक्यवैयर्थ्यप्रसङ्गाच्चेति भावः ॥ ६२ ॥

अश्वमेधे प्राकाशावित्यनेनाध्वर्युभागमात्रस्य बाधाधिकरणम् ॥१९॥

## पू० ॥ प्राकाशौ च तथेति चेत् ॥ ६३ ॥

अश्वमेधे श्रूयते 'हिरण्मयौ प्राकाशौ अध्वर्यवे ददाती'ति । तत्र **प्राकाशौ** तथा 'तस्य धेनुर्दक्षिणे'त्यत्र दक्षिणामुद्दिश्य विधीयमाना धेनुर्यथा प्राकृतकृत्स्नदक्षिणानिवर्तिका । तथा वाक्यभेदभिया अध्वर्युसम्प्रदानकत्वस्याविवक्षितत्वात् प्राकृतदानमात्रमुद्दिश्य विधीयमानौ प्राकाशावपि धेनुवत् कृत्स्नप्राकृतदक्षिणायाः निवर्तकौ । नाध्वर्युभागमात्रनिवर्तकाविति चेत्— ॥ ६३ ॥

## सि० ॥ अपि त्ववयवार्थत्वाद्विभक्तप्रकृतित्वाद् गुणेदन्त्वाविकारः स्यात् ॥ ६४ ॥

**अपि** त्विति पक्षव्यावर्तकः । **अवयवार्थत्वात्**— 'अध्वर्यवे ददाती'ति ऋत्विगेकदेशाध्वर्य्वर्थत्वेन श्रूयमाणत्वात् । प्रकृतयागस्य **विभक्तप्रकृतित्वात्**—विभक्ता—विभागवती "इदमध्वर्योः" इमेऽन्येषामिति निर्देशवती प्रकृतिः ज्योतिष्टोमो यस्य तत्त्वात् । **गुणेदन्त्वाविकारः**—प्रश्नौ गवादिरूपगुणे इदमध्वर्यव इति इदन्तौ । तस्या अमौ प्राकाशावध्वर्यव इति विकारः स्यात् । प्राकाशावध्वर्यवे ददातीत्यत्राध्वर्युपदवैयर्थ्यभियाऽध्वर्यु-

सम्प्रदानकप्राकाशद्वयकर्मकमपूर्वमेव दानं विधित्सितमतो न वाक्यभेदभीः । तस्मादध्वर्युदक्षिणामात्रनिवृत्तिः । नेतरदक्षिणाया इति भावः ॥ ६४ ॥

उपहव्ये श्यावाश्वदक्षिणया कृत्स्नप्राकृतदक्षिणाया बाधाधिकरणम् ॥ २० ॥

## सि० ॥ धेनुवच्चाश्वदक्षिणा, स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य ॥ ६५ ॥

'उपहव्योऽनिरुक्तः तेनाभिशस्यमानं याजयेत् । अश्वः श्यावो रुक्मललाटो दक्षिणा स ब्रह्मणे देयः' इत्युपहव्यनाम्नि क्रतौ दक्षिणात्वेन श्रुतोऽश्वः धेनुवन्निखिलप्राकृतदाक्षिणाबाधकः । न ब्रह्मभागमात्रनिवर्तकः । स ब्रह्मणे देयः इति तु पुरुषापनयः— ऋत्विगन्तरसम्बन्धनिवृत्तिः । यथा शतकृष्णलचरौ सर्वं ब्रह्मण इति हिरण्यस्य ऋत्विगन्तरसम्बन्धनिवृत्तिस्तद्वदत्रापि । तथा च पुरुषान्तरस्यातिदिष्टोपदिष्टदक्षिणाद्वयबाधाल्लौकिकेनोपायेन आनतिः सम्पादनीयेति भावः ॥ ६५ ॥

## पू० ॥ एके तु कर्तृसंयोगात् स्रग्वत्तस्य लिङ्गविशेषेण ॥ ६६ ॥

कर्तृसंयोगात्—कर्तुः—कर्मकर्तुः ब्रह्मणः संयोगात् 'स ब्रह्मणे परिहरतीति' कर्मकर्तृब्रह्मण सम्बन्धरूपलिङ्गविशेषेण एके—दक्षिणैकदेशा निवर्तन्ते । स्रग्वत्—'स्रजमुद्गात्रे ददाति' इत्युद्गातृसंयोगरूपाल्लिङ्गविशेषवदित्यर्थः ॥ ६६ ॥

## सि० ॥ अपि वा तदधिकारात् हिरण्यवद्विकारः स्यात् ॥ ६७ ॥

अपि वेत्युक्तनिरासः । तदधिकारात्—दक्षिणाधिकारात्—दक्षिणयान्वितत्वादित्यर्थः । विकारः—सर्वनिकारः, हिरण्यवत् । स्रग्वाक्यस्य त्वेक-

त्वात् वाक्यभेदभिया तत्रापूर्वविधिरेव । अत्र तु वाक्यद्वयमाम्नायते । एकेन केवलदक्षिणाविधिः । अन्येन पुरुषापनयः इति वैषम्यान्न स्वत्वदित्युपपद्यते । तस्माद्धिरण्यवदित्येव सिद्धान्तः ॥ ६७ ॥

**ऋतपेये सोमचमसेन कृत्स्नक्रतुदक्षिणाबाधाधिकरणम् ॥२१॥**

## पू० ॥ तथा च सोमचमसः ॥ ६८ ॥

ऋतपेये क्रतौ—'औदुम्बरश्चमसो दक्षिणा । स प्रियाय सगोत्राय ब्रह्मणे देयः' इति श्रूयते । तत्र सोमचमसोऽपि **तथा**—स्रग्वत- यथा उद्गात्रे दीयमाना स्रक् उद्गात्रभागस्य बाधिका तत्संयोगात् । तथा ब्रह्मसंयोगात् ब्रह्मभागस्य बाधकः सोमचमसः । न कृत्स्नदक्षिणाया इति ॥ ६८ ॥

## सि० ॥ सर्वविकारो वा क्रत्वर्थे प्रतिषेधात् पशूनाम् ॥ ६९ ॥

**सर्वविकारः**-सर्वबाधक एव सोमचमसः । न ब्रह्मभागमात्रबाधकः । कुतः ? 'ऋतं वै सोमः अनृतं पशवः यत् पशून् दद्यात् सोऽनृतं कुर्यात्' इति क्रत्वर्थे दाने **पशूनां प्रतिषेधात्**—प्राकृतपशून् प्रतिषिध्य 'औदुम्बरः सोमचमसो दक्षिणा' इति सोमचमसो दक्षिणात्वेन विहितः । तेन प्राकृतकृत्स्नदक्षिणाया निवृत्तिः समवगम्यते । ब्रह्मभागमात्र निवृत्तावन्येभ्यः पशवो दीयेरन् । तथा सति 'यत् पशून् दद्यात् सोऽनृतं कुर्यात्' इत्यनृतकरणमनुपपन्नं स्यात् । तस्मात् कृत्स्नप्राकृतदक्षिणानिवर्तकः सोमचमस इति भावः ॥ ६९ ॥

## शं. ॥ ब्रह्मदानेऽविशिष्टमिति चेत् ॥ ७० ॥

**ब्रह्मदाने**— ब्रह्मभागे सोमचमसो देयः 'यत्तद्भागे पशून् दद्यात् सोऽनृतं कुर्यादिति ब्रह्मभागेऽप्यविशिष्टं समानमिति चेत् ॥ ७० ॥

शङ्कानिरसनम्—

**उत्सर्गस्य क्रत्वर्थत्वात् प्रतिषिद्धस्य कर्म स्यान्न च गौणः प्रयोजनमर्थः स दक्षिणानां स्यात् ॥७१॥**

**उत्सर्गस्य—**' सोमचमसो दक्षिणेति दक्षिणा येन सोमचमसदानस्य **क्रत्वर्थत्वात्—** ऋत्विगानतिद्वारा क्रत्वङ्गत्वात् प्रकृतौ यथा ऋत्विगानति-द्वारा गवादिसमुदायस्य क्रतुसम्बन्धिदक्षिणात्वमवयवात्तस्या एकत्वम् । यथा प्रकृतायां विकृतावपि च सोमचमसैदक्षिणया सार्वमन्वयादेकत्वमेवेति तया निखिलदक्षिणाबाध । **प्रतिषिद्धस्य—**' यत पशून् दद्यात् सोऽनृतं कुर्यादिति निषिद्धस्य पशुसङ्घस्य क्रतुसम्बन्धित्वेऽपि दानावच्छिन्नस्य कर्मत्वात् प्रकृतौ दानक्रियाकर्मत्वात्, अत्र यावत्तत्स्थानस्थितस्य चमसस्य **गौणः** गौण-वृत्त्युपस्थाप्य दक्षिणाशब्दस्यार्थे प्रयोजनं न स्यात् । न सम्भवतीत्यर्थः । ' सोमचमसो दक्षिणेत्यस्य चमसदक्षिणया ऋत्विगानतिं कुर्यादिति मुख्योऽर्थः । चमसस्यैकदेशबाधकत्वे—ब्रह्मभागमात्रबाधकत्वे तु चमसा-त्मकदक्षिणैकदेशेन ऋत्विगेकदेशानतिं भावयेत् इति तस्य वाक्यस्य गौण लाक्षणिकोऽर्थः स्यात् । स चायुक्त एवेति भावः ॥ ७१ ॥

**यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् ॥७२॥**

अस्याधिकरणस्य पूर्वपक्षे प्रयोजनज्ञापकमिदं सूत्रं यदि त्विति ।— **यदि तु**—चमसदानं **ब्रह्मणः**—ब्रह्मभागमात्रनिवर्तकं तत् । तदा **तदूनं**—तेन ब्रह्मभागमात्रेण ऊनं— न्यूनं, प्राकृतदानजातं शेषभूतमस्तीति तद्विकारो न स्यात् सोमचमसः । किन्तु **तद्विकारः**—तस्य ब्रह्मभागस्य विकार एव स्यात् ॥ ७२ ॥

**सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥७३॥**

सिद्धान्त्यभिप्रेतप्रयोजनबोधकमिदं सूत्रम् । **सर्वं वा—** सर्वमेव प्राकृतदानजातं निवर्तते । कुतः ? **तासां—** दक्षिणानां, **क्रतुप्रधानत्वात्—** *क्रतुशेषत्वात् सर्वा अपि दक्षिणा निवर्तेत इत्याशयः । क्रत्वर्थदक्षिणा* सर्वेभ्यो ऋत्विग्भ्यो देया । कथं ब्रह्मण एवेति चेत्— **पुरुषापनयात्—** 'स ब्रह्मणे देयः' इति वचनात् पुरुषान्तराद्विमज्य ब्रह्मण एव दानमिति भावः ॥ ७३ ॥

वाजपेये रथदानस्य यागनियामकत्वाधिकरणम् ॥ २२ ॥

## यजुर्युक्तोऽध्वर्योर्दक्षिणा विकारः स्यात् ॥७४॥

वाजपेये 'यजुर्युक्तं रथमध्वर्यवे ददाती' त्याम्नातम् । तत्रायं रथः अध्वर्युदक्षिणाभागस्य **विकारः—** निवर्तकः— बाधकः स्यात् । न पक्षे अप्राप्तो नियामकः । कुतः ? अध्वर्युसम्प्रदानकदानस्य साक्षात् श्रुतत्वात् 'आकाशावध्वर्यवे ददाती'ति वदिति ॥ ७४ ॥

## सि० ॥ अपि वा श्रुतिभूतत्वात्सर्वासां तस्य भागो नियम्येत ॥ ७५ ॥

**अपि वेति—** विकारपक्षं निवर्तयति । **श्रुतिभूतत्वात्—** 'सप्तदश रथाः, 'सप्तदश निष्काः, 'सप्तदश दास्यः, 'सप्तदश युग्मानि; 'सप्तदश गवां शतानि, वयस्यो वयस्यश्च सप्तदशेनि 'सप्त' सप्तदशकानि ददातीति श्रूयमाणत्वात् 'सप्तदशसु कश्चन रथो यजुर्युक्तः,'कश्चन ऋग्युक्तः', 'कश्चन सामयुक्तः' इत्येवमादिरथेषु अध्वर्युसम्प्रदानकयजुर्युक्तरथस्य पक्षे सर्वासां दक्षिणानां प्राप्तौ अध्वर्युभागभूतस्य रथविशेषस्य नियामकमुक्तश्रुतिवाक्यमिति सिद्धान्तः ॥ ७५ ॥

इति पूर्वमीमांसासूत्रवृत्तौ **भावबोधिन्यां** दशमाध्यायस्य तृतीयः पादः ॥ ३ ॥ श्रीः ॥

—।—

शंकानिरसनम्—

**उत्सर्गस्य क्रत्वर्थत्वात् प्रतिपिद्धस्य कर्म स्यान्न च गौणः प्रयोजनमर्थः स दक्षिणानां स्यात् ॥७१॥**

**उत्सर्गस्य—**' सोमचमसो दक्षिणेति दक्षिणात्वेन सोमचमसदानस्य **क्रत्वर्थत्वात्—** ऋत्विगानतिद्वारा क्रत्वङ्गत्वात् प्रकृतौ यथा ऋत्विगानतिद्वारा गवादिसमुदायस्य क्रतुसम्बन्धिदक्षिणायामन्वयात्तस्या एकत्वम् । यथा प्रकृतायां विकृतावपि च सोमचमसैकदक्षिणया साकमन्वयादेकत्वमेवेति तया निखिलदक्षिणाबाध । **प्रतिपिद्धस्य—**' यत पशून् दद्यात्सोऽनृतं कुर्यादिति निषिद्धस्य पशुसङ्घस्य क्रतुसम्बन्धित्वाभावाच्छिन्नस्य कर्मत्वात् प्रकृतौ दानक्रियाकर्मत्वात्, अत्र यावत्तत्स्थानस्थितस्य चमसस्य **गौणः** -गौणवृत्त्युपस्थाप्य' दक्षिणाशब्दस्यार्थ प्रयोजनं न स्यात् । न सम्भवतीत्यर्थः । ' सोमचमसो दक्षिणेत्यस्य चमसदक्षिणया ऋत्विगानतिं कुर्यादिति मुख्योऽर्थः । चमसस्यैकदेशबाधकत्वे—ब्रह्मभागमात्रबाधकत्वे तु चमसात्मकदक्षिणैकदेशेन ऋत्विगेकदेशानतिं भावयेत् इति तस्य वाक्यस्य गौणलाक्षणिकोऽर्थः स्यात् । स चायुक्त एवेति भाव' ॥ ७१ ॥

**यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् ॥७२॥**

अस्याधिकरणस्य पूर्वपक्षे प्रयोजनज्ञापकमिदं सूत्रं यदि त्विति ।—**यदि तु**—चमसदानं **ब्रह्मणः**—ब्रह्मभागमात्रनिवर्तक तत् । तदा **तदूनं**—तेन ब्रह्मभागमात्रेण ऊनं—न्यूनं, प्राकृतदानजात शेषभूतमस्तीति तद्विकारो न स्यात्सोमचमस. । किन्तु **तद्विकारः**—तस्य ब्रह्मभागस्य विकार एव स्यात् ॥ ७२ ॥

**सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥७३॥**

सिद्धान्त्यभिप्रेतप्रयोजनबोधकमिदं सूत्रम् । सर्वं वा— सर्वमेव प्राकृतदानजातं निवर्तते । कुतः ? तासां—दक्षिणानां, क्रतुप्रधानत्वात्— क्रतुशेषत्वात् सर्वा अपि दक्षिणा निवर्तेत इत्याशयः । कत्वर्थादक्षिणा सर्वेभ्यो ऋत्विग्भ्यो देया । कथं ब्रह्मण एवेति चेत्— पुरुषापनयात्— 'स ब्रह्मणे देयः' इति वचनात् पुरुषान्तराद्विभज्य ब्रह्मण एव दानमिति भावः ॥ ७३ ॥

वाजपेये रथदानस्य यागनियामकत्वाधिकरणम् ॥ २२ ॥

## यजुर्युक्तोऽध्वर्योर्दक्षिणा विकारः स्यात् ॥७४॥

वाजपेये 'यजुर्युक्तं रथमध्वर्यवे ददाती' त्याम्नातम् । तत्रायं रथः अध्वर्युदक्षिणाभागस्य विकारः— निवर्तकः— बाधकः स्यात् । न पक्षे अप्राप्तौ नियामकः । कुतः ? अध्वर्युसम्प्रदानकदानस्य साक्षात् श्रुतत्वात् 'प्राकाशावध्वर्यवे ददाती'ति वदति ॥ ७४ ॥

## सि० ॥ अपि वा श्रुतिभूतत्वात्सर्वासां तस्य भागो नियम्येत ॥ ७५ ॥

अपि वेति—विकारपक्षं निवर्तयति । श्रुतिभूतत्वात्—'सप्तदश रथाः, 'सप्तदश निष्काः, 'सप्तदश दास्यः, 'सप्तदश युग्मानि, 'सप्तदश गवां शतानि, वयस्यो वयस्यश्च सप्तदशेनि' 'सप्त' सप्तदशकानि ददातीति श्रूयमाणत्वात् 'सप्तदशसु कश्चन रथो यजुर्युक्तः, 'कश्चन ऋग्युक्तः', 'कश्चन सामयुक्तः' इत्येवमादिरथेषु अध्वर्युसम्प्रदानकयजुर्युक्तरथस्य पक्षि सर्वासां दक्षिणानां प्राप्तौ अध्वर्युभागभूतस्य रथविशेषस्य नियामकमुक्तश्रुतिवाक्यमिति सिद्धान्तः ॥ ७५ ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां दशमाध्यायस्य तृतीयः पादः ॥ ३ ॥ श्रीः ॥

—।—

## ॥ अथ दशमाध्यायस्य चतुर्थः पादः ॥

नक्षत्रेष्ट्याद्युपदिष्टोपहोमादिभिः प्राकृतनारिष्टहोमादीनां समुच्चयाधिकरणम् ॥ १ ॥

### सि०॥ प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥

'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत्' इति विहितनक्षत्रेष्टौ 'सोऽग्नजुहोति'। 'अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा, अम्बायै स्वाहा, नितत्न्यै, स्वाहा' इत्यादिभिरुपहोमा विहिताः। प्रकृतौ 'नारिष्ठान् जुहोती'ति नारिष्टहोमाः सन्ति। एवं श्येनयागे 'लोहितोष्णीषा लोहितवसना नीविता ऋत्विजः प्रचरन्ती'ति श्रुतम्। प्रकृतौ 'नीवीतं मनुष्याणां, प्राचीनावीतं पितॄणां, उपवीतं देवानां, उपव्ययते देवलक्ष्ममेव तत्कुरुते' इति श्रूयते। तथा पृष्ठ्ये षडहे 'मध्वाशयेत् घृतं वेति श्रुतम्। प्रकृतौ 'पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति। तत्र उपहोमनीवीतमध्वशनानि यथाक्रमं नरिष्टहोमोपवीतपयोव्रतानां विकृतावतिदिष्टाना निवर्तकानि, किं वा तैः साकं तेषां समुच्चयः इति संशये सिद्धान्तः। समुच्चय इति। कुतः? **प्रकृतिलिङ्गासंयोगात्**—प्रकृतिलिङ्गेन—प्रकृतिसम्बन्धितकार्येण असंयोगात्—संयोगाभावात्। यतः **संस्कारं**— अपूर्वोत्पादकं कर्मविहितं कर्म। अतो **विकृतावधिकम्**—समुचितं स्यात्। प्राकृतनारिष्टहोमोपवीतपयोव्रतादिजन्यमदृष्टमपूर्वं भिन्नम्। उपहोमनिवीतमध्वशनजन्यं चापूर्वं भिन्नम्। तयोः परस्परकार्यकारित्वे नास्ति प्रमाणम्। तस्मात् तैस्तेषां चोदकप्राप्तानामपि न निवृत्तिः। अपि तु समुच्चय एवेति भावः॥ १ ॥

**चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥ २ ॥**

'शरमयं बर्हिर्भवती' त्यत्र तु **चोदनालिङ्गसंयोगे**— 'बर्हिष वेदिं स्तृणाती'ति प्राकृतविधिवाक्ये वेदिस्तरणसाधनाव्यभिचरितलिङ्गस्यान्यथा-बर्हिःशब्दस्य 'शरमयं बर्हिर्भवती'त्यत्र **प्रकृतिसन्निधानात्**—प्राकृतविधिघटकशब्दस्य सान्निधानात्— संयोगात् अनुवृत्तत्वादित्यर्थः । **तद्विकारः**-कुशविकारः स शरशब्दार्थ इति वैषम्यात् प्रकृते न स दृष्टान्तः सम्भवतीति भावः ॥ २ ॥ इति प्रथमवर्णकम् ॥ १ ॥

**प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥**

'सोमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीहीणामभिचरन्' इत्यत्र 'शरमयं बर्हिर्भवती'ति श्रुतम् । तत्रोभयोः शरकुशयोः प्रामाणिकत्वात् मयटः प्राचुर्यार्थकत्वेनाप्युभयोरुपपत्तौ सम्भवन्त्या न कुशबाधस्तत्र शरैः । अपि तु **प्रकृतिसंयोगात्**— प्रकृतौ बर्हिःशब्दार्थकुशास्तरणजन्यापूर्वस्य, विकृतौ च वेदिस्तरणसाधनबर्हिःशब्दार्थशरजन्यापूर्वस्य च परस्परं भिन्नत्वेन प्राकृतकार्यस्य वैकृतकार्ये **असंयोगात्**— सम्बन्धाभावात्, **विकृतावधिकं**—तयोः समुच्चयः स्यान्न बाध इति प्राप्ते आह ॥ १ ॥

**चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥ २ ॥**

प्राकृतविधिरचने वेदिस्तरणसाधनाव्यभिचरितलिङ्गात्मकबर्हिः-शब्दस्य वैकृतविधौ **सन्निधानात्**—अनुवृत्तत्वात् 'नित्यं वृद्धशरादिभ्यः' इति सूत्रेण शरशब्दात् विकारार्थे मयट्प्रत्ययस्य श्रुतिपदोक्तत्वेन तस्य प्राचुर्यार्थत्वासम्भवाच्च **तद्विकारः**—कुशविकारः शरशब्दार्थः । प्रकृतावा विकृतावितिं शरैः कुशनिवृत्तिरेवेति द्वितीयं वर्णकम् ॥ २ ॥

वाजपेये रथघोषदुन्दुभिघोषाभ्यां दर्भमन्त्रयोरुभयोर्बाधाधिकरणम् ॥

**प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥**

वाजपेये 'रथघोषेण माहेन्द्रस्तोत्रमुपाकरोति । दुन्दुभिघोषेण माहेन्द्रस्तोत्रमुपाकरोति' इत्याम्नातम् । प्रकृतौ 'उपावर्त्तध्वमिति दर्भाभ्यां स्तोत्रमुपाकरोती'ति श्रुतम् । तच्चोदकेनेह प्राप्तम् । तत्र **प्रकृतिलिङ्गसंयोगात्**—प्राकृतापूर्वस्य वैकृतापूर्वस्य च साधनपार्थक्ये पार्थक्यात् **विकृतावधिकं**—द्रव्यत्वसादृश्यात् रथादिद्रव्येण द्रव्यबाधः, शब्दत्वसादृश्यात् च घोषेण मन्त्रबाध इति स्यात् । न तयोर्घोषेण उभयोर्मन्त्रद्रव्ययोर्बाध इति प्राप्ते आह—

**चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसंनिधानात् ॥ २ ॥**

**चोदनालिङ्गसंयोगे** 'रथघोषेणोपाकरोति इति विधिगतोपाकरोतीत्यतिदिष्टप्राकृतविधिसान्निध्यात्, रथश्च घोषश्चेति विग्रहे द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यत इति नियमात् रथघोषाभ्यामुपाकरोतीति द्विवचनप्रसङ्गः । तत्र रथघोषेणेत्येकवचनश्रुतिव्याकोपः । तस्माद्रथस्य घोष इति षष्ठीतत्पुरुषेण विगृह्य रथविशिष्टघोषणस्य करणत्वसम्बन्धेन स्तोत्रस्योपाकरणे सकृदेवान्वयः । अतो रथविशिष्टघोषः प्राकृतयोर्द्वयोर्द्रव्यमन्त्रयोर्निवर्त्तक इति भाव इति तृतीयं वर्णकम् ॥ २ ॥

बृहस्पतिसवादिविकृतावुपदिष्टबार्हस्पत्यग्रहादिभिः प्राकृतादिष्टैन्द्रवायवादिग्रहाणां समुच्चयाधिकरणम् ॥ २ ॥

**सि० ॥ सर्वत्र तु ग्रहाम्नानमधिकं स्यात् प्रकृतिवत् ॥ ३ ॥**

बृहस्पतिसवे—' बार्हस्पत्यं ग्रहं गृह्णाति । विश्वजिति अर्कं ग्रहं गृह्णाति । महाव्रते शुक्रं ग्रहं गृह्णाति । अश्वमेधे सौवर्णराजताभ्यां महिमानौ ग्रहौ गृह्णाती'ति श्रुतम् । तासु बृहस्पतिसवादिविकृतिषु प्राकृता ऐन्द्रवायवादयो ग्रहा अपि चोदकेन प्राप्ताः । ते किं साक्षादुपदिष्टैर्बार्हस्पत्यादिग्रहैर्बाध्यन्ते उत तैः समुच्चीयन्त इति संशये तत्र सर्वत्र ' ग्रहं गृह्णाती'ति ग्रहाम्नानं अधिकं—प्राकृतग्रहादधिकं स्यात् । समुचितं स्यादित्यर्थः । प्रकृतिवत्—यथा प्रकृतौ ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णातीत्यनयोः समुच्चयस्तद्वदत्रापि ग्रहं गृह्णातीति विधेः साधारण्यात् प्राकृतवैकृतग्रहयोरुपदिष्टातिदिष्टयोः समुच्चय एव । न बाधः प्राकृतानामिति भावः ॥ ३ ॥

## अधिकैश्चैकवाक्यत्वात् ॥ ४ ॥

किं च, वाजपेये ' सप्तदशप्राजापत्या ग्रहा गृह्यन्ते'इति वाक्यं ' सोमग्रहाश्च सुराग्रहाश्च गृह्णाती'ति वाक्येन एकवाक्यतापन्नं प्रकृतौ सुराग्रहाणामभावात्र प्राकृतानुवादकं भवितुं शक्यम् । अतस्तत्र प्राकृतग्रहदधिकैः सुराग्रहैरेकवाक्यत्वात् यथा समुच्चयस्तद्वदत्रापि प्राकृतवैकृतयोः समुच्चय इति भावः ॥ ४ ॥

## लिङ्गदर्शनाच्च ॥ ५ ॥

किं च, ' विरण्वो वा एष यज्ञक्रतुर्यद्वाजपेयः । अग्नीर ह्यग्निष्टोमं क्षामती' त्यस्मिन् वाक्ये ज्योतिष्टोमाद्यपेक्षया अयं वाजपेयो ' विरण्वः-विस्तृत इत्युक्तम् । स च विस्तारः समुच्चयस्य लिङ्गम् । इति लिङ्गदर्शनादपि समुच्चयः सिध्यति ॥ ५ ॥

वाजपेये प्राजापत्यपशुभिः क्रतुपशूनां समुच्चयाधिकरणम् ॥३॥

## सि० ॥ प्राजापत्येषु चाम्नानात् ॥ ६ ॥

वाजपेये ' सप्तदश प्राजापत्यान् पशूनालभते ' इति प्रजापतिदेवताकसप्तदशपशुद्रव्यकयागविधायकश्रुतौ साक्षाद्विहितैः पशुभिरतिदिष्टैः

क्रतुपशवो बाध्यन्त इति पूर्वपक्षे सिद्धान्तः । **प्राजापत्येष्वपि** । तेष्वपि पशुषु समुच्चयः स्यात् । कुतः ' **आम्नानात्**—' ब्रह्मवादिनो वदन्ति । नाग्निष्टोमो नोक्थ्यो न षोडशो नातिरात्र ' इति । अथ कस्माद्वाजपेये न सर्वे क्रतवोऽवरुध्यन्ते । पशुभिरिति ब्रूयात् । यदाग्नेयं पशुमालभते । अग्निष्टोमं तेनावरुन्धे । ऐन्द्राग्नेनोक्थ्यम् । ऐन्द्रेण षोडशिनं । सारस्वत्याऽतिरात्रम् । मारुत्या बृहत्स्तोत्रम । एतावन्तो वै यज्ञक्रतवस्तान् पशुभिरेवावरुन्धे ' इति प्राकृतक्रतुपशूनां तत्र आम्नानात् तत्समुच्चयमेव श्रुतिर्दर्शयति ॥ ६ ॥

साङ्ग्रहण्यामामनहोमानुयाजानां समुच्चयाधिकरणम् ॥ ४ ॥

## आमने लिङ्गदर्शनात् ॥ ७ ॥

' वैश्वदेवीं साङ्ग्रहणीं निर्वपेद् ग्रामकामः ' इत्यस्यां साङ्ग्रहणीष्टौ ' आमनमस्यामनस्य देवायेसजातो इति तिस्र आहुतीर्जुहोति ' इति श्रूयते । अत्रापि पूर्ववत् प्रत्यक्षश्रुतैरामनहोमैरानुमानिकाः प्राकृतत्रिसङ्ख्याक्यअनुयाजा बाध्यन्त इति प्राप्ते सिद्धान्तः । ' आमन ' इति समुच्चयः । **लिङ्गदर्शनात्**- ' बहिरात्मा वै प्रयाजानुयाजा आत्मा देवता । यस्य याजानुयाजाना पुरस्ताद्वोपरिष्टाद्वा जुहुयाद्बहिरात्मानं सजातानामादधीत अथ यन्मध्यतो जुहोति मध्यत एव सजातानामात्मानं धत्ते ' इति लिङ्गं प्रयाजानामनुवृत्तिं दर्शयति । अतः समुच्चयः ॥ ७ ॥

गवामयनीयमहाव्रते पत्न्युपगाने न ऋत्विगुपगानस्य समुच्चयाधिकरणम् ॥५ ॥

## पू० प० ॥ उपगेषु शरवत्स्यात् प्रकृतिलिङ्गसंयोगात् ॥ ८ ॥

गवामयने महाव्रतं नाम एकाहोऽस्ति । तत्र श्रूयते— ' पत्न्य उपगायन्ति । पिच्छोलाभिरुपगायन्ति ' । काण्डवीणादिभिरुपगायन्ति । आपाटलिकाभिरुपगायन्ती'ति । प्रकृतौ ' ऋत्विज उपगायन्ती ' त्यस्ति । अत्र उप-

गायन्तीति प्राकृतलिङ्गसंयोगात् **उपगेषु**—उपगानकर्तृषु मध्ये पत्न्यः ऋत्विजां निवर्तिकाः स्युः। **शरवत्**—यथा शरा दर्भाणां निवर्तकास्तद्वदिति ॥ ८ ॥

## सि० ॥ आनर्थक्यात्त्वधिकं स्यात् ॥ ९ ॥

**आनर्थक्यात्**— 'पत्न्य उपगायन्तीत्येतत्समीपे काण्डवीणादिभिरुपगायन्तीत्यस्य आनर्थक्यप्रसङ्गात् **अधिकं**--समुच्चयः स्यादिति सिद्धान्तः ॥ ९ ॥

अञ्जनाभ्यञ्जनसत्रे गौग्गुलवाभ्यंजनादिना प्राकृतनवनीताभ्यंजनस्य समुच्चयाधिकरणम् ॥ ६ ॥

## संस्कारे चान्यसंयोगात् ॥ १० ॥

'एकोनपञ्चाशद्रात्रे अञ्जनाभ्यञ्जनाख्ये सत्रे गौग्गुलवेन प्रातःसवने समञ्जते। अभि वाञ्जते। पैलुदारवेण माध्यंदिनसवने। सौगन्धिकेन तृतीयसवने' इत्याम्नाते। प्राकृतं नवनीताभ्यञ्जनमपि तत्र चोदकेन प्राप्तम्। सत्येव अञ्जने अभिवाञ्जत इति प्रकृतौ प्रत्यक्षश्रुतत्वात् वैकृतेन प्राकृतस्य नावनीताञ्जनस्य बाध इति प्राप्ते आह-**संस्कारे** अञ्जने अभ्यञ्जने च **अधिकं**—समुच्चयः, एवमभ्यञ्जनमनूद्य गौग्गुलवेनेत्यादि। कुतः? **अन्यसंयोगात्**— प्राकृतं नवनीताभ्यञ्जनं दीक्षाकाले, वैकृतं गौग्गुलवाभ्यंजनं तु सुत्याकाले इति दीक्षासुत्यात्मकभिन्नकालसम्बन्धात् अधिकं समुच्चय इति भावः ॥ १० ॥

## प्रयाजवदिति चेन्न ॥ ११ ॥

प्रकृतौ प्रयाजानां येषां हविरासादनोत्तरं कालः। विकृतौ तु 'तिष्ठन्तं पशुं प्रयजन्तीति पशुविशसनात्प्राक् प्रयाजकालः इति भिन्नकालत्वेऽपि प्राकृतवैकृतयोस्तयोर्न समुच्चयः। किंतु बाध एव। तद्वदत्रापि स्यादिति चेन्न ॥ ११ ॥

## अर्थान्यत्वात् ॥ १२ ॥

अर्थान्यत्वात्– कार्यभिन्नत्वात् । नवनीतेन त्वचि मार्दवं जायते । गौग्गुलवेन तु औष्ण्यनिवृत्तिः शैत्यं सिध्यतीति कार्यभेदात्समुच्चयः । अदृष्टात्मवैककार्यजनकत्वात्प्रयाजदृष्टान्तो विषम इति भावः ॥ १२ ॥

महाव्रते तार्प्यादिभिराहतवाससस्समुच्चयाधिकरणम् ॥ ७ ॥

## आच्छादने त्वैकार्थ्यात्प्राकृतस्य विकारः स्यात् ॥ १३ ॥

महाव्रते ' तार्प्यं यजमानः परिधत्ते दर्भमयं पत्नी ' इति श्रूयते । प्रकृतौ ' आहतं वास. परिधत्ते ' इत्यस्ति । तार्प्य-घृताक्तः कम्बलः । तत्र आच्छादने--शरीराच्छादनविषये द्वयोरेकार्थत्वात् प्राकृतस्य आहतवाससो विकारस्तार्प्यं बाधकं स्यादिति ॥ १३ ॥

## सि० ॥ अधिकं वा अन्यार्थत्वात् ॥ १४ ॥

अधिकं वा–समुच्चय एव स्यान्न बाधः । कुतः ? अन्यार्थत्वात्-- गुह्याच्छादनपृष्ठोदराच्छादनात्मककार्यभिन्नत्वादित्यर्थः ॥ १४ ॥

## समुच्चयं च दर्शयति ॥ १५ ॥

' वासांसि वाराही चोपानहौ विमुञ्चति । कृष्णविषाणया वासांसि विस्रंसयति । ततोऽध्वर्युः परिधत्ते ' । इति बहुवचनान्तेन वासःशब्देन समुच्चयं दर्शयति श्रुतिः ॥ १५ ॥

महाव्रते स्तोत्रान्तरसाधनभूतैः श्लोकादिसामभिः प्राकृतसाम्नां समुच्चयाधिकरणम् ॥ ८ ॥

## सि० ॥ सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत ॥ १६ ॥

महाव्रते ' श्लोकेन पुरस्तात्सदसः स्तुवते । अनुश्लोकेन पश्चात्सदसः । क्रौञ्चेन चात्वालमवेक्षमाणः ' इति श्रूयते । चोदकप्राप्तानि प्राकृतसामान्यपि तत्र सन्ति । एवं स्थिते यथा ' काण्वं भवति । कौत्सं भवति । क्रौञ्चानि

भवन्ति । भर्गयशसी भवतः ' इत्यादिषु सामसु श्रुतेषु यथा चोदकप्राप्तानि प्राकृतानि सामानि निवर्तन्ते । तथा अत्रापि ' स्तुवत ' इति प्रकृतिलिङ्ग-संयोगस्य प्रत्यक्षश्रुतत्वादातिदिष्टानि तानि तैरनुश्लोकादिभिः निवर्त्यन्त इति प्राप्ते आह—**सामसु**--श्लोकेन पुरस्तात्सदसः स्तुवत इति श्रूयमाणेषु प्राकृतानां तेषां **अविकारः**· अनिवृत्तिः प्रतीयेत । कुतः ? **अर्थान्तरश्रुतेः**-पदार्थान्तरेणान्वयश्रवणात् । स्तुवत इति सकृदुच्चरितः प्राकृतः स्तुत्यर्थकः शब्द एकेन पुरस्तात्सदस इति पदार्थान्तरेणान्वितः । नः पुनः श्लोकेनेत्यादिना सम्बन्धुमर्हति । सकृच्छ्रुतत्वात् । यो हि सकृच्छ्रुतः शब्दः केनचिच्छब्देन सह विशेषणत्वेनान्वेति स नान्येनान्वेतुमर्हति । वाक्यभेदप्रसङ्गात् । अतः प्राकृतसाम श्लोकादिसामेति सामद्वयसाध्या नूतना स्तुतिरत्र विधीयते । तथा सति प्राकृतलिङ्ग संयोगस्याभावात् **अविकारः**—अनिवृत्तिः प्राकृतसाम्नाम् । अर्थात्समुच्चय इति भावः ॥ १६ ॥

## अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् ॥ १७ ॥

यच्च ' काण्वं भवति, कौत्सं भवती'त्यादिभिरपि प्राकृतानामत्र निवृत्तिरित्युक्तम् । तत्राह--अर्थान्तराश्रवणात् प्राकृतस्यैव शेषः श्रूयते । अतः प्रत्यक्षश्रुतेन वैकृतेन प्राकृतानां तत्र निवर्तन युक्तमेव । प्रकृते तु अर्थान्तरश्रवणात् वाक्यभेदप्रसङ्गाच्च अनिवृत्तिः । समुच्चय इति यदभि-हितं तदेव समञ्जसम् ॥ १७ ॥ ( इति प्रथमवर्णकम् )

विकृतिविशेषे कौत्सादिसामभिः प्राकृतानां साम्नां बाधा-धिकरणम् ॥ ९ ॥

## सि० ॥ अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् ॥ १७ ॥

क्वचिद्विकृतिविशेषे ' कौत्सं भवति । भर्गयशसी भवतः ' इत्याद्या-म्नायते । प्राकृतं रथन्तरवामदेव्यादिसामापि तत्र चोदकेन प्राप्तम् । तत्र

त्सुवत इति प्राकृतलिङ्गस्याभावात् समुच्चय इति प्राप्ते सिद्धान्तः । **अर्थे त्वश्रूयमाणे**—अर्थे-प्राकृतफले अश्रूयमाणेऽपि, **प्राकृतस्य**—प्रकृत्युपदिष्टस्य विकृतावतिदेशप्राप्तस्य रथन्तरादिसाम्नः **विकारः**— बाधः स्यात् । कुतः ? **शेषत्वात्**—प्राकृतस्य वैकृतशेषत्वाविशेषात् । साम्नः प्रकरणादिना क्रत्वङ्गत्वे निश्चिते क तस्योपकार्यमित्याकाङ्क्षायामङ्गत्वसाधारण्येन प्राकृतसामोपकार्यमेव तदाकाङ्क्षानिवर्तकमिति ऋगक्षराभिव्यक्तिरूपतत्कार्यकारित्वस्य कौत्सादिष्वपि सत्त्वात्तैस्तन्निवृत्तिर्बाध इति भावः॥१७॥( इति द्वितीयवर्णकम् )

कौत्सादिसाम्नां व्यवस्थया बाधकत्वाधिकरणम् ॥ १० ॥

## सर्वेषामविशेषात् ॥ १८ ॥

**सर्वेषाम्**—कौत्सादीनि सर्वाण्येव सामानि प्राकृतानां सर्वेषां साम्नां बाधकानि । कुतः ? सामत्वाविशेषादिति प्राप्ते आह ॥ १८ ॥

## सि० ॥ एकस्य वा श्रुतिसामर्थ्यात् प्रकृतेश्चाविकारात् ॥ १९ ॥

**श्रुतिसामर्थ्यात्**—एकवचनादिश्रुतिसामर्थ्यात् एक एकस्य । द्वे द्वयोः । बहूनि बहूनामिति व्यवस्थया बाधकत्वम् । **प्रकृतेः**— चोदकशास्त्रस्य **अविकारात्**—अबाधाच्च । अतस्तत्संख्याकप्राकृतसामबाधेन चरितार्थो विधिरधिकं न बाधत इति भावः ॥ १९ ॥

विवृद्धाविवृद्धस्तोमक्रतुषु यथाक्रमं प्राकृतसामबाधाबाधाधिकरणम् ॥ ११ ॥

## सि० ॥ स्तोमवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वात् ॥ २० ॥

'एकविंशेनातिरात्रेण प्रजाकामं याजयेत् । त्रिणवेनौजस्कामं । त्रयस्त्रिंशेन प्रतिष्ठाकामं' तथा 'अभिषेचनीये नव राजसामानि । शुद्धाशुद्धीये संश्रवोपपदे चोभे । अपचितीयपुनस्तोमस्य 'पुनस्तोमस्य सवनं मध्यमं

द्वादशं स्मृतम् । कार्यौ नवदशस्तोमावभिनः सवने उभे ' इति विवृद्धस्तोमकाः अविवृद्धस्तोमकाश्च विकृतिक्रतवः सन्ति । **तत्र स्तोमवृद्धौ** अनिवृत्तिः **अधिकं**— प्राकृतवैकृतयोः समुच्चयः स्यात् । कुतः ? **इतरस्य**-केवलवैकृतसाम्नः **अश्रुतित्वात्**— कर्तव्यत्वेन श्रवणाभावात् । तत्र हि सङ्ख्याया वृद्धिः श्रूयते । सा च प्राकृतवैकृतसामभिः समुच्चितैः समुपपद्यते । **अविवृद्धौ** तु— सङ्ख्याया विवृद्ध्यभावे पूर्वाधिकरणसिद्धान्तरीत्या **द्रव्यस्य**—सामात्मकद्रव्यस्य **विकारः**—यावदर्थं बाध एव ॥ २० ॥

पवमानस्तोत्र एव विवृद्धाविवृद्धस्तोमक्रतूनां सामावापोद्वापाधिकरणम् ॥ १२ ॥

## सि० ॥ पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् ॥ २१ ॥

विवृद्धस्तोमके क्रतौ क्वचिदावापः, क्वचिच्चोद्वापो यः श्रुतः सः **पवमाने**— पवमानस्तोत्र एव स्यात् । कुतः ? ' त्रीणि ह वा यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् । अत्र ह्येवावपन्ति अत एवोद्वपन्ति ' इति तस्मिन्-पवमान एव आवापोद्वापदर्शनात् ॥ २१ ॥

## वचनानि त्वपूर्वत्वात् ॥ २२ ॥

अनन्यशेषत्वादपूर्वत्वाच्चेमानि वचनान्येवावापोद्वापयोः प्रमाणमित्यर्थः ॥ २२ ॥

यागादौ विध्युद्देशगतशब्देनैव देवताभिधानाधिकरणम् ॥१३॥

## विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना ॥ २३ ॥

दर्शपूर्णमासादिषु ये ' यदाग्नेयोऽष्टाकपाल ' इत्यादयो विधेयस्तेषु श्रूयमाणाग्न्यादिशब्देनैव यागनिर्वापादिमन्त्रेषु सा सा देवता अभिधातव्या । न वह्निवैश्वानरदहनादिना येन केनाऽपि शब्देन ।

कुतः ? मन्त्रत्वे—मन्त्रसम्बन्धिदेवतावाचकशब्दोच्चारणस्य स्मरणार्थमावश्यकत्वे विधिशब्दस्य— विधिवाक्यगताग्न्यादिशब्दस्य भावः— उच्चारणं स्यात् । यतः तेन— हविःसंबंधेन आग्नेय इति विधिशब्देन चोदना— आग्नेयं अग्निदेवताकं हविरित्यादिर्विधते । मन्त्रैरेव स्मर्तव्य इति नियमवत् विध्युद्देशे यो देवतावाचकः शब्दः स एव आवाहननिर्वापादिमन्त्रेषु योज्यः । नान्यस्तत्पर्याय इत्येवापि नियमो बोध्य इति भावः ॥२३॥

## शेषाणां चोदनैकत्वात्तस्मात् सर्वत्र श्रूयते ॥ २४ ॥

सर्वत्र ' आयाऽग्नेः प्रियाधामानि ' आयाट्सोमस्य प्रियाधामानि ' ' स्वाहाग्निं ' ' स्वाहा सोमं ' ' अग्नेरहमुज्जितिं मनूज्जेषम् ' ' सोमस्याहमुज्जितिं मनूज्जेषम् ' इति आयाट् स्वाहाकार. उज्जिति स्विष्टकृदादिनिगदमन्त्रेषु चोदनैकत्वात्—वैधाग्न्यादिशब्दपाठस्यैकरूपस्य श्रवणात् । शेषाणां— शेषमन्त्रेष्वपि विध्युद्देशगताग्न्यादिशब्दस्यैव भावः — उच्चारणं कर्तव्यमित्यर्थः ॥ २४ ॥

सौर्यादिविकृतिष्वप्यावाहनादिमन्त्रेषु विधिगतशब्देनैव देवताभिधानाधिकरणम् ॥ ·४ ॥

## तथोत्तरस्यां ततौ तत्प्रकृतित्वात् ॥ २५ ॥

उत्तरस्यां ततौ—सौर्यादिविकृतिष्वपि तथा--प्रकृतिवदावाहनादिमन्त्रेषु विध्युद्देशगतशब्देनैव देवताया अभिधानं विधेयम् । कुतः ? तत्प्रकृतित्वात्—तासां दर्शपूर्णमासप्रकृतित्वात् । चोदकेन स नियमोऽप्यतिदिश्यत इति भावः ॥ २५ ॥

विकृतावग्न्यादिदेवतायाः सगुणेन विधिशब्देनाभिधानाधिकरणम् ॥ १५ ॥

## सि० ॥ प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् ॥ २६ ॥

अन्याधाने 'अग्नये पवमानाय अष्टाकपालं निर्वपेत्' 'अग्नये पावकाय, अग्नये शुचये' इति पवमानेष्टिहवींषि श्रूयन्ते। तत्र प्राकृतस्याग्नेः **गुणश्रुतौ**—पावकशुच्यादिरूपगुणश्रवणात्, **सगुणेन**--गुणसहितेन तेनाभिधानम्। अन्यथा गुणाभिधानं व्यर्थं स्यादिति भावः ॥ २६ ॥

## पू० ॥ अविकारो वार्थशब्दानपायात् स्याद्-द्रव्यवत् ॥ २७ ॥

**अविकारः**—निर्गुणमभिधानं केवलाग्निशब्दस्योच्चरणमेव कार्यम्। कस्मात्? **अर्थशब्दानपायात्**—अग्न्यात्मकार्थस्य केवलाग्निशब्देन अत्यागात्-त्यागाभावात्। पाठवैयर्थ्यमिष्टापत्त्या परिहरति। **द्रव्यवत् स्यादिति**। 'सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामालभेत भूतिकामः' इत्यत्र अजावशाशब्देन विहिते कर्मणि वशादिरूपगुणविधानेऽपि निगदे मन्त्रेषु 'छागस्य वपाया मेदसोऽनुब्रूहि' इत्येव पाठः। न गुणस्य। तथा प्रकृतस्थलेऽपीति भावः ॥ २७ ॥

## सि० ॥ आरम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशासनमनर्थकं स्यात् ॥ २८ ॥

**वा**–अथवा, **चोदितेन**—उत्पत्तिवाक्यश्रुतसगुणेन, **अभिधानं**-देवतायाः स्मरणं स्यात्। कुतः? **अर्थस्य**—अग्न्यादिपदस्य योऽर्थः केवलाग्निस्तस्य **आरम्भासमवायात्**--आरम्भे— उत्पत्तिवाक्यस्थलिङ्गवाच्यभावनायामसमवायात्-अन्वयाभावात्। अग्नये पावकायेत्यादिशब्दस्यैव देवतात्वाच्चाद्दत्यास्तस्याः केवलाग्निशब्देन प्रत्यायनासम्भवाच्च। देवतार्थशब्दस्य **श्रुतिसमवायित्वात्**—उत्पत्तिवाक्यसम्बद्धत्वात्, **तदवचने**—गुणवाचकशब्दानुच्चारणे **गुणशासनं**—गुणविधानं **अनर्थकं**-व्यर्थं स्यादित्यर्थः ॥ २८ ॥

## द्रव्येष्वारम्भगामित्वादर्थेऽविकारः सामर्थ्यात् ॥ २९ ॥

**द्रव्येषु**-'यदजा वशा शयन्यामालमेतेत्यादिद्रव्यविधिषु **अर्थे**-अजादि-शब्दार्थे **आरम्भगामित्वात्**— उत्पत्तिवाक्यीयभावनान्वयित्वात् **अविकारे**-गुणरहितकेवलच्छागपदे **सामर्थ्यात्**—अजादिरूपार्थबोधकशक्तेः सत्त्वात् । उत्पत्तिवाक्ये द्रव्यस्य स्वरूपतोऽन्वयात् गुणरहितेऽपि तादृशे द्रव्ये तदर्थ-बोधनसामर्थ्यं समुपपद्यत इति चोदकानुग्रहाय निर्गुणमभिधानं स्यात् तत्रेति दृष्टान्तवैपम्यमिति भावः ॥ २९ ॥

**पवमानेष्टिषु आज्यभागयोः अग्नेर्निर्गुणेनाभिधानाधिकरणम् ॥१६॥**

## पू० ॥ वृधन्वान् पवमानवद्विशेषनिर्देशात् ॥३०॥

अग्न्याधाने पवमानेष्टिषु आज्यभागहोमौ प्रकृत्य 'वृधन्वानाग्नेयः' कार्यः' 'पावकवान् सौम्यः' इति श्रुतम् । तत्र पवमानेष्टिषु 'अग्निः पवमान इतिवत् निगदेषु 'वृधन्वन्तमग्निमावह । पावकवन्तं सोममावह' इत्येवंगुणसहितो देवो वक्तव्यः। कुतः ? **विशेषनिर्देशात्**--'वृधन्वानाग्निः, पावकवान् सोमः' इति सगुणाग्न्यादिनिर्देशात् । वृधन्वत्वादेर्दे-गुणत्वादिति ॥ ३० ॥

## सि० ॥ मन्त्रविशेषनिर्देशान्न देवताविकारः स्यात् ॥ ३१ ॥

**मन्त्रविशेषनिर्देशात्**—'अग्निं स्तोमेन बोधये'ति मन्त्रे वृधिधातोः प्रयोगात् साक्षान्मन्त्रस्य वृधन्वच्छब्दयोगेन वृधन्वत्वस्य मन्त्रगुणत्वमेव । न देव-गुणत्वम् । न हि 'वृधन्वानाग्नेय' इत्यत्र आग्नेयशब्दो यागपरः । किंतु मन्त्रपरः । अतो वृधन्वत्वादेर्देवगुणत्वाभावान्निगदेषु 'अग्निमावह' इति निर्गुण एव अग्न्यादिर्वक्तव्य इति भावः ॥ ३१ ॥

**गवानुबन्ध्यवनस्पतियागयोर्विधिशब्दाभ्यामेव द्रव्य-देवतयोरभिधानाधिकरणम् ॥ १७ ॥**

## विधिनिगमभेदात् प्रकृतौ तत्प्रकृतित्वाद्वि- कृतावपि भेदः स्यात् ॥ ३२ ॥

ज्योतिष्टोमे 'गौरनुबन्ध्यः' इति पशुयागः श्रुतः। तथा 'पृषदाज्येन वनस्पतिं यजती'ति वनस्पतियागः पशुयागीयस्विष्टकृद्यागस्य विकारत्वेन पठितः। तावेतौ पशुयागवनस्पतियागौ निगदमन्त्रेषु उस्रा अदितिः वृक्षः पादपेत्यादिषु येन केनापि पर्यायशब्देनाभिधातव्यौ। कुतः ? **प्रकृतौ**— अग्नीषोमीयपशुयागे, 'आग्नीषोमीयं पशुमालभेत' इति पशुशब्दो वैधः। निगमे तु 'छागस्य वपाया मेधसोऽनुब्रूहि' इति छागशब्दः। इत्येवं *विधिनिगदयोर्भेदात्— पार्थक्यात्, आनुबन्ध्यवनस्पतियागयोरपि* **तत्प्रकृतित्वात्**— अग्नीषोमीययागस्विष्टकृद्यागप्रकृतित्वात्तयोर्विकृत्योरपि विधि- *निगमपार्थक्यस्यापरिहार्यत्वेन प्रकृतौ यथा अनियमस्तथा विकृतावप्य-* नियमस्य प्राप्तत्वात् येन केनापि तत्तत्पर्यायशब्देन द्रव्यदेवते वक्तव्ये इति प्राप्तम् ॥ ३२ ॥

## सि० ॥ यथोक्तं वा विप्रतिपत्तेर्न चोदना ॥३३॥

**यथोक्तं वा**— *उत्पत्तिविधौ यत् पदं समाम्नातं तदेव निगदे* योज्यं, नान्यत्तत्पर्यायपदम्। कुतः ? **विप्रतिपत्तेः**— विधिवाक्यश्रुतशब्द- भिन्नशब्दस्य **न चोदना**— अन्यस्तत्पर्यायशब्दः पठितव्य इति विधिर्नास्ति। छागस्य वपाया मेदसोऽनुब्रूहीत्यत्र तु छागस्य विधिरेव। न विधि- *निगमभेदो विवक्षितः। स त्वार्थिकः। आर्थिक न चोदकोऽतिदिशति। अपि* तु वैधमेव। आनुबन्ध्यनिगमे 'उस्राया वपाया मेदसोऽनुब्रूहि' इति साक्षा- दाम्नातत्वात्तत्र वैधस्यापि गोशब्दस्य न प्रसक्तिः। तस्मान्निगदमन्त्रे उस्रा- वनस्पतिशब्दावेव वक्तव्याविति सिद्धान्तः ॥ ३३ ॥

अवभृथे स्विष्टकृद्यागीयनिगमे स्विष्टकृद्गुणकयोरग्निवरुणयो- रभिधानाधिकरणम् ॥ १८ ॥

## पू० ॥ स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्तेत ॥ ३४ ॥

'वारुणेनैककपालेनावभृथ यन्ती'ति विहितावभृथे 'अग्नीवरुणौ स्विष्टकृतौ यजती'त्याम्नातम्। तत्र निगमादौ स्विष्टकृच्छब्दरहितावेवाग्निवरुणौ वक्तव्यौ। कुत ? स्विष्टकृद्देवतान्यत्वे— प्राकृतस्विष्टकृद्देवतायाः एतद्वाक्यविहितदेवताभ्यामन्यत्वेन तच्छब्दत्वात्— स्विष्टकृत्पदस्य प्राकृताग्निरूपार्थवाचकत्वात्, तस्मिन्नेव तस्य पदस्य रूढत्वादत्र तत्पदं निवर्तेत। तत्पदरूढार्थाया अग्निदेवताया अत्राभावादिति ॥ ३४ ॥

## सि० ॥ संयोगो वार्थापत्तेरभिधानस्य कर्मजत्वात् ॥ ३५ ॥

**संयोगो वा**- 'अग्नीवरुणौ स्विष्टकृतौ आवह' इत्येवं स्विष्टकृत्पदस्य संयोग एव कर्तव्यः। स्विष्टं कृतवानिति व्युत्पत्त्या **अर्थापत्तेः**— अर्थस्य-योगार्थस्य आपत्ते- उपपत्ते, **अभिधानस्य**- स्विष्टकृत्पदस्य **कर्मजत्वात्**- क्रियानिमित्तत्वात्। यथा पाचकः इति क्रियानिमित्ता संज्ञा, तथा इयमपि स्विष्टकरणक्रियानिमित्ता संज्ञा इति भावः ॥ ३५ ॥

अग्नीषोमीयपशौ सर्वत्रैव प्रयोगे निर्गुणेन अग्नेरभिधानाधिकरणम् ॥ १९ ॥

## पू० ॥ सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात् ॥ ३६ ॥

सोमे अग्नीषोमीयपशुयागे 'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीय पशुपुरोडाशमनुनिर्वपति' इति श्रूयते। तत्र स्विष्टकृद्यागे 'अग्निं यजती'ति गुणलोप श्रुतः। तत्र **सगुणस्य**— प्रकृतौ सगुणस्य गुणलोपे प्राप्ते निगमेषु मध्ये गुणस्थाने **यावदुक्तं**— यावच्छ्रुतं तत्रैव स्यात्। नान्यत्र। प्रकृत स्विष्टकृद्यागे श्रुतत्वात्तत्रैव स गुणलोपः। न सर्वत्रेति ॥ ३६ ॥

सि० ॥ सर्वस्य वा ऐककर्म्यात् ॥ ३७ ॥

**सर्वस्य**— सर्वत्रैव अत्राशिष्टाभिगमेषु गुणलोपः । **ऐककर्म्यात्**— एकप्रयोगरूपत्वात् । अग्निं यजतीति प्रयोगवचन शब्दोऽयम् । अतः सर्वस्मिन् स्विष्टकृद्यागप्रयोगे गुणलोपः । नाग्नीषोमीयस्विष्टकृद्याग एवेति भावः ॥ ३७ ॥

अनुयाजेषु स्विष्टकृद्यागस्य संस्कारकर्मत्वाधिकरणम् ॥ २० ॥

स्विष्टकृदावापिकोऽनुयाजे स्यात्प्रयोजनवदङ्गानामर्थसंयोगात् ॥ ३८ ॥

दर्शपूर्णमासयो आज्यद्रव्यकास्त्रयोऽनुयाजा सन्ति । तेषु तृतीये अनुयाजे 'अग्निं स्विष्टकृतं यजती'ति श्रुतम् । तत्रायं तृतीयोऽनुयाजः अनुयाजद्वयवदारादुपकारकः, किं वा संनिपत्योपकारकः संस्कारकर्म इति विशये आह—**स्विष्टकृदिति** । स्विष्टकृद्गुणकस्तृतीयोऽनुयाजः **आवापिकः** । आज्यभागस्विष्टकृतोर्मध्यदेश आवापसंज्ञकः । तत्सम्बन्धात् आवापिक इत्यभिधीयते सः । तथा च तद्गः सन् **प्रयोजनवान्**— प्रधानाग्नेः स्मरणद्वारा संस्काररूपप्रयोजनवान् स्यात् । कुत ? **अङ्गानाम्**— तत्समीपवर्तिना **अर्थसंयोगात्**—पर्थेन वाक्ये श्रूयमाणेनार्थेन संयोगात्—सम्बन्धात्' । अत्र अनुयाजद्वयवत् तृतीयस्याप्यनुयाजस्यारादुपकारकत्वपक्षे तद्वत्प्रकरणेन प्रमाणेन प्रधानापूर्वाङ्गत्वं तस्य । देवतासंस्कारपक्षे 'अग्निं स्विष्टकृतं यजती'ति वाक्येन देवताङ्गत्वम् । प्रकरणात् वाक्यं प्रबलं प्रमाणमिति स्थितं तृतीये । 'देवोऽग्निः स्विष्टकृत्' इति मन्त्रपाठात्तृतीयेऽनुयाजे स्विष्टकृदग्निदेवतायाः प्रत्यभिज्ञा विद्यते । सा देवता अनुयाजद्वये नास्तीति दृष्टान्ते वैधर्म्यमिति भावः ॥ ३८ ॥

याज्यापुरानुवाक्यानुवचनयोः संस्कारकर्मत्वाधिकरणम् ॥ २१ ॥

पू० ॥ अन्वाहेति च शब्दवत् कर्म स्याच्चोदनान्तरात् ॥ ३९ ॥

दर्शपूर्णमासयोः 'याज्यामन्वाह, पुरोनुवाक्यामन्वाह' इति श्रूयते। तदिदं तयोरनुवचनं प्रधानकर्म स्यात्। कुतः? **चोदनान्तरात्**—अन्वाहेति कर्तव्यार्थकपृथग्विधिविहितत्वात्। **शस्त्रवत्**—'आज्यैः स्तुवते, पृष्ठैः स्तुवते' 'प्रउगं शंसति, निष्केवल्यं शंसति' इति कर्तव्यताबोधकस्तौतिशंसतिविधिविहितशस्त्रस्तोत्रवत्। देवतास्मृत्यात्मकदृष्टफलं तु पाठादेव सिध्यतीति तदर्थं विधिर्व्यर्थ एवेति वाच्यम्॥ ३९॥

## सि० ॥ संस्कारो वा चोदितस्य शब्दस्य वचनार्थत्वात्॥ ४०॥

**संस्कारो वा**—स्मरणात्मकदेवतासंस्कारकर्मैव तत्। न प्रधानकर्म। शस्त्रादिवत्। कुतः? **चोदितस्य शब्दस्य**—विहितस्य अन्वाहेति वाचकशब्दस्य **वचनार्थत्वात्**—दृष्टार्थत्वसम्भवात्। सम्भवति दृष्टार्थत्वे अदृष्टार्थत्वकल्पनमन्याय्यमिति भावः॥ ४०॥

## अवाच्यत्वान्नेति चेत्॥ ४१॥

**अवाच्यत्वात्**— विहितमन्त्रसामर्थ्यादेव देवतास्मृतिसिद्धेरन्वाहेति पुनर्विधानस्य वैयर्थ्यप्रसङ्गान्न दृष्टार्थत्वमिति चेत्—॥ ४१॥

## स्याद्गुणार्थत्वात्॥ ४२॥

'तिष्ठन् याज्यामन्वाह, आसीनः पुरोनुवाक्यामिति श्रुतत्वात् स्थानासनगुणविधानार्थत्वेनान्वाहेत्यस्य सार्थक्यं स्यादिति दृष्टार्थमेव याज्यापुरोनुवाक्यानुवचनमिति सिद्धान्तः॥ ४२॥

मनोतामन्त्रस्य वायव्यादिपशावनूहाधिकरणम्॥ २२॥

## मनोतायां तु वचनादविकारः स्यात्॥४३॥

'वायव्यं श्वेतमालभेत भूतिकामः' इति वायव्यः पशुयागो विहितः। प्रकृतौ अग्नीषोमीयपशौ 'त्वं ह्यग्ने प्रथमो मनोतास्याधियो अभवोदस्महोता' इति मनोतामन्त्रः। स वायव्ये पशौ चोदकेन प्राप्तः यथादेवतमूहितव्यो

न वेति संशये आह—**मनोतायां तु**— अतिदिष्टमनोतामन्त्रे, **अविकारः**— अनूहः, अविकृत एव प्रयोक्तव्यः। कुतः? **वचनात्**—' यद्यप्यन्यदेवत्यः पशुः आग्नेय्येव मनोता कार्या ' इति वचनान्नोहः। न हि वचनस्यातिभार इति भावः ॥ ४३ ॥

कण्वरथन्तरस्य स्वयोनौ गानाधिकरणम् ॥ २३ ॥

## पू० ॥ पृष्ठार्थेऽन्यद्रथन्तरात्तद्योनिपूर्वत्वात् स्यादृचां प्रविभक्तत्वात् ॥ ४४ ॥

'वैश्यो वैश्यस्तोमेन यजेत' इति विहितवैश्यस्तोमे पृष्ठस्तोत्रे 'कण्वरथन्तरं पृष्ठं भवति' इत्याम्नातम्। प्रकृतौ पृष्ठस्तोत्रे बृहद्रथन्तरं च साम विकल्पेनोपदिष्टम्। 'त्वामिद्धि हवामहे' इयमृक् बृहत्साम्नो योनिः। 'अभि त्वा शूर नो नुमः' इति रथन्तरस्य साम्नः। 'पुनानः सोम' इति च कण्वरथन्तरस्य योनिः। एवं स्थिते इदं कण्वरथन्तरं साम रथन्तरयोनौ बृहद्यौनौ वा अनियमेन गेयमुत रथन्तरयोनावेव। आहोस्वित् स्वयोनावेव गातव्यमिति संशये उक्तवाक्येन चोदकप्राप्तबृहद्रथन्तरयोः साम्नोर्बाधेऽपि तद्योनिभूतऋचामबाधात्तासामृचां मध्ये रथन्तरयोनावेव तद्विशिष्टं साम गातव्यमित्याह—**पृष्ठार्थे**— पृष्ठस्तोत्रकार्ये अन्यद्रथन्तरादन्यद् कण्वरथन्तरं यद्विहितं तद्रथन्तरयोनिकमेव। कुतः? **तद्योनिपूर्वकत्वात्**— रथन्तरयोनिपूर्वकत्व्योतिष्टोमप्रकृतित्वाद्वैश्यस्तोमस्य। **ऋचां**— बृहद्योनिभूतऋचा, **प्रविभक्तत्वात्**— कण्वरथन्तरस्य नामैकदेशेन रथन्तरेण व्यावृत्तत्वात्-निरस्तत्वादित्यर्थः ॥ ४४ ॥

## स्वयोनौ वा सर्वाख्यातत्वात् ॥ ४५ ॥

**स्वयोनौ वा**— स्वस्य— कण्वरथन्तरस्य या 'पुनानः सोम' इति योनिभूता ऋक् प्रागभिहिता तस्यामेव तत्साम गातव्यं, न रथन्तरयोनौ। कुतः? **सर्वाख्यातत्वात्**—सर्वस्य- प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनस्तो-

भस्वरकालाभ्यासयोनीस्तादिसर्वविशेषणविशिष्टस्य सामविशेषस्य कण्वरथन्त-रेतिशब्दवाच्यत्वात् । किं च, प्रकृतौ बृहद्रथन्तरसाम्नोरेवाङ्गत्वेन विधानं, न तु तद्योनिभूतयोः ऋचोः । अतश्चोदकेन तयोस्तत्र प्राप्त्यभावात् स्वयोनावेव कण्वरथन्तरं साम गेयमिति भावः ॥ ४५ ॥

## यूपवदिति चेत् ॥ ४६ ॥

यूपवत्--यथा यूपशब्दस्तक्षणाष्टाश्रीकरणादिसंस्कारसमूहं निमित्ती-कृत्य प्रवर्तते, तथा कण्वरथन्तरमित्यत्रापि रथन्तरशब्दः प्राकृतरथन्तरशब्दव-द्रथन्तरसम्बन्धियावद्धर्मविशिष्टे प्रवृत्त इति वाच्यम् । चोदकानुग्रहाय तत्र योनिभेदे सति रथन्तरशब्दो बाध्येत । तत्र तद्योनिभूताया ऋचोऽभावादिति चेत्- ॥ ४६ ॥

## न कर्मसंयोगात् ॥ ४७ ॥

**न कर्मसंयोगात्**— कण्वरथन्तरशब्दः न यूपशब्दवत् कर्मसम्बन्धात् प्रवृत्तः । अपि तु सामविशेषे रूढः । रूढत्वादेव तद्योनौ गानमिति भावः ॥ ४७ ॥

कण्वरथन्तरस्य स्वयोन्युत्तरयोर्गानाधिकरणम् ॥ २४ ॥

## पू० ॥ कार्यत्वादुत्तरयोर्यथाप्रकृति ॥ ४८ ॥

' एकं साम तृचे क्रियते ' इति श्रुतेः कण्वरथन्तरसाम्नः ऋक्त्रय-माश्रयः । तत्र एका स्वयोनिरृक् । इतरे द्वे ' उत्तरयोर्गायति ' इत्यविशेष-श्रुतेः किं रथन्तरयोन्युत्तरे ग्राह्ये उत स्वयोन्युत्तरे इति संशये उत्तरयोः ऋचोः सामपरिपूर्तेः कार्यत्वेन प्रकृतौ ऋचां साक्षादङ्गत्वाभावेऽपि साम-द्वारकाङ्गत्वस्य सत्त्वाच्चोदकानुग्रहान्नाम्नाच्च रथन्तरयोन्युत्तरे एव ऋचौ ग्राह्ये । एवं कृते यथाप्रकृति कृतं भवति । चोदकशास्त्रस्य च बाधो न स्यादिति ॥ ४८ ॥

## सि० ॥ समानदेवते वा तृचस्याविभागात् ॥४९॥

'समानदेवताकस्तृचो भवति' इति शास्त्रात् तृचस्य--ऋक्त्रयस्य अविभागात्--भिन्नदेवताकत्वासम्भवात् स्वयोन्युत्तरे एव समानदेवताके । न रथन्तरयोन्युत्तरे इति स्वयोन्युत्तरे एव ऋचौ ग्राह्ये । चोदकबाधस्तु युक्त एव तत्रेति भावः ॥ ४९ ॥

अग्निष्टुद्यागे स्तोत्रशस्त्रयोरविकाराधिकरणम् ॥ २५ ॥

## सि० ॥ ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् ॥ ५० ॥

एकाहे अग्निष्टुन्नाम्नि क्रतौ 'आग्नेया ग्रहा भवन्ति' इति श्रूयते । आग्नेया- अग्न्यैकदेवताका इत्यर्थः । तत्र ग्रहाणाम्--उक्तवाक्यश्रुतग्रहाणां स्तुतशस्त्रमन्त्रदेवताभ्य. देवतान्यत्वे-- भिन्नदेवतात्वे--अग्निमात्रदेवत्वेऽपीति यावत, अविकारः-- प्रकृतितः प्राप्तनानादेवताकेषु स्तोत्रशस्त्रमन्त्रेषु अविकारः अनूहः । अग्न्यूहो न विधेयः । कुतः? स्तुतशस्त्रयोः कर्मत्वात्--प्रधानकर्मत्वात् । तस्य च द्वितीयाध्याये 'अपि वा श्रुतिसंयोगात् प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम्' इत्यनेन सूत्रेण (२।१।२४) व्यवस्थापितत्वादिति भाव. ॥ ५० ॥

चातुर्मास्येषु आज्यशब्दस्य विकारेणावाहनाधिकरणम् ॥ २६ ॥

## पू० ॥ उभयपानात् पृषदाज्ये स्यादुपलक्षणं निगमेषु पातव्यस्योपलक्षणत्वात् ॥ ५१ ॥

चातुर्मास्येषु 'देवानाज्यपानावह' 'स्वाहा देवानाज्यपान्' 'आयाड्देवानामाज्यपाना प्रियाधामानि' 'देवा आज्यपाजुषन्त' इत्यावाहनस्वाहाकारआयाड्जोषणनिगमाः प्रकृतितश्चोदकेनातिदिष्टा । तत्र सर्वत्राज्यशब्दः प्रयुक्तो दृश्यते । स्थिते चैवं तत्रैव अनुयाजान् प्रकृत्य 'पृषदाज्येन अनुयाजान्

यजति', इत्याम्नायते । तत्र आवाहनादिषु प्रकृतिवदविकारेणाज्यपशब्दः प्रयोक्तव्यः उत पृषदाज्यप इति तत्स्थाने ऊहः कार्यः— विकृतः प्रयोक्तव्य इति संशये तत्र पृषदाज्ये हविर्द्रव्ये सति **निगमेषु**—उक्तमन्त्रेषु दध्नोऽप्युपलक्षणं--' दध्याज्यपान् ' इति दधिपदप्रयोगोऽपि कार्यः । कुतः ? **उभयपानात्**— अत्र द्रव्यद्वयस्य पानात् प्रकृतौ आज्यप इत्यस्य पातव्यद्रव्योपलक्षणत्वादिति ॥ ५१ ॥

## न वा परार्थत्वाद्यज्ञपतिवत् ॥ ५२ ॥

**न वा**— ' दध्याज्यपानित्युभयं नैव योज्यम् । **यज्ञपतिवत्**— यथा इडास्तुतौ ये यज्ञपतिं वर्धानित्यत्र यज्ञपतिमिति यजमानमात्रमुच्चरित्मृत्विजामपि वर्धकत्वेऽपि । कुतः ? **परार्थत्वात्**—परप्रत्यायकत्वात्, पातॄणामुपलक्षकं हि पातव्यं द्रव्यम् । तत्राज्येनोपलक्ष्यते चेत् पुनर्दध्ना नोपलक्षयितव्यम् । अन्यतरद्रव्यस्य पातृलक्षकत्वेनोपपत्तौ सत्यामुभयस्य तल्लक्षकत्वं निष्प्रयोजनमिति भावः ॥ ५२ ॥

## स्याद्वा आवाहनस्य तादर्थ्यात् ॥ ५३ ॥

**स्याद्वा**--दधिपदप्रवेशो भवेदेव । कुतः ? **आवाहनस्य**—आवाहनमन्त्रस्य, **तादर्थ्यात्**-पातृपेयोभयस्मरणार्थत्वात् । यज्ञपतिशब्दस्तु न स्वार्थः । इडास्तुत्यर्थेन स उच्चार्यते । आवाहनं तु पातृपेयोभयस्मरणार्थमिति चोदकानुग्रहाय पेयद्रव्यान्तरमुपलक्षयितव्यमिति भावः ॥ ५३ ॥

## न वा संस्कारशब्दत्वात् ॥ ५४ ॥

**न वा**--न दधि उपलक्षयितव्यम् । कस्मात् ? **संस्कारशब्दत्वात्**-- ' पृषदाज्येन यजती'त्यत्र पृषत्--चित्रितमाज्ये तेनेत्यर्थः । दध्ना हि आज्यस्य चित्रीकरणात्मकः संस्कारः श्रूयते । स च संस्कारो दध्ना समुत्पद्यत इति परार्थं चित्रतासंजननार्थं दधि न पातव्यम् । पृथग्द्रव्यमिति नोपलक्षयितव्यं तदिति भावः ॥ ५४ ॥

## स्याद्वा द्रव्याभिधानात् ॥ ५५ ॥

स्याद्वा — दधिपदप्रवेशः स्यादेव 'दध्याज्यमानिति' । कुतः ? द्रव्याभिधानात्—'अथ पृषदाज्य गृण्हाति' इत्युक्त्वा 'द्वन्द्वं वा इदं सर्पिश्च दधि च, द्वंद्वं वै मिथुनं प्रजननं, मिथुनमेवास्य प्रजननं क्रियते' इति दध्नः पृथग्द्रव्यत्वं श्रूयते। तस्मादप्युपलक्षयितव्यम् । न पृषदाज्यम् द्रव्यान्तरमिति सिद्धान्तः ॥ ५५ ॥

## सि० ॥ दध्नस्तु गुणभूतत्वादाज्यपा निगमाः स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात् ॥ ५६ ॥

'पृषदाज्येन यजन्ती'ति श्रुतेः आज्यस्य साक्षाद्यागाङ्गत्वेन प्राधान्यादध्नस्तु तत्र गुणभूतत्वात्--अप्रधानत्वात्, गुणत्वमेवेति 'आज्यपा' इत्येव निगमाः स्युः । दध्नः ग्रहणक्रियायामाज्यतुल्यत्वेऽपि यागे न तत्तुल्यत्वम् । यागे हि चित्रगाज्येनानुष्ठीयते । न हि ग्रहणे श्रूयमाण तुल्यत्वं यागे श्रुतं भवति । आज्ये तृतीयया श्रुत्या यागे करणम् । दधिगतत्वं न आज्ये चित्रत्वप्रयोजकमिति न तदाज्यतुल्यमिति नोपलक्षयितव्यमिति भावः ॥ ५६ ॥

## दधि वा स्यात् प्रधानमाज्ये प्रथमान्यसंयोगात् ॥ ५७ ॥

दधि वा--दधि एव प्रधानं-मुख्यं स्यात् । न गुणभूतम् । कुतः ? आज्ये—आज्येन, प्रथमान्त्यसंयोगात्— प्रथमान्त्ययोः उपस्तरणाभिघारणयोः संयोगात्—सम्बन्धादित्यर्थः । 'यदि ग्रहान्ते यजेत द्विरुपस्तृणीयात् सकृदभिघारयेत्' 'यदि मध्ये यजेत् सकृदुपस्तृणीयात् द्विरभिघारयेत्' इति आज्येन प्रथममुपस्तरणम् । तेनैवान्त्यमभिघारणम् । इदं द्वयं प्रधानद्रव्यसंस्काररूपमिति कल्पनम् । तस्मादुपस्तरणाभिघारणशब्दाभ्यां दधिप्रधानभूतम् आज्यं तत्र गुणभूतमिति न तस्योपलक्षणं, किन्तु दध्न एव तत्कर्तव्यमिति ॥ ५७ ॥

**अपि वाज्यप्रधानत्वाद्गुणार्थे व्यपदेशे भक्त्या संस्कारशब्दः स्यात् ॥ ५८ ॥**

अपि वा--न दधि प्रधानम् । आज्यप्रधानत्वात्--आज्यस्यैव तृतीया श्रुत्यायागसम्बन्धेन प्रयोजनवत्त्वात् प्राधान्यमित्यर्थः। आज्यस्य श्रुतिसिद्धहोमसाधनत्वानुपपत्तेः भक्त्या -लक्षणया, उपस्तरणशब्दस्य **गुणार्थे व्यपदेशे** -द्वित्वादिगुणविशिष्टावदानार्थत्वे, **संस्कारशब्दः**— ' आज्यमवदानेन संस्कुर्यादि ' त्यर्थकः स्यादित्येवं दधिप्राधान्यपरिहार इति भावः ॥ ५८ ॥

**अपि वाख्याविकारत्वात्तेन स्यादुपलक्षणम् ॥५९॥**

अपि वा—दधिसंसृष्टाज्यस्य आख्याविकारत्वात्— संज्ञाभेदात्' तेन—संज्ञाविशेषेणोपलक्षितो मन्त्रः कार्यः- ' देवान् पृषदाज्यपानावह् , इति । नानाद्रव्यसंयोगादेकं विलक्षणं द्रव्यमुत्पद्यते । तस्य संज्ञा भिन्ना । यथा रागखित्ररूपं सुरेत्यादिः । प्रकृतेऽपि तद्वदिति भावः ॥ ५९ ॥

**न वा स्याद्गुणशास्त्रत्वात् ॥ ६० ॥**

न वा--सुरादिवदिदं पृषदाज्यं द्रव्यान्तरं न स्यात् । कुतः ? **गुणशास्त्रत्वात्**—' पृषदाज्येन अनुयाजान् यजती'ति श्रूयते । अत्र सुराशब्दो यथा द्रव्यविशेषे रूढस्तथायं चित्रस्य वाचकः । पृषच्छब्दः कुत्रचिद् द्रव्ये न रूढः । लोके तु आज्यशब्दो घृते प्रसिद्धः। समुदाये चित्राज्यमिति। चित्रत्वं च द्रव्यान्तरसंयोगेनेति नेनाज्यस्य चित्रत्वगुणाभिन्नः संस्कारः शब्दितोऽवगम्यत इति भावः ॥ ६० ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां दशमाध्यायस्य चतुर्थः पादः ॥ ४ ॥ श्रीः ॥

## ॥ अथ दशमाध्यायस्य पञ्चमः पादः ॥

विकृतावेकदेशग्रहणे यावत्सङ्ख्यमाद्य नामेव ग्रहणम् ॥ १ ॥

### सि० ॥ आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात् ॥ १ ॥

अस्मिन् पञ्चमे पादे प्राकृतधर्माणामेकदेशबाधो विचार्यते । तत्र 'आग्नेयमष्टाकपालं निर्वपेत्' 'द्वादशाहेन प्रजाकामं याजयेत' 'पञ्चदश सामिधेनीरन्वाह' एवमादीनि प्रकृतौ समस्तवचनानि सन्ति । विकृतौ 'द्यावापृथिव्यमेककपालम्' 'आश्विनं द्विकपालं, वैष्णवं त्रिकपालं' तथा "द्विरात्रेण यजेत, त्रिरात्रेण यजेत, चतूरात्रेण यजेत, पञ्चरात्रेण यजेत, षड्रात्रेण यजेत, सप्तरात्रेण यजेत, अष्टरात्रेण यजेत, नवरात्रेण यजेत, दशरात्रेण यजेत, एकादशरात्रेण यजेत, एकां सामिधेनीमन्वाह, तिस्रः सामिधेनीरन्वाह" इत्याद्येकदेशग्रहणवचनानि विद्यन्ते । तत्र किं सर्वमाद्यन्तोपादानमन्त्यलोपश्च, उत यथेच्छं विकल्प विषये सिद्धान्तः इति—**आनुपूर्व्यवतां**—नियतक्रमवतां मध्ये विकृतावेकदेशग्रहणेषु आद्यानामेव मन्त्राणां ग्रहणमन्त्यस्य च लोपः स्यात । **आगमवत्**-यथा कृप्तसमाजेषु मध्ये ये आगन्तवो भवन्ति ते उपविष्टाननुपमृद्यैव निविशन्ते तद्वत । तदुक्तं 'मुख्यं वा अपूर्वचोदनाल्लोकवदिति त्रयोविंशतमसूत्रे द्वादशाध्यायस्य द्वितीयपादी भट्टनाधिकरणे ॥ १ ॥

### लिङ्गदर्शनाच्च ॥ २ ॥

'लुप्येत वा एतत्पष्ठमहो यत्पंचाहानुयन्ति' 'लुप्येत वा एतत् षष्ठं कपालं यत् पञ्चकपालं निर्वपन्ति' इति लिङ्गदर्शनादपि अन्त्यस्यैव लोपः । आद्यस्य च उपादानमिति सिध्यति ॥ २ ॥

## विकल्पो वा समत्वात् ॥ ३ ॥

**विकल्पो वा**— आद्यमन्त्यं वा उपादातव्यम् । कुतः ? **समत्वात्**— समौ ह्यन्तलोप आद्यलोपेन । आद्यलोपे हि श्रुतिर्नास्ति । अन्त्यलोपेऽपि सा नास्त्येव । मुख्ये जघन्ये वा उपादीयमाने प्राकृतमेकोनत्वं भवति । न तत्र मुख्यमेवोपादातव्यमिति विशेषश्रुतिरस्ति । तस्मादनियम इति ॥ ३ ॥

## क्रमादुपसर्जनोऽन्ते स्यात् ॥ ४ ॥

आगमवदिति दृष्टान्तवैषम्यं दर्शयति—**क्रमादिति** क्लृप्तक्रमात् **उपसर्जन**— अप्रधानः आगन्तुः अन्ते स्यात् । प्रकृते तु न तथा । क्लृप्तक्रमस्थले तथास्तु नाम । प्रकृते त्वनाक्रान्ते प्रथमो मध्यमो वेति विचार्यते । तत्र स दृष्टान्तो न युक्त इति ॥ ४ ॥

## लिङ्गमविशिष्टं संख्याया हि तद्वचनम् ॥ ५ ॥

**लिङ्गम्**— यत् षष्ठस्याग्रहणोपदर्शनात्मकं लिङ्गमुपन्यस्तं तत् **अविशिष्टं**—अविरुद्धम् । कथम् ? सङ्ख्यायाः 'षष्ठे षष्ठमिति हि तद्वचनम् । यथा षड्भ्रातृणां मध्ये कस्यचिददर्शने षष्ठो न दृश्यत इति, तथेदमप्युपपन्नमिति ॥ ५ ॥

## सि० ॥ आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वाद्वचनादन्त्यविधिः स्यात् ॥ ६ ॥

**आदितो वा**— प्रथमत एव प्रवृत्तिः स्यात् । कुतः ? **आरम्भस्य**— उपवेषेण तन्नामककाष्ठेन समस्तस्यापि-अङ्गारेषु 'ध्रुवमसी'ति मन्त्रेण पुरोडाशकपालोपधानस्य स्थापनस्य प्रारम्भ इत्युक्ते तत्रोपधानक्रियाया प्रकृतौ क्लृप्तप्रथममन्त्रकरणकत्वरूपतदादित्वस्यैवारम्भपदार्थत्वात् । विकृतौ कपालोपधानस्य प्रारम्भः क्लृप्तोऽस्ति । स एवात्र बुद्ध्यारूढः । सत्येवं तत्परित्यागे प्रमाणाभावात्तेनैव मन्त्रेणात्रापि कपालोपधानस्य प्रारम्भो न्याय्य इति भावः । अवभृथादौ तु 'आबर्हिषश्चतुरः प्रयाजान् यजती'ति

वचनात् अन्त्यविधिः— अन्त्यस्य स्वाहाकारस्य, विधिः—अलोपः स्यादित्यवगन्तव्यम् ॥ ६ ॥

एकत्रिके आद्ये तृचे गानाधिकरणम् ॥ २ ॥

## एकत्रिके तृचादिषु माध्यन्दिने छन्दसां श्रुतिभूतत्वात् ॥ ७ ॥

'अथैष एकत्रिकः । तस्यैकस्यां बहिष्पवमानम् । तिसृषु होतुराज्यम् । एकस्यां मैत्रावरुणस्य । तिसृषु ब्राह्मणाच्छंसिनः । एकस्यामच्छावाकस्य । तिसृषु माध्यन्दिनः पवमानः ' इति एकस्तुतित्रिस्तुतिव्यतिषङ्गविधानात् एकत्रिकनामकं कार्यं कर्तुं श्रूयते । प्रकृतौ माध्यन्दिनपवमानस्य 'उच्चा ते जात'मित्ययं गायत्रीच्छन्दस्कः प्रथमस्तृचः । 'पुनानः सोम' इत्ययं बृहतीच्छन्दस्कस्तृचो द्वितीयः । 'प्रतु द्रव' इति त्रिष्टुप्छन्दस्कस्तृतीयः । एतदभिप्रायेण 'त्रिच्छन्दा आवापो माध्यन्दिनः पवमानः' इति श्रुतम् । एवं स्थिते 'एकत्रिकस्य माध्यन्दिनपवमानस्त्रिसृषु' इति यदुक्तं तत्र चेदकप्राप्त तृचत्रयस्य आद्यासु तिसृषु ऋक्षु गानं विधेयम्, उत आद्ये एव तृचे इति विचिकित्सायां तृचत्रयस्याद्यासु तिसृषु एव गानं, न आद्ये तृचे । कुतः ? प्रकृतौ 'त्रिच्छन्दा वै माध्यन्दिनः पवमानः' इति छन्दसां—गायत्रीबृहतीत्रिष्टुप्छन्दसां, श्रुतिभूतत्वात्— श्रुतत्वात्, तद्बाधे प्रमाणाभावात् एकत्रिके तृचादिषु—उक्ततृचत्रयस्य आद्यासु स्तोत्रियासु गानमिति प्राप्ते— ॥ ७ ॥

## सि०॥ आदितो वा तन्न्यायत्वादितरस्यानुमानिकत्वात् ॥ ८ ॥

आदितो वा—आद्य एव तृचे गानं कर्तव्यम् । तन्न्यायत्वात्— कपाटन्यायत्वात् । इतरस्य—छन्दस्त्रित्वसम्बन्धस्य, आनुमानिकत्वात्—

चोदकशास्त्रेण प्राप्तत्वात् । उभयोः क्रमविच्छन्दोयोगयोः तुल्यबलत्वेऽपि तत्र क्रम एव ज्यायानिति भावः ॥ ८ ॥

**यथानिवेशं च प्रकृतिवत् सङ्ख्यामात्रविकारत्वात् ॥ ९ ॥**

यथानिवेशं—प्रकृतिवत् संनिवेशक्रमोऽत्रेत्यर्थः । सङ्ख्यामात्रविकारत्वात्—प्रकृतौ हि आग्निमतृचद्वयेन सह तृचेषु यत् त्रित्वं स्थितं तन्मात्रबाधकत्वात् । क्रमबाधे प्रमाणाभाव इत्याशयः ॥ ९ ॥

एकस्यामृचि धूर्गानाधिकरणम् ॥ ३ ॥

**त्रिकस्तृचे धुर्ये स्यात् ॥ १० ॥**

तस्मिन्नेव एकत्रिके क्रतौ यत् धूर्गानमुपदिष्टं तत् धुर्ये—धूर्गानसम्पाद्यस्तोत्रमध्ये यस्त्रिवृत्त्रिकस्तोमकः तत्तृचे स्यात् । नैकस्यामृचीति॥१०॥

**एकस्यां वा स्तोमस्यावृत्तिधर्मत्वात् ॥११॥**

एकस्यां वा—एकस्यामेव ऋचि धूर्गानं कार्यम् । स्तोमस्य आवृत्तिधर्मत्वात् । 'आवृत्तं धूर्षु स्तुवते । पुनरावृत्तं पृष्ठैरुपतिष्ठते ' इति वचनेन आवृत्तिः स्तुतिविशेषणम् । तत्र ऋग्भेदे अर्थभेदेन स्तुतिरपि भिद्यते । तथा सति श्रूयमाणा वृत्तिः बाध्येत । तस्मादेकस्यामृचि तद्गानमिति भाव ॥ ११ ॥

द्विरात्रादिषु द्वादशाहिकदशरात्रस्य विध्यन्तानुष्ठानाधिकरणम् ॥४॥

**सि० ॥ चोदनासु तदपूर्वत्वाल्लिङ्गेन धर्मनियमः स्यात् ॥ १२ ॥**

सन्ति प्रकृतिभूतस्याहीनस्यापस्य द्वादशाहस्य विकृतयः द्विरात्रत्रिरात्रादयोऽहर्गणाः—' द्विरात्रेण यजेत ' इत्येवमादयः । द्वादशाहस्य प्रथमचरमेऽहनी प्रायणीय उदयनीयसंज्ञके । शयाणां दशानां मध्ये षण्णां पृष्ठ्येति संज्ञा । चतुर्णां तु छन्दोमसंज्ञा । स्थिते चैवं द्विरात्रादिषु विकृतिषु कपालन्यायेन

प्रथमस्य प्रथमधर्म, द्वितीयस्य द्वितीयधर्म इति कृत्स्नद्वादशाहस्य विध्यन्तः उत प्रायणीयउदयनीयौ वर्जयित्वा दशरात्रस्येति संशये अविशेषात् कृत्स्नस्य इति प्राप्ते सिद्धान्त । **चोदनासु**— 'द्विरात्रेण' इत्यादिविधिविहितासु रात्रिषु, द्वादशाहीयप्रथमचरमयोरन्हो. **अपूर्वत्वात्**— प्रकृतित्वासम्भवात्, **लिङ्गेन** द्विरात्रसन्निधौ दृष्टलिङ्गेन, **धर्मनियम** — निश्चितानिर्णयः स्यात् । तच्च लिङ्गमित्थम्, " यत्प्रथम तत द्वितीयम् । यद्द्वितीयं तत्तृतीयम् । जगतीमन्तर्गच्छती'ति । द्विरात्रस्य रात्रिद्वये रात्रिद्वयधर्मविवक्षाया न द्वादशाहस्य प्रथमरात्रिमारभ्य तत्प्राप्तिः । किन्तु द्विरात्रस्य यत्प्रथममहस्तद्द्वादशरात्रस्य द्वितीयमहः, यत् द्वितीय द्विरात्र तत्तस्य तृतीयमह, द्वादशाहस्य जगतीसंज्ञकं यच्चतुर्थमहः तदन्तर्यन्ति, त्यजन्ति । रात्रिद्वयस्यैवापेक्षितत्वात् । क्रमाकन्यायेन प्रवृत्तौ तु तृतीयस्यान्हस्त्याग प्राप्त । तत्र चतुर्थे जगतीसंज्ञकमहस्त्यजन्ती त्यसङ्गत स्यात्, तस्मान्न कृत्स्नद्वादशाहस्य विध्यन्त. । अपि तु तदीयदशरात्रस्यैवेति सिध्यति ॥ १२ ॥

## प्राप्तिस्तु रात्रिसम्बन्धात् ॥ १३ ॥

**प्राप्तिस्तु**— दशरात्रादिधर्मप्राप्ति., **रात्रिसम्बन्धात्**—द्विरात्र दशरात्रमित्युभयत्र रात्रिपदप्रयोगात् । रात्रिशब्दयोग एव सादृश्यमिति सम्यगवगन्तव्यम् ॥ १३ ॥

### अग्नावापूनाद्यर्थानां मन्त्राणामनियमेनोपादानाधिकरणम् ॥५॥

## सि० ॥ अपूर्वासु तु सङ्ख्यासु विकल्पः स्यात्सर्वासामर्थवत्त्वात् ॥ १४ ॥

अग्निचयने ' वैशीना त्वापराकामिल्यादय आपूननार्था बह्वो मन्त्राः पठिता. । तथा तत्र ' या जाता ओषधय ' इत्यादयोऽपि बीजावापमन्त्राः बहवः पठिताः । प्रयोगे तु तदेकदेशसङ्ख्या विहिता । ' सप्तभिराधुनोति ' ' चतुर्दशभिः वपति ' इति शेषत्यागः श्रुतः । अतः कपालसामिधेनीन्यायेन चरममन्त्राणां त्यागे प्राप्ते अपूर्वासु—

चोदकादनागतासु तत्प्रकरणपठितासु ऋक्सङ्ख्यासु विकल्पः—इच्छया सङ्ख्यापूरणं कर्त्तव्यम् । कुतः ? सर्वासामृचामर्थवत्त्वात्—प्रकरणपाठस्य बलवत्त्वात् । अन्यथा चाममन्त्राणां तत्प्रकरणपाठवैयर्थ्यं स्यादिति भावः ॥१४॥

विवृद्धस्तोमके अप्राकृतानां साम्नामागमाधिकरणम् ॥६॥

## स्तोमविवृद्धौ प्राकृतानामभ्यासेन सङ्ख्यापूरणमधिकारात् सङ्ख्यायां गुणशब्दत्वादन्यस्य चाश्रुतित्वात् ॥ १५ ॥

'एकविंशेनातिरात्रेण प्रजाकामं याजयेत् । त्रिणवेनौजस्कामम् । त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इति विवृद्धस्तोमकाः क्रतवः श्रूयन्ते । प्रकृतौ त्रिवृत्पञ्चदशसप्तदशस्तोमाः सन्ति । अर्थात् प्राकृतस्तोमेभ्यो विवृद्धा एते स्तोमा एकविंशादयः इति स्तोमविवृद्धौ प्राकृतसाम्नामभ्यासेन—आवृत्त्या स्तोत्रसङ्ख्यापूरणं स्यात् । नागन्तुकाप्राकृतसामभिः । कुतः ? अधिकारात्—प्रकृतसाम्नामतिदेशप्राप्तत्वेन संनिहितत्वात् । संनिहितं विहायासंनिहितग्रहणस्यान्याय्यत्वात् । सङ्ख्याया गुणशब्दत्वात् एकविंशादिरूपसङ्ख्यायाः गुणवाचकशब्दत्वात्, अन्यस्य—अप्राकृतसाम्नः, अश्रुतित्वात्—अश्रवणात् ॥ १५ ॥

## सि० ॥ आगमेन वाभ्यासस्याश्रुतित्वात् ॥ १६ ॥

आगमेन वा—अप्राकृतसाम्नामागमेनैव सङ्ख्या पूरयितव्या । कुतः ? अभ्यासस्य—आवृत्तेः, अश्रुतित्वात्—अश्रवणात् । श्रुतस्योत्सर्गो यावन्न दोषस्तावदश्रुतकल्पनायां दोष इति भावः ॥ १६ ॥

## सङ्ख्यायाश्च पृथक्त्वनिवेशात् ॥ १७ ॥

सङ्ख्यायाः पृथक्त्वनिवेशात्—व्यक्तिपृथक्त्वे निवेशादपि आगमेन सङ्ख्यापूरणम् । नाभ्यासेन । द्रव्यगता हि सङ्ख्या भिन्नद्रव्यैरेव

पूर्यते । नैकद्रव्यस्याऽऽवृत्त्या । न ह्यष्टवारमेकं घटमानीय मम गृहे अष्टौ घटाः सन्तीति व्यवहरति कोऽप्यमूढ इति भावः ॥ १७ ॥

## पराक्शब्दत्वात् ॥ १८ ॥

'पराग् बहिष्पवमानेन स्तुवन्ति' इत्यनभ्यासार्थकपराक्शब्दप्रयोगादपि तथैव सिध्यति । 'पराचीः सामिधेनीरन्वाह' इत्यत्र अनभ्यस्तता इत्यर्थो व्यक्तः ॥ १८ ॥

## उक्ताविकाराच्च ॥ १९ ॥

**उक्तस्य**— कृतस्य कथितस्य वा, **अविकारात्**— पुनर्वचनाभावात् आवृत्त्यभावात् - पुनःकथनाभावादप्यागमः प्राप्नोति । पुनः कथने हि 'जामि वा एतद्यज्ञस्य क्रियते यदेकं पुनः क्रियते' इति जामितादोषः स्यादित्यर्थः ॥ १९ ॥

## अश्रुतित्वादिति चेत् ॥ २० ॥

**अश्रुतित्वात्**— अभ्यासवदागमस्यापि श्रवणाभावान्नागम इति चेत्—॥२०॥

## स्यादर्थचोदितानां परिमाणशास्त्रम् ॥ २१ ॥

**परिमाणशास्त्रम्**— एकविंशेनेत्यादिसङ्ख्याविशेषपरिच्छेदशास्त्रम्, **अर्थेन**-अर्थापत्त्या, **चोदितानां**—प्राप्तानां प्रापकमित्यर्थः । सामसु श्रुतैकविंशत्यादि सङ्ख्यान्यथानुपपत्त्या प्रापितागमासु एकविंशेनेत्यादिवाक्यमेव प्रमाणम् । प्रकृतौ तावत्सङ्ख्याकानां साम्नामभावात् । तैर्विना तदनुपपत्तेरिति भावः ॥ २१ ॥

## आवापवचनं चाभ्यासे नोपपद्यते ॥ २२ ॥

'त्रीणि ह वा यज्ञस्य उदराणि । गायत्री बृहती, अनुष्टुप् । अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इत्यावापवचनं अभ्यासे सर्वत्राभ्यासे नोपपद्यते । आवृत्तिपक्षे तद्वचनं विहितस्य विषयाभावादनुपपन्नं स्यादिति भावः ॥२२॥

## साम्नां चोत्पत्तिसामर्थ्यात् ॥ २३ ॥

दश सामसहस्राणि शतानि च चतुर्दश ।
साङ्गानि सरहस्यानि यानि गायन्ति सामगाः ॥ १ ॥
अशीतिशतमाग्नेयं पावमानं चतुःशतम् ।
ऐन्द्रं सारसप्तविंशानि यानि गायन्ति सामगाः ॥ २ ॥

इति **साम्नां— उत्पत्तिसामर्थ्यात्—** पाठसामर्थ्यात्, आगमोऽप्राकृतानां तेषाम् । अन्यथा सर्वत्र प्राकृतसामाभ्यासे शेषसाम्नां कार्याभावात्तत्पाठवैयर्थ्यमिति भाव. ॥ २३ ॥

## धुर्येष्वपीति चेत् ॥ २४ ॥

ननु, धुर्येष्वप्युक्तयुक्त्या आवापः स्यात्। नावृत्तिरिति चेत्--॥२४॥

## नावृत्तिधर्मत्वात् ॥ २५ ॥

' आवृत्तं धूर्षु स्तुवते ' इति वचनात् तस्य आवृत्तिधर्मत्वम् । ततो नात्र शङ्कावसरः । वचनस्य पुरतो युक्तिरकिञ्चित्करीति भाव ॥ २५ ॥

बहिष्पवमाने ऋगागमाधिकरणम् ॥ ७ ॥

## सि०॥बहिष्पवमाने तु ऋगागमःसामैकत्वात्॥२६॥

प्रकृतौ प्रात.सवने अविवृद्धस्तोमके बहिष्पवमानस्तोत्रे विवृद्धस्तोमकेषु चोदकेन प्राप्ते तत्र किं पूर्ववत् सामान्तरागम. ऋगागमो वेति संशये आह—**बहिष्पवमाने तु—**तादृशे बहिष्पवमाने,**ऋगागमः**—ऋचामागमेनैव सङ्ख्यापूरणं कार्यम्। न सामान्तरागमेनाभ्यासेन वा। कुतः? ' एकं हि तत्र साम ' ' पराग्बहिष्पवमानेन स्तुवन्ति ' इति श्रुतिभ्यां सामान्तरागमस्य च प्रतिषेधात् ॥ २६ ॥

**सामिधेनीविवृद्धौ अविशिष्टानामागमेन सङ्ख्यापूरणाधिकरणम् ॥ ८ ॥**

## अभ्यासेन तु सङ्ख्यापूरणं सामिधेनीषु अभ्यासप्रकृतित्वात् ॥ २७ ॥

दर्शपूर्णमासयोः पञ्चदश सामिधेनीर्विधाय ' एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य । चतुर्विंशतिमनुब्रूयाद् ब्रह्मवर्चसकामस्य । षड्विंशतिमनुब्रूयात्पशुकामस्येत्यादयः काम्याः सामिधेनीकल्पाः श्रूयन्ते। तेषु सङ्ख्याविवृद्ध्यै किमभ्यासेन सङ्ख्यापूरणमुत ऋगागमेनेति संशये अभ्यासेन सङ्ख्यापूर्तिः कार्येति युक्तम् । कुतः ? **सामिधेनीषु**— एकविंशादिसामिधेनीकप्रयोगेषु, **अभ्यासप्रकृतित्वात्**— अभ्यस्तपञ्चदशसामिधेनीकप्रयोगप्रकृतित्वात् । पञ्चदशसामिधेनीकप्रयोगे सङ्ख्यापूरणार्थं ' त्रिः प्रथमामन्वाह । त्रिरुत्तमां ' इति अभ्यासस्य दृष्टत्वादिति ॥२७॥

## अविशेषान्नेति चेत् ॥ २८ ॥

**अविशेषात्**— पञ्चदशसामिधेनीकः प्रकृतिः, अन्या तद्विकृतिरित्यत्र नियामकाभावान्न तथेति चेत्— ॥ २८ ॥

## स्यात्तद्धर्मत्वात् प्रकृतिवदभ्यस्येत आ सङ्ख्यापूरणात् ॥ २९ ॥

स्यात् पूर्वा प्रकृतिः । कुतः ? **तद्धर्मत्वात्**—प्रकृतिधर्मवत्त्वात् विकृतेः। एकविंशादेः पञ्चदशविकृतित्वादिति यावत् । अत **आ सङ्ख्यापूरणात्**- सङ्ख्यापूर्तिपर्यन्तं, **प्रकृतिवदभ्यस्येत** — अभ्यासः स्यादित्यर्थः । चोदकानुरोधेन अभ्याससामञ्जस्याद् कार्यमिति भावः ॥ २९ ॥

## सि० ॥ यावदुक्तं वा कृतपरिमाणत्वात् ॥३०॥

**यावदुक्तं वा**— शास्त्रे यावदुक्तं तावदेवाभ्यसितव्यं, न सङ्ख्यापूर्तिपर्यन्तमभ्यासः । कुतः ? **कृतपरिमाणत्वात्**— ' त्रिः प्रथमामन्वाह त्रिरुत्तमां ' इत्यनेनाभ्यासस्य नियतपरिमाणत्वात्तस्मादवशिष्टसङ्ख्यापूर्तिः ऋगन्तरागमेन कर्तव्येति भावः ॥ ३० ॥

## अधिकानां च दर्शनात् ॥ ३१ ॥

सप्तदशसामिधेनीके आग्नीषोमीयपशौ ' न जगत्या परिदध्यात् त्रिष्टुभा परिदधाति ' इति जगतीनिषेधपूर्वकत्रिष्टुप्परिधानमभ्यासपक्षे अनुपपन्नं स्यात् । अतः अधिकदर्शनादप्यभ्यासो नेत्याशयः ॥ ३१ ॥

## कर्मस्वपीति चेत् ॥ ३२ ॥

कर्मसु—एवं धूर्गानकर्मस्वपि ऋगन्तरागमः स्यादिति चेत्–॥३२॥

## न चोदितत्वात् ॥ ३३ ॥

' आवृत्तं धूर्षु गायेत ' इति विहितत्वान्न तत्रागमः । अपि त्वभ्यासः । अत्र न तथा वचनमिति याज्ञसङ्ख्यापूर्त्याऽऽगम एवेति सिद्धम् ॥ ३३ ॥

### षोडशिनो ज्योतिष्टोमाङ्गत्वात् प्राकृतत्वाधिकरणम् ॥ ९ ॥

## षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ॥३४॥

ज्योतिष्टोमं प्रकृत्य ' य एवं विद्वान् एतं षोडशिनं गृण्हाति, भवत्यात्मना, परास्य भातृव्यो भवति ' इत्यनेन वचनेन विहितः षोडशीग्रहः प्राकृतो वैकृतो वेति विचारे षोडशिनो वैकृतत्वं— विकृतिगामित्वं स्यात् । कुतः ? ' उक्थेऽहन् द्विरात्रस्य गृह्यते मध्यमेऽहंस्त्रिरात्रस्य ' इति श्रुत्या तत्र—द्विरात्रादौ, कृत्स्नविधानात्–कृत्स्नाङ्गकलापसहितस्य तस्य विधानात् । द्विरात्रादीनां विकृतित्वं प्रसिद्धमेवेत्याद्यः पक्षः ॥ ३४ ॥

## प्रकृतौ चाभावदर्शनात् ॥ ३५ ॥

प्रकृतौ—ज्योतिष्टोमे ' द्वे संस्तुतानां विराजमतिरिच्येते ' इति षोडशिनः अभावे ' द्वे स्तोत्रीये विराजमतिरिच्येते ' इत्युक्ते द्वितीये तुरीयपादस्य द्वितीयाधिकरणे षड्विंशतितमे सूत्रे । अतः प्रकृतावभावदर्शनादपि वैकृतत्वं षोडशिनो ग्रहस्येति ॥ ३५ ॥

## अयज्ञवचनाच्च ॥ ३६ ॥

' अयज्ञो वा वैष ज्योतिष्टोमो यत् षोडश्या हीनः ' यथा ' अयज्ञो वा एष यः असामः ' इति असामत्वे क्लृप्तम् । एवं षोडश्यभावः अप्रकृतौ क्लृप्त इति निर्दिष्टायज्ञवचनादवगम्यते ॥ ३६ ॥

## सि० ॥ प्रकृतौ वा शिष्टत्वात् ॥ ३७ ॥

अयं षोडशीग्रहः प्रकृतौ वा—ज्योतिष्टोम एव आम्नातः इति प्रकरणात् तदङ्गमिति तत्रास्ति । विकृतौ तु शिष्टत्वात्—उपदिष्टत्वात् ' द्वितीयेऽन्हि द्विरात्रस्य गृह्यत इति तु उपदेशशास्त्रं विधायकमेव केवलम् । न तस्यान्यत्रास्तित्वनिवर्तकम् । प्राप्तबाधादिदोषत्रयदुष्टत्वात् परिसङ्ख्याविधेरिति भावः ॥ ३७ ॥

## प्रकृतिदर्शनाच्च ॥ ३८ ॥

प्रकृतावप्यग्निष्टोमे ' राजन्यस्य गृण्हीयात् अतिरात्रे ब्राह्मणस्य ' इति वाक्यस्य दर्शनात् केवलं प्रकरणमेव तस्य ज्योतिष्टोमाङ्गत्वे प्रमाणमिति नाशङ्कनीयम् ॥ ३८ ॥

## आम्नानं परिसङ्ख्यार्थम् ॥ ३९ ॥

आम्नानम्— द्विरात्रादौ चोदकशास्त्रेण षोडशिग्रहस्य प्राप्तत्वात् पुनस्तत्र ' उत्तरेऽहन् द्विरात्रस्य गृह्यते । मध्यमेऽहंस्त्रिरात्रस्ये ' ति समाम्नानं परिसङ्ख्यार्थं— राजन्यकर्तृकत्वादिनिमित्तव्यावृत्त्यर्थम् । प्रकृतौ ह्यग्निष्टोमे राजन्यकर्तृकत्वे निमित्ते षोडशीग्रह उक्तः । अतिरात्रे ब्राह्मणकर्तृकत्वे निमित्ते स उपदिष्टः । एवं स्थिते चोदकशास्त्रं सनिमित्तकमेव तं तत्र प्रापयति । अतस्तदतिदिष्टनिमित्तस्य निषेधार्थं पुनस्तत्राम्नानमिति भावः ॥ ३९ ॥

## उत्क्रमभावदर्शनम् ॥ ४० ॥

अभावदर्शनम्—' द्वे संस्तुतानां विराजमतिरिच्येते ' इति प्रकृतौ षोडशिनः निषेधदर्शनं विकल्पार्थमिति उक्तम् । तत्र विकल्पितः षोडशीत्यर्थः ॥ ४० ॥

## गुणादयज्ञत्वम् ॥ ४१ ॥

गुणात्—प्रक्षे प्राप्तस्य षोडशिग्रहणस्य स्तुतेः अयज्ञत्वमभ्युपपन्नम् ॥ ४१ ॥

आग्रयणादेव षोडशिग्रहणाधिकरणम् ॥ १० ॥

## तस्याग्रयणाद्ग्रहणम् ॥ ४२ ॥

तस्य—षोडशीग्रहस्य, सोमरसः आग्रयणात् ग्राह्यः । कुतः ? ' आग्रयणाद् गृह्णाति षोडशिनम् ' इति वचनादित्यर्थः ॥ ४२ ॥

## उक्थ्याच्च वचनात् ॥ ४३ ॥

' उक्थ्यात् गृह्णाति षोडशिनं ' इति वचनाद्युगपदुभाभ्यां सोमरसो षोडशिनि ग्राह्य इति चेदत्र ब्रूमः ' स पाराचमुक्थ्याद् गृह्णाति ' इत्यस्यां श्रुतौ उत्तरकालवाचिपराक्शब्दस्य श्रुतत्वात् उक्थ्यवाक्यमुत्तरकालविधिपरमिति बोध्यम् ॥ ४३ ॥

तृतीयसवन एव षोडशीग्रहणाधिकरणम् ॥ ११ ॥

## तृतीयसवने वचनात्स्यात् ॥ ४४ ॥

ज्योतिष्टोमे ' यः षोडशी गृह्यत इन्द्रियमेवात्मन् धत्ते इति श्रुतम् । तत्रायं षोडशीग्रहः ' प्रातःसवने ग्राह्यः, माध्यन्दिनसवने ग्राह्यः, तृतीयसवने ग्राह्यः ' इति वचनात् सवनत्रये ग्राह्य इति प्राप्ते सिद्धान्तः—तृतीयसवन एव ग्रहणं तस्येति । कुतः ? वचनात्— वाक्यशेषे ' यत् प्रातःसवने गृह्णीयात् वज्र उत्तरे सवने व्यतिरिच्येत । यन्माध्यन्दिने मध्यतो वज्रं निहन्यात् । तृतीयसवने ग्राह्यः तत सर्वेषु सवनेषु गृह्णाति । न पूर्वे सवने आर्तिर्नीत ' इति पूर्वसवनद्वये आर्तिदोषमुक्त्वा यत्तृतीयसवने

षोडशीग्रहणं तदेव सर्वसवनेषु ग्रहणमिति स्तुतेस्तस्मिन्नेव तद्ग्रहणमिति भावः ॥ ४४ ॥

अपर्यवसितस्य दशमाधिकरणस्य पुनरुत्थानम् ॥ १० ॥

न आग्रयणादेव ग्राह्यः सोमरसः षोडशिग्रह इति । उक्थ्यादपि ग्राह्यः । कुतः ?

## अनभ्यासे पराक्शब्दस्य तादर्थ्यात् ॥४५॥

' यत् पराचमुक्थ्याद्गृह्णाति षोडशिन ' मित्यत्र पराक्शब्दः **अनभ्यासे**— सकृदर्थे वर्तते । ' पराचीः सामिधेनीरन्वाह, अनभ्यस्ताः सामिधेनीरन्वाह ' इत्यत्र पराक्शब्दस्य **तादर्थ्यात्**— अनभ्यासार्थत्वस्यावगमात् । अतः अनभ्यस्तं— सकृत् उक्थ्यादपि गृह्णाति सोमरसं षोडशिनी-त्याग्रयणोक्थ्याभ्यां ग्राह्यः षोडशीति ॥ ४५ ॥

## उक्थ्यविच्छेदवचनत्वात् ॥ ४६ ॥

' विच्छिन्दन्ति ह वा एतदुक्थ्य यदुक्थ्यं षोडशिनं च ततः प्रणयन्ति' इति उक्थ्यविच्छेदवचनात्तस्मिन् प्रणयतिना सम्बन्धाच्च उक्थ्याग्रयणाभ्यां ग्राह्य. षोडशीति सिध्यतीति पुनराशङ्का ॥ ४६॥

## सि०॥ आग्रयणाद्वा पराक्शब्दस्य देशवाचित्वात् पुनराधेयवत् ॥ ४७ ॥

**आग्रयणाद्वा**—' यदाग्रयणाद् गृह्णाति षोडशिन ' मिति श्रुतेराग्रयणादेव ग्राह्य. । उक्तपराक्शब्दस्य तु देशवाचित्वेनान्यथा सिद्धत्वात् **पुनराधेयवत्**—यथा ' पराचमग्न्याधेयात् पुनरादधाति ' इत्यत्र उत्तरकालरूपदेशवाचित्वं तथेहापि तदर्थत्वं बोध्यम् ॥ ४७ ॥

## विच्छेदः स्तोमसामान्यात् ॥ ४८ ॥

**विच्छेदः**—विच्छेदवचनं स्तोमसाम्यादुपपन्नम् । स्तोमसाम्यं च द्वयोरेकविंशस्तोमत्वेन । एकविंशस्तोमत्वात् उक्थ्यग्रह इव षोडशीति तद्वाक्येऽपि कालसम्बन्ध एव पञ्चमी, नापादाने इति भावः ॥ ४८ ॥

षोडशिग्रहस्य सस्तोत्रशस्त्रत्वाधिकरणम् ॥ १२ ॥

## उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात् सति संस्थान्यत्वम् ॥ ४९ ॥

षोडशिनं प्रकृत्येदं श्रूयते—' अथाग्निष्टोमे राजन्यस्य गृह्णीयात् अप्युक्थ्ये मध्यः ' इति सोऽयं षोडशीग्रहः अस्तुतशस्त्रः— स्तोत्रशस्त्राभ्यां रहितः स्यात् । कुतः ? उक्थ्याग्निष्टोमसंयोगात्-उक्तवाक्ये तस्य उक्थ्याग्निष्टोमसम्बन्धात् । तस्य सस्तोत्रशस्त्रत्वे तु तदीयस्तोत्रशस्त्राभ्यां क्रतुसमाप्त्या उक्थ्याग्निष्टोमयोः षोडशीसंस्थात्वं प्रसज्येत । उक्थ्याग्निष्टोमसंस्थात्वं भज्येत । तदा तत्सम्बन्धिन्याः समाप्तेरभावादिति ॥ ४९ ॥

## सि० ॥ सस्तुतशस्त्रो वा तदङ्गत्वात् ॥ ५० ॥

सस्तुतशस्त्रो वा— स्तोत्रशस्त्राभ्यां सहित एव षोडशी । कुतः तदङ्गत्वात्— ' ग्रहं वा गृहीत्वा चमसं वा उन्नीय स्तोत्रमुपाकरोति ' इति श्रुत्या ग्रहग्रहणनिमित्तयोः स्तोत्रशस्त्रयोर्यागाङ्गत्वात् । सति निमित्ते नैमित्तिकेन भाव्यमिति भावः ॥ ५० ॥

## लिङ्गदर्शनाच्च ॥ ५१ ॥

ऊर्ध्वा वा अन्ये यज्ञक्रतवः सन्तिष्ठन्ते । तिर्यञ्चोऽन्ये । ये होतारमभिसन्तिष्ठन्ते ते ऊर्ध्वाः । ये अच्छावाकं, तिर्यञ्चः ' इति वाक्येन यज्ञक्रतूनां द्वैविध्यं प्रदर्शितम् । तच्च द्वैविध्यं तदेवोपपद्येत यदि सस्तुतशस्त्रः षोडशी स्यात् । अन्यथाऽयमच्छावाकमभिसन्तिष्ठेतेति त्रैविध्यापत्तिः । तस्य द्वैविध्यलिङ्गदर्शनं विरुध्येतेति तल्लिङ्गदर्शनादपि सस्तुतशस्त्रत्वं तस्य सिध्यति ॥ ५१ ॥

## वचनात् संस्थान्यत्वम् ॥ ५२ ॥

संस्थान्यत्वम्—' ग्रहं वा गृहीत्वा चमसं वा उन्नीय स्तोत्रमुपाकरोति ' इति ग्रहग्रहणनिमित्तयोः स्तोत्रशस्त्रयोः यागाङ्गत्ववचनात् संस्थान्यत्वमिष्टमेवेत्यर्थः ॥ ५२ ॥

अङ्गिरसां द्विरात्रे षोडशिनः परिसङ्ख्याधिकरणम् ॥ १२ ॥

## अभावादतिरात्रेषु गृह्यते ॥ ५३ ॥

बहुषु द्विरात्रेषु मध्ये अङ्गिरसां द्विरात्रे इत्थमाम्नायते—'वैखानसं पूर्वेद्युः साम भवति षोडश्युत्तरे' इति। अत्र 'षोडश्युत्तर' इत्यनेन षोडशिग्रहस्य विधिः, उतानुवादः, परिसङ्ख्यार्थमिति संशये यावद्द्विरात्रेषु चोदकेन प्राप्तस्य तस्य यावदन्तर्गताङ्गिरस द्विरात्रे प्राप्तत्वेऽपि 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यानारभ्याधीतप्रत्यक्षविधिना आतिदेशिकः। अत एव दुर्बलः न बाध्यते। तस्मात् तस्य तत्राभावात् तद्विधायकमेवोक्तं वाक्यं, नानुवादकम्। तदतिरिक्तातिरात्रेष्वेव चोदकेन गृह्यते—प्राप्यत इति ॥ ५३ ॥

## सि० ॥ अन्वयो वा अनारभ्याविधानात् ॥ ५४ ॥

सर्वद्विरात्रेषु अन्वयो वा—षोडशिग्रहस्यानुवृत्तिरेव चोदकेन;। कुतः? अनारभ्यविधानात्—'उत्तरेऽहन् द्विरात्रस्य गृह्यते'-इत्यनारभ्यविधिना यद्गृह्यते तदङ्गिरसा द्विरात्रस्यैव उत्तरेऽहनि। "नान्यस्यातिरात्रस्येति परिसङ्ख्यार्थमिदं वचनमिति बोध्यम् ॥ ५४ ॥

## अभावादतिरात्रेषु गृह्यते ॥ ५३ ॥

एवं वा—यदेतत् 'अतिरात्रे षोडशिनं गृण्हाति, नातिरात्रे षोडशिनं गृण्हाति' इति श्रुतिभ्यां वैकल्पिकं प्राकृतं षोडशिग्रहणं, तत् 'प्रकृतिवद्विकृतिः कार्ये'ति चोदकवाक्येन सर्वद्विरात्रेषु विकल्पेनैव प्राप्तम्। 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यनेनाङ्गिरसा द्विरात्रे नियम्यते ततः 'षोडश्युत्तरे' त्वङ्गिरसा द्विरात्रे षोडशीग्रह नियतो गृह्यते। इतरेष्वतिरात्रेषु तस्याभावात् परिसङ्ख्यायां पर्यवस्यति तद्वचनमिति ॥ ५३ ॥

## सि० ॥ अन्वयो वा अनारभ्यविधानात् ॥ ५४ ॥

— अन्वयो वा—'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इति प्रत्यक्षश्रुतानारभ्यविधानेन यावद्द्विरात्रस्य उत्तरेषु अहस्सु षोडशिग्रहस्यानुवृत्तेः सम्बन्धः

स्पष्टं प्रतीयते । न हि प्रत्यक्षश्रवणस्य परिसङ्ख्यायां पर्यवसानं विशेषवचनेनाऽपि कर्तुं शक्यम् । श्रुतहानिः, अश्रुतकल्पना, प्राप्तबाधश्चेति दोषत्रयदुष्टत्वात् परिसङ्ख्यायाः । निर्दिष्टविषयवाक्येन तु वैखानसं साम पूर्वेषु भवतीति विधीयते । अनारभ्यविधिप्राप्तः षोडशी 'षोडश्युत्तर' इत्यनेन नूद्यते । तस्मात्प्राप्तस्य तस्यानुवादः सः । न विधिरिति सिद्धान्तः ॥ ५४ ॥

नानाऽहीनेषु षोडशीग्रहग्रहणाधिकरणम् ॥ १४ ॥

## चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत् ॥ ५५ ॥

षोडशिनं प्रकृत्य 'चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यते' इत्यामनन्ति । तत्र एकस्मिन्नहीने चतुर्थे चतुर्थे दिवसे अभ्यसितव्यः षोडशी, किं वा अहीनान्तरसम्बन्धिनि चतुर्थदिवसे अभ्यसितव्य इति विचिकित्सायामेकस्मिन्नेवाहीने अभ्यसेन द्विवारं चतुर्थदिने ततोऽष्टमदिने च प्रतीयेत । भोजनवत्— यथा लोके देवदत्तश्चतुर्थे चतुर्थेऽहनि भुङ्क्त इत्युक्ते एकस्मिन् पक्षे चतुर्थे चतुर्थे इति गम्यते, न पक्षान्तरे । तद्वदिदमिति ॥५५॥

## सि० ॥ अपि वा सङ्ख्यावत्त्वान्नानाहीनेषु गृह्यते पक्षवदेकस्मिन् सङ्ख्यार्थभावात् ॥५६॥

अपि वा नानाहीनेष्वेव तत्सम्बन्ध— षोडशीसम्बन्धो गृह्यते— ज्ञायते । कुतः ? सङ्ख्यावत्त्वात्— चतुर्थ इति सङ्ख्यायाः श्रुतत्वात् । एकस्मिन्— एकाहीने एकदिन एव, सङ्ख्यार्थभावात्—चतुर्थसङ्ख्यायाः सफलत्वात् । अन्यचतुर्थस्य तत्राभावात् । तदन्यस्याह्नः अष्टमत्वात् । अहीनस्येत्येकवचनं जात्यभिप्रायम् । अहीनस्यावच्छिन्नस्येत्यर्थः । वीप्सा पक्षवत् ज्ञेया । यथा पञ्चम्यां पञ्चम्यां भुङ्क्त इत्यत्र एकस्मिन् पक्षे पञ्चमीद्वयस्याभावात् पक्षान्तरं ज्ञायते । तथा एकस्मिन्नहीने चतुर्थदिनद्वयस्याभावादहीनान्तरं सुव्यक्तं भवतीति भावः ॥ ५६ ॥

## भोजने च तत्सङ्ख्यं स्यात् ॥ ५७ ॥

भोजने च - भोजनस्थले दशम्याः तत्सङ्ख्यं — भोजनादिनमारभ्य चतुष्ट्वसङ्ख्यावत्त्वं स्यात् लोकाभिप्रायानुसारतः । किमवधिकचतुष्ट्वमित्याकाङ्क्षायां तत्पूरकशब्दाश्रवणात् । प्रकृते तु अहीनस्य चतुर्थे चतुर्थे अहनीति शब्दश्रवणाद्विषमो भोजनदृष्टान्त इति भावः ॥ ५७ ॥

विकृतौ ग्रहाणामाग्रयणाग्रत्वाधिकरणम् ॥ १५ ॥

## सि० ॥ जगत्साम्नि सामाभावात् ऋक्तः साम तदाख्यं स्यात् ॥ ५८ ॥

ज्योतिष्टोमप्रकरणे 'यदि जगत्सामा सोमः स्यात् आग्रयणाग्रान् ग्रहान् गृह्णीयात्' इत्याम्नायते । तत्रास्य जगत्सामनिमित्तकाऽऽग्रयणाग्रग्रहग्रहणस्य प्रकरणप्रमाणेन प्रकृतौ ज्योतिष्टोमे निवेश इति प्राप्ते आह—जगत्साम्नि— जगत्सामपदघटितपूर्वोक्तश्रुतौ, ऋक्तः—जगतीच्छन्दस्काया ऋचः सम्बन्धात्, तदाख्यं— जगत्सामाख्यं साम । सामाभावात्— सामवेदे जगत्संज्ञकसाम्नः अभावात्, जगतीच्छन्दस्कायामृचि गीयमानमिदं साम विश्वजिति विकृतावेव ज्ञेयम् । न प्रकृतौ । यतः प्राकृतसामयोनिभूतासु ऋक्षु कस्या अपि ऋचः जगतीच्छन्दस्कत्वं नास्ति । तथा च तत्सामनिमित्तकाऽऽग्रयणग्रहाग्रत्वमपि तत्रैव विश्वजित्यनुष्ठेयमिति भावः ॥ ५८ ॥

॥ अत्रैव वर्णकान्तरम् ॥

## सि० ॥ जगत्साम्नि सामाभावात् ऋक्तः साम तदाख्यं स्यात् ॥ ५८ ॥

'यदि जगत्सामा सोमः स्यादाग्रयणाग्रान् ग्रहान् गृह्णीयात्' इत्यत्र जगत्सामशब्देन रथन्तरसाम ग्राह्यम् । कुतः ? तद्योनिभूतायामृचि 'ईशानमस्य जगतः स्वर्दृशः' इति जगत्पदसत्त्वात् ज्योतिष्टोमस्य प्रकृतत्वाच्च । न जगतीच्छन्दस्कऋग्युत्पन्नं सामेति पूर्वपक्षे सिद्धान्तः । सामाभावात्— यत्र-

रसामवेदे जगत्संज्ञकस्य साम्नः अभावात्, जगत्साम्नि-जगत्सामपदघटितो-क्तश्रुतौ, ऋक्तः-जगत्सामयोनिभूतायाः जगतीच्छन्दस्कायाः ऋचः सम्बन्धात् तदारब्धं-जगतीच्छन्दस्कऋग्युत्पन्नं सामैव जगत्सामसंज्ञकं स्यात्। न रथन्तरसाम। तत्पक्षे जगत् इत्यस्य जगत्यादे लक्षणा। तदनन्तरं पुनस्तत्पदघटितऋग्योनिके साम्नि लक्षणेति लक्षितलक्षणापत्तिरूपो दोषः। स सिद्धान्ते नास्तीति भावः। तस्माद्यत् जगतीच्छन्दस्कऋग्युत्पन्नं साम विद्यते स जगत्साम्ना सोमः। तादृशश्च त्रिवृतान् सोमविकारः। अतस्तत्रैवाप्रयणाप्रवृत्तमिति बोध्यम् ॥ ५८ ॥

संसवादिविकृतिषु उपवत्यग्रियवत्योरभावाधिकरणम् ॥ १६ ॥

## उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात्स्यात् ॥ ५९ ॥

'संसव उभे कुर्वीत। गोसव उभे कुर्वीत। अभिजितेकाहे उभे बृहद्रथन्तरे कुर्वीत' इत्युभयसामानः क्रतवः श्रूयन्ते। प्रकृतौ 'उपवतीं रथन्तरपृष्ठस्य प्रतिपदं कुर्यात्' 'अग्रियवतीं बृहत्पृष्ठस्य' इति, रथन्तर-निमित्तकं बृहन्निमित्तकं च नैमित्तिकमुपवदग्रियवत्योः प्रतिपत्करणं विकल्पेनाधिष्टम्। तदुक्तमेतयोर्विकृतावतिदेशतः प्राप्तम्। तत्र तु उभे कुर्यादिति निमित्तसमुच्चयः श्रुतः। अतो नैमित्तिके भवति संशयः कथं कार्य-मिति। तत्र प्रथमः पक्षः— उभयसाम्नि— रथन्तरबृहत्साम्नि, विकृतौ नैमित्तिकं प्रतिपत्करणं समत्वात्— नियामकाभावात् प्रकृतिवद्विकल्पेन इच्छातः स्यात् वाऽयमित्यर्थः ॥ ५९ ॥

## मुख्येन वा नियम्येत ॥ ६० ॥

द्वितीयः पक्षः— मुख्येन— प्रथमाधीतेन रथन्तरेण वा उपवती-प्रतिपदोऽयं नियम्येत— निश्चीयत इत्यर्थः। 'मुख्यं वा पूर्वचोदना-ल्लोकवत्' (१२।२।२३) इति ॥ ६० ॥

## सि० ॥ निमित्तविघाताद्वा क्रतुयुक्तस्य कर्म स्यात् ॥ ६१ ॥

**निमित्तविघातात्**— निमित्तद्वयाभावात् क्रतुनिमित्तमेवात्र तदन्यदाश्रीयते। प्रकृतौ तु द्वयोः प्रतिपदोर्निमित्तं प्रत्येकं रथन्तरपृष्ठं बृहत्पृष्ठं च पृथक् पृथङ्निमित्तं विकल्पेनोक्तम्। इह तु उभे कुर्यादिति तयोः समुच्चयो वा समुच्चितावुभौ निमित्तम्। न प्रकृतिवत् प्रत्येकम्। अतः **क्रतुयुक्तस्य**— क्रतुनिमित्तस्य, **कर्म**— नैमित्तिकमन्यदेव। प्रतिपत् अन्यैव स्यात्। भवितुमर्हतीत्यर्थः। नोपवती नाप्यभियवतीति भावः ॥ ६१ ॥

ऐन्द्रवायवस्य सर्वादानप्रतिकर्षाधिकरणम् ॥ १७ ॥

## ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षः स्यात् ।६२।

ज्योतिष्टोमे 'वाग्वा ऐन्द्रवायवो यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते वाचमेवावरुन्धे। ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इत्याम्नातम्। मन्त्रकाण्डविधिकाण्डयोः ग्रहाणां पाठक्रमस्त्वित्थं विधेः—'उपांशुग्रहः प्रथमः। अन्तर्यामग्रहो द्वितीयः। ऐन्द्रवायवग्रहस्तृतीयः। मैत्रावरुणग्रहश्चतुर्थः' इत्यादिः। तत्र सर्वेभ्य एव ग्रहेभ्यः पूर्वमैन्द्रवायवो गृहीतव्यः, उत मैत्रावरुणप्रभृतिभ्यः पूर्वमिति संशये 'ऐन्द्रवायवाग्रा ग्रहा गृह्यन्त' इति ऐन्द्रवायवस्य अग्रविधानात्तस्य सर्वादितः **प्रतिकर्षः**— यावद्ग्रहेभ्यः पूर्वं ग्रहणं स्यादिति ॥ ६२ ॥

## सि० ॥ अपि वा धर्मविशेषात्तद्धर्माणां स्वस्थाने प्रकरणादग्रत्वमुच्यते ॥ ६३ ॥

**अपि वा**— नोक्तवाक्यमैन्द्रवायवस्य सर्वाग्रे ग्रहणं विधीयते। **धर्माणां**— मैत्रावरुणाश्विनप्रभृतीनां ग्रहाणां, **धर्मविशेषात्**— ऐन्द्रवायवप्रभृतित्वविशेषादैन्द्रवायवाग्राणित्यनेन मैत्रावरुणादीन् सर्वान् ग्रहाननूद्य ग्रहणमात्रं विधीयते। ऐन्द्रवायवप्रभृतित्वस्य मैत्रावरुणादिसर्वग्रहसाधारणत्वात्। तथा च **प्रकरणात्**— प्रकरणपाठात, **स्वस्थाने**— स्वीयतृतीयस्थाने स्थितं ऐन्द्रवायवे स्थितमग्रत्वं **उच्यते**— अनूद्यते धाराग्रहज्ञापनायेति भावः ॥ ६३ ॥

धारासंयोगाच्च ॥ ६४ ॥

'अण्वया अविच्छिन्नया धारया गृह्णाति' इति धारासंयोगः श्रूयते ऐन्द्रवायवादिवाक्ये । अतो धाराग्रहास्ते ऐन्द्रवायवादयः । तदपेक्षमेवाग्रत्व-मैन्द्रवायवग्रहस्येति स्वस्थाने एव ग्रहणं स । तथा च पाठक्रमो न बाध्यते । तस्मान्न सर्वग्रहाग्रत्वमैन्द्रवायवस्येति भावः ॥ ६४ ॥

कामसंयोगेऽप्यैन्द्रवायवस्य पाठात्स्वस्थान एवानु-ष्ठानाधिकरणम् ॥ १८ ॥

कामसंयोगे तु वचनादादितः प्रतिकर्षः स्यात् ॥ ६५ ॥

'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यः कामयेत् पूर्ववत् प्रजाः प्रकल्पेरन्' इति कामसंयोगे--कामनाश्रवणे तु, वचनात्--उक्तवाक्यतः, आदितः--सर्वादितः, प्रतिकर्षः—संयोगः—ग्रहणं स्यादेव । अन्यथा पूर्ववद्धाराग्रहाग्रत्वे तस्य नित्यत्वेन ततो वैलक्षण्यं नास्तीति कामसंयोगो व्यर्थः स्यादिति भावः ॥ ६५ ॥

सि० ॥ तद्देशानां वाऽग्रसंयोगस्तद्युक्ते कामशास्त्रं स्यान्नित्यसंयोगात् ॥ ६६ ॥

तद्देशानां वा--धाराधिकरणोक्तप्रकारेण पाठसिद्धस्वस्वदेशस्थितानामेव ग्रहाणामग्रतासम्बन्धात् तद्युक्ते—पूर्वोक्तस्वदेशयुक्ते तस्मिन्, कामशास्त्रं-फलसम्बन्धविधायकं वचनं संयोगपृथक्त्वन्यायेन नित्ये एव फलसंबोधनात् समुपपन्नमिति न कामसंयोगो व्यर्थ इति भावः ॥ ६६ ॥

आश्विनादिग्रहाणां सर्वादितः प्रतिकर्षाधिकरणम् ॥ १९ ॥

परेषु वाऽग्रशब्दः पूर्ववत् स्यात्तदादिषु ॥ ६७ ॥

ज्योतिष्टोमे 'आश्विनाग्रान् गृह्णीयादामयावितः । शुक्राग्रान् गृह्णीयादभिचरतः । मन्थ्यग्रान् गृह्णीयादभिचर्यमाणस्य' इति ऐन्द्रवायवात्

परे ग्रहाः काम्याः श्रूयन्ते । तत्रैतेष्वपि स्वस्वस्थानास्थितानामेव ग्रहणं विधेयमुत सर्वादितः प्रतिकर्षोऽनुष्ठेय इति संशये परेषु— ऐन्द्रवायवापरेषु एषु ग्रहेषु अग्रशब्दः पूर्ववत्स्यात्— पूर्वाधिकरणसिद्धान्तवत् स्वस्वस्थानस्थितस्य ग्रहणं स्यात् । तदादिषु— तत्प्रभृतिषु अग्रशब्दः स्यादित्यर्थः ॥ ६७ ॥

## सि० ॥ प्रतिकर्षो वा नित्यार्थेनाग्रस्य तदसंयोगात् ॥ ६८ ॥

प्रतिकर्षो वा— ऐन्द्रवायवात्प्रागेवाऽऽश्विनादीनां तत्तत्फलसिद्धये प्रतिकर्ष.—ग्रहणं स्यात् । कुतः ? नित्यार्थेन— पठितक्रमाश्रिते प्राप्तप्रथमस्थानेन्द्रवायवग्रहस्यग्रस्य— अग्रतायाः तदसंयोगात्— फलासंयोगात् । वाक्येन हि आश्विनाद्यग्रता तत्तत्फलेन सम्बद्धा । पाठक्रमेण तदग्रताया अप्राप्तौ सैव फलायात्र विधीयत इति तेषां स्वस्थानभंशः । निर्दिष्टफलप्राप्त्यर्थं च ऐन्द्रवायवात्प्राग् ग्रहणमवश्यं विधेयमिति भावः ॥ ६८ ॥

## प्रतिकर्षं च दर्शयति ॥ ६९ ॥

'धारयेयुस्तं यं कामाय गृह्णीयुः, ऐन्द्रवायवं गृहीत्वा सादयेत्' इति श्रूयते । तत्रै तस्यार्थस्त्वयं— यदि तत्तत्फलकामनया आश्विनादिग्रहान् ग्रहान् गृह्णीयात् तत्र यं ग्रहं प्रथमं गृह्णाति तं भूमावनासादयन्—धारयन्नेव ऐन्द्रवायवं गृहीत्वा तदनन्तरमासादयेदिति । एवमेवंक्रमुक्तवचनमैन्द्रवायवाग्र्यवहितप्राक्प्रतिकर्षस्तेषां तत्तत्फलायेति लिङ्गं दर्शयति ॥ ६९ ॥

आश्विनादीनां ग्रहाणामैन्द्रवायवस्य पुरस्तात् प्रतिकर्षाधिकरणम् ॥ २० ॥

## पुरस्तादैन्द्रवायवादग्रस्य कृतदेशत्वात् ॥७०॥

यः काम्यानां ग्रहाणां पुरस्तात् प्रतिकर्षः स किं, सर्वादितः, किं वा ऐन्द्रवायवस्यैव पुरस्तादिति संशये नियमकारिणः शास्त्रस्याभावा-

स्तरादिति इति प्राप्ते आह--पुरस्तादिति । ऐन्द्रवायवस्यैव पुरस्ताद्-ग्रहणं तेषां, नोपांश्वन्तर्यामिनः पुरस्तात् । कुत ? अमस्य कृतदेशत्वात्-' धारया गृण्हाती 'ति धारागृहाधिकारात्तेषामेत इत्येव सिध्यति, न त्वधाराग्रहाग्रत इति भाव ॥ ७० ॥

## तुल्यधर्मत्वाच्च ॥ ७१ ॥

ऐन्द्रवायवप्रभृतीनां धाराग्रहत्वेन तुल्यधर्मत्वादपि ऐन्द्रवायवाग्रत्वमेव सिध्यति । किमपेक्षयाग्रत्वमित्याकाङ्क्षाया प्रकृतमेवाऽऽकाङ्क्षापूरकं, न त्वन्यदिति बोध्यम् ॥ ७१ ॥

## तथा च लिङ्गदर्शनम् ॥ ७२ ॥

' यं कामाय गृण्हीयु 'रिति कामस्य ग्रहणानन्तरमैन्द्रवायवस्य ग्रहणात्मकं लिङ्गमपि तस्य पुरस्तात् प्रतिकर्षं दर्शयति ॥ ७२ ॥

ग्रहणप्रतिकर्षेण सादनस्यापि प्रतिकर्षाधिकरणम् ॥ २१ ॥

## सादनं चापि शेषत्वात् ॥ ७३ ॥

ग्रहणवत् सादनस्य प्रतिकर्षोऽस्ति न वेति संशये नास्तीत्याद्यः पक्षः । अश्रुतत्वादिति हेतोः । यतः शब्दप्रमाणका वयम् । शब्दश्च ग्रहण-प्रतिकर्षे विद्यते । न सादनप्रतिकर्षे । अतो न प्रतिकर्षस्तस्येति चेन्न । सादनमपि प्रतिकृष्यते । कुत ? शेषत्वात्— सादनस्य ग्रहणाङ्गत्वात् ' अङ्गिसमभिव्याहृतमङ्ग 'मिति न्यायात् अङ्गिन. ग्रहणस्य प्रतिकर्षे तदङ्गस्य सादनस्यापि प्रतिकर्ष इति भाव ॥ ७३ ॥

## लिङ्गदर्शनाच्च ॥ ७४ ॥

ऐन्द्रवायवं गृहीत्वाऽऽसादयेदिति लिङ्गदर्शनादपि तथेति निष्कर्ष. ॥ ७४ ॥

प्रदानस्याप्रतिकर्षाधिकरणम् ॥ २२ ॥

## प्रदानं चापि सादनवत् ॥ ७५ ॥

ग्रहणानुसारतः सादनस्य प्रतिकर्षवत् प्रदानस्यापि प्रतिकर्षं इत्याह। **प्रदानं चापि**— यागोऽपि अपकृष्यते सादनवदिति ॥ ७५ ॥

## सि० ॥ न वा प्रधानत्वात् शेषत्वात् सादनं तथा ॥ ७६ ॥

**न वा**— नैव प्रदानस्यापकर्षः। कुतः? तस्य प्रधानत्वात्। सादनस्य तु **शेषत्वात् तथा**— ग्रहणानुसारेणापकर्षः ॥ ७६ ॥

त्र्यनीकायामैन्द्रवायवाग्रतोक्तेः समानविधित्वाधिकरणम् ॥२३॥

## त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ॥ ७७ ॥

द्वादशाहे 'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः' इति प्रथमचरमदशमाहानि त्यक्त्वा शेषाणां नवानामह्नां त्र्यनीकेति संज्ञाऽस्ति। तस्यां त्र्यनीकायां 'ऐन्द्रवायवाग्रं प्रथममहः। अथ शुक्राग्रम्। अथ आग्रयणाग्रम्। अथ ऐन्द्रवायवाग्रम्। अथ शुक्राग्रम्। अथ आग्रयणाग्रम्। अथ ऐन्द्रवायवाग्रम्। अथ शुक्राग्रम्। अथ आग्रयणाग्रम्' इति श्रुतम्। तत्र त्र्यनीकान्तर्गतद्वितीयतृतीययोरह्नोः ऐन्द्रवायवाग्रता शुक्राग्रता च श्रुता। तस्याश्च प्रकृतौ रथन्तरनिमित्तत्वात् बृहन्निमित्तत्वाच्च चोदकेनैवात्र प्राप्तिरस्तीति ऐन्द्रवायवाग्रं प्रथममहः। अथ शुक्राग्रमिति पुनः श्रवणमर्थवाद एवेत्याह पूर्वपक्षी **त्र्यनीकायां न्यायोक्तेषु**-चोदकशास्त्रप्राप्तेषु सत्सु, **पुनराम्नानं**-पुनः कथनं, **गुणार्थं**—स्तुत्यर्थं स्यादिति ॥ ७७ ॥

## सि०॥ अपि वा अहर्गणेषु अग्निवत्समानं विधानं स्यात् ॥ ७८ ॥

**अपि वा अहर्गणेषु**-द्वादशाहे त्र्यनीकेषु विधानं समानं स्यात्। प्रकृतौ यथा ऐन्द्रवायवाग्रत्वविधानं, तथात्रापीत्यर्थः। **अग्निवत्**— यथा;

अथातोऽग्निमग्निष्टोमेनानुयजति । तमुक्थ्येन । तमतिरात्रेण । तं चतू-
रात्रेण । तं पञ्चरात्रेण ' इत्यादिषु अग्निष्टोमे अग्नेर्विधानाच्चोदकेन प्राप्ता-
वपि पुनरग्निविधानं तद्वदत्रापि विधानम् । द्वादशाहविकृतिषु यत्र-
कुत्रचिदप्यन्तरनिमित्ताभावेऽपि ऐन्द्रवायवाग्रतासिद्धिर्विचारप्रयोजनमिति
भावः ॥ ७८ ॥

व्यूढद्वादशाहस्य समूढविकारत्वाधिकरणम् ॥ २४ ॥

## पू० ॥ द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत्समान-विधानं स्यात् ॥ ७९ ॥

द्वादशाहो द्विविधः । समूढो व्यूढश्च । तत्र समूढः पूर्वाधिकरणोक्तः ।
व्यूढस्त्वित्थम्—' ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ प्रथमचरमे अहनी । अथे-
तरेषां दशानामह्नां मध्ये ऐन्द्रवायवाग्रं प्रथममहः । अथ शुक्राग्रं द्वितीयम् ।
अथ द्वे तृतीयचतुर्थे आग्रयणाग्रे । अथ ऐन्द्रवायवाग्रं पञ्चमम् । अथ द्वे
षष्ठसप्तमे शुक्राग्रे । अथ आग्रयणाग्रमष्टमम् । द्वे नवमदशमे ऐन्द्रवायवाग्रे '
इति । तत्रोभयविधमपि द्वादशाहं प्रकृत्य ऐन्द्रवायवाग्रत्वादयो धर्मा उप-
दिष्टाः, किं वा समूढं प्रकृत्यैव समाम्नाताः । अर्थात्तद्विकारो व्यूढः । इति
संशये आह—द्वादशाहस्य व्यूढसमूढत्वम्—द्वादशाहसम्बन्धिनोरेव व्यूढ-
समूढयोः **समानं विधानं**—तुल्यविधानं स्यात् । न तयोः प्रकृतिविकारभाव
इत्यर्थः । पृष्ठवत्—यथा प्रकृतौ बृहद्रथन्तरपृष्ठयोः समानविधित्वं, न
प्रकृतिविकृतिभावस्तयोः । तद्वद्व्यूढसमूढयोरपि न । प्रमाणाभावादिति
भावः ॥ ७९ ॥

## सि० ॥ व्यूढो वा लिङ्गदर्शनात्समूढविकारः स्यात् ॥ ८० ॥

व्यूढो वा—समूढविकारो व्यूढः स्यात् । कुतः ? लिङ्गदर्शनात् ।
तच्च लिङ्गमित्थं श्रूयते—' ऐन्द्रवायवस्य वा एतदायतनं यच्चतुर्थमहस्तस्मिन्ना-

प्रथमो ग्राह्यः' इति व्यूढे उपदिष्टम्। समूढे त्र्यनीकाया चतुर्थमहः ऐन्द्र-वायवाग्रत्वात्तस्याऽऽयननम्। तस्मिन्नाग्रयणो गृह्यत इति ऐन्द्रवायवस्य वा एतदायननमिति प्राकृतानुवादेन वैकृतकथनात्मकं लिङ्गमुपपन्नं भवति। अन्यथा तदनुपपन्नं स्यादिति भावः॥ ८०॥

## कामसंयोगात्॥ ८१॥

'यः कामयेत बहु स्यां प्रजायेय' इति व्यूढे कामसंयोगश्रवणात् काम्यं नित्यस्य विकार इति प्रसिद्धमेव॥ ८१॥

## तस्योभयथा प्रवृत्तिरैककर्म्यात्॥ ८२॥

तस्य—द्वादशाहस्य, उभयथा— व्यूढसमूढेतिप्रकारद्वयेनाहर्गणेषु प्रवृत्तिः। ऐककर्म्यात्—अविशेषादिति पूर्वपक्षे। सिद्धान्ते तु यत्र लिङ्गं तत्रैव व्यूढधर्मस्य प्रवृत्तिः। इतरेष्वहर्गणेषु समूढधर्मप्रवृत्तिरित्यधिकरणप्रयोजनं वक्तव्यम्॥ ८२॥

संवत्सरसत्रे त्र्यनीकायाः स्वस्थानविवृद्ध्या अभ्यासा-धिकरणम्॥ २५॥

## एकादशिनीवत् त्र्यनीकापरिवृत्तिः स्यात्॥ ८३॥

समूढद्वादशाहस्य विकृतिभूते संवत्सराख्ये गवामयननाम्नि सत्रे त्रीणि ऐन्द्रवायवशुक्राऽऽग्रयणाग्राणि अनीकानि-अग्राणि क्रमशो यस्यां क्रियायां सा त्र्यनीका प्रकृतित- समूढद्वादशाहाचोदकेनैव प्राप्ता। प्रायणी-योदयनीयं दशमं चाहस्त्यक्त्वा नवदिनपूरिकायास्तस्या अभ्यासेनैवोक्तसंव-त्सरसत्रस्याहानि पूरयितव्यानि। स चाभ्यासः दण्डकलितवत् कर्तव्यः, उत स्वस्थानविवृद्धया समावर्तनीय इति विशये एकादशिनीवत्— 'आग्नेयः कृष्णग्रीवः सारस्वती मेषी। बभ्रुः सौम्यः पौष्णः श्यामः। शितिपृष्ठो बार्ह-स्पत्यः। शिल्पो वैश्वदेवः ऐन्द्रोऽरुणः। मारुतः कल्माषः। ऐन्द्राग्नः

संहितः अघोरामः सावित्रः । वारुणः कृष्णः ' इति विहितैकादशपशुद्रव्यकप्रतिपशुयूपदर्शनात् अश्वमेधप्रकरणपठितयूपैकादशिनीवत् दण्डकलितन्यायेन अभ्यासः— त्र्यनीकापरिवृत्तिः स्यात् । एकां त्र्यनीकां समाप्य पुनरन्या त्र्यनीका पुनरन्या पुनरन्या इति संवत्सरपूर्तिपर्यन्तं त्र्यनीकाया आवृत्तिः कार्येति प्राप्ते आह—॥ ८३ ॥

## सि० ॥ स्वस्थानविवृद्धिर्वा अन्हामप्रत्यक्षसंख्यत्वात् ॥ ८४ ॥

न दण्डकलितवदावृत्तिः । अपि तु स्वस्थानविवृद्धिरेव । कुतः ? अन्हामप्रत्यक्षसङ्ख्यात्वात् — अन्हां— अहर्विधीनामभावात् । अन्यथा वाक्यभेददोषप्रसङ्गः । अत्रेदं बोध्यम्— त्र्यनीकायाः नव अहानि । तेषु अहःसु प्रत्येकं नव अग्रहाः क्रमेण विहिताः । संवत्सरस्य अहानि नवधा विभज्य एकैकस्मिन् विभागे एकैकाग्रहासम्पादने स्वस्य प्रथमाया ऐन्द्रवायवाग्रतायाः यत्स्थानं प्रथममहस्तस्य वृद्धिः । एवं शुक्राग्रतायाः । आग्रयणाग्रतायाश्च यत्स्थानं तस्य तस्य वृद्धिरिति बोध्यम् । ननु ' ऐन्द्रवायवाग्रं प्रथममहः ' इत्यादि श्रुत्या अग्रताया अन्हाङ्गत्वं प्रतीयते । ततो यस्मिन्नहनि ऐन्द्रवायवाग्रता तदुत्तरेऽहनि शुक्राग्रता तदुत्तरे चाहनि आग्रयणाग्रतायां सत्यामुक्तवाक्यं समंजसं स्यात । स्वस्थानविवृद्धिपक्षे तु तद् व्याकुप्येतेत्याशङ्क्याह — अन्हामप्रत्यक्षसङ्ख्यत्वात्— अहर्विधीनामभावात् । उक्तवाक्ये अहर्विधिरनभिप्रेतः । अभिप्रेतत्वे तु ऐन्द्रवायवाग्रता विधेया । सा चाहःसम्बन्धिनी कार्येति वाक्यभेदापत्तिः प्राप्नोति । अत ऐन्द्रवायवाद्यग्रतामात्रं क्रतुमुद्दिश्य क्रमशः अवेत्यनेन बोध्यते । इत्थं च ऐन्द्रवायवोत्तरत्वं शुक्राग्रे तदुत्तरत्वमाग्रयणाग्र इति न तत्तदुत्तरदिवस इति । इयं सिद्धान्तपक्षे क्रमः अन्नाधिन इति भावः ॥ ८४ ॥

**पृष्ठ्यावृत्तौ चाग्रयणस्य दर्शनात् त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवः स्यात् ॥ ८५ ॥**

सिद्धान्ते उत्तरपक्षीयाऽऽग्रयणाग्रतालिङ्गदर्शनमपि समुपपद्यत इत्याह-**पृष्ठ्यावृत्ताविति। त्रयस्त्रिंशे परिवृत्तौ**—त्रयस्त्रिंशमारभ्य त्रिवृदन्तं विपरीतानुष्ठानकस्य पृष्ठ्यस्य उत्तरपक्षे स्वरसामविश्वजिदनन्तरं प्राप्तपृष्ठ्यस्याऽऽवृत्तौ, **आग्रयणस्य**—आग्रयणाग्रतायाः, **दर्शनात्**—श्रवणात्, 'जगतीमग्र उपयन्ति। जगतीं वै छन्दांसि प्रत्यवरोहन्ति' 'आग्रयणं वै ग्रहाः, बृहत्पृष्ठानि, त्रयस्त्रिंशं स्तोमाः' इति आग्रयणाग्राः ग्रहाः प्रवर्तन्त इति तत्र श्रौतं लिङ्गदर्शनमप्युपोद्बलकम्। पूर्वपक्षनये तु पुनः ऐन्द्रवायवाग्रता स्यात्। तत्र दर्शित आग्रयणाग्रतालिङ्गविरोधः स्पष्ट एव। अत्रेदमवधेयम्। संवत्सरसत्रे गवामयने एकषष्ट्यधिकानि त्रिशतमहानि (३६१) तत्र अशीत्युत्तरशतमहान्याद्यः पक्षः (१८०)। तावन्त्यहान्येवोत्तरः पक्षः। तयोर्द्वयोर्मध्ये मध्यमणिस्थानापन्नं विषुवन्नामकमेकमहः प्रथमपक्षान्तर्भूतम्। तत्र प्रथममहः प्रायणीयम्। द्वितीयं चतुर्विंशनामकम् ॥ २ ॥ इदं द्वयं 'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः' इति प्रत्यक्षवचनात् ऐन्द्रवायवाग्रम्। एतदुत्तरं पञ्चमासप्रवृत्तिः। तत्र चत्वारोऽभिप्लवाः। प्रत्येकं षडहसाध्याः ॥ २४ ॥ ततः पृष्ठ्यः षडहसाध्यः ६। एवं त्रिंशद्दिवसाः। एवमेव द्वितीयतृतीयचतुर्थपञ्चमासा ज्ञेयाः ॥ १५० ॥ षष्ठे मासि त्रयोऽभिप्लवाः षडहाः ॥ १८ ॥ एकः पृष्ठ्यः षडहः। अभिजिदित्येकाहः ॥ २५ ॥ त्रयः स्वरसामसंज्ञका एकाहाः। २८। एवमाद्याभ्यां प्रायणीयचतुर्विंशनामकाभ्यां (२) सह मिलित्वा ॥१८०॥ *अशीत्युत्तरशतमहानि आद्यः पक्षः।* ततो विषुवन्नामैकाहस्तदन्तर्भूतः ।१८१। अथोत्तरपक्षः। तत्र प्रथमं त्रयः स्वरसामानः ।३। ततो विश्वजिदेकाहः ।१। ततः पृष्ठ्यः षडहः। ६। अथमत्र 'त्रिवृत्पञ्चदशसप्तदशएकविंशत्रिणवत्रयस्त्रिंशानि क्रमः' अत्र तु त्रयस्त्रिंशमारभ्य विपरीतक्रमोऽवगन्तव्यः। अत एव 'त्रयस्त्रिंशारम्भक' इत्युच्यते स सम्प्रदाय-

विर्धिः ।१६। ततस्त्रयोऽभिप्लवा प्रत्येकं षडहा ।१८। दश मिलित्वा अष्टाविंशति ।२८। पुन पृष्ठ्य षडहः ।६। चत्वारोऽभिप्लवा प्रत्येकं षडहाः ।२४। एव त्रिंशद्दिवसा । एवं पुनस्त्रिरावृत्तौ ९० दिवसा । एवमुत्तरपक्षे आयमारभ्य अहानि अष्टचत्वारिंशदधिकशत ।१४८। ततस्त्रयोऽभिप्लवाः प्रत्येकं षडहा । १८ । तत आयुर्गौरिति द्वे ।२। ततो द्वादशाहप्रायणीयो दयनीयम'वर्त्तीनि दशाहानि ।१०। ततो महाव्रतातिरात्राविति द्वे । २॥१८०॥ (३६१) अहानि गवामयनसत्रस्य । इति । एव स्थिते उत्तरपक्षे स्वरसामविश्वजिदनन्तर प्राप्तत्रय स्त्रिंशारम्भणपृष्ठ्य वृत्तौ उक्तश्रुतिसिद्धाऽऽप्रयणप्रहाभिनारूपलिङ्गाविरोधय स्वस्थानविवृद्धिरेवेति सिद्धम् । न दण्डकलितवदावृत्ति उक्तलिङ्गविरोधादिति भाव ॥ ८५ ॥

## वचनात् परिवृत्तिरैकादशिनेषु ॥ ८६ ॥

नन्वेवमेकादशिनेष्वपि स्वस्थानविवृद्धि स्यात् । न दण्डकलितवदावृत्तिरिति चत्तत्र–' वारुणमलत पुनः पर्यावृत्तेषु आग्नेयमेव प्रथमे अङ्ग्यालभेत ' इति वचनात् दण्डकलितवत परिवृत्तिरिति बोध्यम् । तत्र हि आग्नेय प्रथम, चरमो वारुण । त चरममारभ्य पुनरावृत्तौ आग्नेयः प्रथम. कार्य इत्यर्थकेन वचनेन तथानुष्ठानमिति भाव ॥ ८६॥

## लिङ्गदर्शनाच्च ॥ ८७ ॥

' प्राणा वा एकादशिना यदेकादशिनीभिरीयु अहान्यतिरिच्यन्ते ' इत्यतिरिक्त मदर्शनरूप लिङ्ग दण्डकलितवदावृत्तावेवोपपन्नम् । न स्वस्थानविवृद्धाविति भाव ॥ ८७ ॥

व्यूढद्वादशाहमन्त्राणामेव छन्दोव्यतिक्रमाधिकरणम् ॥ २६ ॥

## छन्दोव्यतिक्रमाद् व्यूढे भक्षपवमानपरिधिकपालमन्त्राणां यथोत्पत्तिवचनमूहवत्स्यात् ॥८८॥

'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ । अथेतरेषां दशानामन्द्रामैन्द्रवायवाग्रं प्रथममहः । अथ शुक्राग्रम् । अथ द्वे आग्रयणाग्रे । अथ ऐन्द्रवायवाग्रम् । अथ द्वे शुक्राग्रे । अथ आग्रयणाग्रम् । अथ द्वे ऐन्द्रवायवाग्रे' इत्येवमुपदिष्टे व्यूढद्वादशाहे 'छन्दांसि वा अन्योन्यस्य लोकमभिध्यायन्ति, गायत्री त्रिष्टुभः, त्रिष्टुप् जगत्याः, जगती गायत्र्याः' इति छन्दसां व्यतिक्रमः श्रुतः । तत्र भक्षपवमानपरिधिकपालानि मन्त्राश्च सन्ति । तत्र 'मा विश दीर्घायुत्वाय शन्तनुत्वाय एहि वसो पुरोवसो मे हृदये भवाश्विनोर्बाहुभ्यां त्वा सध्यासं वसुमद्गणस्य रुद्रवद्गणस्य आदित्यवद्गणस्य सोमदेवते मतिविदः प्रातःसवनस्य माध्यन्दिनसवनस्य तृतीयसवनस्य गायत्रच्छन्दसस्त्रिष्टुप्छन्दसो जगतीच्छन्दसोऽनिष्टुप इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति भक्षाः । 'श्येनोऽसि गायत्रच्छन्दाः, सुपर्णोऽसि त्रिष्टुप्छन्दाः, सखासि जगतीच्छन्दाः, अनु त्वारभे स्वस्तिमासं पारय' इति पवमानाः । 'गायत्रो मध्यमस्त्रैष्टुभो दक्षिणः जागत उत्तरः' इति परिधयः । 'अष्टाकपालः प्रातःसवने, एकादशकपालो माध्यन्दिनीयः, द्वादशकपालस्तार्तीयसवनिकः' इति कपालानि । भक्षादीनां ते ते मन्त्राश्च । तत्र छन्दोव्यतिक्रम इत्यनेन मन्त्राणां तदर्थानां च व्यतिक्रमः, किंवा मन्त्राणामेवेति संशये अविशेषवचनान्मन्त्राणां तदर्थानां चेति प्राप्ते आह—व्यूढे द्वादशाहे **छन्दोव्यतिक्रमात्**—मुख्यच्छन्दसामेव व्यतिक्रमस्य श्रुतत्वात्, **वचनं**—तच्छन्दस्कमन्त्रात्मकं वचनं, **ऊह्वत्**—विपर्यस्तं स्यात् । उक्तानां भक्षपवमानपरिधिकपालमन्त्राणां यथोत्पत्तिपाठस्तथैव ते पठितव्याः । यतश्छन्दांसि अन्योन्यस्य लोकं व्यतिक्रमितुं शक्नुवन्ति विपर्यस्तानि । भक्षादयस्तु विपर्यस्ता अपि त एव भक्षादय इति न तत्र विशेष इति भावः ॥८८॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां दशमाध्यायस्य पञ्चमः पादः ॥ ५ ॥

———

## ॥ अथ दशमाध्यायस्य षष्ठः पादः ॥

यज्ञे रथन्तरादिसाम्नां तृचे गानाधिकरणम् ॥ १ ॥

### एकर्चस्थानानि यज्ञे स्युः स्वाध्यायवत् ॥१॥

अस्मिन् षष्ठे पादे प्राधान्यतः सामविषये बाधो विचार्यते । तत्र रथन्तरबृहद्वैरूपवैराजशक्वरैवतप्रभृतीनि सामान्युदाहरणम् । तानि किं यथायथमेकस्यामृचि गेयानि, उत तृचे इति विशये **एकर्चस्थानानि**-यज्ञे एकस्यामृच्येव गातव्यानि । कुतः ? **स्वाध्यायवत्**— तदध्ययनकाले एकस्यामृच्येवाभ्यस्तं तत् । अतः क्रतावपि अभ्यासानुसारतस्तथैव गातव्यमिति ॥ १ ॥

### सि० ॥ तृचे वा लिङ्गदर्शनात् ॥ २ ॥

**तृचे वा**— तृचे एव गेयानि । नैकस्यामृचि अध्ययनसमयेतथाऽभ्यस्तान्यपि । कस्मात् ? **लिङ्गदर्शनात्**– 'अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति द्व्यक्षरेण उत्तरयोः' इति । न ह्येकस्यामृचि प्रथमोत्तरसम्बन्धः सम्भवति । अतस्तृचे गातव्यानि । अपरमपीदं प्रकृतार्थानुकूलं लिङ्गं दृश्यते । 'ऋक् सामे वाच मिथुनीसम्भवावेति । सोऽब्रवीत् न वै त्वं ममालमसि जायात्वे । वेदो मे महिमेति । ते द्वे भूत्वोचतु, सोऽब्रवीन्नैव त्वं ममालंत्वयो जायात्वे । वेदो मे महिमेति । तास्तिस्रो भूत्वोचु । सोऽब्रवीत् सम्भवावेति । तस्मादेकं साम तृचे क्रियते स्तोत्रीयमिति ॥ २ ॥

स्वर्दृक्शब्देन वीक्षणस्य कालार्थत्वाधिकरणम् ॥ २ ॥

### सि०॥स्वर्दृशं प्रति वीक्षणं कालमात्रं परार्थत्वात्॥३॥

'ईश्वरं वै रथन्तरं उद्गातुश्चक्षुः, रथन्तरे प्रस्तूयमाने संमीलयेत् । स्वर्दृशं प्रतिवीक्षेत' इति श्रुतम् । अस्यार्थेऽयं रथन्तरसाम्नः योनिभूतायां

'अभि त्वा शूर नो नुमः' इत्यस्यामृचौ 'ईशानमस्य जगतः स्वर्दृशः' इति आम्नातः सः। स्थिते चेवं रथन्तरसाम्नि प्रस्तूयमाने सति उद्गात्रा संमीलनं कार्यम्। स्वर्दृशं प्रतिवीक्षेत उन्मीलनं कर्तव्यम्। तत्र स्वर्दृक्शब्दः वीक्षणस्य अंगं। तेन वीक्षणं कर्तव्यमित्यंगांगिभावस्तयोः, उत कालक्षणं तत्पदमिति संशये स्वर्दृशं प्रतिवीक्षणं **कालमात्रं**—काललक्षकमेव। स्वर्दृक्पदोच्चारणकाले वीक्षणं कार्यमिति। न वीक्षणाङ्गं तत्पदम्। कुतः? **परार्थत्वात्**—स्वर्दृक्शब्दस्य 'ईशानमस्येत्याम्नायेन स्तुत्यर्थत्वावगमात्। एकत्र स्तुतौ विनियुक्तस्य तस्यापरत्र वीक्षणे विनियोगासम्भवादिति भावः॥ ३॥

गवामयनिके पृष्ठ्यषडहे बृहद्रथन्तरयोर्विभागाधिकरणम्॥३॥

## पृष्ठ्यस्य युगपद्विधेः एकाहद्विसामत्वम्॥४॥

प्रकृतौ समूढद्वादशाहे 'पृष्ठ्यः षडहः' समुदाम्नातः। तत्र षट्सु अहःसु क्रमेण रथन्तरबृहद्वैरूपवैराजशाक्वररैवतानि सामानि विहितानि। गवामयने विकृतिरूपे षडहे पृष्ठ्ये तु 'पृष्ठ्यः षडहो बृहद्रथन्तरसामा' इति श्रुतम्। तत्रातिदेशप्राप्तयोः बृहद्रथन्तरयोः पुनर्विधानादितरयोः साम्नामर्थान्निवृत्तिः। उत्तरितं बृहद्रथन्तरसामद्वयं प्रत्यहं तत्रानुष्ठेयम्, उत केषुचिदहःसु बृहत्, केषुचिच्च रथन्तरं कर्तव्यमिति संशये बृहच्च रथन्तरं च बृहद्रथन्तरे, ते सामनी यस्य इति द्वन्द्वपूर्वके बहुव्रीहौ इतरेतरयोगद्वन्द्वेन उभयोः साम्नोः युगपद्विधानात् प्रत्यहमुक्तसामद्वयं कर्तव्यम्। **एकाहवत्**— संसवे उभे कुर्यात्' इतिवदित्यर्थः॥ ४॥

## सि०॥ विभक्ते वा समस्तविधानात्तद्विभागेऽप्रतिषिद्धम्॥ ५॥

विभक्ते वा-द्वन्द्वसमासशून्ये एव समुदाये समस्तविधानात्-बृहद्रथन्तरं साम यस्मिन् पृष्ठ्ये इति बहुव्रीहिसमासविधानात्, तद्विभागे— केषु-

चिदहःसु बृहत्साम केषुचिच्च रथन्तरमिति विभागेऽपि **अप्रतिषिद्धम्**—अबाधितम् । अतिदेशशास्त्रमिति शेषपूरणम् । अत्र षडहसाध्यः पृष्ठ्यः *अन्यपदार्थः* । न प्रत्येकं षडहाः । तादृशे पृष्ठ्ये क्रतौ तयोर्द्वयोः साम्नोः साहित्यं सिद्धान्ते समानमेव । प्रकृतावन्योन्यनिरपेक्षाण्येव षड्सामानि षट्सु अहःसु विहितानि । तथैवात्र विकृतौ चोदकेनातिदिष्टानीत्यविरोधश्चोदकशास्त्रस्य सिद्धान्तपक्ष इति भावः ॥ ५ ॥

प्रायणीयोदयनीययोरैकादशिनानां विभज्यानुष्ठानाधिकरणम् ॥ ४ ॥

## समासस्त्वैकादशिनेषु तत्प्रकृतित्वात् ॥ ६ ॥

द्वादशाहे ' ऐकादशिनान् *प्रायणीयोदयनीययोरनिरात्रयोरालभेरन्* ' इति श्रूयते । तत्र किमेकादशप्रायणीये पुनरेकादश उदयनीये उत केचित्प्रायणीये केचित् उदयनीये इति विभज्यानुष्ठानमिति संशये **समासस्तु**—एकादशिनेषु पशुषु सर्वे प्रायणीये सर्वे च उदयनीये इति समास एव । न विभागस्तेषाम । कुतः ? **तत्प्रकृतित्वात्**—ज्योतिष्टोमप्रकृतित्वाद्द्वादशाहस्य । ज्योतिष्टोमे हि निखिलानामैकादशिनानामेकस्मिन्नहनि अनुष्ठानं दृष्टम् । तथैव चोदकेनात्र प्राप्तम् । अतः प्रायणीये अहनि उदयनीये चाहनि समासः-- कृत्स्नानुष्ठानमिति ॥ ६ ॥

## विहारप्रतिषेधाच्च ॥ ७ ॥

विहारः—एकस्मिन्नहनि ऐकादशिनसम्बन्धियागानां परस्परासामानाधिकरण्यम् । **तत्प्रतिषेधात्**—तस्यासामानाधिकरण्यस्य प्रतिषेधात्—निषेधशास्त्रात् द्वादशाहे प्रकृतितः ऐकादशिनानां प्राप्तौ ' अन्वहमेकैकमालभेत ' इति परस्परसामानाधिकरण्ये प्राप्ते ' प्रायणीयोदयनीययोरालभेत ' इत्यनेन तदसामानाधिकरण्यं बाध्यते । अतः प्रायणीये कृत्स्नानुष्ठानं तथा उदयनीय इति भावः ॥ ७ ॥

## सि० ॥ श्रुतितो वा लोकवद्विभागः स्यात् ॥ ८ ॥

श्रुतितः—' प्रायणीयोदयनीययोः ' इति द्वित्वश्रुतितः, लोकवत्-यथा लोके चैत्रमैत्रयोः शतं देहीत्युक्ते विभज्य पञ्चाशत् पञ्चाशत् दीयते, तद्वदत्रापि विभागः स्यादित्यर्थः ॥ ८ ॥

### विहारप्रकृतित्वाच्च ॥ ९ ॥

एकादशिन्यां ' अन्वहमेकैकमालभेत ' इति विहारस्य प्रकृतित्वात् तस्यैव विकारः 'प्रायणीयोदयनीययोरालभेते' ति । तस्माद्विभागः स्यात् ॥९॥

### विशये च तदासत्तेः ॥ १० ॥

ननु, विभागाङ्गीकारे यावच्छब्दं तावद्विहारस्यानुग्रहः कार्यः । तथा सति कुत्र पञ्च कुत्र वा षट् इति विशये—संशये तदासत्तेः—प्रायणीये पञ्च, उदयनीये च षट् इति तदासत्तेः मुख्येनाभ्यासः स्यात् ॥१०॥

### त्रयस्तथेति चेत् ॥ ११ ॥

प्रत्यासत्तिर्मुख्येनेति चेद्यावद्बहुवचनमविरुद्धं स्यात्तावत् त्रयस्तथा—त्रय एव प्रायणीये अनुष्ठेयाः, शेषा उदयनीय इति चेत्—॥ ११ ॥

### न समत्वात्प्रयाजवत् ॥ १२ ॥

न तथा—न त्रयः प्रायणीये, अपि तु पञ्च । प्रयाजवत्—यथा एकादशप्रयाजमध्ये षडागन्तवः प्रयाजाः प्रथमोत्तमयोर्विकारभूताः साम्येन प्रविभज्यन्ते तद्वदिहापि समत्वात्—यावत्सु साम्यं भवति तावता साम्येन विभज्य अधिकः उदयनीये अनुष्ठेय इति भावः ॥ १२ ॥

विश्वजित्सर्वपृष्ठ इत्यत्र एकस्यैव साम्नः पृष्ठस्तोत्रे निवेशाधिकरणम् ॥ ५ ॥

### पू० ॥ सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात् ॥ १३ ॥

' विश्वजित्सर्वपृष्ठः ' इत्यनेनाम्नायेन षडहमध्यपृष्ठ्यस्य षट्सु अहःसु क्रमेणोपदिष्टानां पृष्ठस्तोत्रनिष्पादकानां ' रथन्तरबृहद्वैरूपवैराजशा-

करैवतसंज्ञकाना साम्ना विश्वजिति विधानं कृत्वा विश्वजित्तत्पृष्ठो भवतीत्युक्तम् । तत्रोक्ताना सर्वेषां साम्ना पृष्ठस्तोत्रदेशे निवेशः कार्यः, उत एकस्यैव तत्र निवेशः, अन्येषां यथावचनमन्यत्रेति संशये सर्वपृष्ठे—एतस्मिन् विश्वजिति तेषां—उक्ताना सर्वेषा साम्नां, एकदेशत्वं—माध्यन्दिनपवमानमैत्रावरुणसाम्नोरन्तरालरूपैकदेशत्वं स्यात् । कुतः ? पृष्ठशब्दात्—तेन शब्देन पृष्ठस्तोत्रनिर्देशात् । तस्य च पृष्ठस्तोत्रस्य कृतदेशत्वात्— निरुक्तक्लृप्तदेशत्वात् । तन्नाम्ना तद्धर्मातिदेश इति भावः ॥ १३ ॥

## सि० ॥ विधेस्तु विप्रकर्षः स्यात् ॥ १४ ॥

उक्ताना सर्वेषा साम्ना पृष्ठस्तोत्रदेशे निवेश इति न्यायेन प्राप्तमपि तत् ' पवमाने रथन्तरं करोति । आर्भवे बृहत् । मध्ये इतराणि । वैरूपं होतृपृष्ठम् । वैराजं ब्रह्मसाम । शाक्वरं मैत्रावरुणसाम । रैवतमच्छावाकसाम ' इति तत्तत्सामतत्तद्देशबोधकप्रत्यक्षवचनात् अन्यथा भविष्यतीत्याह—विधेः– उक्तप्रत्यक्षवचनात्, विप्रकर्षः— देशभेदः स्यान्नैकदेश इत्यर्थः । किमिव वचनं न कुर्यात् । न हि वचनस्यातिभार इति भावः ॥ १४ ॥

उक्थ्यषोडशिनोर्वैरूपवैराजसाम्नोः पृष्ठस्तोत्रकार्ये निवेशाधिकरणम् ॥ ६ ॥

## पू० ॥ वैरूपसामा क्रतुसंयोगात् त्रिवृद्वदेकसामा स्यात् ॥ १५ ॥

अस्ति ज्योतिष्टोमसंस्थाविशेषः उक्थ्यः षोडशी च क्रतुः । तत्र ' उक्थ्यो वैरूपसामा ' एकविंशः षोडशी वैराजसामा ' इति श्रुतम् । तत्र सामद्वयस्य यथाक्रमं तस्मिन् तस्मिन् क्रतौ निवेशः, किंवा पृष्ठकार्ये इति संशये वैरूपसामा उक्थ्यक्रतुः एकसामा स्यात्—रथन्तरादिनिखिलसामशून्यः

निरुक्तसामा स्यात । तथा षोडशी वैराजसामा स्यात् । न केवलं पृष्ठस्तोत्रकार्ये तथा । कुत ? क्रतुसंयोगात्— कृत्स्नक्रत्वन्वितत्वात्तत्साम्नः । त्रिवृद्वत्—यथा त्रिवृदग्निष्टोम इत्यत्र त्रिवृन्मात्रस्तोमकत्वमग्निष्टोमक्रतोस्तद्वदत्रापीति ॥ १५ ॥

## सि० ॥ पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात् ॥ १६ ॥

पृष्ठार्थे वा—पृष्ठस्तोत्रकार्ये एव वैरूपस्य वैराजस्य च निवेशः उक्थ्ये षोडशिनि च । नान्यत्र । कस्मात् ? प्रकृतिलिङ्गसंयोगात्— पृष्ठस्तोत्रसामविधायकवाक्ये रथन्तरसाम बृहत्साम चेति बहुव्रीहिसमासयोग. प्रतीयते । प्रकृतेऽपि तथात्वेन तस्यैव योगस्य बुद्धिस्थत्वात् पृष्ठकार्ये एव तस्य तस्य च साम्नो निवेश इति भावः ॥ १६ ॥

## त्रिवृद्वदिति चेत ॥ १७ ॥

उक्तदृष्टान्तं साधकत्वेनाशङ्कयति त्रिवृद्वदिति ॥ १७ ॥

## न प्रकृतावकृत्स्नसंयोगात् ॥१८ ॥

न त्रिवृद्वदत्र कृत्स्नक्रतुसंयोगो भवितुमर्हः । कस्मात ? प्रकृतावकृत्स्नसंयोगात्— प्रकृतौ सामविधायकानि यानि वचनानि तेषु कृत्स्नेषु बहुव्रीहियोगो नास्ति । किन्तु क्वचिदेव पृष्ठस्तोत्रे । अतः अकृत्स्नसंयोगस्य लिङ्गात् यथा सामविशेषबाधकतया त्रिवृदित्यत्र न बाधः । तादृशलिङ्गाभावात् । इति दृष्टान्तवैषम्यमत्रेति भाव. ॥ १८ ॥

## विधित्वान्नेति ॥ १९ ॥

' अथ धेनुर्दक्षिणा ' इति दक्षिणात्वेन श्रुति धेनुविधिः कृत्स्नस्य क्रतुदाक्षिण्यस्य कार्यं भवति । एवं तुल्यविधित्वात्ते सामनी अपि स्याताम् । अतो नोक्तमिष्टान्त इति ॥ १९ ॥

## न स्याद्विशये तन्न्यायत्वात्कर्माविभागात् ॥२०॥

न स्यात्— धेनुविधितोऽत्रापि न भवेत् । विशये— धेनु क्रतुदक्षिणाकार्ये निर्वर्तयेन्न वेति संशये, तन्न्यायत्वात्— तन्निर्वर्तयेदित्येव न्याय्यम् । कुतः ? कर्माविभागात्—ऋत्विक्परिक्रयात्मककार्यस्य तत्र एकत्वात् । अत्र तु साममेदेन कार्यं भिन्नमिति वैषम्यमिति भाव ॥ २० ॥

## प्रकृतेश्चाविकारात् ॥२१॥

प्रकृतेः--बहुप्राकृतस्य, अविकारात्-अनुग्रहात् चोदकस्य सामान्ये अविकाराच—अबाधात् कृत्स्नक्रतुसंयोग उक्तसाम्नोरिति भाव ॥ २१ ॥

त्रिवृदग्निष्टुदग्निष्टोम इत्यत्र स्तोमगतसंख्याबाधाधिकरणम् ॥ ७ ॥

## त्रिवृति सङ्ख्यात्वेन सर्वसङ्ख्याविकारः स्यात् ॥ २२ ॥

'त्रिवृदग्निष्टुदग्निष्टोम' इति ज्योतिष्टोमस्याद्यसंस्थात्मकः क्रतुरग्निष्टोमनामकः श्रूयते । तत्र श्रुतं त्रिवृत्त्वं तत्क्रतुसाधनेषु सर्वेषु सम्बध्यते, उत स्तोममात्रसम्बन्धि त्विति संशये 'त्रिवृद्रज्जु' इत्यादौ त्रिवृच्छब्दस्य त्रैगुण्यार्थकत्वस्य दर्शनादत्रापि त्रिवृति पदे सङ्ख्यात्वेन त्रैगुण्यरूपसङ्ख्यावाचकत्वेन, सर्वसङ्ख्याविकारः— उक्तक्रतुसाधनद्रव्यवृत्तियावत्सङ्ख्याया, विकारः—बाधः स्यात् । अग्निष्टोमयागसाधनेषु मध्ये यद्यत्सङ्ख्याकं श्रुतं तत् त्रिगुणसङ्ख्याकं कर्तव्यमिति भाव ॥ २२ ॥

## सि० ॥ स्तोमस्य वा तल्लिङ्गत्वात् ॥ २३ ॥

लोके त्रिवृच्छब्दोऽत्र्यवयवत्रैगुण्यार्थकोऽपि वेदे रूढ्या समुदायशक्त्या स्तोमस्य—ऋचां नवकस्यैव वाचकः । कुतः ? तल्लिङ्गात्—प्राकृत लिङ्गात् । प्रकृतौ 'त्रिवृद्बहिष्पवमानः' इति बहिष्पवमानस्तोत्रसामानाधिकरण्यं दृष्टम् । तथाऽत्रापि त्रिवृदग्निष्टोम इति सामानाधिकरण्यस्य दर्शनात् स्तोत्रीयाणामृचां नवकमेवार्थ इति भाव ॥ २३ ॥

उभयसाम्नि क्रतौ बृहद्रथन्तरयोः समुच्चयाधिकरणम् ॥८॥

## पू०॥ उभयसाम्नि विश्वजिद्वद्विभागः स्यात् ॥२४॥

'संसवे बृहद्रथन्तरे उभे कुर्वीत' 'अपचिताप्येकाहे उभे कुर्वीत' इति श्रुतम्। तत्र उभयसाम्नि— संसवादिक्रतौ, विश्वजिद्वत्— 'विश्वजित्सर्वपृष्ठो भवतीत्यत्र' 'रथन्तरबृहद्वैरूपवैराजशाक्वररैवतानां षण्णां साम्नां विधावपि रथन्तरमेकमेव साम पृष्ठस्तोत्रकार्ये विनियुक्तम्। शेषाणां स्तोत्रांतरे विनियोगः। तद्वदत्रापि रथन्तरस्य बृहतो वा एकस्य पृष्ठस्तोत्रकार्ये अपरस्य स्तोत्रान्तरे विनियोग इति विभागः स्यात्। भिन्नकार्ये विनियोग इति ॥ २४ ॥

## सि० ॥ पृष्ठार्थे वा अतदर्थत्वात् ॥ २५ ॥

पृष्ठार्थे वा—पृष्ठस्तोत्रकार्यार्थे एव ते उभे सामनी भवतः। कुतः? अतदर्थत्वात्—तयोः बृहद्रथन्तरयोः पृष्ठेतरस्तोत्रकार्यार्थत्वाभावात्। रथन्तरसहितबृहत्साम्ना पृष्ठस्तोत्रकार्यं साधयेदिति पर्यवसितोऽर्थः॥ २५ ॥

## लिङ्गदर्शनाच्च ॥ २६ ॥

'पूर्वाह्णो वै रथन्तरम्। अपराह्णो बृहत्' इति एकेनाह्ना अभिसम्बन्धात्मकलिङ्गदर्शनादपि उभयोरेकस्थानत्वं ससिध्यति ॥ २६ ॥

वैकल्पिकभक्ष्याशनघृताशनयोः गवामयने षडहांतेऽनुष्ठानाधिकरणम् ॥ ९ ॥

## पू० ॥ पृष्ठे रसभोजनमावृत्ते संस्थिते त्रयस्त्रिंशेऽहनि स्यात्तदानन्तर्यात् प्रकृतिवत् ॥ २७ ॥

पृष्ठ्यः षडहस्त्रयस्त्रिंशान्तस्त्रयस्त्रिंशादिश्चेति द्विविधोऽस्ति। द्वादशाहे त्रिवृत्पञ्चदशसप्तदशएकविंशत्रिणवत्रयस्त्रिंशैःस्तोमैः क्रमशो युक्तानि षडहानि षड् विहितानि। सोऽयं त्रयस्त्रिंशान्तः षडहः पृष्ठ्यः। द्वादशाहविकृतौ गवामयने—'पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भस्त्रिवृदुत्तमः कार्यः' इति व्यत्यासेन श्रुतः षडहः पृष्ठ्ये त्रयस्त्रिंशारम्भकः। अस्मिन् षडहपृष्ठ्ये प्राकृतिकं मध्वाशनं घृताशनं वा चोदकेन प्राप्तम्। तत् प्र-

तित्रयस्त्रिंशान्ते कार्यमाहोस्वित् षडहान्ते इति संशये पृष्ठ्यरसभोजनमावृत्ते—प्रकृतितः विपरीतस्तोमके षडहपृष्ठ्य त्रयस्त्रिंशे अहनि संस्थिते-त्रयस्त्रिंशान्ते स्यात । तदानन्तर्यात्— प्रकृतौ त्रयस्त्रिंशानन्तर्यश्रवणाद्विकृतावपि प्रकृतिवदेव स्यादिति भावः ॥ २७ ॥

## सि० ॥ अन्ते वा कृतकालत्वात् ॥ २८ ॥

अन्ते वा—अन्तिमदिने एव निर्दिष्टमशनं विधेयम् । न त्रयस्त्रिंशानन्तरम् । कस्मात् ? ' संस्थिते पृष्ठ्ये षडहे मध्वाशयेद् घृतं वा ' इति वाक्येन उक्ताशनस्य चरमदिनाङ्गत्वं क्लृप्तम् । अतः कृतकालत्वात्— क्लृप्तकालत्वात्तथैव कार्यम् । त्रयस्त्रिंशानन्तर्यं तु स्थानात् । स्थानं च वाक्याद्दुर्बलं दौर्बल्यबोधकं प्रमाणमिति भावः ॥ २८ ॥

षडहाद्द्वयावपि मध्वाशनादेः सकृदनुष्ठानाधिकरणम् ॥ १० ॥

## अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् ॥ २९ ॥

' अभ्यूढ पृष्ठ्य षडहमुपयन्ति ' इति श्रूयते । तत्रापि निर्दिष्टमशनं चोदकेन प्राप्तम् । तत् तदभ्यासे अभ्यस्तं भवति इति संशये कर्मणः—षडहात्मकस्य कर्मणः पुनरनुष्ठानात्तदपि पुनरनुष्ठेयमिति ॥ २९ ॥

## सि० ॥ अन्ते वा कृतकालत्वात् ॥ ३० ॥

अन्ते वा—चरमषडहोपरमे एव तदशनं कार्यम् । कृतकालत्वात् । संस्थितिर्नाम षडहसम्बन्धिक्रियोपरमः । स चोपरमश्चरमषडहसमाप्तावेवेति भावः ॥ ३० ॥

गवामयने मध्वाशनघृताशनयोः प्रतिषडहसमावृत्त्यधिकरणम् ॥ ११ ॥

## आवृत्तिस्तु व्यवाये कालभेदात् ॥ ३१ ॥

गवामयने ' चत्वारोऽभिप्लवाः षडहाः ततः पृष्ठ्यः षडहः समासः द्वितीयः स तृतीयः स चतुर्थः स पञ्चमः ' इति । तत्रापि ' संस्थिते षडहे

मध्वाशयेत् घृतं वेति चोदकेन प्राप्तम् । तदशनं पूर्वेद्युः सकृदेवेति प्राप्ते आह- **आवृत्तिस्त्विति** । उक्ताशनस्य आवृत्तिरेव । न सकृत् । कुतः ? **व्यवाये**-षडहभिन्नाहोभिः व्यवाये-अन्तरिते षडहे मध्वाद्यशनस्याऽऽवृत्तिः । **कालभेदात्**—निमित्तभेदे नैमित्तिकमावर्तेत इति भावः ॥ ३१ ॥

द्वादशाहे सत्रियां मध्वाशनाधिकरणम् ॥ १२ ॥

## मधु न दीक्षिता ब्रह्मचारित्वात् ॥ ३२ ॥

सत्रात्मके द्वादशाहे सर्वेषामृत्विजां दीक्षितत्वेन ब्रह्मचर्यव्रतं सम्प्राप्तम् । ब्रह्मचर्ये च ' मधु मांसं च वर्जयेत् ' इति निषेधात् तत्र दीक्षिता ऋत्विजो मधु भक्षयेयुरिति प्राप्ते—॥ ३२ ॥

## सि० ॥ प्राश्येत वा यज्ञार्थत्वात् ॥ ३३ ॥

ब्रह्मचारिणो रागप्राप्तमधुभक्षणनिषेधः. ' संस्थिते पृष्ठ्ये षडहे मध्वाशयेत् ' इति क्रत्वर्थो विधिस्तस्मिन्नेवाविषयः । अतः प्राशेरन् मधु तादृशे ऋत्विग्भिर्यज्ञार्थत्वादिति भावः ॥ ३३ ॥

मानससंज्ञकग्रहस्य दशमाहाङ्गत्वाधिकरणम् ॥ १३ ॥

## पू० ॥ मानसमहरन्तरं स्याद्भेदव्यपदेशात् ॥ ३४ ॥

द्वादशाहे ' अनया त्वा पृथिव्या पात्रेण समुद्रमया प्रजापतये त्वा जुष्टं गृह्णामीति मानसं प्राजापत्यं गृह्णाति ' इति मानसग्रहस्य ग्रहणं श्रुतम् । अस्य ग्रहणे मनःस्तवनमिति मानसत्वं तस्य । एतद्ग्रहणं द्वादशाहेभ्यो भिन्ने त्रयोदशेऽहनि कार्यं, उत दशमेऽहनि? अत्र तदिति संशये **मानसमहरन्तरम्**— मानसग्रहणं त्रयोदशेऽहनि स्यात् । कुतः ? **भेदव्यपदेशात्**— ' द्वादशाहस्य हास्यानि छन्दांसि तानि मानसेनाप्याययन्ति ' इति द्वादशाहः स्तूयते । स्तुतिसाधनं च मानसः स्तोत्रत्वाद्भिन्न इत्यमान्दिष्टम् । किञ्च, ' वाग्वै द्वादशाहः, मनो मानसम् ' इति भेदव्यपदेशोऽपि श्रूयते । तस्मात् त्रयोदशेऽहनि कर्तव्योऽयं यागविशेष इति प्राप्तम् ॥ ३४ ॥

## तेन च संस्तवात् ॥ ३५ ॥

तेन— मानसेन, द्वादशाहस्य संस्तवादपि तथा स्तुतिरावयं युक्तमेव ॥ ३५ ॥

## अहरन्ताच्च परेण चोदना ॥ ३६ ॥

'पत्नीः संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्ति' इति चोदनया अहरन्त तु— अहरन्ताच्चरमावयवात् परेण— परतः मानसग्रहो विधीयते । द्वादशाहस्य चरमावयवो हि पत्नीसंयाजात्मकं कर्म । तत्र यदि द्वादशाहस्य दशमाहेऽग मानसग्रहण तदा पत्नीसंयाजानन्तरं मानसग्रहो वाच्य । एवं सति 'पत्नीसंयाजान्तानि अहानि सन्तिष्ठन्ते' इति वचनविरोधो व्यक्त एवेति भावः ॥ ३६ ॥

## पक्षे सङ्ख्या सहस्रवत् ॥ ३७ ॥

त्रयोदशाहपक्षे द्वादशाहसङ्ख्या बाधिता स्यादिति चेत्तत्राह— अस्मिन् पक्षे द्वादशसङ्ख्या सहस्रवत्— 'अतिरात्रेण सहस्रदक्षिणेन यजेरन्' इत्यधिकेऽपि सहस्रे सहस्रशब्दो दृष्टः । तद्वदत्रापि भविष्यतीत्यर्थः ॥ ३७ ॥

## सि० ॥ अहरङ्गं वांऽशुवच्चोदनाभावात् ॥३८॥

अहरङ्गं वा— अहः— दशमाहः अङ्गं मानसग्रहणं, न तु पृथक्कर्म । अंशुवत्— यथा 'अंशुं गृह्णाति' इति सोमयागस्याभ्यन्तरा सुत्यादिमहस्यै-वाङ्गम् । तद्वदयमपि दशमाहाङ्गमेव । पृथक् चोदनाभावात् ॥३८॥

## दशमविसर्गवचनाच्च ॥ ३९ ॥

'एष वै दशमस्याह्नो विसर्गो यन्मानसम्' इति दशमविसर्गवचनादपि उक्त एव सिद्धान्तो दृढ भावि । विसर्गश्चावयव इत्यर्थः ॥ ३९ ॥

## दशमेऽहनीति च तद्गुणशास्त्रात् ॥ ४० ॥

'दशमेऽहनि सार्पराज्ञीभिर्ऋग्भिः स्तुवन्ति' इत्यत्र यथा दशमाहः प्राधान्येन निर्देशस्तथा 'दशमेऽहनि मानसाय प्रसर्पन्ति' इति दशमाहः प्राधान्यात् अहस्य विधेयत्वेन तद्गुणशास्त्रादपि निर्दिष्ट एव सिद्धान्तः॥४०॥

## सङ्ख्यासामञ्जस्यात् ॥ ४१ ॥

दशमाहत्वे सिद्धे 'द्वादशाह' इत्यत्र द्वादशत्वरूपसङ्ख्या अन्वर्था भवति । अन्यथा गौण्या वृत्त्या बोधनीया स्यात् ॥ ४१ ॥

## पश्वतिरेके चैकस्य भावात् ॥ ४२ ॥

द्वादशाहे ऐकादशिनान् विधाय 'यः पशुरतिरिच्येत स ऐन्द्राग्नः कार्यः' इत्येकस्यातिरेकं दर्शयति । न द्वयोः । कथमेकादश पशवः । यतो द्वादश अहानि । त्रयोदशाहे तु द्वयोरतिरेको भवेत् । नैकस्य । एकस्यैव स्मरन् द्वादशैवैतान्यहानीति ज्ञापयति । तस्मादपि दशमाहाङ्गं सः । न कर्मान्तरविधिः ॥ ४२ ॥

## स्तुतिव्यपदेशमङ्गेनाविप्रतिषिद्धं व्रतवत् ॥४३॥

अनेन सूत्रेण 'मानसमहरन्तरं' (१०।६।३४।) 'तेन च संस्तवात्' (१०।६।३५।) इति सूत्रयोः परिहारोऽभिधीयते । अङ्गेन-समुदायैकदेशेन—अवयवस्तुत्येत्यर्थः । अङ्गिनि-समुदाये—अवयविनि स्तुतिव्यपदेशमविप्रतिषिद्धं-अनिषिद्धं वदन्ति तद्विदः । व्रतवत्-महाव्रतवत् । महाव्रतस्य संवत्सरसत्रस्यैकदेशत्वे चास्य महाव्रतनामकं कर्मोपादिष्टम् । 'यन्ति वा एते मिथुनाद्ये संवत्सरमुपयन्ति । अन्तर्वेदि मिथुनौ सम्भवतः तेनैव मिथुनान्नयन्ति' इति । संवत्सरसाध्ये सत्रे चिराय ब्रह्मचर्येण मिथुनाद्वियुक्ता अन्तर्वेदि मिथुनीभावेन गतं मिथुनीभावं प्राप्नुयन्तीत्यस्यार्थः । अत्र वाक्ये समुदायैकदेशभूतमहाव्रतस्तुत्या संवत्सरसाध्यसत्रस्तुतिर्यथा तथा दशमाहैकदेशमानसग्रहस्तुत्या द्वादशाहस्तुतिरिति न कश्चिद्दोष इति भावः ॥ ४३ ॥

## वचनादतदन्तत्वम् ॥ ४४ ॥

'आहन्ताच्च परेण चोदनेति सूत्रस्य (१०।६।३६) उत्तरमिदम्। वचनादिति। 'पत्नीः संयाज्य मानसाय प्रसर्पन्तीति वचनात् अतदन्तत्वं-पत्नीसंयाजान्तत्वाभावो दशमस्याह्नः। संख्यावचनं तद्विकाराहः-स्विति भावः ॥ ४४ ॥

### सत्रस्य बहुकर्तृकत्वाधिकरणम् ॥ १४ ॥

## पू० ॥ सत्रमेकः प्रकृतिवत् ॥ ४५ ॥

अत्र द्वादशाहादीनि सत्राण्युदाहरणम्। तेषु एकः कर्ता बहवो वा कर्तार इति विशये तत्प्रकृतिभूतज्योतिष्टोमवदेक एव कर्तेति प्राप्ते- ॥४५॥

## सि० ॥ बहुवचनात्तु बहूनां स्यात् ॥ ४६ ॥

'ऋद्धिकामाः सत्रमासीरन् उपेयुः' इति बहुवचनात् सत्रेषु बहूनामेव कर्तृत्वं स्यान्न त्वेकस्य। प्रत्यक्षवचनेन चोदकप्राप्तस्यैककर्तृकत्वस्य बाध इति भावः ॥ ४६ ॥

## अपदेशः स्यादिति चेत् ॥ ४७ ॥

अपदेशः—[illegible] 'कपि बुधुः' इति लोकवदत्रापि बहुवचनप्रयोगः स्यादिति चेत्- ॥ ४७ ॥

## नैकव्यपदेशात् ॥ ४८ ॥

न। एकव्यपदेशात्। द्वादशाहो द्विविधः। सत्ररूपः अहीनरूपश्चेति। तत्र 'एष ह वै कुणपमत्ति यः सत्रे प्रतिगृह्णाति' इति सत्रे प्रतिग्रहं निन्दित्वा 'एक एव यजेत' इत्यन्यस्याहीनद्वादशाहस्य एककर्तृत्वव्यपदेशात् सत्रे बहवः कर्तार इति सिध्यति ॥ ४८ ॥

## संनिवापं च दर्शयति ॥ ४९ ॥

'पञ्चभिः पशुभिर्यजमानाः संनयेरन्' 'साग्निकानि ह्येतस्य संनिवपेरन्' इति संनिवापं- बहूनां यजमानानामग्नीनामेकत्र मेलनं दर्शयति। अतोऽपि बहुकर्तृकत्वं सम्यक् सिध्यति ॥ ४९ ॥

## बहूनामिति चैकस्मिन् विशेषवचनं व्यर्थम् ॥५०॥

'यो वै बहूनां यजमानानां गृहपतिः स सत्रस्य प्रणेता । स हि भूयिष्ठमृद्धिमाप्नोति' इत्येकस्मिन् गृहपतौ बहुभिर्यजमानैः सह प्रवृत्ते फलविशेषं दर्शयति । तत्कर्तृविशेषबोधकवचनमेकस्मिन् यजमाने कर्तुरेकत्वात् फलैकत्वाच्च व्यर्थमेव स्यात् । तस्मादपि ज्ञायते सत्रे बहवः कर्तार इति ॥ ५० ॥

सत्रे यजमानानामेव ऋत्विक्त्वाधिकरणम् ॥ १५ ॥

## पू० ॥ अन्ये स्युर्ऋत्विजः प्रकृतिवत् ॥ ५१ ॥

बहवः कर्तारः सत्रेष्विति सिद्धम् । तत्र ये सत्रिणस्त एव ऋत्विजस्तेभ्योऽन्ये वा स्युरिति विचारे प्रकृतिवदन्य एव स्युरिति प्राप्ते— ॥ ५१ ॥

## सि० ॥ अपि वा यजमानाः स्युर्ऋत्विजामभिधानसंयोगात्तेषां स्याद्यजमानत्वम् ॥ ५२ ॥

अपि वा—यजमाना एव ऋत्विजः । कुतः ? ऋत्विजामभिधानसंयोगात्—ऋत्विजां यानि अभिधानानि—नामानि, यजमानसंस्कारेषु तेषु तत्संयोगात्—'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति । ततो होतारम् । तत उद्गातारम्' इति वाक्येन ब्रह्माणं होतारमुद्गातारमिति ऋत्विजां नाम गृहीत्वा दीक्षाख्यं यजमानसंस्कारं तेषु ऋत्विक्षु उपदिशति । अतस्तेषामृत्विजां यजमानत्वं स्यात् । तस्माद्यजमानभूतास्त एव ऋत्विजः स्युर्नान्य इति भावः ॥ ५२ ॥

## कर्तृसंस्कारो वचनादाधातृवदिति चेत् ॥५३॥

आधातृवत्—यथा आधाने 'य आहिताग्निः स्यात् स एतां रात्रिं व्रतं चरेत् न मांसमश्नीयान्न स्त्रियमुपेयात्' इति यजमानसंस्कारः ऋत्विक्संस्कारत्वेन विहितः । तद्वदत्रापि कर्तृसंस्कारः— यजमानसंस्कारः दीक्षाविधानमृत्विजां यजमानान्यत्वेऽपि वचनात् ऋत्विङ्नाम्ना तत्संस्कारः स्यादिति चेत्— ॥ ५३ ॥

## स्याद्विशये तन्न्यायत्वात्प्रकृतिवत् ॥ ५४ ॥

विशये—यजमाना एव ऋत्विजश्चाद्विजा नेति संशये तन्न्यायत्वात्—अपि वा यजमानाः स्युर्ऋत्विगभिधानसंयोगादिति न्यायत्वात् । प्रकृतिवत्—प्रकृतौ ज्योतिष्टोमे दीक्षाकार्ये यजमानसंस्कारस्तद्वत्प्रकृतेऽपीति । यतो द्वादशाहे दीक्षासंस्कारः प्रकृतित प्राप्तः । तस्य प्रकृतौ यत् प्रयोजनं तदेव विकृतौ भवितु योग्यम् । अन्यत्र तु वचनेनाभिविधानात् कर्तृसंस्कार इति वैषम्य स्यादित्यनेन ध्वनितमिति भावः ॥ ५४ ॥

## स्वाम्याख्याः स्युर्गृहपतिवदिति चेत् ॥ ५५ ॥

यथा गृहपतिशब्दो योगवृत्त्या यजमानपरस्तथा ब्रह्मादिशब्दा अपि कथंचिद्योगेन स्वाम्याख्याः—यजमानबोधकाः स्युरिति चेत्—॥ ५५ ॥

## न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्मेण ॥ ५६ ॥

नैवम् । प्रसिद्धग्रहणत्वात्— क्रियाविशेषवत्सु ब्रह्मादिपदेषु प्रसिद्धरूढ्यात्मकग्रहणशक्तिमत्पदत्वात्, तद्धर्मेण— ब्रह्मादिकर्तृकक्रियाविशेषेण, असंयुक्तस्य—रहितस्य यजमानस्य ब्रह्मादिपदवाच्यत्व नेत्यर्थः । ब्रह्मादिपदप्रवृत्तिनिमित्तावच्छेदकक्रियाविशेषरहितो यजमानो न ब्रह्मादिपदेन बोधयितुं शक्यः । केवलयोगवृत्त्या बोधस्तु नैव सम्भवति । रूढेर्योगापहारित्वादिति भावः ॥ ५६ ॥

## बहूनामिति तुल्येषु विशेषवचनं नोपपद्यते ॥५७॥

किञ्च, 'यो वै बहूनां यजमानानां गृहपतिः स सत्रस्य प्रत्येता स हि भूयिष्ठमृद्धिमेति ' इति श्रूयते । तत्र तुल्येषु—केवलयजमानेषु ऋत्विक्कर्मरहितेषु सर्वेषु सत्सु विशेषवचनं—पृथक् एकस्मिन्नेव गृहपतिरिति वचनं नोपपद्यते । अस्मन्मते षोडश आर्त्विज्ययाजमानोभयकर्मकर्तारः । यजमानक्रियाकर्ता चैक । स एव गृहपतिरिति विशेषवचनं सूपपन्नमिति भाव. ॥ ५७ ॥

## दीक्षितादीक्षितव्यपदेशश्च नोपपद्यते अर्थयोर्नित्यभावित्वात् ॥ ५८ ॥

किञ्च, 'दीक्षिताः सत्रैर्यजन्ते, अदीक्षिता अहीनेन यजन्ति' इति दीक्षितादीक्षितव्यपदेशः—निर्देशोऽपि सत्रेऽनुपपन्नः । कस्मात्? अर्थयोः—दीक्षितत्वादीक्षितत्वयोः, नित्यभावित्वात्—दीक्षितत्वं यजमाने, अदीक्षितत्वं च ऋत्विक्षु नित्यमेवास्ति । अतो निर्देशो व्यर्थः । सिद्धान्ते सत्रे यागकर्तृषु अदीक्षितत्वमसिद्धम् । अतस्तेन रूपेण निर्देशो युक्तः ॥५८॥

## अदक्षिणत्वाच्च ॥ ५९ ॥

अदक्षिणत्वाच्च—'अदक्षिणानि सत्राण्याहुः, न ह्येषु गौर्दीयते, न वासो न हिरण्यम्' इति दक्षिणाया अभावदर्शनादपि स्वयंकर्तृत्वं सत्रे सिध्यति । अर्थात् ये यजमानास्त एव ऋत्विजः सत्रेषु, नान्ये इति सिद्धम् ॥ ५९ ॥

### सत्राहीनयोर्लक्षणाधिकरणम् ॥ १६ ॥

## द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात् ॥ ६० ॥

सत्रमहीनश्चेति द्विप्रकारो द्वादशाह इत्युक्तम् । तत्रादौ सत्रस्य लक्षणमाह । आसनोपायिचोदनेन—'आसीरन् उपेयुः' इति शब्दघटितविधिवाक्यविहितः बहुयजमानोपेतो द्वादशाहः सत्रम् । 'गावो वा एतत्सत्रमासत । सप्तदशावरा एकविंशतिपराः सत्रमासीरन् । प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति ।' इत्यादिवाक्येषु आसीरन्नुपेयुरिति शब्दघटितेषु बहुयजमानसंयुक्तेषु सत्रशब्दाभिसंयोगात्—सत्रशब्दस्य दृष्टत्वादित्यर्थः ॥ ६० ॥

## यजतिचोदनादहीनत्वं स्वामिनां चास्थितपरिमाणत्वात् ॥ ६१ ॥

यजतिचोदनादहीनत्वं— 'द्विरात्रेण यजेत' इत्यादिषु यजति-शब्दघटितविधिवाक्यविहितेषु अनियतपरिमाणकयजमानेषु अहीनत्वम्। 'अनियतकर्तृपरिमाणकत्वे सति यजतिचोदनाविहितत्वमहीनत्व'मित्यर्थः ॥ ६१॥

पौण्डरीके सकृदेव दक्षिणादानाधिकरणम् ॥ १७ ॥

## पू० ॥ अहीने दक्षिणाशास्त्रं गुणत्वात्प्रत्यहं कर्म-भेदात्स्यात् ॥ ६२ ॥

'पौण्डरीकेणैकादशरात्रेण स्वाराज्यकामो यजेत' इत्येकादशरात्रो अहीनः पौण्डरीकः श्रुतः स्वाराज्यफलकः। तत्र 'अयुतं पौण्डरीके दद्याद-श्वसहस्रमेकादशम्' इति दक्षिणा श्रुता। सा किं प्रत्यहं देया, उत सकृदिति संशये अहीने— उक्तपौण्डरीकयागे, दक्षिणाशास्त्रं— उक्तायुतदक्षिणा, प्रत्यहं देया। कुतः? तस्याः गुणत्वात्— अङ्गत्वात्। प्रत्यहं कर्मणो भेदात् प्रतिप्रधानं गुणावृत्तिरिति न्यायादिति भावः ॥ ६२ ॥

## सि० ॥ सर्वस्य वैककर्म्यात् ॥ ६३ ॥

सर्वस्य— अह्नां समुदायस्य कर्मैक्यात् एकैव दक्षिणा सकृद्देया। न प्रत्यहं भिन्ना। समुदायाङ्गत्वं दक्षिणायाः, नावयवाङ्गत्वम्। एकादशानामह्नामभ्यासरूपत्वादिति भावः ॥ ६३ ॥

## शं० ॥ पृषदाज्यवद्वाह्नां गुणशास्त्रं स्यात् ॥६४॥

पृषदाज्यवद्वा— 'पृषदाज्येनानूयाजान् यजति' इत्यत्र यथा पृषदाज्यरूपो गुणः प्रत्यनुयाजमावर्तते। तथात्रापि गुणशास्त्रं प्रत्यहमावृत्तं स्यादिति ॥ ६४ ॥

## ज्योतिष्टोम्यस्तु दक्षिणाः सर्वासामेककर्मत्वात्प्र-कृतिवत् तस्मान्नासां विकारः स्यात् ॥६५॥

**ज्योतिष्टोमेभ्यस्तु**— क्रतुमात्राच्छिन्ने दक्षिणाः ज्योतिष्टोमसम्बन्धिन्य एव । तस्य प्रकृतित्वात्तत्रैव दक्षिणाविधिरित्यर्थः । एवं प्रकृतौ ज्योतिष्टोमे सर्वासां दक्षिणानां विशिष्टक्रतुसम्पत्त्यर्थं **एककर्मत्वात्**—ऋत्विगानतिरूपैक-प्रयोजनत्वस्य दृष्टत्वादत्रापि दक्षिणायास्तादृशैकफलत्वात् **प्रकृतिवत्**—स्वकार्येण सह प्राप्तप्राकृतदक्षिणाया विकारत्वं तस्याः स्यात् । न त्वहरङ्ग-तया दक्षिणाविधिरत्र । येनावृत्तिः स्यादिति भावः ॥ ६५ ॥

## शं० ॥ द्वादशाहे तु वचनात्प्रत्यहं दक्षिणा-भेदस्तत्प्रकृतित्वात् परेषु तासां सङ्ख्याविकारः स्यात् ॥ ६६ ॥

**द्वादशाहे तु**— 'अन्वहं द्वादशशतं ददाति' इति प्रत्यक्षवच-नात् प्रत्यहं दक्षिणाभेदः । **तत्प्रकृतित्वात्**— द्वादशाहप्रकृतित्वात्पौण्डरी-कस्य । तत्राप्यन्वहं प्राप्तदक्षिणाशतविकारमात्रमयुतादि **परेषु**— पौण्डरीका-दिषु, **तासां**— अहःसम्बन्धिदक्षिणानां, विकारः स्यात् अयुता-दिरिति ॥ ६६ ॥

## परिक्रयाविभागाद्वा समस्तस्य विकारः स्यात् ॥ ६७ ॥

**परिक्रयाविभागात्**— ऋत्विक्परिक्रयैक्यात्, **समस्तस्य**—निखि-लक्रतुदक्षिणाद्रव्यस्यैव विकारः स्यान्नाहस्य ॥ ६७ ॥

## भेदस्तु गुणसंयोगात् ॥ ६८ ॥

**भेदस्तु**—द्वादशाहे दक्षिणाभेदः, **गुणसम्बन्धात्**—दक्षिणा-सम्बन्धात् । तत्रापि परिक्रयस्यैकत्वान्न वास्तवो भेद इति भावः ॥ ६८ ॥

पौण्डरीके सर्वासां दक्षिणानां विभज्य नयनाधिकरणम् ॥१८॥

## प्रत्यहं सर्वसंस्कारः प्रकृतिवत्सर्वासां सर्वशेषत्वात् ॥ ६९ ॥

ज्योतिष्टोमे ' माध्यन्दिनसवने दक्षिणा नीयन्ते ' इति वचनेन दक्षिणाया नयनरूपः संस्कारो विहित । स च पौण्डरीके अतिदेशेन प्राप्तः । सत्येन तत्र प्रत्यह निखिलायाः कार्ये, उत विभज्य कर्तव्य इति विमर्शे सर्वसंस्कारः—प्रत्यह सर्वदक्षिणासंस्कार, प्रकृतिवत् सर्वासां दक्षिणानाम् । सर्वशेषत्वात्—सकलमाध्यन्दिनसवनशेषत्वात ॥ ६९ ॥

## एकार्थत्वान्नेति चेत् ॥ ७० ॥

एकार्थत्वात्—ऋत्विगानतिरूपैककार्यार्थत्वात्न प्रत्यहं निखिल-दक्षिणा संस्कार. । किन्तु स्वेच्छया एकस्मिन् माध्यन्दिन एव निखिलं दक्षिणानयनं कार्यम् ॥ ७० ॥

## उत्पत्तौ कालभेदात् ॥ ७१ ॥

' तस्मात्त्रयुभो लोके माध्यन्दिनसवने दक्षिणा नीयन्ते ' इत्युपत्तौ स्वप्रकृतौ द्वादशाहे कालभेदेन संस्कारभेदो दृष्ट इति नैकस्मिन् माध्यन्दिने निखिलदक्षिणानयनम । अपि तु ' अन्वहं ददातीति प्रकृतौ प्रत्यहं दक्षिणादानस्य दृष्टत्वात् तद्विकृतौ पौण्डरीकेऽपि प्रत्यहं माध्यन्दिने कृत्स्नदक्षिणादानमिति ॥ ७१ ॥

## सि० ॥ विभज्य तु संस्कारो वचनाद्द्वादशाहवत् ॥ ७२ ॥

द्वादशाहवत्— यथा द्वादशाहे ऋत्विगानतिप्रयोजनविशिष्टदक्षिणा ' अन्वह द्वादशशत दक्षिणा ' इति वचनाद्विभज्य दीयते । तथा द्वादशाह-विकृतावहीने पौण्डरीकेऽपि विहितदक्षिणा एकादशधा विभज्यैव प्रत्यहं संस्कार कार्य इति सिद्धान्त । न पौण्डरीक ज्योतिष्टोमविकृतिरपि तु द्वादशाहस्येति भाव. ॥ ७२ ॥

मानवीषु यावदर्थमेव ऋचा दाशतयीभ्यः सामिधेन्यर्थमुपादानाधिकरणम् ॥ १९ ॥

## पू० ॥ लिङ्गेन द्रव्यनिर्देशे सर्वत्र प्रत्ययः स्याल्लिङ्गस्य सर्वगामित्वादाग्नेयवत् ॥ ७३ ॥

कश्चित्कर्मविशेषे ' मानव्य्र्चः सामिधेन्यो भवन्ति ' इति श्रुतम् । तत्र सर्वा एव मानव्यः ऋचः सामिधेनीत्वेन दाशतयीभ्यो ग्राह्याः । न परिमिताः । कुतः ? लिङ्गेन— शब्दसामर्थ्यात्मिकमनुलिङ्गेन द्रव्यनिर्देशे— शब्दानिर्देशे क्रियमाणे सति सर्वत्र— तल्लिङ्गलक्ष्यसर्वविषयः, प्रत्ययः— ज्ञानं स्यात् । लिङ्गस्य सर्वगामित्वात्— सर्ववृत्तित्वात् । आग्नेयवत्— यथा ' आग्नेयेन संवत्सरमिष्टका उपदधाति ' इत्यत्र सर्वाणि आग्नेयसूक्तानि गृह्यन्ते । तद्वदत्रापि सर्वा मानव्यो ग्राह्या इति ॥ ७३ ॥

## सि० ॥ यावदर्थं वाऽर्थशेषत्वादल्पेन परिमाणं स्यात् तस्मिंश्च लिङ्गसामर्थ्यम् ॥ ७४ ॥

यावदर्थं वा— यावता कार्यसिद्धिः स्यात्तावदेव ग्राह्यम् । नाधिकम् । कस्मात् ? अर्थशेषत्वात्— कार्याङ्गत्वात्सामिधेनीनाम् । अतः अर्थेन— कार्यप्रमाणेन समं मन्त्राणां परिमाणं स्यात् । यावता कार्यसंपत्तिस्तावत्यः पञ्चदश सप्तदश वा मानव्यः ऋचः दाशतयीभ्योग्राह्याः । तस्मिंश्च-तावत्परिमाणके गृह्यमाणेऽपि तत्र लिङ्गसामर्थ्यमबाधितमिति भावः ॥७४॥

## आग्नेये कृत्स्नविधिः ॥ ७५ ॥

आग्नेये— आग्नेयवदिति दृष्टान्ते, कृत्स्नविधिः —निखिलाग्नेयमन्त्राणामङ्गत्वबोधकविधिः-- ' प्रतिसूक्तमुपदधाती ' ति प्रत्यक्षवचनं विद्यते । अत्र नास्तीति दृष्टान्तवैषम्यं बोध्यम् ॥ ७५ ॥

## ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिः स्यात् ॥ ७६ ॥

प्रकृतन्यायेन किञ्चिद्ग्रहणमेव निर्बाधं चेत् ' ऋजीषमप्सु प्रक्षिपेद ' इत्यत्रैकदिनीयऋजीषप्रक्षेपेणापि कार्यसिद्धिः स्यादित्याशङ्कायामाह— **ऋजीषस्येति** । द्वादशाहाद्यहर्गणे **ऋजीषस्य**— अभिषवादिनागतसारसोमप्रक्षेपस्य ऋजीषमिति द्वितीयविभक्त्या प्राधान्यावगतेस्तदङ्गभूतः प्रक्षेपः प्रतिपत्तिसंस्कारः प्रतिप्रधानमङ्गावृत्तिन्यायात् सर्वस्यैव ऋजीषस्य भवेदिति भावः ॥ ७६ ॥

वाससि मानोपावहरणयोरनुष्ठानाधिकरणम् ॥ २० ॥

## वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात् ॥ ७७ ॥

ज्योतिष्टोमे सोमं ' वाससा मिनोति, वाससा चोपावहरति ' इति विस्पष्टवचनात् तस्य वाससि मानं वाससा चोपावहरणं कार्यं, नान्येन साधनेनेति सिद्धम् ॥ ७७ ॥

अहर्गणे वासोऽन्तरोत्पादनाधिकरणम् ॥ २१ ॥

## सि०॥ तत्राहर्गणेऽर्थाद्वासः प्रकृतिःस्यात् ॥७८॥

द्वादशाहाद्यहर्गणेऽपि उपावहरणार्थं वासोन्तरं न सम्पादनीयमिति प्राप्ते आह—**तत्रेति** । ज्योतिष्टोमविकृत्यहर्गणे **अर्थात्**—अनुपपत्त्या वासःप्रकल्प्तिः चोदकप्राप्तवाससो भिन्नवासःसम्पादनं स्यात् । कार्यमिति यावत् । अहर्गणे प्रत्यहं सोमस्य उपावहरणं चोदकेन प्राप्तम् । तद्वासोऽन्तरं विना न सिध्यति । अतो हविर्धानशकटेऽवस्थिताद्वासोपनीतसोमादेकैकस्याहः पर्याप्तं कियन्तमपि सोमभागं पृथक्कृत्य उपावहरणमनुष्ठातुं वासोऽन्तरमन्यद्वासः सम्पादनीयमेवेति भावः ॥ ७८ ॥

*उपावहरणसमय एव वासोऽन्तरोत्पादनाधिकरणम् ॥ २२ ॥*

## पू० ॥ मानं प्रत्युत्पादयेत्प्रकृतौ तेन दर्शनादुपावहरणस्य ॥७९॥

अहर्गणे उपावहरणार्थे यद्वासोऽतरसम्पादनं तत्सोमक्रयानन्तरं मानकाले कर्तव्यं, किंवा उपावहरणसमये इति विचारे **मानं प्रति—** मानोपलक्षितकाले एव, **उत्पादयेत्—** सम्पादयेत् । कुतः ? **प्रकृतौ—** ज्योतिष्टोमे, **तेन—**येन वाससा मानं कृतं तेनैव वाससा उपावहरणस्य दर्शनात् । प्रकृतिवद्विकृताविस्येव न्याय्यमिति ॥ ७९ ॥

## सि० ॥ हरणे वा श्रुत्यसंयोगादर्थाद्वा विकृतौ तेन ॥ ८० ॥

**हरणे वा**—उपावहरणसमय एव सम्पाद्यमित्यर्थः । कुतः ? **श्रुत्यसंयोगात्—** मानकाले सम्पाद्यमिति श्रुत्या अबोधनात् । प्रकृतावह्नः एकत्वाद्यस्मिन् मानं तस्मिन्नेव दिने बाधकाभावात् हरणमर्थादेव सिद्धम् । नार्थिकं चोदकः प्रापयति । **विकृतौ—** प्राकृताहर्गणे तु मानवासः दिनान्तरीयसोमधारणे व्यापृतमिति तेन वाससा हरणासम्भवाद्वासोऽतरमावश्यकमेव । तच्च यस्मिन् काले तदपेक्षा तस्मिन् काले सम्पाद्यमिति लोकसिद्धो न्याय इत्युपावहरणकाल एवाहर्गणे तत्सम्पाद्यमिति भावः ॥ ८० ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां दशमाध्यायस्य षष्ठः पादः ॥ ६ ॥

---

## ॥ अथ दशमाध्यायस्य सप्तमः पादः ॥

पशौ प्रत्यङ्गं हविर्भेदाधिकरणम् ॥ १ ॥

## पू० ॥ पशावेकहविष्ट्वं समस्तचोदितत्वात् ॥१॥

ज्योतिष्टोमे ' अग्नीषोमीयं पशुमालभेत ' इत्यत्र यागसाधनत्वेन श्रूयमाणपशौ **एकहविष्ट्वं—समस्तचोदितत्वात्—**समस्तस्य पशोर्देवतासम्बन्धबोधनात् ॥ १ ॥

### सि० ॥ प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक्कल्पनत्वात् ॥ २ ॥

प्रत्यङ्गं वा—प्रत्यङ्गमेव हविः।' हृदयस्याग्रे अवद्यति, अथ जिह्वायाः, अथ वक्षसः' इति हृदयाद्यङ्गानां पृथक् हविष्ट्वेन कल्पनत्वात्—उपदिष्टत्वात्। ग्रहवत्—यथा 'ऐन्द्रवायवं गृह्णाति। अन्यया धारया गृह्णाति' इत्यादिविधिभिः सोमेन यजेतेति सोमलतायाः साधनत्वश्रुतावपि रसग्रहाणामेव साधनत्वं तथाऽत्रेति भावः ॥ २ ॥

पशोर्हृदयादिभिरेवाङ्गविशेषैर्यागानुष्ठानाधिकरणम् ॥ २ ॥

### पू० ॥ हविर्भेदात्कर्मणोऽभ्यासस्तस्मात्तेभ्योऽवदानं स्यात् ॥ ३ ॥

प्रत्यङ्गं हविर्भेद इति सिद्धे किं निखिलेभ्योऽङ्गेभ्योऽवदानं कार्यं, उत हृदयाद्येकादशेभ्य एवाङ्गेभ्य इति संशये हविर्भेदात्— अङ्गभेदेन हविषा भेदात् यावदवयवं कर्मणोऽभ्यासः सिद्धः। तस्मात्तेभ्यः सर्वेभ्य एवावदानं स्यात् ॥ ३ ॥

### सि० ॥ आज्यभागवद्वा निर्देशात्परिसङ्ख्या स्यात् ॥ ४ ॥

आज्यभागवद्वा— एकादशाज्यभागवत्— गृहमेधीयाज्यभागाधिकरणे 'हृदयादीनि एकादश वैतानि पशोरवदानानि' इति निर्देशादितरेषामङ्गानां परिसङ्ख्या स्यात् ॥ ४ ॥

### तेषां वा द्व्यवदानत्वं विवक्षन्नभिनिर्दिशेत्पशोः पञ्चावदानत्वात् ॥ ५ ॥

तेषां—हृदयादीनां, द्व्यवदानत्वं विवक्षन्-विधास्यन् 'एकादशाज्यभागवादित्यनेन यान्येकादश तानि द्विर्द्विरवद्यतीत्यभिनिर्दिशेत्। कुतः?

सर्वेषां पञ्चावत्त ' मिति पशोः पञ्चावदानत्वश्रवणात् । नावदानानां द्विर्द्विरित्यनुवादः। अपि तु विधानमेव। अप्राप्तत्वात्। अतो न परिसङ्ख्या। विधेः कृतार्थत्वात्। तस्याः श्रुतहान्यादिदोषत्रयापादकत्वादिति भावः ॥५॥

## अंसशिरोनूकसक्थिप्रतिषेधश्च तदन्यपरिसङ्ख्याऽनर्थकः स्यात् प्रदानत्वात्तेषां निरवदानप्रतिषेधः स्यात् ॥ ६ ॥

' नांसयोरवद्यति, न शिरसः, नानूकस्य, नापरसक्थ्योः ' इति अंसाद्यवयवानां प्रतिषेधः श्रुतः । सः परिसङ्ख्यापक्षे नोपपद्यते । यत एकादशातिरिक्तस्य परिसङ्ख्यातत्वात् परिसङ्ख्यैव । अंसादीनां व्यावृत्तत्वात्पुनः प्रतिषेधोऽनर्थकः । मन्मते तु **प्रदानत्वात्—** अंसाद्यवयवानां प्रदेयद्रव्यत्वस्य क्लृप्तत्वात्, **तेषां—** सक्थ्यादीनां, **निरवदानप्रतिषेधः—** द्विरवदानप्रतिषेधः स्यात् । हृदयादीनि द्विरवदेयानि । सक्थ्यादीनि तु सकृदेवेति प्रतिषेध उपपद्यत इति भावः ॥ ६ ॥

## अपि वा परिसङ्ख्या स्यादनवदानीयशब्दत्वात् ॥ ७ ॥

**अपि वा—** परिसङ्ख्यैव स्यात् । न सर्वेभ्योऽङ्गेभ्योऽवदानम् । कुतः ? ' मारुत्वान् अनवदानीयान् सुराग्रहांश्चाऽजिसृद्भ्यो हरति ' **इत्यनवदानीयशब्दत्वात्।** किञ्चिदङ्गमनवदानीयं गम्यते । सर्वावदाने अनवदानीयशब्दोऽनुपपन्नो भवेत् । तस्मात् होमार्थं चोदकप्राप्तस्यावदानस्य हृदयादिभिरेव सम्बन्धः । न सर्वैरङ्गैः । तदिनरेषा परिसङ्ख्यैवेति भावः ॥ ७ ॥

## अब्राह्मणे च दर्शनात् ॥ ८ ॥

' ककुभो राजपुत्रः प्राश्नाति ' इत्यब्राह्मणे राजन्ये अवयवविशेषस्य

भक्ष उपदिष्टः। सोऽपि सर्वाग्ययावदाने नोपपद्यते। अतोऽपि परिसङ्ख्यैव सिध्यति ॥ ८ ॥

## श्रुताश्रुतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेपत्वम् ॥ ९ ॥

किञ्च, 'हृदयान्यङ्गान्यभिमृशति शृतान्यशृतानि च' इति **तेषां**— अशृतानामङ्गानां, **उत्सर्गवत्**—'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इत्यत्र यथा उत्सर्गश्रवणादयज्ञशेपत्वं तथा एकादशानां 'हृदयं जिह्वावक्षोपस्थयकृद्वृक्कौ सव्यन्दोः उभे पार्श्वे दक्षिणा श्रोणिः गुद मध्यत इति दैवतान्यवदानानि' इत्येकादशानामङ्गानामेव यज्ञशेपत्वात् श्रपणम्। अन्येषां त्वयज्ञशेपत्वात् श्रपणं नास्तीति परिसङ्ख्यापक्षे एवोपपन्नं भवतीत्येकादशातिरिक्तानामङ्गानां परिसङ्ख्यैवेति सिद्धम् ॥ ९ ॥

ज्योतिष्टोमे अनिज्याशेषत्र्यङ्गैःस्विष्टकृद्धोमाधिकरणम् ॥३॥

## पू० ॥ इज्याशेपात्स्विष्टकृदिज्येत प्रकृतिवत् ॥ १० ॥

अग्नीषोमीयपशौ **इज्याशेपात्**— हृदयादिभ्यः स्विष्टकृद्यागः स्यात्। **प्रकृतिवत्**— प्रकृताविज्याशेषेण पुरोडाशेन स्विष्टकृद्धोमो भवति। विकृतावपि चोदकात्तथैवेति भावः ॥ १० ॥

## सि० ॥ त्र्यङ्गैर्वा शरवद्विकारः स्यात् ॥ ११ ॥

'दोष्णः पूर्वार्धादग्नये समवद्यति, गुदस्य मध्यतः, श्रोण्या जघनतः' इति विहितत्र्यङ्गैरेव स्विष्टकृदिति निर्णयः। 'शरमयं बर्हिर्भवति' इति शरैः प्राकृतकुशबाधवत् त्र्यङ्गैर्विकारः— इज्याशेषबाध इति भावः ॥११॥

अप्यूध्न्या प्राकृतेडाभक्षे निवृत्त्यधिकरणम् ॥ ४ ॥

## सि० ॥ अध्यूध्नी होतुस्त्र्यङ्गवादिडाभक्षविकारः स्यात् ॥ १२ ॥

ज्योतिष्टोमे अग्नीषोमीयपशावेव ' अध्यूध्नीं होत्रे हरन्ति ' इत्याम्नातम् । तत्रेदं किं विकारशास्त्रं, उत नियामकमिति विचारे **अध्यूध्नी**—अध्यूध्नि-विषयकं शास्त्रं प्रकृतितश्चोदकप्राप्तहोतृकर्तृकेडाभक्षस्य **विकारः**—बाधकं स्यात् । **त्र्यङ्गवत्**—पूर्वाधिकरणसिद्धान्तवत् । यथा तत्रानिज्याशेषैस्त्र्यङ्गै-रिज्याशेषाणां निवृत्तिस्तथात्रापि होतुरिडाभक्षणस्य निवृत्तिरिति भावः ॥ १२ ॥

## पू० ॥ शेषे वा समवैति तस्माद्रथवन्नियमः स्यात् ॥ १३ ॥

**शेषे वा**— ' अनस्थिभिरिडां वर्धयन्ति ' इत्यनेन इडायां गृह्य-माणे **शेषे**— हुतशेषमांसे एव समवैति अध्यूध्नी । **तस्माद्रथवत्**— वाजपेये सप्तदशारथमध्ये यजुर्युक्तो रथः अध्वर्योरेवेति नियमवदत्रापि अध्यूध्नी होतुरेवेति नियमः स्यात् । अनस्थिभिरिडां वर्धयन्तीति शेषकृत्स्नमांसस्य हरणं प्राप्तम् । तदन्तर्भूतामध्यूध्नीं हृदयादिभ्यो भिन्नमङ्गमनूद्य तस्य होतृस-म्बन्धो नियम्यत इति तदभिप्रायः ॥ १३ ॥

## अशास्त्रत्वात्तु नैवं स्यात् ॥ १४ ॥

' वर्धयन्ती'त्यशास्त्रत्वाद्विध्यभावात् **नैवं**— नियमो न । अपि तु विधिरेवाध्यूध्न्याः । ततो विकारः निवृत्तिरिडाभक्षे होतुः । वर्धयन्तीत्यस्य लडं-त्वादनास्थिवाक्यमनुवादः । ' अथ यद्यत्परिशिष्यते तत्तत्समवधत्तं धान्यामान-यति । ' हृदयं जिह्वावक्ष ' इत्यारभ्य ' वनिष्टुम् ' इत्येतदन्तकं परिशिष्ट-वाक्यं प्रापकम् । तस्मिन्नध्यूध्नी न पठिता । अतः अप्राप्तत्वाद्विधीयमानया तया होतुरिडाभक्षो बाध्यत इति भावः ॥ १४ ॥

**अपि वा दानमात्रं स्याद्भक्षशब्दानभिसम्बन्धात् ॥ १५ ॥**

उक्तवाक्ये भक्षशब्दानभिसम्बन्धात्— अश्रवणात्, होतृसम्प्रदानकं दानमात्रं विधीयते । अतो नेडाभक्षणस्य बाध इति तटस्थस्य शङ्का ॥१५॥

**दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्याच्छेषं प्रत्यविशिष्टत्वात् ॥ १६ ॥**

शेषं प्रति— हुतशेषं प्रति, अविशिष्टत्वात्— होतुर्यजमानस्य च स्वत्वाभावेन तुल्यत्वात् । हुतशेषोपरि उभयोः स्वत्वाभावेन दातुरविद्यमानत्वात् । स्वस्वत्वोत्सादपूर्वकपरस्वत्वापादनरूपो दानविधिर्न सम्भवतीति इडाभक्षविकार एव प्राप्नोति । तस्यानूक्त्या निवृत्तिरिति भावः ॥ १६ ॥

वनिष्ठोः प्राकृतेडाभक्षविकारत्वाधिकरणम् ॥ ५ ॥

**अग्नीधश्च वनिष्ठुरग्न्यूध्नीवत् ॥ १७ ॥**

अग्नीषोमीयपशावेव 'वनिष्ठुमग्नीधे प्रयच्छति' इति श्रुतम् । तत्र वनिष्ठुरपि अग्न्यूध्नीवत्—अग्नीधं प्रकृतिप्राप्तेडाभक्षस्य विकारः- निवर्तकमिस्यर्थः । अपूर्वत्वात् । यद्यपि 'वनिष्ठुं प्रास्यती' ति प्राशनमात्रं प्राप्तं तथापि भक्षो न प्राप्तः । तदसंयोगात् । इह अग्नीधे इति चतुर्थ्या स अप्राप्तत्वाद्विधीयत इति भावः ॥ १७ ॥

पशौ मैत्रावरुणस्यापि शेषभक्षास्तित्वाधिकरणम् ॥ ६ ॥

**पू० ॥ अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् ॥१८॥**

अप्राकृतत्वात्— प्रकृतौ मैत्रावरुणस्याभावेन चोदकप्राप्त्यभावात्तस्य अभक्षत्वं— पशौ इडाभक्षो नास्तीत्यर्थः ॥ १८ ॥

**सि० ॥ स्याद्वा होत्रध्वर्युविकारत्वात्तयोः कर्माभिसम्बन्धात् ॥ १९ ॥**

'मैत्रावरुणः प्रेष्यति चानु चाह' इति श्रुतेः प्रैषदाने तस्याध्वर्युत्वमनुवचने च होतृत्वमिति मैत्रावरुणस्य होत्रध्वर्युरिकारत्वात् तयोः— होत्रध्वर्योश्च, प्राकृतकर्माभिसम्बन्धात् स्यादेव मैत्रावरुणस्येडाभक्षः पशाविति भावः ॥ १९ ॥

तत्र मैत्रावरुणस्यैकभागत्वाधिकरणम् ॥ ७ ॥

## पू० ॥ द्विभागः स्याद्द्विकर्मत्वात् ॥ २० ॥

तत्रेडाभक्षे मैत्रावरुणः द्विभागः—भागद्वययोगेत स्यात्। द्विकर्मत्वात्—प्रैषात्मकाध्वर्युकर्मकारित्वादनुवचनरूपहोतृकर्मकारित्वाच्च मैत्रावरुणो द्विकर्मा। अतो द्विभाग स्यादिति ॥ २० ॥

## सि० ॥ एकत्वाद्वैकभागः स्याद्भागस्याश्रुतिभूतत्वात् ॥ २१ ॥

एकत्वात्—कर्मनिमित्त चोदकशास्त्रप्राप्त यजमान तत्कर्तृ एकत्वात्, एकभागः—एक एव भागः स्यात् । न भागद्वयम् । कुत ? भागस्य—पशुयागे होतुर्भाग भक्षयेदध्वर्युभार्ग च भक्षयेत् इत्यस्य अश्रुतिभूतत्वात्—शास्त्रविषयत्वाभावात् तादृश शास्त्रं नास्तीत्यर्थ ॥ २१ ॥

प्रतिप्रस्थातुर्भक्षाभावाधिकरणम् ॥ ८ ॥

## पू० ॥ प्रतिप्रस्थातुश्च वपाश्रपणात् ॥ २२ ॥

तस्मिन्नेव पशौ प्रतिप्रस्थातुः—ऋत्विग्विशेषस्य, वपाश्रपणरूपाध्वर्युकर्मकारित्वान्मैत्रावरुणवत् हुतशेषेडाभक्षो नियत इति ॥ २२ ॥

## सि० ॥ अभक्षो वा कर्मभेदात्तस्याः सर्वप्रदानत्वात् ॥ २३ ॥

अभक्षो वा—प्रतिप्रस्थातुः अभक्ष—भक्षणाभाव । कुत ? तस्याः—वपाया, सर्वप्रदानत्वात्—कृत्स्नैव वपा प्रदीयते। यस्य द्रव्यस्य प्रतिप्रस्थातृकर्तृक श्रपण तस्य सर्वस्य हुतत्वात् शेषाभाव इति भावः ।

शब्दान्तराभ्यासादिभिर्वपाहोमाना भेदान्निकापूर्वजनककर्मकर्तृत्वं प्रतिप्रत्यातुर्विद्यते इत्याह कर्मभेदादिति। स्पष्टम् ॥ २३ ॥

गृहमेधीयापूर्वाऽऽज्यभागविधानाधिकरणम् ॥ ९ ॥

## पू० ॥ विकृतौ प्राकृतस्य विधेर्ग्रहणात् पुनःश्रुतिरनर्थिका स्यात् ॥ २४ ॥

वैश्वदेवादिपर्वचतुष्टयात्मकचातुर्मासीयगृहमेधीये ' मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम् ' इति विधाय तत्र ' आज्यभागौ यजति ' इति श्रुतम्। तत्र विकृतौ— गृहमेधीये श्रुतमिदं वाक्यं प्राकृतदर्शपूर्णमासीयाऽऽज्यभागविधेः पुनर्ग्रहणात अनर्थकं— अनुवादरूपं स्यात्। न विधिरिति भावः ॥ २४ ॥

## द्वि० पक्षः ॥ अपि वा आग्नेयवद्द्विशब्दत्वं स्यात् ॥ २५ ॥

सम्भवति सार्थकत्वे अनर्थकत्वकल्पनमनुचितमित्यस्वरसः सूच्यते अपि वेत्यनेन। द्विशब्दत्वं— एकार्थबोधकशब्दद्वयत्वं स्यात्। द्वाभ्या मिलित्वा एकः शाब्दबोध इति यावत्। सत्येवं नानर्थक्यम्। आग्नेयवत्— यथा ' अग्निमग्न आवह ' इत्यत्र द्वाभ्यामग्निशब्दाभ्यामेको बोधस्तथा चोदकेन प्रत्यक्षशास्त्रेण च मिलित्वा एको बोध उत्पाद्येत। ' प्रकृतिवत्कर्तव्यमिति '। केन रूपेण साद्दश्यमित्याकाङ्क्षायामाज्यभागत्वेन सद्दशं कर्तव्यमिति दर्शपूर्णमासधर्मप्रापकं लिङ्गमिदमिति भावः ॥ २५ ॥

## तृ० पक्षः ॥ न वा शब्दपृथक्त्वात् ॥ २६ ॥

आग्नेयवदिति यदुक्तं तन्नैव सम्भवति। कुतः ? शब्दपृथक्त्वात्— दृष्टान्ते सम्बुद्ध्यन्ताग्निशब्दः आवाहनक्रियाकर्त्रग्निपरः। द्वितीयान्तस्तु तत्क्रियाकर्माग्निपरः। प्रकृते न तथेति वैषम्यम्। तस्मात्पुनः प्रत्यक्षपाठः आज्यभागस्य स्तुत्यर्थ इति वाच्यम् ॥ २६ ॥

## च० पक्षः ॥ अधिकं वा अर्थवत्त्वात्स्यात् अर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ॥ २७ ॥

भिन्नप्रकरणस्य विधेः भिन्नप्रकरणे स्तुतिरयुक्तेत्याशयेन चतुर्थं पक्षमाह—**अधिकं वा—** प्राकृताज्यभागद्वयादधिकमेवाज्यभागद्वयं गृहमेधीये विधीयते। कुतः? **अर्थवत्त्वात्**— पुनर्ग्रहणस्यापूर्वसाधनत्वज्ञापकत्वेन सार्थक्यात्। **अर्थवादगुणाभावे अविकारे च**—*निर्दिष्टरीत्यार्थवादस्य*—स्तुतेरसम्भवे 'अप्सुमन्तावाज्यभागौ' इत्यत्र गुणविधिवत्प्रकृते गुणविधेरभावे **अविकारे च**—'शरमयं बर्हिर्भवती'ति प्राकृतधर्मबाधाभावे च सति **वचनात्**— 'आज्यभागौ यजति' इति पुनर्वचनात् अप्राकृतापूर्वसाधनमधिकं कर्म स्यादिति अर्थवत्त्वं भविष्यति। **हि**—यतः,**तेषु**— अर्थवादगुणविधिप्राकृतधर्मबाधेषु सत्सु **अपूर्वत्वात्तादर्थ्यं**—तदर्थतात्पर्यकत्वं स्यात। प्रकृते तदन्यतमाभावादधिकमेवेति भावः ॥ २७ ॥

## पं० पक्षः ॥ प्रतिषेधः स्यादिति चेत् ॥ २८ ॥

'आज्यभागौ यजती'त्यस्य महाग्निहोत्रवत् आज्यभागधर्मकं कर्म कुर्यादिति लक्षणाप्रसङ्गान्न तुरीयः पक्षो युक्तः। तस्मादाज्यभागातिरिक्तं न कुर्यादिति **प्रतिषेधः**—तदतिरिक्तस्याङ्गस्य निषेध एव स्यादिति चेत्—॥२८॥

## नाश्रुतत्वात् ॥ २९ ॥

न पञ्चमः पक्षः सम्यक्। कुतः? **अश्रुतत्वात्**— अश्रुतकल्पना, स्वार्थत्यागः, प्राप्तबाधश्चेति दोषत्रयापत्तेरिति भावः ॥ २९ ॥

## ष० पक्षः ॥ अग्रहणादिति चेत् ॥ ३० ॥

शब्दान्तराभ्यासादिभिर्विपाहोमानां भेदानैकापूर्वजनककर्मकर्तृत्वं प्रतिप्रसंगातु- र्विचते इत्याह कर्मभेदादिति । स्पष्टम् ॥ २३ ॥

गृहमेधीयापूर्वेऽऽज्यभागविधानाधिकरणम् ॥ ९ ॥

## पू० ॥ विकृतौ प्राकृतस्य विधेर्ग्रहणात् पुनः- श्रुतिरनर्थिका स्यात् ॥ २४ ॥

वैश्वदेवादिपर्वचतुष्टयात्मकचातुर्मास्यगृहमेधीये ' मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम् ' इति विधाय तत्र ' आज्यभागौ यजति ' इति श्रुतम् । तत्र **विकृतौ**— गृहमेधीये श्रुतमिदं वाक्यं प्राकृत- दर्शपूर्णमासीयाऽऽज्यभागविधेः पुनर्ग्रहणात **अनर्थकं**— अनुवादरूपं स्यात् । न विधिरिति भावः ॥ २४ ॥

## द्वि० पक्षः ॥ अपि वा आग्नेयवद्द्विशब्दत्वं स्यात् ॥ २५ ॥

सम्भवति सार्थकत्वे अनर्थकत्वकल्पनमनुचितमित्यस्वरसः सूच्यते **अपि वे**त्यनेन । **द्विशब्दत्वं**— एकार्थबोधकशब्दद्वयत्वं स्यात् । द्वाभ्यां मिलित्वा एकः शाब्दबोध इति यावत् । सत्येवं नानर्थक्यम् । **आग्नेयवत्**— यथा ' अग्निमग्न आवह ' इत्यत्र द्वाभ्यामग्निशब्दाभ्यामेको बोधस्तथा चोदकेन प्रत्यक्षशास्त्रेण च मिलित्वा एको बोध उत्पाद्यते । ' प्रकृतिवत्कर्तव्य- मिति ' । केन रूपेण सादृश्यमित्याकाङ्क्षायामाज्यभागवत्त्वेन सदृशं कर्तव्य- मिति दर्शपूर्णमासधर्मप्रापकं लिङ्गमिदमिति भावः ॥ २५ ॥

## तृ० पक्षः ॥ न वा शब्दपृथक्त्वात् ॥ २६ ॥

आग्नेयवदिति यदुक्तं तन्नैव सम्भवति । कुतः ? **शब्दपृथक्त्वात्**— दृष्टान्ते सम्बुद्ध्यन्ताग्निशब्दः आवाहनक्रियाकर्त्रग्निपरः । द्वितीयान्तस्तु तत्क्रियाकर्माग्निपरः । प्रकृते न तथेति वैषम्यम् । तस्मात्पुनः प्रत्यक्षपाठः आज्यभागस्य स्तुत्यर्थ इति वाच्यम् ॥ २६ ॥

## च० पक्षः ॥ अधिकं वा अर्थवत्त्वात्स्यात् अर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ॥ २७ ॥

भिन्नप्रकरणस्य विधेः भिन्नप्रकरणे स्तुतिरयुक्तेत्याशयेन चतुर्थं पक्षमाह—अधिकं वा— प्राकृताज्यभागद्वयादधिकमेवाज्यभागद्वयं गृहमेधीये विधीयते। कुतः ? अर्थवत्त्वात्— पुनर्ग्रहणस्यापूर्वसाधनत्वज्ञापकत्वेन सार्थक्यात्। अर्थवादगुणाभावे अविकारे च—निर्दिष्टशीलार्थतादस्य—स्तुतेरसम्भवे 'अप्सुमन्ताबाज्यभागौ' इत्यत्र गुणविधित्वप्रकृते गुणविधेरभावे अविकारे च— 'शरमयं बर्हिर्भवती'ति प्राकृतधर्मबाधाभावे च सति वचनात्— 'आज्यभागौ यजति' इति पुनर्वचनात् अप्राकृतापूर्वसाधनमधिकं कर्म स्यादिति अर्थवत्त्वं भविष्यति। हि—यतः,तेषु— अर्थवादगुणविधिप्राकृतधर्मबाधेषु सत्सु अपूर्वत्वात्तादर्थ्यं— तदर्थतात्पर्यकत्वं स्यात्। प्रकृते तदन्यतमाभावादधिकमेवेति भावः ॥ २७ ॥

## पं० पक्षः ॥ प्रतिषेधः स्यादिति चेत् ॥ २८ ॥

'आज्यभागौ यजती'त्यस्य महाग्निहोत्रवत् आज्यभागधर्मकं कर्म कुर्यादिति लक्षणाप्रसङ्गान्न तुरीयः पक्षो युक्तः। तस्मादाज्यभागातिरिक्तं न कुर्यादिति प्रतिषेधः—तदतिरिक्तस्याङ्गस्य निषेध एव स्यादिति चेत्—॥२८॥

## नाश्रुतत्वात् ॥ २९ ॥

न पञ्चमः पक्षः सम्यक्। कुतः ? अश्रुतत्वात्— अश्रुतकल्पना, स्वार्थत्यागः, प्राप्तबाधश्चेति दोषत्रयापत्तेरिति भावः ॥ २९ ॥

## प० पक्षः ॥ अग्रहणादिति चेत् ॥ ३० ॥

अग्रहणात्—आज्यभागयोः प्रत्यक्षश्रुतत्वेन चोदकशास्त्रं तदतिरिक्तानङ्गकलापमेव गृहमेधीये प्रापयति। आज्यभागयोर्ग्रहणं न करोति चोदकशास्त्रमिति चेत्—॥ ३० ॥

## न तुल्यत्वात् ॥ ३१ ॥

नैवमपि युक्तम्। तुल्यत्वात्--सर्वधर्मप्रापकवाक्यस्य प्रकृतिवदित्यस्य तुल्यत्वात्। यदि पृथग्वाक्यप्रापिता धर्माः स्युस्तदा स्यादेवं कदाचित्।' एकवाक्यप्रापितेषु केषाचिद्ग्रहणं केषाचिदग्रहणमिति न संभवतीति भावः ॥ ३१ ॥

## तथा तद्ग्रहणे स्यात् ॥ ३२ ॥

तथा--यथा सप्तदशसामिधेनीस्थले 'सप्तदश सामिधेनीरनुब्रूयात्' इत्यनारभ्याधीतमेकं वाक्यं, अपरं च अध्वरकल्पादिषु 'सप्तदश सामिधेनीरन्वाह'। इत्येवं वाक्यद्वयं प्रत्यक्षं, तथा प्रकृते प्रत्यक्षं वाक्यद्वयं चेदेवं तद्वदुपसंहारो युक्तः स्यात्। अत्र तु एकमानुमानिकमिति वैषम्यमतः सप्तमः पक्षोऽपि न शोभन इति भावः ॥ ३२ ॥

## सि० ॥ अपूर्वतां तु दर्शयेद् ग्रहणस्यार्थवत्त्वात् ॥ ३३ ॥

उपर्युपरस्थापिताखिलपक्षनिरासपूर्वकसिद्धान्तज्ञापकस्तुः। ग्रहणस्य--आज्यभागग्रहणस्य, अपूर्वता--दर्शपूर्णमासप्रकृतिभिन्नतां दर्शयेत्। विध्याधिक्यं प्रदर्शयति। विकृतौ-गृहमेधीये पुनर्वाक्यमिति यावत्। कुतः? अर्थवत्त्वात्--तथा चेदेव तस्य सफलत्वादिति भावः ॥ ३३ ॥

गृहमेधीये स्विष्टकृद्धोमादेरनुष्ठानाधिकरणम् ॥ १० ॥

## ततोऽपि यावदुक्तं स्यात् ॥ ३४ ॥

गृहमेधीये यथा 'आज्यभागौ यजती'ति श्रुतं, तथा 'अग्नये स्विष्टकृते समवद्यति' 'इडामुपह्वयते' इति श्रवणम्। तत्र एकेन आकाङ्क्षाया

निवृत्तत्वादन्यत्र कार्यमित्याशङ्कायामाह— ततोऽपि कर्मभावाकाङ्क्षापूरकत्वेन युगपत् खले कपोतन्यायेनान्वित प्रत्यक्षश्रुत यावदुक्तं सर्वमेव स्यात् । अनुष्ठेयमित्यर्थः ॥ ३४ ॥

गृहमेधीये प्राशित्रादिभक्षणाभावाधिकरणम् ॥ ११ ॥

## सि० ॥ स्विष्टकृति भक्षप्रतिषेधः स्यात्तुल्यकारणत्वात् ॥ ३५ ॥

'आज्यभागौ यजतीत्यत्र पञ्चम परिसङ्ख्यापक्षमाश्रित्य कृतचिन्तेयम् । स्विष्टकृति— अग्नये स्विष्टकृते समवद्यतीति श्रूयमाणे स्विष्टकृद्धोमे, भक्षप्रतिषेधः—भक्षस्य-प्राशित्रादिभक्षणस्य प्रतिषेध — निवृत्ति । कुत ' तुल्यकारणत्वात्- एकफलजनकत्वात् । यद्वाक्यमितरनिवर्तकमिति गम्यते तत्र तद्वाक्य समानजातीयमेव निवर्तयति । आज्यभागवाक्य समानजातीय होममात्रं निवर्तयति । स्विष्टकृद्वाक्य तु सजातीय भक्ष व्यवर्तयति । द्वयोरपि शेषप्रतिपत्तिरूपसंस्कारजनकत्वादिति भाव ॥ ३५ ॥

## पू० ॥ अप्रतिषेधो वा दर्शनादिडायां स्यात् ॥३६॥

अप्रतिषेधो वा—भक्षप्रतिषेधाभाव एव । कस्मात् ? ' इडामुपह्वयति ' इति भक्षणार्थस्य इडोपाह्वानस्य अत्र इडायां दर्शनात्—श्रवणादित्यर्थ । यथा स्विष्टकृत्स्वसजातीय निवर्तयति । तथा इडामुपह्वयतीति भक्षविधिः स्वजातीयं भक्ष व्यवस्थापयतीति भावः ॥ ३६ ॥

## सि० द०॥ प्रतिषेधो वा विधिपूर्वस्य दर्शनात् ॥३७॥

' इडामुपह्वयतीति इडोपाह्वानस्य दर्शनमुक्तं तत् ' इडामेवावद्यति, न प्राशित्रमुपहूय प्राश्नाति' इति विधिपूर्वस्य दर्शनात्--विधानात्, प्रतिषेध एव प्राशित्रादिभक्षणस्य । प्रथमं चोदकेन प्राप्ति शेषस्य प्रतिपत्ति-

कर्मसमान्यस्य प्राप्तिः । तदनन्तरं स्विष्टकृद्विधिना परिसङ्ख्यया । एवं स्वातिरिक्तस्य निवृत्तौ सत्या पुनरिडाविधिः तावन्मात्रे अभ्यनुज्ञारूपः । नेतरप्रापक इति भावः ॥ ३७ ॥

प्रायणीयातिथ्ययोः शंय्विडान्तता नियमाधिकरणम् ॥ १२ ॥

## पू० ॥ शंय्विडान्तत्वे विकल्पः स्यात् परेषु पत्न्यनूयाजप्रतिषेधः अनर्थकः स्यात् ॥ ३८ ॥

ज्योतिष्टोमे ' शंय्वन्ता प्रायणीया सन्तिष्ठते । न पत्नीः संयाजयन्ति ' ' इडान्ता आतिथ्या सन्तिष्ठते । नानुयाजैश्चरन्ति ' इति श्रूयते । तत्र **शंय्विडान्तत्वे—** प्रायणीयेष्ट्यां ' तच्छंयोरावृणीमह० इत्यनूच्यमाने शंयुवाके ' अध्वर्युराहवनीये परिधीन् प्रहरति ' इति शंय्वन्तत्वे आतिथ्यायामिष्टौ च इडाभक्षणान्तत्वप्रतिपादकवाक्यद्वये **परेषु** फलीकरणहोमप्रायश्चित्तहोमकपालोद्वासनप्रभृतिषु शंय्विडोत्तरवर्तिकर्मसु **विकल्पः—** व्रीहियववद्विकल्पेनानुष्ठानं स्यात् । प्रायणीयायाः शंय्वन्तत्वस्य आतिथ्यायायाः इडान्तत्वस्य च नियतत्वे तु तदुत्तरवर्तिपत्नीसंयाजानुयाजयोः प्राप्त्यभावेन तद्विषयको निषेधः अनर्थकः स्यात् । प्रसक्तं प्रतिषिध्यते इति न्यायादिति भावः । विकल्पेनानुष्ठाने कृते पत्नीसंयाजानूयाजयोः प्रसक्त्या तद्विषयकः प्रतिषेधः समुपद्यत इत्याशयः ॥ ३८ ॥

## सि० ॥ नित्यानुवादो वा कर्मणः स्यादशब्दत्वात् ॥ ३९ ॥

**नित्यानुवादो वा—** शंय्विडान्तेत्यनेन पत्नीसंयाजाभावस्य अनूयाजाभावस्य च क्लृप्तत्वात् ' नान्तरिक्षे न दिवि चिन्वीतेतिवन्नित्यानुवाद एव स्यात् शंय्विडान्तत्वस्तावकः । तथा च यत्नलाघवम् । **कर्मणः—** शंय्विडोत्तरकर्मणः, **अशब्दत्वात्—** अविहितत्वात्, शंय्विडान्तत्वमेव । न विकल्प इति भावः ॥ ३९ ॥

प्रायणीयातिथ्ययोः पूर्वाभ्यामेव शंयिडाभ्यां संस्थाधिकरणम् ॥१२॥

## पू० ॥ प्रतिषेधवत्त्वाच्चोत्तरस्य परस्तात्प्रतिषेधः स्यात् ॥ ४० ॥

दर्शपूर्णमासयो 'द्वौ शंयू द्वे इडे' इति शंयुद्वयमिडाद्वयं च श्रुतम्। तत्र शंयिडा-तेलनेन को वा शंयु स्वीकार्य, का इडा चेति संशये उत्तरस्य—द्वितीयस्य शंय्वादे परस्तात्यानि प्राक्तनकर्माणि तेषां प्रतिषेधः स्यात । प्रतिषेधवत्त्वात्— प्रतिषेधवचनस्य सार्थकत्वादित्यर्थ । पत्नीसंयाजानुयाजयो उत्तरशंयिडापूर्वदेशत्वेन प्राप्त्यभावात् प्राप्त निषेध सफल इति भाव ॥ ४० ॥

## सि०॥ प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात् ॥४१॥

वचनात्—शंयिडान्तेति वचनात्, प्राप्तेर्वा- प्रथमयो शंयिडयोरूर्ध्वं उपरमनिमित्तस्य प्राप्ते उक्तवाक्यद्वये शंयिडाशब्देन पूर्वयोरेव ग्रहणम्। अन्यथा अतिक्रमः—निमित्तातिक्रम स्यात । 'मासि छन्ने' इत्येकपदश्रुत्या सम्पूर्णकर्मस्याघातत्वे उपरम एव वाक्यद्वये निमित्तत्वेन विधीयते । तत्र विशेषस्याश्रवणात् उपस्थित परित्यज्यानुपस्थितग्रहणस्यायुक्तत्वेन निमित्तप्राप्तौ नैमित्तिकाकरणे निमित्तातिक्रमदोष स्यादेवेति पूर्वाभ्यामेव शंयिडाभ्या प्रायणीयातिथ्ययो संस्थान--समाप्तिर्नोत्तराभ्यामिति भाव ॥ ४१ ॥

## प्रतिषेधस्य त्वरायुक्तत्वात् तस्य च नान्यदेशत्वम् ॥ ४२ ॥

तस्य-शंयुप्रभृतेः, अन्यदेशत्वम्- पत्नीसंयाजानूयाजोत्तरदेशवृत्तित्व, न- इष्ट न । कुत ? प्रतिषेधस्य-' न पत्नी संयाजयन्ति, नानूयाजैश्चरन्तीति निषेधस्य त्वरायुक्तत्वात्— ब्राह्मणग्रन्थे त्वर्यमाणत्वलिङ्गदर्शनात् । तथा हि--' देवासुरा सत्त्रमभजन्त। अथ देवा सत्त्रस्याभजन्त।

अर्वाङ्मसुराः । तदसुरैः सत्यमनून्यमानं देवानयाक्रामत् । ते प्रायणीयं निरवपन् । तच्छंयंतमासीत् । अथासुरा यज्ञमायंस्तनो यज्ञस्तत्वर इति । तमेवं कृत्वा त्वरितमाद्रियन्ते' इति । तथा 'आतिथ्यं निरवपन् । तदिडान्तमासीत् । अथासुरा यज्ञमायंस्ततो यज्ञस्तत्वर इति । तदिडान्तमेव कृत्वा त्वरितमाद्रियन्ते' इति त्वरायुक्तस्तु पूर्वमेवापक्षते नोत्तरम् । तस्मात् प्रथमे शंय्विडे ग्राह्ये नोत्तरे इति सिद्धम् ॥ ४२ ॥

## उपसदामपूर्वत्वाधिकरणम् ॥ १४ ॥

## पू० ॥ उपसत्सु यावदुक्तमकर्म स्यात् ॥ ४३ ॥

ज्योतिष्टोमे 'षडुपसद उपसाद्यन्ते' इति प्रकृत्य 'अप्रयाजास्ता अननुयाजाः' इति श्रूयते । तत्र प्रयाजानुयाजयोः प्रतिषेधात् तयोरकर्म—तान् वर्जयित्वा यावदुक्तं— चोदकप्राप्त तदन्यत् सर्वमङ्गजातमनुष्ठेयं स्यादिति ॥ ४३ ॥

## स्रौवेण वा अगुणत्वात् शेषप्रतिषेधः स्यात् ॥ ४४ ॥

स्रौवेण वा—उपसत्प्रकरणे 'स्रुवेणाघारमाघारयति' इति वाक्यश्रवणात् यावच्छ्रुतं तदतिरिक्ताङ्गप्रतिषेधः स्यात् । न निखिलस्य । अगुणत्वात्--प्राकृतगुणबोधकत्वाभावात्र गुणविधायकत्वेन चारितार्थ्यं तस्य वाक्यस्येति भावः ॥ ४४ ॥

## अप्रतिषेधो वा प्रतिषिध्य प्रतिप्रसववत् ॥४५॥

अप्रतिषेधो वा—'स्रुवेणाघारमाघारयतीति' वाक्येन आघारातिरिक्ताङ्गकलापस्य नैव प्रतिषेधः क्रियते । अपि तु 'नान्यामाहुतिं पुरस्ताज्जुहुयात्' इति उपसद्धोमात् प्राक् प्रतिषिद्धस्य होमसामान्यस्य प्रतिप्रसवार्थं तद्वाक्यमिति न वैयर्थ्यं तस्य । अतो वैयर्थ्यभिया न तस्य परिसङ्ख्यार्थपरत्वं वाच्यम् ॥ ४५ ॥

## सि० ॥ अनिज्या वा शेषस्य मुख्यदेवतानभीज्यत्वात् ॥ ४६ ॥

' स्रुवेणाघारमाघारयतीति वाक्यस्य वैयर्थ्यप्रसङ्गात् शेषस्य--आश्रयमाणप्राकृतहोमानां, अनिज्या वा— इज्याभावः— अकरणमेवेत्यर्थः । न च ' प्रतिषिध्य प्रतिप्रसव ' इत्येवं तद्वाक्यसार्थक्यं वाच्यम् । कुतः ? मुख्यदेवतानभीज्यत्वात्— ' नान्यामाहुतिं पुरस्ताज्जुहुयात् । यदन्यामाहुतिं पुरस्ताज्जुहुयात् वैकृतीम् । अन्यन्मुखं कुर्यादाग्नेय्याहुतेः । अग्निर्हि मुखम् । स्रुवेणाघारमाघारयति । नान्यं यजते । आग्निमनीकं सोमं शल्यं विष्णुतेजनमिति श्रुतेः अग्निभिन्नसोमादिमुख्यदेवतासम्प्रदानकाहुतीनां प्राथम्यनिषेधतात्पर्यकत्वात् । प्राप्ता अग्न्यातिरिक्तमुख्यदेवता अनभीज्या पुरस्तात् । तस्मादग्निरेव प्रथमं इज्यते इति भावः ॥ ४६ ॥

अवभृथस्यापूर्वत्वाधिकरणम् ॥ १५ ॥

## पू० ॥ अवभृथे बर्हिषः प्रतिषेधात् शेषकर्म स्यात् ॥ ४७ ॥

ज्योतिष्टोमे ' वारुणेनैककपालेनावभृथमभ्यवयन्ति ' इत्यवभृथः श्रूयते । तत्र ' अपबर्हिषः प्रयाजान् यजति । अपबर्हिषावनूयाजौ यजति ' इत्याम्नातम् । तत्रावभृथे बर्हिषः प्रतिषेधात् तद्भिन्नं प्राकृतं सर्वं शेषकर्म स्यात् । कस्मादिति चेत् अत्र चोदकशास्त्रस्य प्रथमतः प्रवृत्त्यभावे बर्हिषः प्राप्त्यभावात् ' अपबर्हिष ' इति तन्निषेधोऽनर्थकः स्यात् । अतश्चोदकशास्त्रं प्रथममेव प्रवर्तत इत्यायातम् । तथा च प्रकृतिवद्विकृतिरिति श्रुतबर्हिर्निषेधात् बर्हिर्भिन्नं प्राकृतमनुष्ठेयमित्यर्थात्सिध्यतीति भावः पूर्वपक्षिणः ॥ ४७ ॥

## आज्यभागयोर्वा गुणत्वाच्छेषप्रतिषेधः स्यात् ॥ ४८ ॥

'अप्सुमन्तावाज्यभागौ यजति', इत्याज्यभागयोः 'अप्सुमन्ताविति गुणत्वात्- गुणत्वश्रवणात् अवभृथ एवाज्यभागौ यजतीति श्रवणात् तद्भिन्नशेषस्य प्रतिषेधः परिसङ्ख्या स्यात् ॥ ४८ ॥

प्रयाजानां त्वेकदेशप्रतिषेधादवाक्यशेषत्वं तस्मान्नित्यानुवादः स्यात् ॥ ४९ ॥

'अपबर्हिषः प्रयाजान् यजतीति वाक्ये प्रयाजानां त्वेकदेशप्रतिषेधात्- बर्हिर्मात्रस्य निषेधात्, अवाक्यशेषत्वं— तद्बोधकवाक्यस्य शेषः न विधिर्नास्ति। परिसङ्ख्यापक्षे इति शेषः। तस्मात् नित्यानुवादः स्यात्। 'आज्यभागौ यजति'त्यनेन स्वेतरनिषेधे सति प्रयाजस्यापि निषेधः सिद्धः। तथा सति अपबर्हिषः प्रयाजान् यजतीति वाक्यं बर्हिःप्रतिषेधं प्रयाजविधिं च करोतीति वाच्यम्। तथा च वाक्यभेदः। मन्मते तु चोदकशास्त्रेण 'प्राप्तप्रयाजानुवादेन बर्हिःप्रतिषेधमात्रमिति कर्तव्यम्'। न च वाक्यभेदः। तस्मादाज्यभागौ यजतीत्ययं चोदकप्राप्तस्य नित्यानुवाद इति भावः ॥ ४९ ॥

सि० ॥ आज्यभागयोर्ग्रहणं नित्यानुवादो गृहमेधीयवत् स्यात् ॥ ५० ॥

अत्राज्यभागग्रहणं गृहमेधीयेष्टिवत् यावदुक्तमेव स्यात्। नात्र चोदकस्य प्रवृत्तिरित्यर्थः। अपबर्हिष इत्यनेन बर्हिर्भिन्नप्रयाजप्राप्तौ इति नोक्तदोषः। तस्मादप्सुमन्तावयमवभृथे विधीयते इति निष्कृष्टोऽर्थ इति भावः ॥ ५० ॥

वाजपेयादिविकृतौ प्राकृतैकादशयूपादीनां खादिरत्वादिनियमविधित्वाधिकरणम् ॥ १६ ॥

सि० ॥ विरोधिनामेकश्रुतौ नियमः स्याद्ग्रहणस्यार्थवत्त्वात् शरवच्च श्रुतितो विशिष्टत्वात् ॥ ५१ ॥

'शरदि वाजपेयेन स्वाराज्यकामो यजेत' इति ज्योतिष्टोमान्यसंस्थात्वेन स्वाराज्यफलको वाजपेययागो विहितः। तत्र 'खादिरो यूपो भवति' 'बृहत् पृष्ठं भवति,' तथा नैवारन्यायामिष्टौ 'मध्यमो यवमयः पुरोडाश.' इत्याम्नानम्। तत्र खादिर एव यूपः, बृहदेव पृष्ठम्, मध्यमः पुरोडाश एव यवमय. इत्येव नियमः। न खादिरो वा पालाशो वा, बृहद्वा रथन्तरं वा, मध्यमो धान्यो वेति प्रकृतिवद्विकल्पः। कुतः? **विरोधिनामेकश्रुतौ**- प्रकृतौ विकल्पितानां मध्ये एकस्य श्रुतौ नियम एव स्यात्। **ग्रहणस्य—** एकग्रहणशास्त्रस्य, **अर्थवत्त्वात्—** सफलत्वात्। **श्रुतितः—** प्रत्यक्षश्रुतित, खादिरादीनां **विशिष्टत्वात्—** प्रबलत्वात् ते खादिरादय **शरवत्—** शराः कुशानिवाऽनुमानिकान् व्रीहिरथन्तरादीन् निवर्तयन्तीति ,गारः ॥५१॥

## शं० ॥ उभयप्रदेशादिति चेत् ॥ ५२ ॥

-प्रकृतितः **उभयप्रदेशात्—** द्वयोराम्नानात् कथमेकस्य ,बाधः, विदोषा परिसङ्ख्या अयुक्तेति चेत्- ॥ ५२॥

## प्र० प्र० ॥ शरेष्वपीति चेत ॥ ५३ ॥

**शरेष्वपीति—** शरेषु श्रुतेष्वपि कुशानां बाधः कथं सिध्यति। ते नैव निवर्तेरन्निति चेत्– ॥ ५३ ॥

## विरोध्यग्रहणात्तथा शरेष्वपीति चेत् ॥ ५४ ॥

**विरोध्यग्रहणात्—** प्रकृतौ कुशविरोधिशराग्रहणात्— तयोः प्रकृतौ विकल्पाभावात्, **शरेष्वपि—** विकृतावपूर्वत्वेन श्रुतेषु शरेष्वपि, **तथा**--कुशबाधकत्वं युक्तमिति चेत् ॥ ५४ ॥

## तथोत्तरस्मिन् ॥५५॥

प्रकृतौ विरोध्यग्रहण न बाधकत्वे निमित्तम्। अपि तु **उत्तरस्मिन्**- विकृतौ विरोधिग्रहणमेव **तथा**—बाधकत्वे बीजम्। तच्च कुशविरोधिशर इव व्रीहिविरोधियवे तुल्यमेवेति चेत्— ॥ ५५ ॥

## श्रुत्यानर्थक्यमिति चेत् ॥ ५६ ॥

श्रुत्यानर्थक्यं—प्रकृतौ श्रूयमाणव्रीहिविरोधियवग्रहणेनैव व्रीहीणां बाधे सिद्धे पुनस्तद्बाधार्थं विकृतौ 'यवमयो मध्यमः पुरोडाशः' इति श्रुतेरानर्थक्यमिति चेत्— ॥ ५६ ॥

## ग्रहणस्यार्थवत्त्वादुभयोरप्रवृत्तिः स्यात् ॥ ५७ ॥

'यवमयो मध्यमः पुरोडाशः' इति ग्रहणस्य—यवग्रहणस्य, नियमविधित्वात् उभयोः— व्रीहियवयोः, अप्रवृत्तिः—प्रवृत्त्यभावः स्यात् ॥ ५७ ॥

काम्येष्टिषु प्राकृतद्रव्यदेवताभिः प्राकृतद्रव्यदेवतस्य निवृत्त्यधिकरणम् ॥ १७ ॥

## सि० ॥ सर्वासां च गुणानामर्थवत्त्वाद्ग्रहणमप्रवृत्तेः स्यात् ॥ ५८ ॥

'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः,' 'अग्नीषोमीयमेकादशकपालं निर्वपेद्ब्रह्मवर्चसकामः, ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः' इत्यादयः काम्येष्टयः श्रूयन्ते। तत्र प्राकृतं द्रव्यदेवतं निवर्तते, उत नेति संशये आह— सर्वासां —काम्येष्टिसर्वस्वन्युत्पत्तिचोदनाना काम्येकाण्डोक्तविधीनामिति यावत्। च गुणानां - देवतादीनां, अर्थवत्त्वात् - तत्तत्फलभावनया सम्बद्धत्वात्, अप्रवृत्तेः— प्राकृतद्रव्यदेवतासम्बन्ध्याकांक्षाया अभावात् चोदकप्रवृत्त्यभावेन तद्ग्रहणं— वैकृतद्रव्यदेवताग्रहणमेव स्यात्। न प्राकृतं तद् ग्रहणम्। तन्निवृत्तिरेव स्यादिति भावः ॥ ५८ ॥

## शं० ॥ अधिकं स्यादिति चेत् ॥ ५९ ॥

अधिकं—प्राकृतवैकृतयोरुभयोः समुच्चयः स्यादिति चेत्- ॥५९॥

## शं० नि० ॥ नार्थाभावात् ॥ ६० ॥

न अर्थाभावात्— आकाङ्क्षाया अभावेन समुच्चयो न स्यादित्यर्थः ॥ ६० ॥

विकृतौ सोमापौष्णपशौ श्रुतेनौदुम्बरत्वेन प्राकृतस्य खादिरत्वस्य निवृत्त्यधिकरणम् ॥ १८ ॥

## सि० ॥ तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः, प्रवृत्तौ हि विकल्पः स्यात् ॥ ६१ ॥

पशुफलके सोमापौष्णदेवताके पशुयागे 'औदुम्बरो यूपो भवति' इति श्रुतम् । तत्र खादिर-औदुम्बरयोः समुच्चयः, उत प्राकृतस्य खादिरस्य निवृत्तिरिति संशये सिद्धान्त. । तथा—पूर्वाधिकरणवत् प्राकृतद्रव्यबाधः । कुत ? एकार्थविकारे--एकफलकप्राकृतखादिरद्रव्यविरुद्धौदुम्बरद्रव्यविधौ सति प्राकृतस्य खादिरद्रव्यस्य अप्रवृत्तिः—प्रवृत्त्यभाव. । हि—यतः, प्रवृत्तौ विकल्पः—विषमशिष्टो विकल्पः स्यात् । चोदकप्राप्तस्य प्रत्यक्षश्रुतस्य चेत्यर्थः । न चैव युक्त । अतो निवृत्तिः खादिरस्येति भावः ॥ ६१ ॥

## शं० ॥ यावच्छ्रुतीति चेत् ॥ ६२ ॥

चोदकप्राप्तं प्रत्यक्षश्रुतं चेति द्वयमपि ग्राह्यम् । सत्येवं न निवृत्तिश्चोदकानुग्रहोऽपीति चेत्-- ॥ ६२ ॥

## शं० नि० ॥ न प्राकृतावशब्दत्वात् ॥ ६३ ॥

न—युगपद्द्वयं न ग्राह्यम् । कुतः ? प्रकृतौ—प्रकृतौ विकृतौ चेत्यर्थः । अशब्दत्वात्— अविहितत्वात् । प्रकृतौ खादिरे यूपे पशुनियोजन विहितम् । विकृतौ औदुम्बरे यूपे । उभयत्र नियोजन तु शास्त्रद्वयाविरुद्धमिति भावः ॥ ६३ ॥

ब्रह्मवर्चसकामैः शुक्लादिगुणविशिष्टव्रीहिभिरेव यागाधिकरणम्॥१९॥

## विकृते त्वनियमः स्यात् पृषदाज्यवद्ग्रहणस्य गुणार्थत्वादुभयोश्च प्रविष्टत्वाद्गुणशास्त्रं यदेति स्यात् ॥ ६४ ॥

'सोमारौद्रं घृते चरुं निर्वपेच्छुक्लानां व्रीहीणां ब्रह्मवर्चसकामः, सोमारौद्रं चरुं निर्वपेत्कृष्णानां व्रीहीणामभिचरन्, सौर्यं चरुं निर्वपेच्छुक्लानां व्रीहीणां, 'नैर्ऋतं चरुं निर्वपेत्कृष्णानां व्रीहीणाम्' इत्यादयः विकृतीष्टय आम्नाताः । ताः व्रीहिभिर्यवैर्वानुष्ठेयाः, उत शुक्लादिगुणविशिष्टव्रीहिभिरेवेति विचारे आह पूर्ववादी **विकृते त्विति**— उक्तविकृतिषु विरोधिनां मध्ये अन्यतमस्मिन् गृह्यमाणे व्रीहियवयोरनियमः स्यात् । कुतः? प्रकृतवाक्ये **ग्रहणस्य**— व्रीहिग्रहणस्य, **गुणार्थत्वात्**— यथा 'पृषदाज्येनानूयाजान् यजति' अत्राऽऽज्यग्रहणं पृषत्वस्वरूपगुणविध्यर्थं तथा शुक्लादिगुणविध्यर्थं व्रीहिग्रहणमिति तेन नियमार्थत्वाभावात् **उभयोः**— व्रीहियवयोः, **प्रविष्टत्वात्**— चोदकशास्त्रेण प्राप्तत्वात् यदा शुक्लानामित्यादिगुणशास्त्रं तदा व्रीहिशास्त्रं स्यात् । इति यवशास्त्रप्रवृत्तेः बाधस्तत्र प्रवर्तत इति ॥ ॥ ६४ ॥

## सि० ॥ ऐकार्थ्याद्वा नियम्येत श्रुतितो विशिष्टत्वात् ॥ ६५ ॥

**ऐकार्थ्याद्वा**— पुरोडाशरूपैककार्यार्थं प्रवृत्तत्वात्तयोर्व्रीहियवयोर्मध्ये **श्रुतितः**—प्रत्यक्षश्रवणेन, **विशिष्टत्वात्**— आनुमानिकयवशास्त्रप्राप्तयवापेक्षया बलवत्वात्, **नियम्येत**—व्रीहीणां 'अयोगव्यवच्छेदं' कुर्यात् । शुक्लादिगुणविधानार्थं व्रीहीणामनुवाद इत्युक्तौ तु फलोद्देशेन यागस्य विधानं, तत्रैव व्रीहीनुद्दिश्य गुणविधिरिति वाक्यभेदापत्तिः । विरुद्धत्रिकद्वयापत्तिश्च । अतो गुणद्रव्यविशिष्टयागविधानं फलोद्देशेनैव वक्तव्यम् । सत्येवं न काप्यनुपपत्तिर्नियमविधानमिति यवा निवर्तन्त एवेति भावः ॥ ६५ ॥

## विरोधित्वाच्च लोकवत् ॥ ६६ ॥

**विरोधित्वाच्च**--एकस्मिन् कार्ये ये विकल्पेन साधकास्ते परस्परं विरोधिनस्तेषां न सहप्रवृत्तिरिति लोके दृष्टत्वादपि यत्नानां निवृत्तिरित्यर्थः ॥ ६६ ॥

## क्रतोश्च तद्गुणत्वात् ॥ ६७ ॥

**क्रतोः**--ब्रह्मवर्चसादिफलकस्य यागस्य, **तद्गुणत्वात्**-- शुक्लादिगुणवत्त्वात्, प्राथमिकशाब्दबोधसमये शुक्लादिकं न व्रीहिगुणत्वेन प्रतीयते । निखिलगुणविशिष्टक्रतुविधानात् क्रतुगुणत्वेनैव शुक्लादीनां प्रथमं प्रतीतिः । *व्रीहिगुणताप्रतीतिस्तु आरुणीन्यायेन पश्चाद्भाविनीति व्रीहीणां* यागसम्बन्धे शुक्लादिगुणसम्बन्धे च विरुद्धत्रिकद्वयापत्तिदोषस्य नावसर इति भावः ॥ ६७ ॥

## पृषदाज्ये समुच्चयाद्ग्रहणस्य गुणार्थत्वम् ॥६८॥

**पृषदाज्ये** दधिघृतयोः **समुच्चयात्**--मिश्रणात्, उक्तवैगुण्येण तत्र **ग्रहणस्य**--आज्यग्रहणस्य, **गुणार्थत्वमिति** ज्ञेयम् ॥ ६८ ॥

## क्रत्वन्तरे वा अतन्न्यायत्वात् कर्मभेदात् ॥ ६९ ॥

दर्शपूर्णमासयोः चतुरवत्तं पञ्चावत्तं च श्रुतम् । अग्नीषोमीयपशुयागे तु *' यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या ' इत्याम्नातम् ।* तत्र क्रत्वन्तरे पशौ पञ्चावत्तिचतुरवत्तिनोः कर्मभेदात् **अतन्न्यायत्वात्**--*लोकवदिति सूत्रोक्तन्यायस्य प्रसरो नास्तीत्यर्थः* ॥ ६९ ॥

**पञ्चावत्तैव वपा कार्येत्यनेनाङ्गेष्वपि पञ्चावत्तविधानाधिकरणम् ॥ २० ॥**

## यथाश्रुतीति चेत् ॥ ७० ॥

'यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या' अत्र वपाया-मेव पञ्चावत्तत्वश्रवणात् यथाश्रुति कार्यमिति चेत्— ॥७०॥

## सि० ॥ न चोदनैकत्वात् ॥ ७१ ॥

न वपायामेव पञ्चावत्तता । अपि तु अङ्गेष्वपि । कुतः? चोदनैकत्वात्— 'यदग्नीषोमीयं पशुमालभेत' इत्येकचोदनाविहित-यागरूपत्वाद्वपायागाङ्गयागयोः । पञ्चावत्तैव वपा कार्या इत्यत्र पञ्चसङ्ख्याविशिष्टवपासम्बन्ध्यवदानस्य विधिरिति वक्तुमशक्यमेव । अवदानस्य प्रकृतित प्राप्तत्वात् । नापि वपासम्बन्ध्यवदानमुद्दिश्य पञ्चसङ्ख्या विधातुं शक्या । विशिष्टोद्देश्यत्वे वाक्यभेदप्रसङ्गात् । अतः केवलावदानमुद्दिश्य पञ्च-सङ्ख्याया विधिर्वाच्यः । स च प्रकरणात् प्रकृतयागसम्बन्धीति सिध्यति । प्रकृतौ च 'यदग्नीषोमीयं पशुमालभेतेत्यनेन विहितो यो यागस्तत्सम्बन्ध्य-वदानपञ्चावत्तं कुर्यादिति फलितम् । 'यदग्नीषोमीयमिति वाक्यविहित-यागस्याभ्यासात्मको वपायागः अङ्गयागश्चेति, वपायागेऽङ्गयागे च पञ्चावत्तं सिद्धमिति निष्कर्षः ॥ ७१ ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां दशमाध्यायस्य सप्तमः पादः ॥ श्रीः ॥

---

## ॥ अथ दशमाध्यायस्य अष्टमः पादः ॥

प्रदेशानारभ्यविधानयोर्निषेधस्य पर्युदासत्वाधिकरणम् ॥ १ ॥

### प्रतिषेधः प्रदेशेऽनारभ्यविधाने प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात् ॥ १ ॥

अस्मिन्नष्टमे पादे नञर्थविचारा मुख्यतः क्रियते । तत्र महापितृयज्ञे चोदकेन प्रदिष्टे ऋत्विग्वरणे ' न होतारं वृणीते नाऽऽर्षेयम् ' इति श्रुतम् । तथा-अनारभ्यवादे प्राप्ते ' आश्रावयेति चतुरक्षरम् । अस्तु श्रौषडिति चतुरक्षरम् । यजेति द्व्यक्षरम् । ये यजामहे इति पञ्चाक्षरम् । द्व्यक्षरो वषट्कारः । एष वै प्रजापतिः सप्तदशो यज्ञेष्वन्वायत्तः ' इति । ततो ' नानुयाजेषु ये यजामहं करोति ' इति श्रुतम् । तत्र प्रदेशानारभ्यवादयोः **प्रतिषेधः**— विधिप्रतिषेधयोस्तुल्यप्रामाण्याद्विकल्पः, किंवा पर्युदास इति संशये **प्रदेशे**—महापितृयज्ञसमीपे चोदकप्राप्तस्य आर्षेयवरणस्यानारभ्यविधानेन प्राप्तस्य ये यजामहस्य प्रतिषेध प्राप्तप्रतिषिद्धरूपत्वाच्च तयोर्विकल्पः स्यात् ॥ १ ॥

### अर्थप्राप्तवदिति चेत् ॥ २ ॥

अर्थप्राप्तवदिति—यथा अर्थेन—रागेण प्राप्ते कलंजभक्षणादौ ' न कलंजं भक्षयेत् ' इति निषेधो बाधकः कलञ्जभक्षणस्य, तथा नानुयाजेष्वित्यादावप्यत्यन्तबाध स्यादिति चेत्—॥ २ ॥

### न तुल्यहेतुत्वादुभयं शब्दलक्षणम् ॥ ३ ॥

न । तुल्यहेतुत्वात् । प्रकृते उभयं—प्रवृत्तिनिवृत्तिरूप द्वयं शब्दलक्षणं—शब्दप्रमाणकम् । अतस्तुल्यम् । कलञ्जभक्षणादौ रागः

प्रवृत्तिनिमित्तम्। निवृत्तौ शब्दः कारणमिति वैषम्यम्। रागस्तु शब्दाद्दुर्बल इति युक्तस्तत्र बाध इति भावः ॥ ३ ॥

## सि० ॥ अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात् ॥ ४ ॥

अष्टदोषदुष्टत्वेनान्याय्यत्वाद्विकल्पो न प्रकृते। विरोधित्वान्नापि समुच्चयः। अपि तु वाक्यशेषः—एकवाक्यतापन्नः सन् विध्येकदेशः स्यात्। अवैयवरणभिन्नं सर्वं प्रकृतिवदनुष्ठेयम्। अनूयाजभिन्नासु यजतिषु ये यजामहः कार्यं इति भावः ॥ ४ ॥

न सोमेऽध्वरे इत्यस्य निषेधस्य नित्यानुवादत्वेनार्थवादत्वाधिकरणम् ॥ २ ॥

## अपूर्वे चार्थवादः स्यात् ॥ ५ ॥

दर्शपूर्णमासयोः आज्यभागौ प्रकृत्य 'न तौ पशौ करोतीति निषिध्य ततः 'न सोमेऽध्वरे' इत्याम्नातम्। तत्र सोमयागे आज्यभागस्य प्राप्त्यभावान्न पर्युदासोऽयम्। विकल्पस्यान्याय्यत्वान्नापि निषेधः। अपि तु अपूर्वे-केनापि प्रमाणेन प्राप्त्यभावे यो निषेधः स नित्यानुवादत्वादर्थवादः स्यात्। यथा सोमेऽध्वरे तौ न करोति तथा पशौ तौ न कुर्यात् इत्यस्य विधेः शेषोऽयमर्थवाद इति भावः ॥ ५ ॥

नातिरात्रे षोडशिनमित्यस्य विकल्परूपत्वाधिकरणम् ॥ ३ ॥

## शिष्ट्वा तु प्रतिषेधः स्यात् ॥ ६ ॥

प्रथमाधिकरणे विधेः पर्युदासस्वरूपं प्रदर्शितम्। द्वितीये अपवाद इत्यभिहितम्। तृतीये प्रतिषेधस्वरूपमुच्यते। शिष्ट्वा— प्रमाणान्तरेण विधानं कृत्वा पुनर्यो नञर्थः स प्रतिषेधः— निषेध एव स्यात्।

यथा ज्योतिष्टोमस्य पञ्चम्या संस्थाया 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इत्यत्र न पर्युदासः। नाप्यर्थवादः। व्याघातात्। अपि तु निषेध इति भावः॥ ६॥

अनाहुतिर्वै जर्तिलाश्चेत्यादिनिषेधस्यार्थवादत्वाधिकरणम्॥४॥

## सि०॥ न चेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादः स्यादानर्थक्यात् परसामर्थ्याच्च॥ ७॥

'जर्तिलयवाग्वा जुहुयात् गवेधुकयवाग्वा वा जुहुयात्। न ग्राम्यान् पशून् हिनस्ति नारण्यान्। अथो खल्वाहुरनाहुतयो वै जर्तिलाश्च गवेधुकाश्च पयसाऽग्निहोत्रं जुहुयात्' इत्याम्नायते। अत्र जर्तिलयवाग्वादीनां विधिनिन्दयोः श्रवणात् पूर्ववदेव विकल्पो वाच्य इति चेदाह- **न चेदिति**। **अन्यं**-अन्यनिषेधं, **न प्रकल्पयेत्**--न लभ्येत चेत् स्याद्विकल्पः। **प्रक्लृप्तौ**-प्रकृतौ पयोविधिप्रक्लृप्तौ तच्छेषः **अर्थवाद एव स्यात्**। अन्यथा **परसामर्थ्यात्**-परद्रव्यविधानसामर्थ्यात् व्रीहियववद्विकल्पे सिद्धे निषेधोऽनर्थक--व्यर्थः स्यात्। ग्राम्यारण्यपशूनां हिंसाराहित्येन प्रशस्तावपि जर्तिलगवेधुकौ (आरण्यतिलगोधूमौ) अग्निहोत्रं प्रति आहुतित्वेनाप्रशस्तावेव। पय एव प्रशस्तम्। इत्थं महाभाग पयः स्तूयते इत्यर्थवादः स इति भावः॥ ७॥

त्रैयम्बकहोमेषु अभिघारणानभिघारणादीनामर्थवादत्वाधिकरणम्॥ ५॥

## पूर्वैश्च तुल्यकालत्वात्॥ ८॥

चातुर्मास्येषु त्र्यम्बकमन्त्रसयोगास्त्रैयम्बका एककपालसंस्कृता बहवः पुरोडाशा विहिताः। तान् प्रकृत्य 'अभिघार्या नाभिघार्या इति मीमांसन्ते। यदभिघारयेत् रुद्रायाऽऽस्ये पशूनभिदध्यात्। यन्नाभिघारयेन्न रुद्रायाऽऽस्ये पशूनभिदध्यात्। अथो खल्वाहुरभिघार्या एव। न हि हविरनभिघृतमस्तीति'। तथा 'होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः। यदि

जुहुयाद् यथापूर्वमाहुतीर्जुहुयात । यत्र जुहुयादग्नि परापतेन । तूष्णीमेव होतव्यम् । यथापूर्वमाहुतीर्जुहोति । नाग्नि परापतनीति ' ) अत्रापि **पूर्वे** — पूर्वाधिकरणोक्तन्यायैः, **तुल्यकालत्वात्**— तुल्ययोगक्षेमत्वादर्थवाद एव विधेयस्तुल्यम् इत्यतिदेशस्तस्य ॥ ८ ॥

आधाने उपवादस्य विकल्पत्वाधिकरणम् ॥ ६ ॥

## उपवादश्च तद्वत् ॥ ९ ॥

आधाने ' उपवीता वा एतस्याग्नयो भवन्ति, यस्याग्न्याधेये ब्रह्मा सामानि गायति । तस्मान्न ब्रह्मा सामानि गायति ' इति श्रूयते । अत्रापि **उपवादः**— उपवीता इति वाक्योक्तो वाद तद्वत्— ग्रहणाग्रहणवद्विकल्प एव । अत्र ब्रह्मपदशक्यार्थस्य ऋत्विज गानप्रसक्तेरभावात् तन्निषेधासम्भवेन विप्रत्वजातिद्वारा ब्रह्मपदस्य उद्गातरि लक्षणा । तस्य च गाननिषेधाद्गानविधानाच्च ' शिष्ट्वा तु प्रतिषेध स्यात् ' ( १०।८।६ ) इति न्यायातिदेशेन विकल्प इति भाव ॥ ९ ॥

## प्रतिषेधादकर्म इति चेत् ॥ १० ॥

**प्रतिषेधात्**— सामगानस्य निषेधात्, **अकर्म**— न तद्गान कार्यमिति चेत्—॥ १० ॥

## न शब्दपूर्वत्वात् ॥ ११ ॥

' रथन्तर सामाभिगायते गार्हपत्य आधीयमान ' इति **शब्दपूर्वत्वात्**— विधिविहितत्वात् न अकर्म इत्यर्थ ॥ ११ ॥

दीक्षितस्य क्रतुदानादिनिषेधस्य पर्युदासत्वाधिकरणम् ॥ ७ ॥

## पू०॥ दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात सर्वदानहोमपाकनिषेधः स्यात् ॥ १२ ॥

*ज्योतिष्टोमे ' दीक्षितो न ददाति, न जुहोति, न पचति ' इति* श्रूयते । अत्र **अविशेषात्**— सामान्येन श्रवणात् सर्वेषामेवोपदिष्टानामतिदिष्टाना च दानादीना निषेध स्यात् ॥ १२ ॥

## अक्रतुयुक्तानां वा धर्मः स्यात् क्रतोः प्रत्यक्षशिष्टत्वात् ॥ १३ ॥

'हिरण्यमात्रेयाय ददाति' 'दाक्षिणानि जुहोति' इत्यादिभिः क्रतुसंयुक्तदानहोमादिभिन्ना ये अक्रतुसंयुक्ताः पुरुषार्था दानहोमादयस्तेषां निषेधो धर्मः स्यात्। कुतः? क्रतोः— क्रत्वर्थस्य, प्रत्यक्षशिष्टत्वात्— साक्षाद्विहितत्वात्। अन्यथा तेषां वैयर्थ्यं स्यादिति भावः ॥ १३ ॥

## तस्य वाऽप्यानुमानिकमविशेषात् ॥ १४ ॥

तस्य— निषेधशास्त्रस्य विषयं दीक्षणीयादिषु आनुमानिकं— चोदकप्राप्तं प्रयाजादिकमेव। अपिः पुनरर्थस्य सङ्ग्राहकः। अविशेषात्— विशेषाभावात् अग्निहोत्रादिकमपि चोदकप्राप्तं ग्राह्यम् ॥ १४ ॥

## सि० ॥ अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यात् ॥१५॥

न पूर्वोक्तः कोऽपि पक्षः। अपि तु 'अहरहरग्निहोत्रं जुहोति' वाक्यशेषत्वाद्विधिवाक्यशेषत्वात् इतरपर्युदासः— अदीक्षितेन— दीक्षितभिन्नेन होतव्यमित्यर्थः स्यात्। प्रतिषेधे विकल्पापत्तिः स्यादिति भावः ॥ १५ ॥

वल्मीकहोमादिभिराहवनीयस्य बाधाधिकरणम् ॥ ८ ॥

## अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत्सन्दिग्धमाराद्विशेषाशिष्टं स्यात् ॥ १६ ॥

ज्योतिष्टोमे— 'पदे जुहोति, वर्त्मनि जुहोति' इत्याम्नातम्। राजसूये— 'वल्मीकवपामुपगृह्य जुहोति' इति च। तथाऽन्यत्र 'गार्हपत्ये पत्नीसंयाजान् जुह्वति' इति श्रूयते। अनारभ्य च 'यदाहवनीये जुह्वति तेन सोऽस्याभीष्टः प्रीतो भवती' ति च श्रुतम्। अत्र सामान्य

विशेषशास्त्रप्राप्तयोर्विकल्प, उत सामान्यप्राप्तस्य बाध इति संशये **विशेषशिष्टं**—सामान्यविशेषशास्त्रसंनिपाते यद्विशेषशास्त्रेण शिष्टं-विहितं तदेव स्यात्। **अविशेषेण**— सामान्यशास्त्रेण यदुपदिष्टं तत् **आरात्**-दूरम्। तत्र प्रवर्तत इत्यर्थः। अतः तत् ' यावद्विषय यत्किञ्चिद्विषय वा ' इति सन्दिग्धस्य विशेषशास्त्रेण बाधः। नन्वत्यन्तबाधापेक्षया ' पक्षे बाधः ' अर्थाद्विकल्प एवास्त्विति चेद्विकल्पस्य दोषानेकत्वादन्याय्यत्वमिति भाव ॥१६॥

वैमृधादिषु पुनः साप्तदश्यविधेर्वाक्यशेषत्वाधिकरणम् ॥ ९ ॥

## अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृतमाऽऽज्यभागवत् प्राकृतप्रतिषेधार्थम् ॥१७॥

' सप्तदश सामिधेनीरनुब्रूयात ' इत्यनारभ्याऽऽम्नात सामिधेनीसाप्तदश्यं प्रकृतौ विहितेन पाञ्चदश्येन बाधित सत् यावद्विकृतिषु प्राप्तमपि पुनः ' वैमृधे शन्तरक्लृप्तार्थे पशौ चातुर्मास्ये मित्रविन्दायों त्रैधातव्यामाग्रयणेष्ट्यां च साक्षाच्छ्रूयते ' सप्तदश सामिधेनीरन्वाहेति। तत्र पुनःश्रवणं किमर्थमित्याऽऽकाङ्क्षाया **अप्रकरणे**— प्रकरणमनारभ्याऽऽम्नातं यच्छास्त्रं विकृतिविशेषे पुनस्तथा श्रूयते, तत् आज्यभागवत् प्राकृताङ्गजातप्रतिषेधार्थम्। नान्यत् प्राकृतमङ्गं तत्र कुर्यादिति। अन्यथा पुनःश्रवणं व्यर्थं स्यादिति ॥ १७ ॥

## सि० ॥ वाक्यशेषो वा क्रतुना ग्रहणात् स्यादनारभ्यविधानस्य ॥ १८ ॥

वाक्यशेषो वा—प्रकरणपठितवाक्यशेषो वा वाक्यशेष एव अनारभ्याधीतं वाक्यम्। उभयं मिलित्वा एकमेवार्थं ब्रूते इत्यर्थः। अनारभ्याविधानस्य **क्रतुना ग्रहणात्**— क्रतुना सह सम्बन्धाग्रहणान्न द्वयोरप्येकार्थबोधकत्वे अन्यतरवैयर्थ्यशङ्कावसरः। विधीयमानसाप्तदश्यस्य

क्रतुसम्बन्धस्सामिधेनीसम्बन्धोऽपि ग्राह्यः । तत्र प्राकरणिकवाक्यं क्रतुसम्बन्धबोधकम् । अपरं च वाक्यं सामिधेनीसम्बन्धबोधकमिति नान्यतरस्य वैयर्थ्यमिति भावः ॥१८॥

**पृथिव्यै स्वाहेत्यादिविधिना अविहितस्वाहाकारेषु प्रदानेषु स्वाहाकारविधानाधिकरणम् ॥ १० ॥**

## मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात्स्यात् ॥ १९ ॥

कचिदर्थिहोमं प्रकृत्य 'पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा, वायवे स्वाहा' इति श्रूयते । 'वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' इत्यनारभ्यवचनं चास्ति । अत्र **मन्त्रेषु**—पृथिव्यै स्वाहेत्यादिस्वाहाकारान्तमन्त्रेषु, अनारभ्याधीतस्योक्तवचनस्य **अवाक्यशेषत्वं**—वाक्यशेषत्वं—उपसंहारो न—नास्तीत्यर्थः । कुतः ? **गुणोपदेशात्**—वर्णानुपूर्वीरूपगुणोपदेशात् । पूर्वाधिकरणे वाक्यवैयर्थ्यापत्तेः वाक्यशेषत्वमुक्तम् । अत्र तु मन्त्रे स्वाहाकारपाठस्य 'स्वाहा पृथिव्यै' इति विपरीतपाठनिवर्तकतया तस्य साफल्यमस्तीति बोध्यमिति भावः ॥ १९ ॥

## अनाम्नाते दर्शनात् ॥ २० ॥

**अनाम्नाते**— अपठितस्वाहाकारेऽपि, **दर्शनात्**— विधानस्य श्रूयमाणत्वात् । 'घृतेन द्यावापृथिवी आपृणेथाम्' इत्यौदुम्बर्यां जुहोति' । आन्त्रादवस्रावयति । भूमिगते स्वाहाकरोति' इति विधानस्य दर्शनादुपसंहारः पठितमन्त्रे तत्र तद्विधानमसङ्गतं स्यादिति भावः ॥ २० ॥

## प्रतिषेधाच्च ॥ २१ ॥

क्वचिच्च 'न स्वाहेति वचनं करोति' इति प्रतिषेधो दृश्यते । स उपसंहारपक्षे व्यर्थः । अतो नोपसंहारः । अवाक्यशेषत्वं तस्येति भावः ॥ २१ ॥

अग्न्यतिग्राह्ययोर्विकृतावुपदेशाधिकरणम् ॥ ११ ॥

## अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् ॥ २२ ॥

'य एवं विद्वानग्निं चिनुते' तथा— 'उपयम्भनं वा एत यज्ञस्य यदतिग्राह्याः' इति श्रुतमग्न्यतिग्राह्यं विकृतौ चोदकः प्रापयति वा नेति संशये अग्न्यतिग्राह्यस्य— अग्नेः अतिग्राह्यस्य च विकृतौ अप्रवृत्तिः । कुतः ! विकृतौ उपदेशात्— 'अथातोऽग्निमग्निष्टोमेना-नुयजति, तमुक्थ्येन, तमतिरात्रेणेत्यादिना । तथा 'यत्पृष्ठ्येऽतिगृह्णीयात् प्रांचं यज्ञ पृष्टानि सङ्गृण्हीयुर्यदुक्थ्येऽतिगृण्हीयादित्यादिना च । तस्मान्न विकृतावतिदेशस्तयोरिति ॥ २२ ॥

## मासिग्रहणं च तद्वत् ॥ २३ ॥

'मासि मासि अतिग्राह्या गृह्यन्ते' इत्यप्याम्नायते। यदि तत्र चोदकः प्रापयेन्न स उपदेशः स्यात् । अतोऽपि नातिदेशस्तयोर्विकृताविति पूर्वः पक्षः ॥ २३ ॥

## सि० ॥ ग्रहणं वा तुल्यत्वात् ॥ २४ ॥

इतराङ्गवदनयोरप्यग्न्यतिग्राह्ययोरङ्गत्वेन तुल्यत्वाच्चोदकशास्त्रेण ग्रहण-मेवेति सिद्धान्तः ॥ २४ ॥

## लिङ्गदर्शनाच्च ॥ २५ ॥

'यज्ञाचितं चिन्वीत य. कामयेत द्यौर्पण्वानमुष्मिन् लोके स्यामिति' 'यथा पञ्चैतानतिग्राह्यान् गृह्णातीति च लिङ्गदर्शनादपि तयोर्विकृतौ ग्रहणमेव सिध्यति । अन्यथा विकृतौ काङ्क्षाकारतायाः ऐन्द्रतायाश्च श्रुतायाः अनुपपत्तिः स्यादिति भावः ॥ २५ ॥

## ग्रहणं समानविधानं स्यात् ॥ २६ ॥

ग्रहणं—विकृतौ स्वस्वातन्त्र्येण विधानं तत् समानविधानं—यथा प्रकृतौ ज्योतिष्टोमे विधानं तथैव द्विरात्रादौ स्यात्। यदि ज्योतिष्टोमे तद्विधानं कृत्वा द्विरात्रादौ स्वातन्त्र्येण विधानं स्यात्। तदा 'छन्दश्चितं चिन्वीत पशुकामः' इत्यादिगुणफलसम्बन्धविधीनां तत्र प्रवृत्तिर्न भवेत्। गुणफलसम्बन्धविधीनामतिदेशो नास्तीति प्रागभिहितत्वात्। अथ ज्योतिष्टोमसमान एव द्विरात्रादौ विधिश्चेत्तत्र पशुकामविधीनां प्रवृत्तिरिति तदर्थमुपदेश इति न तत्रोपदेशस्य वैयर्थ्यमिति भावः ॥ २६ ॥

## मासिग्रहणमभ्यासप्रतिषेधार्थम् ॥ २७ ॥

अभ्यासप्रतिषेधार्थं मासिग्रहणं—प्रत्यह नाभ्यासः। किन्तु मासि मास्येवेति तदर्थं तद्ग्रहणम् ॥२७॥

उपस्तरणाभिघारणाभ्यां सहैव चतुरवत्तावदानाधिकरणम् ॥१२॥

## उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यमतुल्यत्वाल्लोकवदुत्पत्तेर्गुणभूतत्वात् ॥ २८ ॥

दर्शपूर्णमासयोः 'चतुरवत्तं जुहोति' इत्याम्नायते। तत्रोपस्तरणाभिघारणाभ्यां सहैव चतुरवत्तं, उत प्रधानद्रव्यादेव चतुरवदातव्यमिति संशये उत्पत्तितादर्थ्यात्—उत्पत्तेः—पुरोडाशोत्पत्तेः तादर्थ्यात्—होमार्थत्वात्, प्रधानस्य—पुरोडाशस्य चतुरवत्तं कार्यम्। चतुरवदानसंस्कृतस्य प्रधानस्य पुरोडाशस्य होमसंयोगात्—चतुरवत्तं जुहोतीति होमार्थत्वश्रवणात्, होतव्यस्य चतुरवत्तदानं सिध्यति। आज्यन्तु प्रधानभूतपुरोडाशेन अतुल्यत्वात् तदुत्पत्तेः— उपस्तरणाभिघारणोत्पत्तेः गुणभूतत्वात्—पुरोडाशसंस्काररूपत्वेन अप्रधानत्वात्, अधिकं लोकवत्—यथा लोके प्रस्थं

भुङ्क्ते चैत्र इत्यत्र तदन्नस्य प्रमाणम् । शाकादिकं स्वाधिकम् । उद्वादित्यर्थः ॥ २८ ॥

## तत्संस्कारश्रुतेश्च ॥२९॥

' यदुपस्तृणाति, अभिघारयति, अमृताहुतिमेवैनां करोति ' इति **तत्संस्कारश्रुतेः**— तस्य पुरोडाशस्य संस्कारश्रवणादपि गुणभूतत्वन-प्रधानत्वमुपस्तरणाभिघारणयोरिति ॥ २९ ॥

## सि० ॥ ताभ्यां वा सह स्विष्टकृतः सहत्वे द्विरभिघारणेन तदाप्तिवचनात् ॥ ३० ॥

**ताभ्यां**— उपस्तरणाभिघारणाभ्यां सहैव चतुरवत्तं बोध्यम् । कुतः ? **स्विष्टकृतः**— स्विष्टकृत्प्रकरणे ' सकृदुपस्तृणाति, सकृदवद्यति, द्विरभिघारयति, चतुरवत्तस्याप्त्यै ' इति **द्विरभिघारणेन तदाप्तिवचनात्**— चतुरवत्तस्य पूर्णत्वदर्शनात् ॥ ३० ॥

## तुल्यवच्चाभिधाय सर्वेषु भक्त्यनुक्रमात् ॥३१॥

' चत्वारि वा एतानि देवधान्यवदानानि यदुपस्तृणाति तदनुख्यात्यै यत् पूर्वमवदानं तदाज्यायै यदुत्तरं तद्देवतायै यदभिघारयति तद्वषट्काराय ' इति चतुरवत्तस्य तुल्यवच्चतुर्णामवदानान्यभिधाय **सर्वेषु भक्त्यनुक्रमात्**— तत्तद्भागानुक्रमणादुपस्तरणाभिघारणाभ्यामेव चतुरवत्तं सिध्यतीति निष्कर्षः ॥ ३१ ॥

उपांशुयागेऽपि चतुरवत्तस्याऽऽवश्यकत्वाधिकरणम् ॥ १३ ॥

## सासदश्यवन्नियम्येत ॥ ३२ ॥

दर्शपूर्णमासीयोपांशुयागेऽपि ' चतुरवत्तं जुहोतील्यस्ति । तत्र पूर्वोक्तमचतुरवत्तं नास्ति । कुतः ? **तत्सासदश्यवत्**—श्यावाश्व्याधीतं साम्नदश्यं मित्रविन्दादिषु विकृतिषु पुनः श्रयमाणं तत्रैव नीयते । तथेदं चतुरवत्तं

यत्रोपस्तरणाभिघारणे स्तस्तत्रैव पुरोडाशादौ नियम्येत । उपांशुयागे न तदिति ॥ ३२ ॥

## सि० ॥ हविषो वा गुणभूतत्वात् तथाभूत-विवक्षा स्यात् ॥ ३३ ॥

पूर्वपक्षव्यावर्तको वाशब्दः । हविषो गुणभूतत्वात्—विधेयत्वाव-होमे चतुरवत्तं गुणो विधीयते । चतुरवत्तं जुहोतीत्यनेन सहोमत्वावच्छिन्ने उपांशुयागेऽपि स्यादेव । अतस्तत्रापि चतुरवदानम् । न ह्यवदान-मुद्दिश्य चतुःसङ्ख्याविधिरत्र । येन कथं चतुष्ट्वसम्पादनमित्याकाङ्क्षा स्यादत्र । अपि तु ' सकृदुपस्तृणातीत्यादिपूर्वोक्तवाक्यैः प्राप्तं यच्चतुरवदानं तत्संस्कारविशिष्टं द्रव्यं होमोद्देशेनात्र विधीयते इति न पूर्वपक्षसिद्धिरिति भावः ॥ ३३ ॥

दर्शपूर्णमासयोरैन्द्राग्नाऽऽग्नेययोरनुवादत्वाधिकरणम् ॥ १४॥

## पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयो-रुपदेशस्तच्छ्रुतित्वाद्वैश्यस्तोमवत् ॥ ३४ ॥

' पुरोडाशाभ्यामेवासोमयाजिनं याजयेत्, यावेवाग्नेयश्चैन्द्राग्नश्च सान्नाय्येन तु सोमयाजिनम् ' इति दर्शपूर्णमासयोः श्रूयते । तत्र पुरोडाशा-भ्यामित्यनेनाधिकृतान् असोमयाजिन उद्दिश्योक्तयोः पुरोडाशयोः उपदेशः-विधिः। कुतः ? तच्छ्रुतित्वात्—' असोमयाजिनं स्वर्गकामम् ' इत्यधिकारि-विशेषणत्वेन श्रुतत्वात।' वैश्यं वैश्यस्तोमेन याजयेत् ' इति वैश्यस्तोमवत् । तथा च सोमयाजिभिन्नस्वर्गकामं प्रति पुरोडाशाभ्यां याजयेदिति सिद्धमिति प्रथमः पक्षः ॥ ३४ ॥

## न त्वनित्याधिकारोऽस्ति विधेर्नित्येन सम्बन्ध-स्तस्मादवाक्यशेषत्वम् ॥ ३५ ॥

न त्वनित्याधिकारोऽस्ति— नैव स्वर्गकामाधिकारोऽयम् । अपि तु तद्वाक्यशेषः । तस्माद्विधेः ' यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति नित्य-विधिप्राप्तनित्यप्रयोगेणैव सम्बन्धः । न फलवाक्येन सम्बन्धः । न फल-वाक्यशेषत्वमस्येति द्वितीयः पक्षः ॥ ३५ ॥

## सति च नैकदेशेन कर्तुः प्रधानभूतत्वात् ॥३६॥

किञ्च, सति—असोमयाजिनः अधिकारिविशेषणत्वे सति, अधिकारिणः प्रधानत्वेन तद्विशेषणस्यासोमयाजिनः कर्तुरपि प्राधान्यात् पुरोडाशामुद्दिश्यासोमयाजिकर्तुः सम्बन्धोऽनुपपन्नः । अथासोमयाज्यभिन्नकर्तृकफलमुद्दिश्य पुरोडाशविधिरिति चेत् षण्णां मिलितानामेव फलजनकत्वात् एकदेशेन—दर्शपूर्णमासपदवाच्यैकदेशेन यागद्वयेन सह फलसम्बन्धोऽपि न सम्भवतीत्यादिदूषणं बोध्यम् ॥ ३६ ॥

## कृत्स्नत्वात्तु तथा स्तोमे ॥ ३७ ॥

स्तोमे—वैश्यस्तोमे, कृत्स्नत्वात्—कस्यचिदेकदेशत्वाभावात्—सम्पूर्णत्वादिति यावत्, तथा वैश्याभिन्नकर्तृकफले स्तोमसम्बन्धो युक्तः । न हि तत्र किञ्चिदेकं नित्यमनित्येन सम्बद्धमस्ति । यथा प्रकृते तथा । तस्मादत्रासोमयाजिकर्तृकपुरोडाशद्वयकरणकयागः अपूर्व एव विधीयत इति द्वितीयपक्षाऽऽशयः ॥ ३७ ॥

## कर्तुः स्यादिति चेत् ॥ ३८ ॥

कर्तुः— गौणकर्तुः ऋत्विजः विधिः— पुरोडाशद्वयकरणकयागविधिः स्यात् । अपूर्वकर्मविधौ एवकारवैयर्थ्यप्रसङ्गादिति चेत्—॥ ३८ ॥

## न गुणार्थत्वात्प्राप्ते च नोपदेशार्थः ॥ ३९ ॥

न— कुतः ? गुणार्थत्वात्— कर्मानुष्ठानार्थमाध्वर्यवादिसमाख्यया ऋत्विजः प्राप्तत्वात्, नोपदेशार्थः— पुनरुपदेशे प्रयोजनं नास्तीत्यर्थः । तस्मात् कर्मान्तरमेवेति ॥ ३९ ॥

**कर्मणोस्तु प्रकरणे तन्न्यायत्वाद्गुणानां लिङ्गेन कालशास्त्रं स्यात् ॥ ४० ॥**

कर्मान्तरपक्षव्यावर्तकस्तुः । **कर्मणोः**— आग्नेयऐन्द्राग्नपुरोडाशयागयोः **प्रकरणे लिङ्गेन**— असोमयाजिपदप्रयोगात्मकलिङ्गेन 'असोमयागकाले दर्शपूर्णमासयोः एतौ पुरोडाशौ भवतः' इति लक्षितं **कालशास्त्रं**— कालविधानशास्त्रं स्यात्। 'अपि वा कालमात्रं स्याददर्शनाद्विशेषस्य'। (४।४।६।) इति तन्न्यायत्वात्। पुरोडाशाभ्यामेव तस्मिन् काले यजेत, न सान्नाय्येनेति फलकल्पनादोषोऽस्मिन् पक्षे नेति भावः ॥ ४० ॥

**यदि तु सान्नाय्यं सोमयाजिनो न ताभ्यां समवायोऽस्ति विभक्तकालत्वात् ॥ ४१ ॥**

कालविधिदूषकस्तुः । यदि सान्नाय्यं सोमयाजिनस्तर्हि तस्य पुरोडाशाभ्यां समवायः सम्बन्धो नास्त्येव । कुतः ? सान्नाय्यपुरोडाशयोः विभक्तकालत्वात् । अर्थात् पुरोडाशयोः पूर्वकालः सिद्ध एवेति न विधातुमर्हः । तस्मादतिरिक्तकर्मविधिरेवेति भावः ॥ ४१ ॥

**अपि वा विहितत्वाद्गुणार्थायां पुनःश्रुतौ सन्देहे श्रुतिर्द्विदेवतार्था स्याद्यथानभिप्रेतस्तथाऽऽग्नेयो दर्शनादेकदेवते ॥ ४२ ॥**

अपि वेति पक्षान्तरं द्योत्यते । **विहितत्वात्**— 'यदाग्नेयोऽष्टाकपालः पौर्णमास्याममावास्यां चाच्युतो भवतीत्याग्नेयस्य दर्शपूर्णमासयोरुभयत्र विहितत्वात्, **गुणार्थायां**— देवतारूपगुणार्थायां, **पुनःश्रुतौ**— 'यावेतावाग्नेयश्चैन्द्राग्नश्चेति पुनः श्रुतौ, **सन्देहे**— पुनःश्रुतिः किमर्थमिति संशये, **द्विदेवतार्था**—पौर्णमास्यामैन्द्राग्नदेवतार्था स्यात् । **यथा** अनभिप्रेतः एकदेवते आग्नौ अनुवादः, **तथा** **दर्शनात्**—'यदाग्नेयोऽष्टाकपालोऽमावास्यायामित्यादौ दर्शनात् प्रकृते आग्नेयमनूद्य पौर्णमास्यां ऐन्द्राग्नविधानार्था सा पुनः श्रुतिरिति पक्षान्तरम् ॥ ४२ ॥

## विधिं तु बादरायणः ॥ ४३ ॥

अस्मिन्नपि मते एवकारैर्वैय्यर्थ्यापत्तेः पक्षान्तरमाह बादरायणः विधिमिति । कालविधिं मनुते स इत्यर्थः ॥ ४३ ॥

## प्रतिषिद्धविज्ञानाद्वा ॥ ४४ ॥

' सोमयाजिनं सान्नाय्येन याजयेत् ' इति विधिनैव पूर्वं सोमयागात् पुरोडाशमात्रम् । न सान्नाय्यम् । इति सान्नाय्यप्रतिषेधज्ञानान्न कालविधिरपि । अतः सर्वोऽप्ययमनुवादरूपः सन् सान्नाय्यविधेः शेषोऽर्थवाद इत्यर्थः ॥४४॥

## तथा चान्यार्थदर्शनम् ॥ ४५ ॥

तथा— सान्नाय्यविधिशेषोऽर्थवादोऽयमिति सिद्धान्तदार्ढ्यापादकं अन्यार्थदर्शनं—प्रमाणान्तरदर्शनमप्यस्ति । तथा हि—चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदश अमावास्यायामिति पञ्च प्रयाजाः, द्वे आज्यभागाहुती, प्रधानत्रयम्, त्रयोऽनुयाजाः, स्विष्टकृच्च इति चतुरवत्तस्य हविषः पौर्णमास्यां चतुर्दश आहुतय आहवनीये हूयन्ते । दर्शे उपांशुयागाभावात् त्रयोदश इति उक्तवाक्येन अपूर्वयागविधाने तु निर्दिष्टसङ्ख्याबोधकप्रमाणवाक्यं विरुध्येतेति भावः ॥ ४५ ॥

उपांशुयागस्य ध्रौवाज्यद्रव्यकत्वाधिकरणम् ॥ १५ ॥

## उपांशुयागमन्तरा यजतीति हविर्लिङ्गाश्रुतित्वाद्यथाकामी प्रतीयेत ॥ ४६ ॥

पौर्णमास्या ' उपांशुयागमन्तरा यजति ' इति श्रूयते । तत्र हविर्लिङ्गस्य-हविर्विशेषनियामकलिङ्गस्य, अश्रुतित्वात्—श्रवणाभावात्, यथाकामी प्रतीयेत—यथेच्छं किमपि द्रव्यं ग्राह्यम् । ' आज्यस्यैव नावुपांशु पौर्णमास्या यजन् ' इति आज्यं श्रूयत इति चेदेवमप्यनियम एव । यत्किञ्चिदाज्यं गृहीत्वा तदुपपत्तेः ॥ ४६ ॥

## सि० ॥ ध्रौवाद्वा सर्वसंयोगात् ॥ ४७ ॥

' सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यम् ' इति श्रुतेस्तत्र च सर्वशब्दसंयोगात् ध्रौवाज्यमेवोपांशुयागहविः । नान्यत्किमप्याऽऽज्यमिति भावः ॥ ४७ ॥

उपांशुयागस्य प्रकृतदेवतानियमाधिकरणम् ॥ १६ ॥

## तद्वच्च देवतायां स्यात् ॥ ४८ ॥

हविर्निर्णयरूपपूर्वपक्षवद्देवताविषयेऽपि स्यादिति आह-तद्वदिति ॥४८॥

## सि० ॥ तान्त्रीणां प्रकरणात् ॥ ४९ ॥

**प्रकरणात्—**दर्शपूर्णमासतन्त्रपठितानामेवान्यतमा स्याद्देवता । यतो न हि देवतामन्तरेण यागः सिध्यति ॥ ४९ ॥

**उपांशुयागस्य विष्ण्वादिदेवताकत्वं पौर्णमासीयत्वं चाधिकरणम् ॥ १७ ॥**

## धर्माद्वा स्यात्प्रजापतिः ॥ ५० ॥

तान्त्रीणामनेकत्वात्तन्मध्ये कतमा देवता ग्राह्येति विमर्शे **धर्माद्वा—** ' उपांशुयाजमन्तरा यजति ' इति उपांशुत्वमत्र श्रूयते । ' तस्माद्यत्किञ्चित् प्राजापत्यमत्र क्रियते उपांश्वेव तत्क्रियते ' इति प्रजापतेर्धर्म उपांशुत्वम् । अतः प्रजापतिरेव देवता उपांशुयागे ग्राह्या स्यादिति ॥ ५० ॥

## देवतायास्त्वनिर्वचनं तत्र शब्दस्येह मृदुत्वं तस्मादिहाधिकारेण ॥ ५१ ॥

**तत्र—** 'उपांशुयाजमन्तरा यजतीत्युत्पत्तिवाक्ये **देवतायाः अनिर्वचनं—** अकथनम । **इह—** प्राजापत्ये ' प्रजापतिं मनसा यजेत् ' इति विधौ तूष्णींतात्पर्यकमनसेतिशब्दश्रवणात् ' यत्किञ्चित्प्राजापत्यं क्रियते उपांशु तत् क्रियते ' इत्यस्योक्तविधे शेषत्वात् **तत्र शब्दस्य—** उपांशुधर्मत्वाच्-

चशब्दस्य, मृदुत्वं—स्पष्टमश्रवणम् । अनुवाद स इत्यर्थः । तस्मात् इह अधिकारेण—'अग्निरग्रे प्रथमो देवतानाम्' इति देवतानां मध्ये अग्नेर्मुख्यत्वेन श्रेष्ठत्वेन उपांशुयागे अग्निरेव देवतात्वेन ग्राह्यः । न प्रजापतिरिति ॥ ५१ ॥

## विष्णुर्वा स्यात् हौत्राम्नानादमावास्याहविश्च स्यात् हौत्रस्य तत्र दर्शनात् ॥ ५२ ॥

विष्णुर्वा तत्र देवता स्यात् । कुतः ? अमावास्यां प्रकृत्य 'इदं विष्णुर्विचक्रमे, प्रतद्विष्णुः स्तवते वीर्येण' इति वैष्णवहौत्राम्नानात् । तच्च एवमर्थवद्भवति, यदि विष्णुरुपांशुयागदेवता । एवममावास्यायामुपांशुयागश्चेन्न तस्य तदाम्नानमर्थवत्स्यात् । तस्मादमावास्यायामपि उपांशुयागः स्यादिति पक्षान्तरम् ॥ ५२ ॥

## सि० ॥ अपि वा पौर्णमास्यां स्यात् प्रधानशब्दसंयोगाद्गुणत्वान्मन्त्रो यथाप्रधानं स्यात् ॥ ५३ ॥

अपि वा पौर्णमास्यामेवोपांशुयागः स्यात् । न त्वमावास्यायाम् । कुतः ? प्रधानशब्दसंयोगात्—'आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति विधायकवाक्ये पौर्णमास्यामिति शब्दसंयोगात् । मन्त्रस्य गुणत्वात्—अङ्गत्वात्, मन्त्रो यथाप्रधानं—यत्र विधिविहितप्रधानकर्म तत्रैव मन्त्रः । न यत्र मन्त्रस्तत्र तत्कर्मेति पौर्णमास्यामेवोपांशुयागः । नामावास्यायामिति भावः ॥ ५३ ॥

## आनन्तर्यं च सान्नाय्यस्य पुरोडाशेन दर्शयत्यमावास्याविकारे ॥ ५४ ॥

किञ्च, 'आज्यभागाभ्यां प्रचर्य आग्नेयेन पुरोडाशेन अग्नीध्रे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नाह' इत्यमावास्याविकारे सा…

प्रस्तावीये आग्नेयपुरोडाशानन्तरं साक्षान्यवागस्य दर्शयति लिङ्गम्। नोपांशु-
यागस्य । अतो नामावास्यायामुपांशुयाग इति लिङ्गदर्शनादपि प्रसि-
ध्यति ॥ ५४ ॥

## अग्नीषोमविधानात्तु पौर्णमास्यामुभयत्र विधीयते ॥ ५५ ॥

पौर्णमास्यामेवोपांशुयाग इति न । अपि तु 'उपांशुयागमन्तरा
यजति' इत्यविशेषेण उभयत्र— पौर्णमास्याममावास्यायां च विधीयते । यच्च
'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति लिङ्ग
दर्शितम् । तन्नोत्पत्तिवाक्यमग्नीषोमीययागस्य, अपि तु पौर्णमास्यायोपांशुयागे
देवताविधायकं तत् । पौर्णमास्यां अग्नीषोमदेवताक उपांशुयाग अमावा-
स्यायां च विष्णुदेवताक इति देवताविकल्प स्यात् ॥ ५५ ॥

## सि० ॥ प्रतिषिध्य विधानाद्वा विष्णुः समानदेशः स्यात् ॥ ५६ ॥

'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति
प्रकृत्य 'जामि वा एतद् यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाज-
मन्तरा यजति । विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽ-
जामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति जामि वा इत्यनेन
पुरोडाशसातत्य प्रतिषिध्य अजामित्वाय अन्तरा उपांशुयागस्य विधानात्
प्रयोग स्तुर्वा च विष्ण्वग्नीषोमादीनां त्रयाणां **समानदेशः**— एक
याग प्रतीयते, न भिन्नदेश । तस्मात् पौर्णमास्यामेव उपांशुयाग ।
तस्मिन्नेव च विकल्पेन विष्ण्वाद्या देवता । नामावास्यायां तत्क्रियमपीति
भाव ॥ ५६ ॥

## तथा चान्यार्थदर्शनम् ॥ ५७ ॥

"चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदश अमावास्यायाम्" इति अन्यार्थस्य—अन्यलिङ्गस्य, दर्शनं-ज्ञानमपि, तथा—पौर्णमास्यामेव उपांशुयाग इत्यस्य नियामकम्। अन्यथा अमावास्यायां चतुर्दश आहुतयो भवेयुः। तच्च त्रयोदशेति प्रत्यक्षवचोविरुद्धम् ॥ ५७ ॥

## न वानङ्गं सकृच्छ्रुतावुभयत्र विधीयेतासम्बन्धात् ॥ ५८ ॥

न वा—न हि सकृच्छ्रुतं अनङ्गं—प्रधानमुभयत्र विधीयते। मिथः सम्बन्धाभावात्। प्रधानं चेदम्। अतः पौर्णमास्यां श्रूयमाणं नामावास्यायां भविष्यति। अङ्गस्य प्रधानार्थत्वादुभयत्र तद्भवति ॥ ५८ ॥

## गुणानां च परार्थत्वात्प्रवृत्तौ विधिलिङ्गानि दर्शयति ॥ ५९ ॥

गुणानां—अङ्गानां, परार्थत्वात्—प्रधानार्थत्वात्, प्रतिप्रधानं गुणावृत्तिरिति न्यायात् तेषु तेषां प्रवृत्तौ 'अप्सुमन्तावाज्यभागौ यजति' 'एकादश प्रयाजान् यजत्येकादशानुयाजा'नित्यादीनि विधिलिङ्गानि ज्ञेयानि ॥५९॥

## विकारे चाश्रुतित्वात् ॥ ६० ॥

विकारे—अमावास्याविकारे साकप्रस्थायीये उपांशुयागो न श्रूयते। तस्याश्रवणं प्रागुक्तमेव। तस्मादपि नामावास्यायामुपांशुयागः ॥ ६० ॥

### एकपुरोडाशायामपि पौर्णमास्यामुपांशुयागाधिकरणम् ॥१८॥

## द्विपुरोडाशायां स्यादन्तरार्थत्वात् ॥ ६१॥

'स सोमेनेष्ट्वा अग्नीषोमीयपुरोडाशो भवति' इति श्रुतेः सोमयागादूर्ध्वं द्विपुरोडाशा पौर्णमासीत्यवगम्यते। तस्मात् तु द्विपुरोडाशरहिता आग्नेयैकपुरोडाशैवेति स्थितिः। तत्रायमुपांशुयागः उभयत्र एकपुरोडाशायां द्विपुरोडाशायां च स्यात्, उत द्विपुरोडाशायामेवेति संशये द्विपुरोडाशायामेव

पौर्णमास्या स्यात् । नैकपुरोडाशायाम् । कुतः ? अन्तरालगुणार्थत्वात् — ' उपांशुयागमन्तरा यजति ' इति पुरोडाशद्वयान्तरालवत्त्वस्य गुणत्वेन विधानात् । एकपुरोडाशे तस्यासम्भवादिति ॥ ६१ ॥

## अजामिकरणार्थत्वाच्च ॥ ६२ ॥

किञ्च, ' विष्णुरुपांशु यष्टव्योऽजामित्वाय ' इति जामितादोषपरिहाराय उपांशुयागो मध्ये विधीयते । यत्र दोषप्रसक्तिस्तत्रैवानेन भाव्यम् । तत्परिहाराय द्विपुरोडाशायामेव तस्या तस्य प्रसक्तिः । नैकपुरोडाशायाम् । अतोऽपि द्विपुरोडाशायामेव स यागः ॥ ६२ ॥

## तदर्थमिति चेन्न तत्प्रधानत्वात् ॥ ६३ ॥

तदर्थं—अन्तरालतासिध्यर्थमुपांशुयाग इति चेन्न । तत्प्रधानत्वात् । तस्य— अन्तरालत्वस्य प्रधानार्थत्वान्न तदर्थमुपांशुयागः ॥ ६३ ॥

## अशिष्टेन च सम्बन्धात् ॥ ६४ ॥

अशिष्टेन— अविहितेनान्तरालार्थेनोपांशुयागस्य सम्बन्धे कृते यागस्य फलेन सम्बन्ध, अन्तरालगुणेन च सम्बन्ध इति विरुद्धत्रिकद्वयापत्तिरिति भाव. ॥ ६४ ॥

## उत्पत्तेस्तु निवेशः स्याद्गुणस्यानुपरोधेनार्थस्य विद्यमानत्वाद्विधानादन्तरार्थस्य नैमित्तिकत्वात् तदभावेऽश्रुतौ स्यात् ॥ ६५ ॥

उत्पत्तेस्तु -' उपांशुयाजमन्तरा यजति ' इत्युत्पत्तिविधाने नान्तरालगुणविधानात् विशिष्टविधानेन न त्रिकद्वयापत्तिः । अतो निवेशः—अन्तरालगुणनिवेश. स्यात् । तस्यान्तरालगुणस्यानुपरोधेन—अबाधेन, अर्थस्य—अन्वयिनो विद्यमानत्वात्—अन्तरार्थस्य विधानात नैमित्तिकत्वेनापूर्वसाधनत्वात तदभावे—अन्तरगुणाभावे, अश्रुतौ—चाद्गुयागस्य अश्रुतित्वात्—अविधानात गुणवत एव विधानं स्यादिति पूर्वपक्षिण आशयः ॥ ६५ ॥

## सि० ॥ उभयोस्तु विधानात् ॥ ६६ ॥

उभयोस्तु– एकपुरोडाशे द्विपुरोडाशे चोपांशुयागः स्यादेव । कुतः ? विधानात्—पौर्णमासीमात्रे विधानात् । 'आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति एकपुरोडाशां यजेयन् पौर्णमासीशब्दः उपलभ्येत अविशेषश्रुतेः । तस्मादेकपुरोडाशायामपि स्यादुपांशुयागं इति भावः ॥६६॥

## गुणानां च परार्थत्वादुपवेषवद्यदेति स्यात् ॥ ६७ ॥

गुणानां—अङ्गानां, परार्थत्वात्— प्रधानार्थत्वात्, उपवेषवत्— यथा 'उपवेषेण कपालान्युपदधाति' इत्यत्र शाखामूलमुपवेषः । पौर्णमास्यां शाखाया अभावादुपवेषस्याप्यभावः । अतो यदा उपवेषस्तदा तेन कपालोपधानम् । तदभावे अन्येन केनापि । न उपवेषाभावे कपालोपधाननिवृत्तिः । तथा प्रकृतेऽपि यदा अन्तरालं तदा अन्तराले स्यादेवोपांशुयागः। यदा अन्तरालं नास्ति तदापि कपालोपधानवद्भविष्यत्येव । न हि गुणाभावे प्रधानलोपो युक्तः । न हि राज्ञः पाकार्थं कल्पितस्य चैत्रस्याभावे राज्ञः पाको लुप्यते । तस्मादेकपुरोडाशायामपि तस्यां स्यादेवोपांशुयाग इति भावः ॥ ६७ ॥

## अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ॥६८॥

अनपायश्च— तस्य कालस्य एकपुरोडाशायामपि अनपायः अभावो न । अस्तित्वमिति यावत् । हि—यतः, द्वौ पुरोडाशौ यस्य कालस्य लक्षणं— लक्षकौ स्तः । अत्रायमाशयः- 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति' इत्यनेन वाक्येन पुरोडाशयागद्वयमनूद्य तयोरानन्तर्ये जामितादोषं प्रतिपाद्य प्रथमयागध्वंसोत्तरयागप्रागभावविशिष्टं कालं लक्षयित्वा स उपांशुयागाङ्गतया विधीयते । तस्य कालस्य एकपुरोडाशायामपि पौर्णमास्यां निराबाधमस्तित्वं विद्यते इति ॥ ६८ ॥

## प्रशंसार्थमजामित्वम् ॥ ६९ ॥

अजामित्वकथनं तु उपांशुयागप्रशंसार्थमर्थवाद एवेति एकपुरोडाशे जामित्वाप्रसक्तेरजामित्वं— जामित्वाभावोऽनुपपन्न इति शङ्कायाः अनवसर इति भावः ॥ ६९ ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां दशमाध्यायस्याष्टम पादः ॥ ८ ॥

सम्पूर्णश्च दशमोऽध्यायः ॥ श्रीः ॥

---

## ॥ अथ एकादशाध्यायस्य प्रथमः पादः ॥

आग्नेयादीनां समुच्चितानां षड्यागानां तन्त्रेण स्वर्गफलकत्वाधिकरणम् ॥ १ ॥

### प्रयोजनाभिसम्बन्धात् पृथक् सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् ॥ १ ॥

विकृतावतिदिष्टानामङ्गानां बाधाबाधविचारेणाङ्गपरिमाणं दशमेऽध्याये निरूपितम् । अथैकादशे उभयमावारण्यन प्रयोगपरिमाणाधिगमार्थं तन्त्राऽऽवापौ निरूप्येते सोदाहरणौ। तत्र यत्सकृदनुष्ठितं बहूनामुपकारकं भवति तत्तन्त्रम् । यस्त्वावृत्त्योपकारकः स आवापः। तदुक्तम्—'साधारणं भवेत्तन्त्रं, परार्थे स्वप्रयोजनः आवापः ' इति। स्थिते चैवम्— 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादौ विहितं स्वर्गादिफलम्। तत्र 'यदाग्नेयोऽष्टाकपाल' इत्यादिवाक्यैरुपदिष्टानामाग्नेयादिषड्यागानां तन्त्रेण सिध्यति, उत भेदेनेति संशये सिद्धान्तः पृथक् सतां—पृथक्त्वेन विहितानामप्या-

ग्नेयादीनां प्रधानयागानां तन्त्रेण **ऐककर्म्यं**—एकफलकत्वमेव । कुतः ? **प्रयोजनाभिसम्बन्धात्**—यतः समेतानां-मिलितानां तेषां 'दर्शपूर्णमासाभ्यामिति समुदायवाचकैकशब्देन निर्देशं कृत्वा फलेन साकमभिसम्बन्धात्-अन्वयाभिधानात् । यथा 'ग्रामेण खन्यते कूपः' इत्यत्र पुरुषानेकत्वेऽपि एक एव कूपः सिध्यति । तद्वदत्राप्येकं फलमिति भावः ॥ १ ॥

## शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत ॥ २ ॥

**शेषवद्वा**—'ब्राह्मणगणं पूजयेत्' इत्यादौ पूजनादिशेषः समुदायबोधकेन गणशब्देन संयुज्याभिहितोऽपि तेन न सम्बध्यते । अपि तु समुदायिभिः प्रतिपुरुषं पूजनमावर्तते । तद्वदत्रापि **प्रयोजनं**— फलं, **प्रतिकर्म**-प्रतिशेषं-प्रतियागं **विभज्येत**-भिद्येतेत्यर्थः ॥ २ ॥

## अविधानात्तु नैवं स्यात् ॥ ३ ॥

**अविधानात्**--शेषशेषिणोः साम्येन विधानाभावात्, **एवं**—त्वदुक्तं न स्यात् । अविधेयत्वादेव उद्देश्यत्वे सिद्धे उद्देश्यविशेषणानामविवक्षेति प्राग् व्यवस्थितत्वात् ब्राह्मणव्यक्तीनां परस्परसाहित्यात्मकं ब्राह्मणगणत्वविशेषणमुद्देश्यगतत्वाद्यदा अविवक्षितं तदा प्रत्येकान्वयो विधेयपूजायां युक्त एव । प्रकृते तु स्वर्गफलमुद्दिश्य दर्शपूर्णमासाभ्यामिति षड्यागविधानात् विधेयगतं साहित्यं विवक्षितम् । अतः समुदितानामेव फले अन्वयः । न प्रत्येकस्य पृथगिति भावः ॥ ३ ॥

## शेषस्य हि परार्थत्वाद् विधानात् प्रतिप्रधानभावः स्यात् ॥ ४ ॥

**शेषस्य**—पर्नोऽगस्य, **परार्थत्वात्**—प्रधानार्थत्वात्, **प्रतिप्रधानभावः**—प्रतिप्रधानमङ्गावृत्तिः स्यादिति लोकप्रसिद्ध एव न्यायः । यागस्य फलार्थत्वेन विधानादेव शेषत्वम् । यत्र विधेयत्वं तत्र शेषत्वमिति नियमादिति भावः ॥ ४ ॥

अङ्गानां प्रधानोपकाररूपैककार्यत्वाधिकरणम् ॥ २ ॥

## अङ्गानां तु शब्दभेदात् क्रतुवत्स्यात्फलान्यत्वम् ॥ ५ ॥

साहित्यस्य विवक्षणात्प्रधानसमुदायस्यैकं फलं भवतु नाम । अङ्गानां तु—प्रयाजाज्यभागाद्यङ्गानां तु, क्रतुवत्—'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः, ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः' इत्यादिवत्, फलान्यत्वं—भिन्नफलत्वं स्यात् । नैकफलत्वं प्रधानवत् । कुतः ? शब्दभेदात्—'समिधो यजति, तनूनपातं यजति' इत्यादिशब्दभेदात् । अङ्गविधयः परस्परानपेक्षा एवाङ्गविधिं सम्पादयन्ति । न प्रधानविधिवत्सहिताः । साहित्यबोधकद्वन्द्वाद्यभावात् । अतस्तेषां पृथक् पृथक् फलसम्बन्ध एव युक्त इति पूर्वपक्षाशयः ॥ ५ ॥

## सि० ॥ अर्थभेदस्तु तत्र अर्थेहैकार्थ्या-दैककर्म्यम् ॥ ६ ॥

यत्र भिन्नफलप्रतिपादकशब्दोऽस्ति तत्र अर्थभेदः—फलभेदः युक्त एव । यथा सौर्यादिषु । इह—अङ्गेषु, ऐकार्थ्यात्—प्रधानोपकाररूपैकार्थत्वात्, ऐककर्म्यं—एकमेव फलमिति सिद्धान्तः ॥ ६ ॥

## शब्दभेदान्नेति चेत् ॥ ७ ॥

फलवाचकशब्दभेदाभावेऽपि 'समिधो यजति, तनूनपातं यजति' इत्यादिविधिबोधकशब्दभेदात् फलभेदः स्यादिति चेत् ॥ ७ ॥

## कर्मार्थत्वात् प्रयोगे ताच्छब्द्यं स्यात्तदर्थत्वात् ॥ ८ ॥

कर्मार्थत्वात्—स्वर्गफलकत्वात्, 'प्रयाजानुयाजादिभिरङ्गैरुपकारं सम्पाद्य दर्शपूर्णमासाभ्यां यजेत' इति प्रयोगे उच्यमाने अङ्गानामपि ताच्छब्द्यं—प्रयोगवचनशब्देन प्रयोग उक्तः स्यात् । तदर्थत्वात्—अङ्गानामपि फलार्थत्वात् । विधित्सितप्रधानभावनयैवाङ्गानां सम्बद्धत्वान्न पृथक् तेषां विधिः । 'समिधो यजति' इत्यादिवाक्यानि अङ्गस्वरूपप्रकाशकानीति भावः ॥ ८ ॥

ग्नेयादीनां प्रधानयागानां तन्त्रेण **ऐककर्म्यं**—एकफलकत्वमेव । कुतः ? **प्रयोजनाभिसम्बन्धात्**—यतः समेतानां–मिलितानां तेषां ' दर्शपूर्णमासाभ्यामिति समुदायवाचकैकशब्देन निर्देशं कृत्वा फलेन साकमभिसम्बन्धात्–अन्वयाभिधानात् । यथा ' ग्रामेण खन्यते कूपः ' इत्यत्र पुरुषानेकत्वेऽपि एक एव कूपः सिध्यति । तद्वदत्राप्येकं फलमिति भावः ॥ १ ॥

## शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत ॥ २ ॥

**शेषवद्वा**—' ब्राह्मणगणं पूजयेत् ' इत्यादौ पूजनादिशेषः समुदायबोधकेन गणशब्देन संयुग्याभिहितोऽपि तेन न सम्बध्यते । अपि तु समुदायिभिः प्रतिपुरुष पूजनमावर्तते । तद्वदत्रापि **प्रयोजनं**— फलं, **प्रतिकर्म**–प्रतिशेषं–प्रतियाग **विभज्येत** -भिद्येतेत्यर्थः ॥ २ ॥

## अविधानात्तु नैवं स्यात् ॥ ३ ॥

**अविधानात्**--शेषशेषिणोः साम्येन विधानाभावात् , **एवं**—त्वदुक्तं न स्यात् । अविधेयत्वादेव उद्देश्यत्वे सिद्धे उद्देश्यविशेषणानामविवक्षेति प्राग् व्यवस्थितत्वात् ब्राह्मणव्यक्तीनां परस्परसाहित्यात्मकं ब्राह्मणगणत्वविशेषणमुद्देश्यगतत्वाद्यदा अविवक्षितं तदा प्रत्येकान्वयो विधेयपूजायां युक्त एव । प्रकृते तु स्वर्गफलमुद्दिश्य दर्शपूर्णमासाभ्यामिति षड्यागविधानात् विधेयगतं साहित्य विवक्षितम् । अत. समुदितानामेव फले अन्वयः । न प्रत्येकस्य पृथगिति भाव ॥ ३ ॥

## शेषस्य हि परार्थत्वाद् विधानात् प्रतिप्रधानभावः स्यात् ॥ ४ ॥

**शेषस्य**—यतोऽङ्गस्य, **परार्थत्वात्**—प्रधानार्थत्वात्, **प्रतिप्रधानभावः**—प्रतिप्रधानमङ्गावृत्तिः स्यादिति लोकप्रसिद्ध एव न्याय । यागस्य फलार्थत्वेन विधानादेव शेषत्वम् । यत्र विधेयत्वं तत्र शेषत्वमिति नियमादिति भावः ॥ ४ ॥

अङ्गानां प्रधानोपकाररूपैककार्यत्वाधिकरणम् ॥ २ ॥

## अङ्गानां तु शब्दभेदात् क्रतुवत्स्यात्फलान्यत्वम् ॥५॥

साहित्यस्य विवक्षणात्प्रधानसमुदायस्यैकं फलं भवतु नाम । अङ्गानां तु—प्रयाजाज्यभागाद्यङ्गानां तु, क्रतुवत्—' सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः, ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः ' इत्यादिवत्, फलान्यत्वं-भिन्नफलत्वं स्यात् । नैकफलत्वं प्रधानवत् । कुतः ? शब्दभेदात्—' समिधो यजति, तनूनपातं यजति ' इत्यादिशब्दभेदात् । अङ्गविधयः परस्परानपेक्षा एवाङ्गविधिं सम्पादयन्ति । न प्रधानविधिवत्संहिताः । साहित्यबोधकद्वन्द्वाद्यभावात् । अतस्तेषां पृथक् पृथक् फलसम्बन्ध एव युक्त इति पूर्वपक्षाशयः ॥ ५ ॥

## सि० ॥ अर्थभेदस्तु तत्र अर्थेहैकार्थ्या-दैककर्म्यम् ॥ ६ ॥

यत्र भिन्नफलप्रतिपादकशब्दोऽस्ति तत्र अर्थभेदः— फलभेदः युक्त एव । यथा सौर्यादिषु । इह—अङ्गेषु, ऐकार्थ्यात्— प्रधानोपकाररूपैकार्थत्वात्, ऐककर्म्य— एकमेव फलमिति सिद्धान्तः ॥ ६ ॥

## शब्दभेदान्नेति चेत् ॥ ७ ॥

फलवाचकशब्दभेदाभावेऽपि ' समिधो यजति, तनूनपातं यजति ' इत्यादिविधिबोधकशब्दभेदात् फलभेदः स्यादिति चेत् ॥ ७ ॥

## कर्मार्थत्वात् प्रयोगे ताच्छब्द्यं स्यात्तदर्थत्वात् ॥८॥

कर्मार्थत्वात्— स्वर्गफलकत्वात्, ' प्रयाजानुयाजादिभिरङ्गैरुपकारं सम्पाद्य दर्शपूर्णमासाभ्यां यजेत ' इति प्रयोगे उच्यमाने अङ्गानामपि ताच्छब्द्यं—प्रयोगवचनशब्देन प्रयोग उक्तः स्यात् । तदर्थत्वात्—अङ्गानामपि फलार्थत्वात् । विधिभिन्नप्रधानभावनैवाङ्गानां सम्बद्धत्वान्न पृथक् फलं विधिः । ' समिधो यजति ' इत्यादिवाक्यानि अङ्गस्वरूपप्रकाशकानीति भाव ॥ ८ ॥

## कर्तृविधेर्नानार्थत्वाद्गुणप्रधानेषु ॥ ९ ॥

**गुणप्रधानेषु**— प्रयाजाद्यङ्गेषु आग्नेयादिप्रधानेषु च **कर्तृविधे**— कर्तुः-अधिकृतस्य यजमानस्य विधेः प्रयोगविधेः अङ्गानुष्ठानस्य प्रधानानुष्ठानस्य च विधेः **नानार्थत्वात्**— नानोद्देश्यकत्वात् विरुद्धत्रिकद्वयापत्तिदोषप्रसक्तिरिति भावः ॥ ९ ॥

## आरम्भस्य शब्दपूर्वत्वात् ॥ १० ॥

**आरम्भस्य**— व्यापारस्य- व्यापारान्वयबोधजनिकाया आकाङ्क्षायाः **शब्दपूर्वत्वात्**— भावनावाचकशब्दजन्यत्वात् भावनावाचकशब्दस्य भावयेदित्यस्य श्रवणे किं केन कथमित्याकाङ्क्षात्रयं समुत्पद्यते । तत्र कथंभावाकाङ्क्षापूरकत्वेन गुणानां— निर्दिष्टाङ्गानां भावनायामेवान्वयः, न यागमनूद्य तत्रेति नोक्तदोषापत्तिरिति भावः ॥ १० ॥

### काम्यकर्मणां सर्वाङ्गोपसंहाराधिकरणम् ॥ ३ ॥

## एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत्स्यात् ॥ ११ ॥

अग्निहोत्रादीनां नित्यकर्मणां सर्वाङ्गोपसंहारो नेति षष्ठे प्रपञ्चितम् । काम्येऽपि तथा, उत सर्वाङ्गोपसंहार इति संशये आह-**एकेनापीति** । एकेनापि अङ्गेन प्रयोगः समाप्येत । **कृतार्थत्वात्**- कथंभावाकाङ्क्षायाः पूर्णत्वात् । **यथा क्रत्वन्तरेषु**— स्वर्गफलेषु ज्योतिष्टोमाग्निहोत्रादिषु एका स्वर्गभावना एकेनैव क्रतुवाचकेन शब्देन निराकाङ्क्षा । तथात्रापीति । ननु, सन्ति नानाविशेषात् विनियुक्तानामङ्गानां सर्वाङ्गाण्येवाऽऽकाङ्क्षापूरकाणीति चेदत्राह न नियमेन सर्वाङ्गसम्बन्धः, अपि तु यथाशक्त्यनुष्ठानं **उत्तरावत्स्यात्**— यथा सान्नाय्ये 'तिस्रो वाग्यतो दोहयित्वा विसृष्टवागन्वारभ्य तूष्णीमुत्तरा दो-

ह्यतीत्यत्र गवामनियमः । यस्य यावत्यो गावस्तावत्यो दोहयति । तावतीष्वपि चरितार्थ उत्तराशब्दः । एवमिहापि यथासामर्थ्यमनुष्ठानं भविष्यतीति भावः ॥ ११ ॥

## फलाभावादिति चेत् ॥ १२ ॥

फलाभावात् -फलानुत्पत्तेः, ' यजेन स्वर्गकामः ' इति फलं प्रति सर्वेषामङ्गानामविशेषेण विधानादेकदेशानुष्ठाने फलाभावप्रसङ्ग इति चेत्-- ॥ १२ ॥

## न कर्मसंयोगात् प्रयोजनमशब्ददोषं स्यात् ॥ १३ ॥

न कर्मसंयोगात्–प्रधानकर्मणा सह फलस्य स्वर्गादेः सम्बन्धान्न पूर्वोक्तो दोषः । प्रयोजनं-- फलं, अशब्ददोषं — शब्ददोषरहितमबाधितार्थं स्यात् । ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इत्यादिवाक्ये प्रधानकर्मणा फलं सम्बद्धं निश्चीयते । नाङ्गैः सम्बद्धम् । कुतः? अङ्गैः सम्बद्धे फले उच्यमाने दर्शपूर्णमासाभ्यामिति तृतीयाऽनुपपत्तिः । करणत्वस्य प्रकृत्यर्थेनैरपेक्ष्यात् । उक्ततृतीयानुपपत्तिरेव । तत्सहितश्रुतिवाक्यात् प्रधानकर्मणः प्रतीयमानः इतरनिरपेक्षः फलसम्बन्धो बाध्येतेति भावः ॥ १३ ॥

## ऐकशब्द्यादिति चेत् ॥ १४ ॥

ऐकशब्द्यात्— निखिलाङ्गानामेकप्रयोगविधिविषयत्वादुभयोः फलसम्बन्ध इति चेत्-- ॥ १४ ॥

## नार्थपृथक्त्वात्समत्वादगुणत्वम् ॥ १५ ॥

न–सर्वेषां फलसम्बन्धो नेत्यर्थः । -कुतः? अर्थपृथक्त्वात्— प्रधानस्य फलार्थत्वमङ्गानां च प्रधानार्थत्वमित्यर्थभेदात् । यद्यङ्गानां प्रधानस्य च सम्बन्धस्तदा समत्वादुभयोस्तुल्यत्वात्फलार्थत्वेन अगुणत्वं– एकस्य गुणत्वमपरस्य प्रधानत्वमिति विवेको न स्यात् । तस्मादेवेन चारितार्थ्ये न सर्वाङ्गोपसंहार इति पूर्वपक्षः ॥ १५ ॥

**सि० ॥ विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतभूताभिसंयोगादर्थेन युगपत् प्राप्तेर्यथाप्राप्तं स्वशब्दो, निवीतवत्सर्वप्रयोगे प्रवृत्तिः स्यात् ॥ १६ ॥**

**विधेः**—यावदङ्गानुष्ठानबोधकप्रयोगविधेः, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति प्रधानविधिगम्यत्वात् **अपर्यायविधानात्**—नित्यवच्छ्रुतभावनावाचकशब्दोपस्थितकथंभावाकाङ्क्षया **अभिसम्बन्धात्**— यथा प्रधानकरणाकाङ्क्षाया यावत्प्रयोगेषु नित्यं सम्बन्धस्तथा यावदङ्गानां कथंभावाकाङ्क्षया नित्यमेव सम्बन्धात् न पर्यायेणानुष्ठानमिति शङ्कावकाशः। कुतः? **अर्थेन**—प्रधानोपकारेण, **युगपत्**—एककालं प्राप्ते सम्बन्धात् **यथाप्राप्तं**- प्रथमं यथा स्वर्गे करणत्वेन आकाङ्क्षापूरकत्वेनान्वितं तथैवानुष्ठानं सिध्यति। भावनावाचकशब्दोपस्थितायाः कथंभावाकाङ्क्षायाः पूरकत्वेन स्वर्गे यथा तस्य युगपत्सर्वेषामङ्गानामन्वितत्वात्पर्यायेण प्रयोगे अङ्गानां सम्बन्धे उच्यमाने प्राथमिको युगपत्सम्बन्धो बाधितः स्यादिति भावः। **निवीतवत्**- यथा 'निवीतेन ऋत्विजः प्रचरन्ति' इत्यत्र अविशेषात्सर्वेषां सन्निधानात् सर्वर्त्विक्साधारणं निवीतम्। तथा सर्वप्रधानप्रयोगसाधारणं सर्वाङ्गम्। तस्मात् **सर्वप्रयोगे प्रवृत्तिः स्यात्**—सर्वप्रयोगेषु सर्वाङ्गानुष्ठानमिति भावः ॥ १६ ॥

**तथा कर्मोपदेशः स्यात् ॥ १७ ॥**

*तथा सति*—निखिलाङ्गानां सर्वप्रयोगेऽनुष्ठाने सति, **कर्मोपदेशः**- 'चतुर्दश पौर्णमास्यामाहुतयः, त्रयोदश अमावास्यायाम्' इत्याहुतिसङ्ख्योपदेशः समुपपन्नः स्यात्। पौर्णमास्यां चतुर्दश यदिज्यम् द्वे चक्षुषी, पञ्च

प्रयाजाः, त्रीणि प्रधानानि, त्रयोऽनुयाजाः, स्विष्टकृच्चेति । अमावास्यायामैन्द्र-यागयोरेकाहुतित्वात् त्रयोदशत्वम् । इय सङ्ख्या नित्यं सर्वाङ्गेष्वनुष्ठिते-ष्वेवोपपद्यत इति भावः ॥ १७ ॥

## क्रत्वन्तरेषु पुनर्वचनम् ॥ १८ ॥

**क्रत्वन्तरेषु—** ज्योतिष्टोमाग्निहोत्रादिषु, **पुनर्वचनं—**स्वर्गकाम इति पुनः पुनः श्रुतम् । अतः प्रत्येकं फलेन सम्बन्धस्तत्र युक्त इति दृष्टान्तत्वेन-न्यमत्रेति भावः ॥ १८ ॥

## उत्तरास्वश्रुतित्वाद्विशेषाणां कृतार्थत्वात् स्वदोहे यथाकामी प्रतीयेत ॥ १९ ॥

**उत्तरासु—** तिसृभ्यो गोभ्य उत्तरासु गोषु ' त्रिसृष्टवागन्यारभ्य तूष्णीं उत्तरा दोहयाति ' इत्यनेन दोहस्याविहितत्वात् **विशेषाणां—**वाग्-विसर्गादीनां विधानेनोक्तवाक्यस्य कृतार्थत्वेन वैयर्थ्याभावात ' नास्यैतां रात्रिं कुमाराः पयो लभन्ते ' इत्यनेन स्वग्राश्रयसकलगोदोहस्य प्राप्तत्वात **स्वदोहे—** यावत्सु गोषु स्वीयं स्वत्वमस्ति तावत्सु-तावद्दोहे **यथाकामी-**यथेच्छं प्रवर्तेतेति प्रतीयत इति निष्कर्षः ॥ १९ ॥

### काम्यकर्मणां कामनानुसारेण भूयोऽभ्यासाधिकरणम् ॥ ४ ॥

## सि० ॥ कर्मण्यारम्भभाव्यत्वात् कृषिवत्प्रत्यारम्भ-फलानि स्युः ॥ २० ॥

काम्यं कर्म सकृदेव कर्तव्यं, उत फलभूयस्त्वमिच्छता असकृदनुष्ठेय-मिति विशये सिद्धान्तः **कर्मणि—** फले, **आरम्भभाव्यत्वात्—** आरम्भेण कर्मानुष्ठानेन भाव्यत्वात्—उत्पाद्यत्वात, **प्रत्यारम्भम्—** प्रत्यनुष्ठानं फलानि स्युः । **कृषिवत्—** प्रतिसंवत्सरं कर्षणाद्यनुष्ठानेन धान्योत्पादनाद्यथा कृषेरा-वृत्तिस्तथा फलभूयस्त्वमिच्छता काम्यकर्मण आवृत्तिः कार्येति भावः ॥२०॥

## अधिकारश्च सर्वेषां कार्यत्वादुपपद्यते विशेषः ॥२१॥

**सर्वेषां**—बहूनां कार्यत्वात्— अनुष्ठेयत्वात्, विशेषः अधिकारः 'तेषां ये प्रथमं यजेरन् तेषां गौरतिरात्रः, ये द्वितीयं तेषामायुः' 'प्रथमं यजेरन् द्वितीयं यजेरन्' इति श्रुतः समुच्चयने । उक्तार्थे लिङ्गदर्शनमिदम् । तस्मात्तथा कामी तथाऽभ्यासः काम्यकर्मणः ॥२१॥

## पू० ॥ सकृत्तु स्यात् कृतार्थत्वादङ्गवत् ॥२२॥

**सकृत्तु**—सकृदेवानुष्ठानं स्यात्काम्यकर्मणः । कुतः ? तेनैव कृतार्थत्वात् । अङ्गवत्—यथा एकप्रयोगे अङ्गानां सकृदनुष्ठानेन कृतार्थत्वं तथाऽत्रापि स्यादिति ॥ २२ ॥

## शब्दार्थश्च तथा लोके ॥ २३ ॥

**लोके**-लोकव्यवहारे, **शब्दार्थः**—शब्दार्थानुष्ठानं, **तथा**—सकृदेव दृश्यते । 'सकृत्काष्ठान्यानय' इति गुरुणोक्ते शिष्यः सकृदेव काष्ठाहरणं करोति ॥ २३ ॥

## अपि वा सम्प्रयोगे यथाकामी प्रतीयेता-श्रुतित्वाद्विधिषु वचनानि स्युः ॥ २४ ॥

अपि वेति सकृत्पक्षव्यावृत्तिः । **सम्प्रयोगे**— प्रयोगानुष्ठाने, **यथाकामी** इति **प्रतीयेत**— ज्ञातव्यम् । कुतः ? **अश्रुतित्वात्**— सकृदेवानुष्ठेयमिति शास्त्राभावात् । **विधिषु** अनुष्ठानमात्रगोचराणि विधिवचनानि न सकृदसकृद्वा तात्पर्यकाणि तानीति भावः ॥ २४ ॥

## ऐकशब्द्याचथाङ्गेषु ॥ २५ ॥

प्रयाजाद्यङ्गेष्वपि **तथा**— सकृदसकृदिति शास्त्राभावादभ्यासः स्यादिति नाशङ्कनीयम् । कुतः ? **ऐकशब्द्यात्**— एकशब्दवाच्यार्थनिष्टसकृदाकाङ्क्षाग्राहित्वात् । अङ्गानां प्रधानानां च विधायकः शब्दो विधिप्रत्यय

एक एव । तत्र कथंभावाकाङ्क्षा सकृदेवेति । फले तु यदा यदा फलेच्छा स्यात्तदा तदा किमस्य साधनमित्याकारिका उपायाकाङ्क्षेति साधनाऽऽवृत्तिर्युक्तेति भावः ॥ २५ ॥

## लोके कर्मार्थलक्षणम् ॥ २६ ॥

**लोके** लौकिकं कर्म **अर्थलक्षणम्**—लौकिकप्रत्यक्षगोचरकार्यकम् । यतस्तत्र सकृदानयनेन पाककार्यनिवृत्तौ सकृदेवानयनम् । तदनिर्वाहे तु द्विवारं त्रिवारमानयति । तेन विनापि कार्यसंसिद्धौ नानयति च । अत्र बीजं फलस्य प्रत्यक्षदर्शनं विद्यत इति । स्वर्गादिफले तु शब्दैकगम्यत्वेन तदभावाल्लौकिकदृष्टान्तोऽत्रानुचित इति भावः ॥ २६ ॥

### अवघातादीनामातण्डुलनिर्वृत्त्यभ्यासाधिकरणम् ॥ ५ ॥

## क्रियाणामर्थशेषत्वात् प्रत्यक्षमतस्तन्निर्वृत्त्याऽपवर्गः स्यात् ॥ २७ ॥

‘ व्रीहीनवहन्ति, तण्डुलान् पिनष्टि ’ इत्यादिषु अवहननादिकं सकृदनुष्ठेयं, उत आतण्डुलनिर्वृत्तेरिति विशये अङ्गानां सकृदनुष्ठानमिति सिद्धान्तितत्वात्सकृदेवेति प्राप्ते आह- **क्रियाणां**-अवहननादिक्रियाणाम्, **अर्थशेषत्वात्**- तण्डुलनिष्पत्तिरूपार्थजनकत्वात् तन्निष्पत्तेश्च प्रत्यक्षम् । **अतस्तन्निर्वृत्त्या**- तण्डुलोत्पत्त्या, **अपवर्गः**—क्रियोपरमः स्यात् ॥ २७ ॥

### अदृष्टफलकस्यावघातादेः सकृदनुष्ठानाधिकरणम् ॥ ६ ॥

## धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् ॥२८॥

**धर्ममात्रे**- केवलादृष्टसाधने अवघातादौ यथा अग्निचयने ‘ औदुम्बरमुलूखलं सर्वौषधिपूर्णमवहत्य तद्वदधाति ’ इत्यत्र फलस्य **अदर्शनात्**- प्रत्यक्षाभावात् ‘ सकृत्कृते शास्त्रार्थः ’ इति न्यायेन सकृदनुष्ठानादेव**अपवर्गः**- विरामः स्यात् ॥ २८ ॥

**सर्वेषां—बहूना कार्यत्वात्—** अनुष्ठेयत्वात्, विशेष अधिकारः ' तेषां ये प्रथमं यजेरन् तेषां गौरतिरात्र., ये द्वितीयं तेषामायुः ' ' प्रथमं यजेरन् द्वितीयं यजेरन् ' इति श्रुत समुपपद्यते । उक्तार्थे लिङ्गदर्शनमिदम् । तस्माद्यथा कामी तथाऽभ्यास काम्यकर्मणः ॥२१॥

## पू० ॥ सकृत्तु स्यात् कृतार्थत्वादङ्गवत् ॥२२॥

**सकृत्तु**—सकृदेवानुष्ठान स्यात्काम्यकर्मण. । कुत. ' तेनैव कृतार्थत्वात् । **अङ्गवत्**—यथा एकप्रयोगे अङ्गाना सकृदनुष्ठानेन कृतार्थत्व तथाऽत्रापि स्यादिति ॥ २२ ॥

## शब्दार्थश्च तथा लोके ॥ २३ ॥

**लोके**-लोकव्यवहारे, **शब्दार्थः**—शब्दार्थानुष्ठान, **तथा**—सकृदेव दृश्यते । ' सकृत्काष्ठान्यानय ' इति गुरुणोक्ते शिष्य सकृदेव काष्ठाहरण करोति ॥ २३ ॥

## अपि वा सम्प्रयोगे यथाकामी प्रतीयेता- श्रुतित्वाद्विधिषु वचनानि स्युः ॥ २४ ॥

अपि वेति सकृत्पक्षव्यावृत्ति । **सम्प्रयोगे**— प्रयोगानुष्ठाने, **यथाकामी** इति **प्रतीयेत**— ज्ञातव्यम् । कुत ? **अश्रुतित्वात्**— सकृदेवानुष्ठेयमिति शास्त्राभावात् । **विधिषु** अनुष्ठानमात्रगोचराणि विधिवचनानि न सकृदसकृद्वा तात्पर्यकाणि तानीति भाव ॥ २४ ॥

## ऐकशब्द्यात्तथाङ्गेषु ॥ २५ ॥

*प्रयाजाद्यङ्गेष्वपि तथा*— सकृदसकृदिति शास्त्राभावादभ्यास स्यादिति नाशङ्कनीयम् । कुतः ' **ऐकशब्द्यात्**— एकशब्दवाच्यार्थनिष्ठसकृदाकाङ्क्षाप्रापणात् । अङ्गानां प्रधानानां च विधायकः शब्दो विधिप्रत्यय

एव एव। तत्र कथमावाकाङ्क्षा सकृदेवेति। फले तु यदा यदा फलेच्छा स्यात्तदा तदा किमस्य साधनमित्याकारिका उपायाकाङ्क्षेति साधनाऽऽवृत्तिर्युक्तेति भावः ॥ २५ ॥

## लोके कर्माथलक्षणम् ॥ २६ ॥

**लोके** लौकिक कर्म **अर्थलक्षणम्**—लौकिकप्रत्यक्षगोचरकार्यकम्। यतस्तत्र सकृदानयनेन प्राकृतार्थनिवृत्तौ सकृदेवानयनम्। तदनिवृत्तौ तु द्विवारं त्रिवारमानयति। तेन विनापि कार्यसिद्धौ नानयति च। अत्र बीज फलस्य प्रत्यक्षदर्शनं विद्यत इति। स्वर्गाग्निस्थले तु शब्दैकगम्यत्वेन तदभावाल्लौकिकदृष्टान्तोऽत्रानुचित इति भावः ॥ २६ ॥

अवघातादीनामातण्डुलनिर्वृत्त्यभ्यासाधिकरणम् ॥ ५ ॥

## क्रियाणामर्थशेषत्वात् प्रत्यक्षमतस्तन्निर्वृत्त्याऽपवर्गः स्यात् ॥ २७ ॥

'व्रीहीनवहन्ति, तण्डुलान् पिनष्टि' इत्यादिषु अवहननादिक सकृदनुष्ठेय, उत आतण्डुलनिर्वृत्तेरिति विशये अदृष्टार्थत्वात् सकृदनुष्ठानमिति सिद्धान्तितत्वात्सकृदेवेति प्राप्ते आह- **क्रियाणां**-अवहननादिक्रियाणाम्, **अर्थशेषत्वात्**— तण्डुलनिष्पत्तिरूपार्थजनकत्वात्तासां तन्निष्पत्तिः प्रत्यक्षम्। **अतस्तन्निर्वृत्त्या**— तण्डुलोत्पत्त्या, **अपवर्गः**—क्रियोपरमः स्यात् ॥ २७ ॥

अदृष्टफलकस्यावघातादेः सकृदनुष्ठानाधिकरणम् ॥ ६ ॥

## धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् ॥२८॥

**धर्ममात्रे**— केवलादृष्टसाधने अवघातादौ यथा अग्निचयने 'औदुम्बरमुलूखलं सर्वौषधिपूर्णमवहत्य तद्गुदधाति' इत्यत्र फलस्य **अदर्शनात्**-प्रत्यक्षाभावात् 'सकृत्कृत शास्त्रार्थः' इति न्यायेन सकृदनुष्ठानादेवापवर्गः-विरामः स्यात् ॥ २८ ॥

**सर्वेषां**— बहूना कार्यत्वात्— अनुष्ठेयत्वात्, विशेषः अधिकारः 'तेषां ये प्रथमं यजेरन् तेषां गौरतिरात्रः, ये द्वितीयं तेषामायुः' 'प्रथमं यजेरन् द्वितीयं यजेरन्' इति श्रुतः समुपपद्यते । उक्तार्थे लिङ्गदर्शनमिदम् । तस्माद्यथा कामी तथाऽभ्यासः काम्यकर्मणः ॥२१॥

## पू० ॥ सकृत्तु स्यात् कृतार्थत्वादङ्गवत् ॥२२॥

**सकृत्तु**—सकृदेवानुष्ठानं स्यात्काम्यकर्मणः । कुतः ? तेनैव कृतार्थत्वात् । **अङ्गवत्**—यथा एकप्रयोगे अङ्गानां सकृदनुष्ठानेन कृतार्थत्वं तथाऽत्रापि स्यादिति ॥ २२ ॥

## शब्दार्थश्च तथा लोके ॥ २३ ॥

**लोके**—लोकव्यवहारे, **शब्दार्थः**—शब्दार्थानुष्ठान, **तथा**—सकृदेव दृश्यते । 'सकृत्काष्ठान्यानय' इति गुरुणोक्ते शिष्य सकृदेव काष्ठाहरणं करोति ॥ २३ ॥

## अपि वा सम्प्रयोगे यथाकामी प्रतीयेता· श्रुतित्वाद्विधिषु वचनानि स्युः ॥ २४ ॥

**अपि वेति** सकृत्पक्षव्यावृत्ति । **सम्प्रयोगे**— प्रयोगानुष्ठाने, **यथाकामी** इति **प्रतीयेत**— ज्ञातव्यम् । कुत ? **अश्रुतित्वात्**— सकृदेवानुष्ठेयमिति शास्त्राभावात् । **विधिषु** अनुष्ठानमात्रगोचराणि विधिवचनानि न सकृदसकृद्वा तात्पर्यकाणि तानीति भाव. ॥ २४ ॥

## ऐकशब्द्यात्तथाङ्गेषु ॥ २५ ॥

प्रयाजाद्यङ्गेष्वपि **तथा**— सकृदसकृदिति शास्त्राभावादभ्यासः स्यादिति नाशङ्कनीयम् । कुतः ? **ऐकशब्द्यात्**— एकशब्दवाच्यार्थनिष्ठसकृदाकाङ्क्षाग्राहकत्वात् । अङ्गानां प्रधानानां च विधायकः शब्दो विधिप्रत्यय

एक एव । तत्र कथमावाकाङ्क्षा सकृदेवेति । फले तु यदा यदा फलेच्छा स्यात्तदा तदा किमस्य साधनमित्याकारिका उपायाकाङ्क्षेति साधनाऽऽवृत्तिर्युक्तेति भावः ॥ २५ ॥

## लोके कर्मार्थलक्षणम् ॥ २६ ॥

**लोके** लौकिक कर्मे **अर्थलक्षणम्**—लौकिकप्रत्यक्षगोचरकार्यकम् । यतस्तत्र सकृदानयनेन प्राक्कार्यनिवृत्तौ सकृदेवानयनम् । तदनिवृत्तौ तु द्विवार त्रिवारमानयति । तेन विनापि कार्यसिद्धौ नानयति च । अत्र बीज फलस्य प्रत्यक्षदर्शनं विद्यत इति । स्वर्गादिस्थले तु शब्दैकगम्यत्वेन तदभावाल्लौकिकदृष्टान्तोऽत्रानुचित इति भावः ॥ २६ ॥

अवघातादीनामातण्डुलनिर्वृत्त्यभ्यासाधिकरणम् ॥ ५ ॥

## क्रियाणामर्थशेषत्वात् प्रत्यक्षमतस्तन्निर्वृत्त्याऽपवर्गः स्यात् ॥ २७ ॥

' व्रीहीनवहन्ति, तण्डुलान् पिनष्टि ' इत्यादिषु अवहननादिक सकृदनुष्ठेयं, उत आतण्डुलनिर्वृत्तेरिति विशये अङ्गाना सकृदनुष्ठानमिति सिद्धान्तितत्वात्सकृदेवेति प्राप्ते आह- **क्रियाणां** -अवहननादिक्रियाणाम्, **अर्थशेषत्वात्**— तण्डुलनिष्पत्तिरूपार्थजनकत्वात् तन्निष्पत्तेः प्रत्यक्षम् । **अतस्तन्निर्वृत्त्या**— तण्डुलोत्पत्त्या, **अपवर्गः**—क्रियोपरमः स्यात् ॥ २७ ॥

अदृष्टफलकस्यावघातादेः सकृदनुष्ठानाधिकरणम् ॥ ६ ॥

## धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् ॥२८॥

**धर्ममात्रे**— केवलादृष्टसाधने अवघातादौ यथा अग्निचयने ' औदुम्बरमुलूखलं सर्वौषधिपूर्णमवहत्य तदुपदधाति ' इत्यत्र फलस्य **अदर्शनात्**-प्रत्यक्षाभावात ' सकृत्कृते शास्त्रार्थे ' इति न्यायेन सकृदनुष्ठानादेवापवर्गः-विराम स्यात् ॥ २८ ॥

प्रयाजादीनामङ्गानां सकृदनुष्ठानाधिकरणम् ॥ ७ ॥

**क्रतुवद्वानुमानेनाभ्यासे फलभूमा स्यात् ॥ २९ ॥**

**क्रतुवत्**—काम्यक्रतुवत्, प्रयाजादीनामभ्यासे **फलभूमा**—फलाधिक्यं स्यात् । कुतः ? प्रयाजाद्यभ्यासः अधिकोपकारसाधनम् । क्रियावृत्तित्वात् काम्यक्रतुवत् । इत्यनुमानप्रमाणेन तस्य सिद्धत्वादिति ॥२९॥

**सि० ॥ सकृद्वा करणैकत्वात् ॥ ३० ॥**

**सकृद्वा**— सकृदेवानुष्ठानं तेषाम् । कुतः ? प्रधानरूपैककारणत्वात् । यथा मृत्पिण्डेन घटे जननीये यावता चक्रभ्रमणेनोपकारः सिध्यति तदधिकभ्रमणेनोपकारो न दृश्यते । चक्रभ्रमस्यान्यत् कार्यं नास्ति । तावतैव कृतार्थः सः । तद्वदत्रापीति भाव. ॥ ३० ॥

**परिमाणं चानियमेन स्यात् ॥ ३१ ॥**

**परिमाण**—पौर्णमास्याममावास्यायां च ' चतुर्दश त्रयोदश ' इति नित्यवत्क्रतुप्रयाजाभ्यासे कृते **अनियमेन**—कदाचित्पञ्चदश षोडश सप्तदशेत्यनियमः स्यात् । उक्तनियमो न स्यादिति भावः ॥ ३१ ॥

**फलारम्भनिर्वृत्तेः क्रतुषु स्यात्फलान्यत्वम् ॥ ३२ ॥**

**फलारम्भनिर्वृत्तेः**—फलस्य--स्वर्गस्य आरम्भनिष्पत्तेः— पृथक् पृथगुत्पत्तेः, **क्रतुषु**--काम्यक्रतुषु, **फलान्यत्वं**—फलभेदः स्यात् । इति क्रतुवदिति यदुक्तं पूर्वपक्षिणा तद्वैषम्यप्रदर्शकमिदं सूत्रमिति भावः ॥ ३२ ॥

**अर्थवांस्तु नैकत्वादभ्यासः स्यादनर्थको यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात् प्रधाने च क्रियार्थत्वादनियमः स्यात् ॥ ३३ ॥**

सकृत् कृतेन कृतार्थत्वादङ्गानामभ्यासोऽनर्थक इति यदुक्तं सिद्धान्तिना तत्राह पूर्वपक्षी । **अर्थवांस्तु**— अर्थवान्— सफल एव अङ्गाभ्यासः । कुतः? **नैकत्वात्**— प्रधानदृष्टयङ्गकार्यस्यानेकत्वात् —भिन्नत्वात् । **एकस्मिन्**— एककार्यविषये अभ्यासोऽनर्थकः—निष्फलः स्यात् । यथा उक्तकाले एकतृप्त्यर्थं क्रियमाणं भोजनं तां निर्वर्तयति । अतस्तदर्थं तस्याभ्यासोऽनर्थकस्तदानीम् । इह तु प्रकृते **अर्थस्य**— प्रधानफलस्य, **अपरिमाणत्वात्**— इयत्तया अनियतत्वात्—अनिश्चितत्वात्, अङ्गानां तदर्थत्वात् प्रधानोपकारकत्वात् उपकारभूयस्त्वे फलभूयस्त्वं, तदन्यत्वे तदल्पत्वमिति सकृदसकृद्वा, अङ्गानुष्ठानमित्यनियमः । न सकृदेवेति नियम इत्यभिप्रायः ॥ ३३ ॥

## पृथक्त्वाद्विधितः परिमाणं स्यात् ॥ ३४ ॥

उक्तरीत्या अर्थस्य उपकारस्य पृथक्त्वात् तदनुसारेण **विधितः**- विधिपरं **परिमाणं** 'चतुर्दश त्रयोदश' इति पूर्णिमायाममावास्यायां चाऽऽहुतिसङ्ख्या स्यात् । आहुत्युत्पत्तिवाक्यगतसङ्ख्याया तत्तात्पर्यमिति भावः ॥ ३४ ॥

## सि० ॥ अनभ्यासो वा प्रयोगवचनैकत्वात् सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात् क्रियार्थत्वात् ॥ ३५ ॥

**अनभ्यासो वा**— अङ्गानामनावृत्तिरेव । कुतः? **प्रयोगवचनैकत्वात्**—अङ्गानां प्रधानानां च प्रयोगविधेः एकत्वात् । न च प्रयोगविधेरेकत्वेऽपि यथा काम्यकर्मणः पुनरावृत्तिस्तथा अत्राप्यङ्गानामावृत्तिः स्यादिति वाच्यम् । **कर्मणः**—अङ्गस्य 'फलवत्सन्निधावफलं तदङ्गम्' इत्यफलत्वात् । अतः एवाभ्यासात्फलाधिक्यं नेत्याशयः । **युगपत्**— एकभावनायामन्वयकाले, **शास्त्रात्**—पदश्रुत्या, प्रधानक्रियाया एव फलक-

रणत्वेनान्वयबोधनात् । इत्यङ्गानामफलत्वे हेतूपन्यासोऽयम् । नाप्यङ्गानुष्ठान व्यर्थम् । तस्य क्रियार्थत्वात्—प्रधानोपकारकत्वादिति भाव ॥ ३५ ॥

**शं० ॥ अभ्यासो वा छेदनसंमार्गावदानेषु वचना-त्सकृत्त्वस्य ॥ ३६ ॥**

पितृयज्ञे—' सकृदाच्छिन्नं बर्हिर्भवति ' तथा अनुयाजे—' सकृदिध्मान् समार्ष्टि ' स्विष्टकृति च—' उत्तरार्धात्सकृदवद्यति ' इति च श्रूयते । एतेषु सकृत्त्ववचनादन्यत्र अभ्यासो वा— असकृत्प्रयोगोऽङ्गानामिति सिद्ध्यति । अन्यथा सकृत्त्ववचन व्यर्थं स्यादिति भाव ॥ ३६ ॥

**सि० ॥ अनभ्यासस्तु वाच्यत्वात् ॥३७॥**

अनभ्यासस्तु । पूर्वोक्तयुक्ते अङ्गाना प्रधानस्य प्रयोगविधेरेकत्वात् अनभ्यासः— अनावृत्तिरेवाङ्गानाम् । छेदनादिषु तु फलान्तरतात्पर्येण तथा । वाच्यत्वात् । यतो 'दर्शपूर्णमासयो असकृदाच्छिनत्ति ' इति श्रुतम् । तस्यातिदेशेन पितृयज्ञे प्राप्तौ, एव प्रयाजस्थविधौ ' त्रिरुत परि धि समार्ष्टि ' इति विहितम् । त मादृश्यादनूयाजऽपि तथा प्राप्तो एव-मन्यत्र ' द्विर्हविषोऽवद्यति ' इति द्विरवत्त विहितम् । तत्र स्विष्टकृत्यपि प्राप्तौ निवृत्त्यर्थं सकृत्त्वस्य वाच्यत्वादिति भाव ॥ ३७ ॥

कपिञ्जलानिति बहुवचनस्य त्रित्वपरत्वाधिकरणम् ॥८॥

**पू० ॥ बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ॥ ३८ ॥**

' वसन्ताय कपिञ्जलानालभेत ' इति श्रूयते । तत्र प्रयत्न गत सख्यानियमो विकल्पेन स्वस्या, उत त्रय एवेति संशये आह पूर्वपक्षी बहुवचनेनेति । बहुवचनेन सर्वप्राप्ते —सर्वेषां सङ्ख्याविशेषाणां प्राप्ते, प्रत्येक सर्वा एव सङ्ख्यास्तस्य वाच्या । समुच्चयस्य तत्राशक्य यादृच्छिक स्यादिति ॥ ३८ ॥

## दृष्टः प्रयोग इति चेत् ॥ ३९ ॥

चतुष्ट्वादिकं न बहुवचनस्यार्थः। अपि तु त्रित्वमेव। अत एव बहुवचने श्रुते न त्रित्वे संशयः। किन्तु चतुष्ट्वादावेव स इति चेन्न। चत्वारो विप्राः समागताः इति चतुरादिष्वपि बहुवचनप्रयोगो दृष्ट इति चेत्— ॥ ३९ ॥

## तथेह ॥ ४० ॥

यथा माणवके सिंहशब्दो गौणः 'सिंहो माणवक' इत्यत्र। तथा इह ॥ ४० ॥

## भक्त्येति चेत् ॥ ४१ ॥

भक्त्या— लक्षणया, प्रयोगो भविष्यतीति चेत्— ॥ ४१ ॥

## तथेतरस्मिन् ॥ ४२ ॥

एवमन्यत्रापि गौण्यां वृत्त्या बहुवचनप्रयोगस्य दृष्टत्वान्न त्रित्वादिकं तस्यार्थः। किन्तु बहुत्वम्। तस्य त्रित्वमारभ्य परार्धपर्यन्तेषु सत्त्वात् तावता प्राप्तौ समुच्चयेनानुष्ठानासम्भवाद्विकल्प एवेति भावः ॥ ४२ ॥

## सिं० ॥ प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् ॥ ४३ ॥

प्रथमं वा— उक्तवाक्यस्थे 'कपिञ्जलान्' इति बहुत्वे प्रथमं-प्रथमोपस्थितं त्रित्वमेव नियम्येत। यतः कारणात्—प्रमाणान्तरात्, अतिक्रमः-प्रथमोपस्थितस्योल्लङ्घनं स्यात्। यथा 'सप्तदश प्राजापत्यान् पशूनालभते' इत्यादौ। अत्र तु न किमपि तादृशं कारणम्। प्रत्युत बाधकमस्ति। अतस्त्रित्वमेवोपादेयं श्रुतेन बहुत्वेनेति भावः ॥ ४३ ॥

## तथा चान्यार्थदर्शनम् ॥ ४४ ॥

तथा च—केवलबहुवचनस्य त्रित्वे एव—पर्यवसानमित्यत्र, अन्यार्थ-दर्शनं—अन्यत्र लिङ्गदर्शनम्। यथा— कृष्णा याम्या अरुणा रौद्रा

नमोरूपाः पार्जन्याः, ऐन्द्राग्नो दशमः' इत्यत्रे त्रिकत्रयनियमे सत्येव ऐन्द्राग्नस्य नियमेन दशमत्वं सम्भवति । नो चेत् तत्प्राक्षिकं स्यादिति भावः ॥ ४४॥

## प्रकृत्या च पूर्ववत्तदासत्तेः ॥ ४५ ॥

अग्नीषोमीयं पशुमालभेतेत्यत्र **प्रकृत्या**— अग्नीषोमीयेण, एकत्वं प्राप्यते । **तदासत्ते**— तस्य त्रित्वसन्निकृष्टत्वात् । किञ्च, **पूर्ववत्**— पूर्वसूत्रोक्तवल्लिङ्गान्तरमपि विद्यते । तथा हि—गृहमेधीये 'ओदनानुद्धरतीत्यत्र त्रित्वसङ्ख्यायामेवकरणत्वे प्रथम निरुपपद 'मध्यमस्य इति श्रुतम् । अन्यत्र पच्यमाना मध्यमः, अद्याना मध्यमः' इति सोपपदं श्रूयते । तस्माद् बहुवचनमादौ त्रित्वमेवोपस्थापयति । तेन शास्त्रस्य कृतार्थत्वान्नात्र विकल्प इति भावः ॥ ४५ ॥

### उत्तरा दोहयतीत्यत्र सर्वासां गवां दोहनाधिकरणम् ॥ ९ ॥

## उत्तरासु यावत्स्वमपूर्वत्वात् ॥ ४६ ॥

सान्नाय्यदोहन प्रकृत्यैत्य श्रूयते 'याम्यतादितस्रो दोहयित्वा त्रिसृष्वाग्न्वारभ्य उत्तरा दोहयति' इति । तत्र उत्तरा दोहयतीत्ययं त्रित्वानुवादो वा इति संशये उत्तरासु तिस्र एव दोहयितव्या इति कपिञ्जलाधिकरणन्यायेन त्रित्वविधिः । अथवा **यावत्स्वं**—यावतीषु गोषु स्वत्वं तास्व याः सर्वा दोहयितव्या इति विधिः । कुतः ? **अपूर्वत्वात्**—अप्राप्तत्वात् ॥ ४६ ॥

## सि० ॥ यावत्स्वं वान्यविधानेनानुवादः स्यात् ॥ ४७ ॥

**यावत्स्वं**— यावतीषु स्वत्वं तासां दोहः इत्यनुवादः स्यात् । कुतः ? **अन्यविधानेन**— अन्यवाक्येन विहितत्वादिति यावत् ॥ ४७ ॥

## साकल्यविधानात् ॥४८॥

**साकल्यविधानात्**— 'नास्यैतां रात्रिं पयसाऽग्निहोत्रं जुहोति कुमाराश्च न पयो लभन्ते' इति वाक्येन सकलगोदोहस्य विधानात् ॥४८॥

## बह्वर्थत्वाच्च ॥४९॥

एतद्वाक्यं कुमाराणां पय प्रतिषेधमात्रं करोति । न सकलगोदोहनं विदधाति । वाक्यभेदापत्तेरित्याशङ्कायामाह—**बह्वर्थत्वात्**— ' बहुदुग्धीन्द्राय देवेभ्य ' इति मन्त्रलिङ्गं शक्यनुसारं बहुत्वं बोधयत् सकलगवां दोहनमेव द्रढयतीति भाव ॥ ४९ ॥

## अग्निहोत्रे चाशेषवद्यवागूनियमः ॥५०॥

'नास्यैतां रात्रिं पयसाऽग्निहोत्रं जुहोति यथा अन्यस्यै देवतायै प्रत्तमन्यस्यै देवतायै दद्यात्तादृक् तत्स्याद्यवाग्वा जुहुयात्' इत्यग्निहोत्रे यवागूनियामकं लिङ्गान्तरं **अशेषवत्**- निखिलगोदोहनरूपमर्थं द्रढयति । अन्यथा अन्यस्यै देवतायै दत्तमित्याद्यर्थवादोऽनुपपन्न स्यादिति भाव ॥ ५० ॥

## इति व्याख्यातम् ॥ ५१ ॥

अनेन सूत्रेण कुमारपय प्रतिषेधवाक्यमपि व्याख्यातं वेदितव्यम् ॥५१॥

## सर्वप्रापिणाऽपि लिङ्गेन संयुज्य देवताभिसंयोगात् ॥ ५२ ॥

' संयुज्य वत्सेभ्यश्च ह वा एता मनुष्येभ्यश्च पुरा अथैतर्हि देवेभ्य एवैता आप्याययन्ति ' इति **सर्वप्रापिणाऽपि लिङ्गेन** सर्वासां दोहनं व्यक्तं प्राप्यते । तस्माद्वत्सेभ्यस्तरासु दोहनं स्यादिति भाव ॥ ५२ ॥

**दर्शपूर्णमासादिषु तन्त्रेणाऽऽदयमागाद्यङ्गानुष्ठानाधिकरणम् ॥ १० ॥**

## प्रधानकर्मार्थत्वादङ्गानां तद्भेदात्कर्मभेदः प्रयोगे स्यात् ॥ ५३ ॥

उपोद्घातं समाप्य प्रकृताध्यायार्थं तन्त्रविचारः प्रस्तूयते । तत्र पूर्वपक्षमाह । **अङ्गानां**—प्रयाजाद्यङ्गानां, **प्रयोगे**-अनुष्ठाने, **कर्मभेदः**—तदनुष्ठानस्याऽऽवृत्तिः स्यात । **तद्भेदात्**— प्रधानानां भेदात्, अङ्गानां **प्रधानकर्मार्थत्वात्**--प्रधानोपकारकत्वात् , प्रधानभेदे प्रतिप्रयोगं गुणावृत्तिरिति न्यायेनाङ्गानुष्ठानभेद स्यादित्यर्थ ॥ ५३ ॥

**क्रमकोपश्च यौगपद्ये स्यात् ॥ ५४ ॥**

**यौगपद्ये**—अङ्गानां तन्त्रेणानुष्ठाने, **क्रमकोपः**—विहितक्रमबाधः स्यात् । तथा हि— आज्यभागयागाव्यवहितोत्तरत्वं सर्वप्रधानानामिति क्रमः । यौगपद्ये तु मध्ये अग्नियागस्य व्यवधानादुपांशुयागस्योक्तक्रमबाध इति भावः ॥ ५४ ॥

**सि० ॥ तुल्यानां तु यौगपद्यमेकशब्दोपदेशात्स्याद्विशेषाग्रहणात् ॥ ५५ ॥**

**तुल्यानां**—देशतः कालतः कर्तृतश्च तुल्यानामाग्नेयादित्रयाणां, **यौगपद्यं**—सहप्रयोगः—सहानुष्ठानं स्यात् । कुतः ? **एकशब्दोपदेशात्**— एकशब्देन—दर्शशब्देन, पौर्णमासीशब्देन च उपदेशात्—फलसम्बन्धकथनाद्-ङ्गानामपि । अयमङ्गकलापः किमाग्नेयस्य, उताग्नीषोमीयस्येति विशेषाग्रहणात् सर्वार्थत्वं तेषामिति तन्त्रेणैवानुष्ठानम् ॥ ५५ ॥

**ऐकार्थ्यादव्यवायः स्यात् ॥ ५६ ॥**

सर्वेषामङ्गानामैकार्थ्यात्—एकप्रयोजनकत्वात्—दण्डचक्रचीवरादिवत् सम्भूय फलोत्पादकत्वाच्च तेषां प्रयोगे क्रमः । सत्येवं कुतः क्रमबाधः । अतः सर्वेषां प्रधानानामङ्गैरव्यवधानमेव स्यात् ॥ ५६ ॥

**तथा चान्यार्थदर्शनं कामुकायनः ॥ ५७ ॥**

**तथा च**— अङ्गानां तन्त्रमेवेत्यत्र **अन्यार्थदर्शनं**— अन्यलिङ्गदर्शनं—प्रागभिहिताऽऽहुतिसङ्ख्यादर्शनं लिङ्गं कामुकायनाचार्यो दर्शयति । अन्यथा— अङ्गावृत्तौ चतुर्दश त्रयोदशेति नियमो न स्यादाहुतीनामिति भावः ॥ ५७ ॥

**तन्न्यायत्वादशक्तेरानुपूर्व्यं स्यात्संस्कारस्य तदर्थत्वात् ॥ ५८ ॥**

**तन्न्यायत्वात्**— 'सम्भूयकारिणां सहक्रिया' इति न्यायत्वात्, 'पुरोडाशे साङ्गारं भस्माध्यूह्य' इत्यादावपि सकृदनुष्ठानं स्यादित्याशङ्कायामाह **अशक्ते**— अङ्गारस्थापनस्य कार्यं पुरोडाशपाक । स च एकस्मिन्नङ्गारस्थापनेऽन्यत्र न सम्भवति । न ह्येकस्य प्रथने कृते अन्योऽपि प्रथने। असमर्थत्वात् । अतस्तत्र—**आनुपूर्व्यं**— भेदेनानुष्ठानं स्यात् । न सकृत् । **सस्कारस्य**— साङ्गारभस्मस्थापनादिविहितसंस्कारस्य, **तदर्थत्वात्**— दृष्टकार्यपाकार्थत्वात्सादृष्टार्थत्वं तत्र शक्यम् । दृष्टसम्भवे अदृष्टकल्पनमन्याय्यमिति भाव ॥ ५८ ॥

## असंस्पृष्टोऽपि तादर्थ्यात् ॥ ५९ ॥

येन प्रधानेन यत स्पृष्ट सत्तत्समीपे यदनुष्ठीयते तत्तदङ्गम् । इत्याघारादय आग्नेयाङ्गम् । स्विष्टकृदादयश्चाग्नीषोमीयाङ्गम् । उपांशुयागस्य केनाप्यसंस्पर्शादनङ्गं स्यात्तत्तस्येत्याशङ्कायामाह— **असंस्पृष्टोऽपि**— संस्पर्शरहितोऽपि, स्थानापेक्षया बलवता प्रकरणेनाङ्गाना **तादर्थ्यात्**—सर्वार्थत्वात् सर्वप्रधानोपकारकत्वात् प्रत्येकमुपकारार्थमङ्गावृत्ति कार्येति प्राप्नोति ॥ ५९ ॥

## विभवाद्वा प्रदीपवत् ॥ ६० ॥

**विभवात्**—सामर्थ्यात् सकृदनुष्ठानेनाप्यङ्गकलाप उपकार जनयेत् । **प्रदीपवत्** यथा प्रदीपो भुञ्जानानां विप्राणां मध्ये एकस्य सन्निधौ प्रज्वलितः सर्वेषां तेषामुपकारको भवति तद्वदत्रापि स्यात् । तस्मादनावृत्तिरङ्गानाम् ॥ ६० ॥

## अर्थात्तु लोके विधिः प्रतिप्रधानं स्यात् ॥ ६१ ॥

**लोके**—लोकव्यवहारे, प्रवृत्ति **अर्थात्**— फलानुसारिणी, सकृदसकृद्वा इति प्रत्यक्षात् । इह तु **विधिः**—विधिप्राप्तं कर्म, विधिना परोपकारो गम्यते । न प्रत्यक्षेण । तस्मादावृत्तिरिति ॥ ६१ ॥

## सकृदिज्यां कामुकायनः परिमाणविरोधात् ॥६२॥

यत्र ' चतुर्दश त्रयोदशेत्याहुतिसङ्ख्यापरिमाणविरोधात्सकृदिज्या इति कामुकायनाचार्यमतमनुरुध्यते तत्रोच्यते ॥ ६२ ॥

## विधेस्त्वितरार्थत्वात्सकृदिज्याश्रुतिव्यतिक्रमः स्यात् ॥ ६३ ॥

विधेः— अङ्गकलापस्य, इतरार्थत्वात्— प्रधानार्थत्वात् प्रतिप्रधान गुणावृत्तिरिति प्रतिपादितत्वाच्च सकृदिज्या— तन्त्रेणानुष्ठाने, श्रुतिव्यतिक्रमः— शास्त्रविरोधः स्यात् । पञ्चावृत्तिपक्षे चतुर्दश त्रयोदशेत्याहुतिसङ्ख्याऽनुपपन्ना स्यादित्युक्तं तत्रोच्यते । नानेनाऽऽहुतिसङ्ख्या विधीयते । अपि तु प्राप्तसङ्ख्यामनूद्य पौर्णमास्यां चतुर्दश आहुतिविधयः, आमावास्यायां त्रयोदश आहुतिविधयः इति उभयथा विधिसङ्ख्या प्रतिपाद्यत इत्याहुतिविधीनामिव सङ्ख्या उपदिष्टा । नाऽऽहुतीनाम् । तस्मादङ्गानामावृत्तिरेवेति पूर्वपक्षोपसंहारः ॥ ६३ ॥

## सि० ॥ विधिवत्प्रकरणाविभागे प्रयोगं बादरायणः ॥ ६४ ॥

प्रयोगं—तन्त्रेणानुष्ठानं बादरायणः मनुते । कुतः ? प्रकरणाविभागे—प्रकरणस्याविभागादित्यर्थः । सम्भूयकारित्वेन सर्वेषामेकप्रकरणत्वादिति यावत् । विधिवत्— यथाऽऽग्नेयादिषड्यागविधयः इतिकर्तव्यताऽऽकाङ्क्षया प्रयाजादीन्यङ्गानि सकृच्छ्रुतान्यप्यविशेषेण गृह्णन्ति प्रकरणेन स्वस्वसंनिधीन् न बाधितुं शक्नुवन्ति तन्त्रेणानुष्ठानमपि संनिधिं बाधितुं प्रकरणप्रमाणेन व्यवहितप्रधानेष्वपि उपकार सम्पादयन्तीत्याशयः सिद्धान्तिनः । बादरायणग्रहणं सिद्धान्तदार्ढ्यायेति भाव ॥ ६४ ॥

## कचिद्विधानान्नेति चेत् ॥ ६५ ॥

काचित्- सहाविघ्नन्ति, सह पिंषन्ति' इति क्वचिदेव सहत्वविधाना-दन्यत्र पार्थक्येनानुष्ठानं, न सकृदिति चेत्- ॥ ६५ ॥

## न विधेश्चोदितत्वात् ॥ ६६ ॥

न। विधेः—आग्नेयाग्नीषोमयोर्निर्वापविधेः पृथग् विहितत्वात्तथाऽवह-ननपेषणयोरपि तदीययोः पार्थक्यं प्राप्तमिति तन्निवृत्तये तत्रावश्यं सहत्वं विधेयम् । अतोऽन्यत्र भेदनानुष्ठानमित्येवं परिसङ्ख्या न तत्रेति ज्ञेयम् । तस्माद्देशकालकर्त्रैक्यवत्ता प्रधानानामङ्गानुष्ठाने तन्त्रेण सकृदेव । नासकृदिति सिद्धम् ॥ ६६ ॥

आग्नेयकृष्णग्रीवयोः प्रथमतृतीययोर्भेदेनानुष्ठानाधिकरणम् ॥ ११ ॥

## व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाण-विशेषाणाम् ॥ ६७ ॥

'आग्नेयं कृष्णग्रीवमालभेत । सौम्यं बभ्रुम् । आग्नेयं कृष्णग्रीवं पुरोधाया स्पर्धमानः' इति काम्यपशुकाण्डे श्रुतम्। तत्राऽऽग्नेयद्वयस्य सहानुष्ठानं, उत भेदेनेति संशये अगृह्यमाणविशेषाणां—तुल्यानां, यौगपद्यं व्याख्यातं पूर्वा-धिकरणे इत्यत्रापि यौगपद्यं—सहानुष्ठानमिति ॥ ६७ ॥

## सि० ॥ भेदस्तु कालभेदात्स्याच्चोदनाव्यवाया-द्विशिष्टानां विधिः प्रधानकालत्वात् ॥६८॥

भेदस्तु— निर्दिष्टप्रधानानां भेदेनैव प्रयोगः । न सहानुष्ठानम् । कुतः? कालभेदात् । कालभेदश्चोदनाव्यवधानात्— सौम्यबभ्रुचोदना-व्यवहितत्वात् । पाठक्रमेण प्रधानानामुक्तयागानां विलक्षणवृत्तित्व सिद्धमतः काल-भेदोऽपि सिद्ध एव । विशिष्टानां— क्षणविशिष्टानां तेषां यागानां, विधिः— प्रथमादिक्षणविधिर्यैनस्तत्तत्स्थैव तत्तत्क्षणस्थैव तत्तत्प्रधान-कालत्वम् । इति पृथक्त्वेनैवानुष्ठानं तयोः । सहप्रयोगे विधिविहितकालक्रमयो-र्बाधः स्यात् । स चानिष्ट इति भावः ॥ ६८ ॥

## तथा चान्यार्थदर्शनम् ॥ ६९ ॥

' अभितः सौम्यमाग्नेयौ भवतः ' इति अन्यार्थदर्शनं—तदर्थवादवाक्ये उक्तार्थदर्शनं पाठक्रमोपोद्बलकं लिङ्गमप्यस्तीत्यर्थः ॥ ६९ ॥

## विधिरिति चेन्न वर्तमानापदेशात् ॥ ७० ॥

विधिः—पार्श्वद्वये आग्नेयद्वयविधिपरं तद्वाक्यमिति चेन्न । वर्तमानापदेशात्—लट्प्रत्ययश्रवणात् तदर्थवाद एवेति भावः ॥ ७० ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां एकादशाध्यायस्य
प्रथमः पादः ॥ १ ॥ श्रीः ॥

---

## ॥ अथ एकादशाध्यायस्य द्वितीयः पादः ॥

आग्नेयादिप्रधानानामेकदेशकालकर्तृकत्वाधिकरणम् ॥ १ ॥

## सि० ॥ एकदेशकालकर्तृकत्वं मुख्यानामेकशब्दोपदेशात् ॥ १ ॥

पूर्वस्मिन् पादे कालप्रधानार्थानामङ्गानां तन्त्रमुपोद्घातसहितं निरूपितम् । अस्मिन् द्वितीयपादे साङ्गप्रधानानां तन्त्रं प्रपञ्च्यते । दर्शपूर्णमासयोः ' समे दर्शपूर्णमासाभ्यां यजेत । पौर्णमास्यां पौर्णमास्या यजेत । अमावास्यायाममावास्यया यजेत । दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः ' इति श्रूयते । तथा चातुर्मास्ये ' प्राचीनप्रवणे वैश्वदेवेन यजेत । वसन्ते वैश्वदेवेन यजेत । चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विजः ' इति च । तत्र एते विधयः किं प्रत्येकमुत्पत्तिविधिशेषाः, उत प्रयोगविधिशेषाः इत्येवं विशये सिद्धान्तः—

**मुख्यानां**— षण्णां प्रधानानां, **एकदेशकालकर्तृकत्वं**— एकः अभिन्नः देशः कालः कर्ता च येषां तत्त्वम् । कुतः ? **एकशब्दोपदेशात्**— षण्णां समुदायबोधकेन दर्शपूर्णमासाभ्यामित्येकशब्देन देशादिविधायकवाक्येषु निर्देशात् । यथा फलवाक्ये ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इत्यत्र समुदायवाचकशब्देन समुदितानामेव फलजनकत्वं तथाऽत्रापि समुदायमुद्दिश्य देशादिविधानादेक एव देशकालादिरिति भाव ॥ १ ॥

## पू० ॥ अविधिश्चेत् कर्मणामभिसम्बन्धः प्रतीयेत लक्षणार्थाभिसंयोगाद्विधित्वाच्चेतरेषां प्रति-प्रधानं भावः स्यात् ॥ २ ॥

**कर्मणां** -आग्नेयादिप्रधानयागानां मध्ये प्रत्येकमुद्दिश्य देशकालकर्तृणा**मविधिः**—विध्यभावश्चेत् तेषाम**भिसम्बन्धः**—तदैक्यं प्रतीयेत । नास्त्येव तथा । अपि तु प्रत्येकोत्पत्तिविशिष्टाः देशकालकर्तारः । कुतः ? **लक्षणार्थाभिसंयोगात्**— दर्शपूर्णमासशब्देन लक्षणावृत्त्या बोध्यो योऽर्थः समुदायैकदेशः प्रत्येकमाग्नेयादयस्तैः साकं **संयोगात्**— अन्वितत्वात्तेषाम् । तदपि कुत इति चेत् **इतरेषां**—देशकालकर्तॄणामप्राप्तत्वेन विधेयत्वात् । तत्तत्प्रकृतयागांगत्वेन विधिगोचरत्वात् । यतो देशकालकर्तारो विधेयास्तत एव दर्शपूर्णमासाभ्यामिति दर्शपूर्णमासशब्देनाऽऽग्नेयादीननूद्य ते विधीयन्त इत्याग्नेयादिषूद्देश्यत्वं क्लृप्तम् । सत्येवमुद्देश्यवृत्तिपरस्परसाहित्यं विवक्षितं चेत् ' आग्नेयादयः सर्वे कार्यास्ते च परस्परसहिताः ' इति विधानद्वयाद्वाक्यभेदापत्तिः । अतः साहित्यस्य विवक्षामुपेक्ष्य लक्षितेषु प्रत्येकस्मिन्नेव देशाद्यन्वयो वाच्यः । फलवाक्ये तु षण्णां विधेयत्वात्प्रत्येकत्वाद्विवक्षितेऽपि साहित्ये वाक्यभेदो नास्ति । तस्मात्— देशकालकर्तॄणां **प्रतिप्रधानं भावः—सम्बन्धः स्यात्** । अर्थाद्भेदेनानुष्ठानं, न तन्त्रमिति पूर्वपक्षः ॥ २ ॥

### अङ्गानामपि समदेशादिनियमाधिकरणम् ॥ २॥

## अङ्गेषु च तदभावः प्रधानं प्रति निर्देशात् ॥ ३ ॥

इत्थं पूर्वपक्षे सिद्धान्तमनुक्त्वा मध्ये अधिकरणान्तरं तदीयपूर्वपक्षसिद्ध्यर्थम् । अन्यथा स एव न सिध्येदिति । देशकालकर्तृणामङ्गैः साकं सम्बन्धोऽस्ति वा नेति विशये पूर्वपक्षः—अङ्गेषु— प्रयाजानुयाजादिषु, तदभावः— देशादीनामसम्बन्धः । कुतः ? प्रधानं प्रति— प्रधानयागमुद्दिश्य तेषां निर्देशात्— विधानात् ॥ ३ ॥

## यदि तु कर्मणो विधिसम्बन्धः स्यादैकशब्द्यात् प्रधानार्थाभिसंयोगात् ॥ ४ ॥

अनेन पूर्वाधिकरणसिद्धान्त उच्यते यदि त्विति । यदि कर्मणः— प्रत्येकमाग्नेयादिकर्मणः, विधिसम्बन्धः देशकालादिविधिसम्बन्धः स्यात् तदा त्वदुक्तं भेदेनानुष्ठानं सिध्येत् कदाचित् । किन्तु प्रत्येकं प्रधानकर्मणस्तद्विधिसम्बन्धः खपुष्पायमाण एव । कस्मात् ? ऐकशब्द्यात्— दर्शपूर्णमासाभ्यामिति समुदायवाचकैकशब्देन निर्देशात् । न च तस्य गतिः अविधिश्चेदिति ( १।२।२ ) सूत्रे लक्षणार्थाभिसंयोगादित्यनेन प्रदर्शितेति वाच्यम् । कुतः ? प्रधानार्थाभिसंयोगात्— स्वर्गफलकाऽऽग्नेयादिप्रयोगेण साकं देशकालादीनामभिसम्बन्धात् । अत्र देशादीनामुद्देश्यतावच्छेदकं नैव परस्परसहितषड्यागत्वम् । साहित्यस्य विवक्षितत्वे वाक्यभेदापत्तेरत्रैव प्रदर्शितत्वात् । नाप्याग्नेयत्वादिकं प्रत्येकमुद्देश्यम् । तथा सत्युद्देश्यभेदाद्वाक्यभेदः । अतः येनानुष्ठितेन व्यापारेण स्वर्गफलं सिध्यति तं लक्षयित्वा तेन साकं देशादीनां सम्बन्धोऽवश्यं वाच्यः । स च व्यापारः सङ्कल्पमारभ्य विप्रभोजनान्तः प्रयोगः । इत्थं साङ्गप्रधानप्रयोगे देशकालकर्तॄणां नियमविधिः सिद्ध इति भावः ॥ ४ ॥

## तथा चान्यार्थदर्शनम् ॥ ५ ॥

तथा च—उक्तरीत्या प्रयोगे देशकालादीनामन्वये अन्यार्थदर्शनं— ‘ उग्राणि ह वा एतानि घोराणि हवींषि यदमावास्यायां सन्निपत्यन्ते । आग्नेय

प्रथमं ऐन्द्रे उत्तरे' इत्यत्र योऽर्थस्तस्य दर्शनं समुपपद्यते। अस्मिन् वचने श्रुतं सम्भरणं पौर्वापर्यं च त्रयाणां यागानामेककालत्व एव उपपद्यत इति भावः॥ ५॥

## श्रुतिश्चैषां प्रधानवत्कर्मश्रुतेः परार्थत्वात् कर्मणोऽश्रुतित्वाच्च॥ ६॥

**एषां**— देशकालादीनां, **श्रुतिश्च**— श्रवणमपि, **प्रधानवत्**— अनुवादकवत् प्रतीयते। न तेषां विधेयत्वं भासते। कुतः? **कर्मश्रुतेः**— कर्मवाचकदर्शपूर्णमासश्रुतेः, **परार्थत्वात्**। दर्शपूर्णमासाभ्यामिति तृतीयाश्रुत्या आभ्यां किमप्युत्पाद्यमिति गम्यते। अतः परार्थत्वं स्पष्टमेव तयोः। तस्य **कर्मणः**--कार्यस्य--उत्पाद्यस्य, **अश्रुतित्वात्**-अश्रवणात्, देशकालादिकं प्रधानवदनुवादकवत्प्रतीयते यद्यपि, अथापि तस्य प्राधान्यमनुपपन्नम्। प्राधान्यस्यानुवाद्यत्वव्याप्यत्वात् प्राधान्ये तस्यानुवाद्यत्वं नियतमेव स्यात्। परं विधेयत्वात्तस्य तन्न सम्भवति। अतो दर्शपूर्णमासाभ्यां यजेतेत्यस्यैवानुवादकत्वम्। तेन चाऽऽग्नेयादिवाक्यैरुत्पन्नानां कर्मणामनुवादे तृतीयानेन प्रतिपाद्यगुणाभावस्यानुवादाभाव एव। न हि तत्र कर्मणां गुणभावोऽस्ति। उत्पत्तिमात्रश्रवणात्। गुणभावावगमस्तु फलवाक्यावगतप्रयोगविधावेव जायते। अतस्तत्रैव तृतीयातस्यानुवादाभावः। तस्माद्देशकालादीनां प्रयोगाङ्गत्वमेवेति सूत्रतात्पर्यम्॥ ६॥

## अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरंस्तस्मात्स्यादेकदेशत्वम्॥ ७॥

यो ह्यङ्गेष्वनियम इति मध्ये पूर्वपक्षः कृतस्तस्योत्तरमिदम्। **विधानत्वात्**—फलवाक्येन सहैव विहितत्वात्, अङ्गानि प्रधानेन सहैव उपदिश्येरन्। यतः साहित्यं प्रधानेन, **तस्मादेकदेशत्वं**—एकदेशकालकर्तृत्वं स्यात्तेषामिति भावः॥ ७॥

## द्रव्यदेवतं तथेति चेत् ॥ ८ ॥

द्रव्यदेवतं—द्रव्यदेवते अपि, तथा—तन्त्रेण स्याताम् । न तयोर्भेद इति चेत्— ॥ ८ ॥

## न चोदनाविधिशेषत्वान्नियमार्थो विशेषः ॥ ९ ॥

न । चोदनाविधिशेषत्वात्—द्रव्यदेवताविधेः उत्पत्तिविधिशेषत्वात् प्रधानेषु द्रव्यदेवताविशेषो नियतोऽस्ति । उत्पत्तिविधिः यागस्वरूपं दर्शयति । यागस्य स्वरूपे द्वे—द्रव्यं देवता च । अतस्तच्छेषत्वेऽपि देशकालादेः प्रयोगाङ्गत्वात् प्रयोगस्य च सकलप्रधानसाधारण्यात्तन्त्रभाव एव तेषामिति वैषम्यं द्रव्यदेवतयोर्देशादेश्चेति भावः ॥ ९ ॥

## तेषु समवेतानां समवायात्तन्त्रमङ्गानि भेदस्तु तद्भेदात् कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात्तथा चान्यार्थदर्शनम् ॥ १० ॥

यदि द्रव्यदेवतमङ्गानां प्रधानानां च साधारणं समानं स्यात्तर्हि तेषु—समानेषु द्रव्यदेवतेषु, समवेतानां-विहितानामङ्गानां प्रधानानां च समवायात्—साङ्गप्रधाने द्रव्यदेवतयोरैक्यत्वेन तेषु सम्बन्धात् अङ्गानि तन्त्रम्— प्रधानाङ्गयागयोरेकद्रव्यदेवतयोर्यागस्तन्त्रेणानुष्ठानं स्यात् । तु— किन्तु, न तथा । यतो भेदः— द्रव्यदेवतयोर्भेदोऽस्ति । अतस्तद्भेदात्- गुणभेदात्, कर्मभेदः प्रयोगे— अनुष्ठानेऽपि भेदः स्यात्—इज्याकर्मणः प्रयोगे विशेषग्रहणाद्भेदः स्यात्तेषां षड्यागानां प्रधानत्वादिति । तथा चान्यार्थदर्शनम्— 'चतुर्दश्यां पौर्णमास्यां त्रयोदशामावास्यायामिति दर्शनमुपपन्नं द्रव्यदेवतयोर्भेदकमिति भावः ॥ १० ॥

### दर्शपूर्णमासेष्ट्यादिषु समुदायभेदेनाङ्गानां भेदेनानुष्ठानाधिकरणम्॥३॥

## इष्टिराजसूयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावः स्यात् ॥ ११ ॥

दर्शपूर्णमासेष्ट्यां दर्शः पूर्णमासश्चेति द्वौ समुदायौ । राजसूये अनुमत्यादय इष्टयः, पवित्रादयश्च सोमयागाः । तथा चातुर्मास्ये वैश्वदेव—वरुणप्रघास—साकमेध -शुनासीरीयं चेति चत्वारि पर्वाणि । तत्र दर्शपूर्णमासराजसूयचातुर्मास्येषु तत्तच्छाप्याङ्गानां तन्त्रेणानुष्ठानं, उत भेदेनेति संशये—**इष्टिराजसूयचातुर्मास्येषु ऐककर्म्यात्**—' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, राजसूयेन स्वाराज्यकामो यजेत, चातुर्मास्येन यजेत स्वर्गकामः ' इत्येकफलश्रवणात्तदर्थमेक एव प्रयोगः । इत्यङ्गानां तेषु **तन्त्रभावः**— तन्त्रेणानुष्ठानं स्यात् । न भेदेनेति ॥ ११ ॥

## कालभेदान्नेति चेत् ॥ १२ ॥

'पौर्णमास्यां पौर्णमास्या यजेत । अमावास्यायाममावास्यया यजेत । वसन्ते वैश्वदेवेन यजेत । वर्षासु वरुणप्रघासेन यजेत । हेमन्ते साकमेधेन यजेत ' राजसूये च ' बार्हस्पत्यश्चरुर्ब्रह्मणो गृहे । ऐन्द्र एकादशकपालो राजगृहे ' इति, कालभेददेशभेदरूपविशेषश्रवणान्न तेष्वङ्गानां तन्त्रभावः । अपि तु पार्थक्येनानुष्ठानमिति चेत्— ॥ १२ ॥

## नैकदेशत्वात् पशुवत् ॥ १३ ॥

न पृथक्त्वेन प्रयोगोऽङ्गानाम् । किन्तु तन्त्रभाव एव तेषाम् । कुतः ! **एकदेशत्वात्**--यस्मिन् वाक्ये प्रधानाना फलसम्बन्ध. श्रुतस्तत्रैवाङ्गानां प्रधानोपकारकत्वेन विधानात्, समुदायोपकारस्य तन्त्रेणानुष्ठानेनापि सिद्धिर्भवति । **पशुवत्**— सवनीयपशौ ' वपया प्रातःसवने, पुरोडाशेन माध्यन्दिनसवने, अङ्गैस्तृतीयसवने ' इति वचनेन प्रयोगविप्रकर्षः केवलम् । नाङ्गाऽऽवृत्तिस्तद्वदिति भावः पूर्वपक्षिणः ॥ १३ ॥

## सि० ॥ अपि वा कर्मपृथक्त्वात्तेषां तन्त्रविधानात् साङ्गानामुपदेशः स्यात् ॥ १४ ॥

अपि वेति पूर्वपक्षव्यावृत्तिः । **कर्मपृथक्त्वात्**— कर्मणः— दर्शप्रयोगस्य पौर्णमासप्रयोगस्य च **पृथक्त्वात्**— भिन्नत्वात् तन्त्रेणानुष्ठानमङ्गानाम् । कुतः ? प्रयोगपार्थक्यमिति चेत्तत्राह— **तेषां तन्त्र— विधानात्**— तेषां— दर्शयागत्रयस्य पौर्णमासयागत्रयस्य च तन्त्रेण एकशब्देनानुवादं विधाय पुनः ' अमावास्यायाममावास्यया यजेत ' पौर्णमास्यां पौर्णमास्या यजेत ' इति विधानात् । तस्मिन् तस्मिन् प्रयोगे साङ्गानां तत्तत्प्रधानानामुपदेशः स्यात् । अन्यथा पुनर्वाक्यद्वयेन प्रदर्शितेन पुनर्विधानं व्यर्थं स्यादिति भावः ॥ १४ ॥

## तथा चान्यदर्शनम् ॥ १५ ॥

**तथा च**— एवमङ्गानामावृत्तिसिद्धौ **अन्यदर्शनम्**— ' चतुर्दश पौर्णमास्यामाहुतयस्त्रयोदशामावास्यायां ' मिति लिङ्गदर्शनं समुपपद्यते । तन्त्रभावे तु न चतुर्दश नापि त्रयोदश । तस्माद्भेदेनानुष्ठानम् ॥१५॥

## तदाऽवयवेषु स्यात् ॥ १६ ॥

इत्थं दर्शपूर्णमासयोरन्योन्यदार्ढ्येन यदाऽऽवृत्तिसिद्धिरङ्गानाम् । **तदा अवयवेषु**— चातुर्मास्यावयवेषु राजसूयावयवेषु च वैश्वदेवीप्रभृतिषु अनुमत्यादिषु चेष्टिषु तथैव स्यात् । देशकालयोर्भेदात् । न तन्त्रभाव इति सिद्धान्तनिष्कर्षः ॥ १६ ॥

## पशौ तु चोदनैकत्वात्तन्त्रस्य विप्रकर्षः स्यात् ॥ १७ ॥

पशौ त्वङ्गानां तन्त्र युक्तमेव । कस्मात् ? **चोदनैकत्वात्**—' आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति ' इत्येकैव कर्मचोदना तत्र । कर्मचोदनायामङ्गानां ग्रहणम् । अत एकमेव तत्र तन्त्रम् । प्रचारविधौ चोदनैकत्वात्कालस्य विप्रकर्षः, केवलमस्मिन् वाक्ये विधीयत इति पशौ तन्त्रानुष्ठानस्य विप्रकर्षः । तस्माद्विषमो दृष्टान्त इति भावः ॥ १७ ॥

अध्वरकल्पायां त्रिषु सङ्घेष्वङ्गानां भेदेनानुष्ठानाधिकरणम् ॥ ४ ॥

## तथा स्यादध्वरकल्पायां विशेषस्यैककालत्वात्॥१८॥

' आग्नावैष्णवं प्रातरष्टाकपाले निर्वपेत्, सारस्वतं चरुम्, बार्हस्पत्यं चरुम् । आग्नावैष्णवमेकादशकपालं माध्यन्दिने, सारस्वतं चरुम्, बार्हस्पत्यं चरुम् । आग्नावैष्णवं, द्वादशकपालमपराह्णे, सारस्वतं चरुम्, बार्हस्पत्यं चरुम् ' । ' यस्य भ्रातृव्यः सोऽनेन यजेत ' इति काम्यकाण्डे अध्वरकल्पायामिष्टौ श्रुतम् । अत्र प्रातरादिकालभेदेन प्रयुज्यमानानां कर्मसङ्घानां तन्त्रेणाङ्गानुष्ठान, उत भेदेनेति विचारे **तथा स्यात्**—यथा पशौ तन्त्रेणाङ्गानां क्रिया तथाऽस्यामध्वरकल्पायामपि स्यात् । कुतः ? **विशेषस्यैककालत्वात्**—भिन्नकालानामेषां सङ्घानां कश्चिदङ्गविशेष एक एव कालः श्रूयते । ' पुरावाचः प्रवदतो निर्वपेत् ' इत्यस्मिन् वाक्ये विशेषस्याश्रवणात् कालत्रयनिर्वापस्य कालविधिरयम् । त्रयाणां निर्वापाणां वागुदयात्प्राक् कर्तव्यत्वे प्राप्ते निर्वापत्रयस्यापकर्षे तदन्ताङ्गापकर्षः अर्थात्सिद्ध एवेत्यग्न्यन्वाधानादिनिर्वापान्तस्य तन्त्रानुष्ठाने सिद्धे उत्तराङ्गाणामपि तद्वदेव तन्त्रेणानुष्ठानं सिध्यतीति भावः ॥ १८ ॥

## इष्टिरिति चैकवच्छ्रुतिः ॥ १९ ॥

'सैषा अध्वरकल्पेष्टिः ' इत्येकवच्छ्रुतिः-एकवचनश्रुतिः, प्रयोगैक्ये उपपन्ना भवति । अतोऽपि तन्त्रमङ्गानामिति ॥ १९ ॥

## सि० ॥ न वा कर्मपृथक्त्वात्तेषां च तन्त्रविधानात्साङ्गानामुदेशः स्यात् ॥ २० ॥

**न वा**—अङ्गानां तन्त्रमिति नैव । अपि तु पृथक्त्वम् । कुतः ? **कर्मपृथक्त्वात्**-कालरूपगुणविशिष्टकर्मणामभ्यासेन पृथक्त्वात् । **तेषां च** प्रातर्मध्याह्नापराह्णप्रयोगेण तत्तत्तन्त्रविधानात्साङ्गानामेव **उपदेशः**-विधानं **स्यात्** । अतः प्रयोगस्य भेदः । यदि अध्वरकल्पां निर्वपेदित्युत्पत्तिवाक्यं स्यात्तदा।

मेवेप्रयोगस्य विप्रकर्षः । तदत्र । यस्मात् ' आग्नावैष्णवादिवाक्यानि गुणविधायकानि चेत्—प्राप्ते कर्मण्यनेकगुणविधानाद्वाक्यभेददोषप्रसङ्गः । अतस्तावमेव वाक्यानां प्रत्येकं तत्तत्कालविशिष्टकर्मविधायकत्वं वाच्यम् । तथा च कालभेदात् प्रयोगभेद इति भावः ॥ २० ॥

## प्रथमस्य वा कालवचनम् ॥ २१ ॥

यच्च निर्वापत्रयस्यापवर्गेणैककालत्वं त्वयोपन्यस्तं पूर्वपक्षसाधकत्वेन तत्रोच्यते । प्रथमस्य वा–' पुरोवाचः प्रवदतो निर्वपेत ' इति यत्कालवचनं तत्प्रथमस्यैव निर्वापस्य बोध्यम् । तेन हि वचनेन प्रातः काले । कर्तव्यस्य प्रधानानिर्वापस्य प्रधानस्याङ्कर्तव्यत्वेन प्रातःकाले प्राप्तं एवेति तस्य विशेषो नियम्यते । अपराह्ने निर्वापस्य प्रातःकालस्यत्वस्याप्रमाणः । तस्य विधाने त्वपूर्वविधिरेवेति गौरवमिति भावः ॥ २१ ॥

## फलैकत्वादिष्टशब्दो यथाऽन्यत्र ॥ २२ ॥

' सैषाऽध्वरस्येष्टिः ' इत्येकवचनान्त इष्टिशब्दस्तु भिन्नानामपि त्रयाणां यागानां फलैकत्वात्— एकफलजनकत्वादुपपन्नो भवति । यथाऽन्यत्र– ' सर्वपृष्ठाभिष्टिर्मृगारेष्टिरितिवदित्यर्थः ॥ २२ ॥

प्राजापत्यवपाहोमानां तन्त्रेणानुष्ठानाधिकरणम् ॥ ५ ॥

## वपाहोमस्तन्त्रमेकदेवतेषु स्यात् प्रदानस्यैककालत्वात् ॥ २३ ॥

वाजपेये ' सप्तदश प्राजापत्यान् पशूनालभते ' इति श्रूयते । तत्र याज्यार्थवादे ' वपा जुहोति ' इति प्रकृतावश्रीषोमीयपशौ श्रुतो वपाहोम-श्चोदकेन प्राप्तः । स वपाहोमस्तन्त्रम्—तन्त्रेणानुष्ठेयः स्यात् । कुतः ? प्रदानस्य एककालत्वात्— ' वैश्वदेवी कृत्वा प्रचरन्तीति एकस्मिन्नेव काले तेषां प्रदानमाम्नायते । देवताऽपि च प्रजापतिरेका । अत एकमेव प्रदानम् । एवं चैककालं च सर्वेषां प्रदानं वैदिकदर्शे विरोधाभावाच्च तन्त्रमेव वपाहोमस्येति भावः ॥ २३ ॥

भिन्नदेवताकपशुगणे वसाहोमस्याऽऽवृत्त्यधिकरणम् ॥ ६ ॥

## कालभेदत्वाच्चावृत्तिर्देवताभेदे ॥२४॥

**देवताभेदे—** एकादशिनेषु भिन्नप्रधानेषु तत्तद्भिन्ना याज्यार्धर्चान्ताः इति विशेषग्रहणात्तेषु वसाहोमस्याऽऽवृत्त्यानुष्ठानमित्यर्थः ॥२४॥

यूपैकादशिन्यां यूपाहुतेस्तन्त्रेणानुष्ठानाधिकरणम् ॥ ७ ॥

## अन्ते यूपाहुतिस्तद्वत् ॥ २५ ॥

ज्योतिष्टोमे 'एकादश यूपान् छिनत्ति' इत्यूपैकादशिन्याम्नाता । तस्यां प्रकृतितः प्राप्ता यूपाहुतिरावर्तनीया, उत तन्त्रेण कार्येति संशये अन्ते- यूपस्यान्तिके विहिता **यूपाहुतिस्तद्वत्—**वसाहोमवद्भेदेन कार्या । कुतः ? 'यूपस्यान्तिके अग्निं मथित्वा यूपाहुतिं जुहोति ' इति श्रुतेः । तत्र हि बहूनां यूपानां भिन्नान्येवान्तिकानि । यस्य यूपस्यान्तिकेन हूयेत तस्य तेन यूपाहुतिगुणेन राहित्यं भवेत । तस्मादावृत्त्या भेदेन कार्या तत्र यूपाहुतिरित्याशयः ॥ २५ ॥

## सि० ॥ इतरप्रतिषेधो वा ॥ २६ ॥

## अनुवादमात्रमन्तिकस्य ॥ २७ ॥

## अशास्त्रत्वाच्च देशानाम् ॥ २८ ॥

**वेति—**भेदपक्षप्रतिषेधः । तन्त्रमेवाऽऽहुतेस्तत्र । कुतः ? **इतरप्रतिषेध** । 'यूपस्यान्तिके ' इति आहवनीयप्रतिषेधः । नान्तिकदेशविधिः । यतः ' आहवनीये जुहोति ' इति शास्त्रात् सर्वहोमेषु आहवनीयः प्राप्त एव । तस्यायं प्रतिषेधः अन्तिक इति । एवं प्राप्तस्याहवनीयस्य प्रकृतकर्मणः प्रवृत्तत्वान्मथनमपि तत्र प्राप्तम् । ' यूपस्यान्तिके अग्निं मथित्वा यूपाहुतिं जुहोतीत्यनेनान्तिकमथनयोर्द्वयोर्विधाने वाक्यभेदापत्तेरन्यतरदविवक्षितमिति 'वाच्यमेव' । तत्रातिदेशप्राप्ताहवनीयप्रतिषेधकतया अन्तिकेत्यस्य चारितार्थ्यात्तदविवक्षितम् । यूपाहुतिं जुहोतीति होमार्थं तत्र मथनं विवक्षितमिति तत्रापरभिमतम् । तस्मादविवक्षितमन्तिक-

मरलभ्य गुणवर्जनदोषप्रसक्तेरावृत्त्या यूपाहुतेरनुष्ठानमिति यदुक्तं पूर्वपक्षिणा तन्न समञ्जसमिति भावः । अस्य विस्तरस्तु भाष्यावाकरग्रन्थतोऽवगन्तव्यः ॥ २६॥२७॥२८ ॥

अवभृथेऽप्सु साङ्गप्रधानानुष्ठानाधिकरणम् ॥ ८ ॥

## अवभृथे प्रधानेऽग्निविकारः स्यान्न हि तद्धेतुरग्निसंयोगः ॥ २९ ॥

ज्योतिष्टोमे ' अप्सु अवभृथेन चरन्ति ' इति श्रूयते । तत्र **प्रधाने अग्निविकारः स्यात्**--प्रधानं केवलमप्स्वनुष्ठेयं, नाङ्गान्यपि । आघाराज्यभागादीन्यङ्गानि तु आहवनीयेऽग्नौ कर्तव्यानि । कुतः ? **न हि तद्धेतुरग्निसंयोगः**--यतः प्रधानहेतुकः अग्निसंयोगः अङ्गानां हेतुर्न भवति । यथा ' यदाहवनीये जुहोति ' इत्यनेन होमत्वावच्छिन्ने विहितोऽग्निर्यथा प्रधाने तथाङ्गेष्वपि हेतुर्भवति । प्रकृते तथा न । यतः ' अप्सु अवभृथेन चरन्तीति आपः केवले प्रधाने विहिताः । अवभृथशब्दो हि वरुणदेवताकैककपालसंस्कृतपुरोडाशद्रव्यकप्रधानयागस्य वाचकः । ' वारुणेनैककपालेनावभृथं यन्ति ' इति श्रुतत्वात् । तस्मात् प्रधानस्यैवाग्निविकारसम्बन्धः । नाङ्गानामिति ॥ २९ ॥

## द्रव्यदेवतवत् ॥ ३० ॥

यथा द्रव्यमेककपालपुरोडाशः वरुणश्च देवता प्रधानयागे विहितत्वान्नाङ्गेषु भवतः । तथा आपोऽपि तत्रैवाधारत्वेन विहितत्वान्नाङ्गेष्वधिकरणं भवन्तीति पूर्वः पक्षः ॥ ३० ॥

## सि० ॥ साङ्गो वा प्रयोगवचनैकत्वात् ॥ ३१ ॥

**साङ्गो वा**--अङ्गसहित एवावभृथः अप्सु प्रवर्तेत । न केवलः । कुतः ? **प्रयोगवचनैकत्वात्**--प्रयोगविधेः अङ्गप्रधानसाधारणत्वात् । देशकाल-

-कर्त्रादीनां प्रयोगाङ्गत्वमित्युक्तं प्राक् । अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येर-न्नित्यत्र ( ११।२।८ ) । तस्मात्साङ्गोऽवभृथः अप्सु कर्तव्यः । न केवलः । अङ्गान्यपि तत्रैवानुष्ठेयानीति भावः ॥ ३२ ॥

## लिङ्गदर्शनाच्च ॥ ३२ ॥

'अप्सु तृणं प्रास्य आघारमाघारयति' इति लिङ्गदर्शनादपि साङ्गोऽवभृथोऽप्सु कर्तव्य इति सिध्यति । अन्यथा तृणं प्रास्येति विधिर्व्यर्थः स्यादिति भावः ॥ ३२ ॥

## शब्दविभागाच्च देवतापनयः ॥ ३३ ॥

शब्दविभागात्— प्रधानमात्रवाचकावभृथशब्दस्याङ्गवाचकाऽऽघा-रादिशब्दस्य च पार्थक्यादपि अङ्गेषु द्रव्यदेवते न भवतः । आपस्तु प्रयो-गस्याङ्गम् । इति तासु साङ्गप्रधानप्रयोगे न किमपि बाधकमिति दृष्टान्त-वैषम्यमिति भावः ॥ ३३ ॥

वरुणप्रघासेषु उत्तरदाक्षिणविहारयोर्भेदेनाङ्गानुष्ठाना-धिकरणम् ॥ ९ ॥

## दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात् सर्वं विक्रियते ॥ ३४ ॥

चातुर्मास्यीयद्वितीयपर्वणि वरुणप्रघासेषु विहारपृथक्त्वमाम्नातम् । 'पृथगग्नी प्रणयनः, पृथग्वेदी कुरुतः' इति । तत्राऽऽग्नेयादीनि नव हवींषि विहितानि । 'तत्राध्वर्युरुत्तरे विहारे अष्टौ हवींषि आसादयति । मारुतीमा-मिक्षां प्रतिप्रस्थाता दक्षिणे विहारे अनुतिष्ठति' इति श्रूयते । अत्र दक्षिण-विहारे भेदेनाङ्गानि कार्याणि, उत तेषां तन्त्रम्— यानि उत्तरे विहारेऽ-नुष्ठितानि तान्येव दक्षिणेऽप्युपकुर्वन्तीति संशये सिद्धान्तः—वरुणप्रघासेषु दक्षिणेऽग्नौ—दक्षिणविहारे देशभेदात् सर्वम्—अङ्गजातं विक्रियते— भेदेनानुष्ठेयान्यङ्गानीत्यर्थः ॥ ३४ ॥

## अचोदनेति चेत् ॥ ३५ ॥

**अचोदना**—फलोद्देशेन कर्मणः अविधानमत्र वाक्ये । उत्पत्तिवाक्ये हि इतिकर्तव्यताऽऽकाङ्क्षा न देति । अपि तु फलवाक्ये एवेयुक्त प्राक् । मारुतीमामिक्षा० इति नेदं फलसम्बन्धबोधकं वाक्यम् । किन्तु मारुत्या उत्पत्तिवाक्यम् । अतोऽत्र इतिकर्तव्यताऽऽकाङ्क्षाभावादङ्गानां प्राप्तिरेव नास्ति । कुतो भेदस्तत्रता वेति स विचारो व्यर्थ इति चेत्—॥ ३५ ॥

## स्यात् पौर्णमासीवत् ॥ ३६ ॥

**पौर्णमासीवत्**— यथा पौर्णमास्या पौर्णमास्या यजेत ' इत्यत्र फलसम्बन्धबोधकविध्यभावेऽपि साङ्गानुष्ठानं विहितं, तद्वदत्रापि स्यात् ॥ ३६ ॥

## प्रयोगचोदनेति चेत् ॥३७॥

**प्रयोगचोदना**— उक्तवाक्ये प्रयोगविधि साङ्गं प्रधानं गृह्णातीति चेत्—॥ ३७ ॥

## तथेह ॥ ३८ ॥

इहापि, तथेति यावत् ॥ ३८ ॥

## आसादनमिति चेत् ॥ ३९ ॥

**आसादनम्**— प्रकृतवाक्ये आसादयतीति श्रूयते । तेनादृष्टार्थ-आसादनमात्रस्य विधिरिति गम्यते । पौर्णमासीवाक्ये तु यजति श्रूयते । अतस्तत्र प्रयोगविधिर्युक्त एव । अत्र तु न तथेति दृष्टान्तवैषम्यमिति चेत्— ॥ ३९ ॥

## नोत्तरेणैकवाक्यत्वात् ॥ ४० ॥

**उत्तरेण**—' उत्तरस्या वेद्याम् यानि हवींषि आसादयतीत्यनेन **सहैकवाक्यत्वात्**— तुल्ययोगक्षेमादुत्तरस्यामटहविषामासादनस्य यागार्थत्वादिहाप्यस्यामपि तदर्थं यागार्थमेव वक्तव्यं, नादृष्टार्थमिति भाव ॥४०॥

## अवाच्यत्वात् ॥ ४१ ॥

अवाच्यत्वात्— आसादयतिधातुना होमस्यावाच्यत्वात्कथं यागार्थत्वमासादनस्येति चेल्लक्षणयेति गृहाण ॥ ४१ ॥

## आम्नायवचनं तद्वत् ॥ ४२ ॥

'यदेवाध्वर्युः करोति तदेव प्रतिप्रस्थाता करोति' तथा यस्मिन्नेव होमस्तस्मिन् श्रूते 'देवयजनम्' इत्याम्नायवचनं तद्वत्—उत्तरविहारवद्दक्षिणेऽपि विहारे यागमेव दर्शयति इत्यासादनस्य यागलक्षणार्थीजमिति भावः ॥ ४२ ॥

उत्तरदक्षिणविहारयोः कर्तृणां तन्त्रताधिकरणम् ॥१०॥

## कर्तृभेदस्तथेति चेत् ॥ ४३ ॥

तत्रैव दक्षिणविहारे कर्तारोऽन्ये ऋत्विजः, उत स एवेति विचारे कर्तृभेदः— भिन्ना ऋत्विजः स्युः । तथा— अङ्गानामावृत्तिवद्भेद इति चेत्— ॥ ४३ ॥

## न समवायात् ॥ ४४ ॥

'तस्माच्चातुर्मास्यानां यज्ञक्रतुना पञ्चर्त्विज' इति कर्तृषु ऋत्विक्षु पञ्चसङ्ख्यायाः समवायात्— सम्बन्धस्य श्रुतत्वात् कर्तृणामभिन्नत्वमिति भावः ॥ ४४ ॥

## लिङ्गदर्शनाच्च ॥ ४५ ॥

'पञ्चवमनुष्यं दक्षिणा ददाति' इति श्रूयते । अन्यत्र न श्रूयते दक्षिणा । तस्मादप्येककर्तृत्वं सिध्यति ॥ ४५ ॥

## वेदिसंयोगादिति चेत् ॥ ४६ ॥

वेदिसंयोगात्—' अन्तर्वेद्यन्य. पादो होतुर्भवति बहिर्वेद्यन्यः' तत्र होतुरेकत्वे तस्यैकः पादः उभयत्रोपकर्तुमसमर्थः । तस्मात्कर्तृभेद इति चेत्—॥ ४६ ॥

## न देशमात्रत्वात् ॥ ४७ ॥

देशमात्रत्वात्— देशविशेषविधिरूपत्वात्तस्य वाक्यस्य । यदि पादप्रक्षेपो वेदिसंस्कारो भवेत्तदा वेदेः प्राधान्यात् प्रतिप्रधानमङ्गावृत्तिः स्यात् । नैवम् । अपि तु होतुर्निगदपाठे देशविशेषोऽङ्गत्वेन विधीयते । तस्य चान्यतरेणापि कार्यसिद्धे. न तदर्थं होतुर्निगदपाठे देशविशेषोऽङ्गत्वेन विधीयते । तस्य चान्यतरेणापि कार्यसिद्धेर्न तदर्थमन्यो होताऽपेक्ष्यते । अतो न कर्तृभेद इति भाव ॥ ४७ ॥

उत्तरदक्षिणविहारयोरपराग्निहोमानां पत्नीसंयाजानां भेदेनानुष्ठानाधिकरणम् ॥ ११ ॥

## एकाग्नित्वादपरेषु तन्त्रं स्यात् ॥ ४८ ॥

तत्रैवापराग्निकहोमानां तन्त्रं, उताऽऽवृत्तिरिति संशये एकाग्नित्वात्— गार्हपत्यरूपैकाग्न्यधिकरणत्वात्, अपरेषु—पत्नीसंयाजेषु तन्त्रं स्यात् । न हि पौर्वाग्निकवदग्निभेदात्मको हेतुस्तत्रास्तीति भावः ॥ ४८ ॥

## सि०॥ नाना वा कर्तृभेदात् ॥ ४९ ॥

नाना वा— आवृत्तिरेव, कर्तृभेदात्—अध्वर्युप्रतिप्रस्थातृभेदात् । तन्त्रत्वे कर्तृकृतवैगुण्यप्रसङ्गादिति भावः ॥ ४९ ॥

वाजपेये प्राजापत्यपश्वालम्भशेषस्य ब्रह्मसामकाले उत्कर्षाधिकरणम् ॥ १२ ॥

## पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत्तस्माद् ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ॥ ५० ॥

वाजपेये सप्तदश प्राजापत्यान् पशून् प्रकृत्य ' तान् पर्यग्निकृतानुत्सृजन्ति, ब्रह्मसाम्न्यालभन्ते ' इति श्रूयते। उत्सृजन्तीत्ययं पर्यग्निकरणोत्तरकर्मशेषस्य प्रतिषेधः, ब्रह्मसाम्न्यालभन्त इति कर्मान्तरविधिः, उत तत्सम्बन्धिनामेवाऽऽलम्भनादीनां कालान्तरे प्रतिप्रसव इति संशये आह पूर्वपक्षी। **पर्यग्निकृतानां** प्राजापत्यपशूनां यच्छेषभूतमालम्भनादि कर्म तस्य **उत्सर्गः**- प्रतिषेधः, उत्सृजन्तीत्यनेन वाक्येन विधीयते । **आरण्यवत्**— अश्वमेधे पर्यग्निकृतानारण्यानुत्सृजति अहिंसायै ' इतिवत्। कुतः ? **श्रुतिसामान्यात्**— उत्सृजंतीति वचनसाधारण्यात् । तस्माद् ब्रह्मसाम्न्यालभन्त इति **चोदनापृथक्त्वं**— कर्मान्तरविधिः स्यादिति ॥ ५० ॥

## सि० ॥ संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् ॥ ५१ ॥

**संस्कारप्रतिषेधो वा**—संस्कारकालमात्रस्यैव प्रतिषेधोऽयम् । तानुत्सृजन्तीति पर्यग्निकरणोत्तरकाल. शेषसंस्काराणामतिदेशेन प्राप्तः। तन्मात्रस्य निषेध इत्यर्थः । तस्मात्कालादुत्कृष्य ब्रह्मसामकालसम्बन्धो विधीयते । कुतः ? **क्रतुसामान्यात्**— क्रतुत्वाविशेषात् वाक्यैकत्वं सिध्यति । तस्मिंश्च निश्चिते ब्रह्मसाम्न्यालभन्त इत्यत्र द्रव्यदेवतयोरश्रवणात् पूर्वोत्तरवाक्ययोः क्रतुसामान्यं— एकक्रतुत्वं सिध्दम्। तस्मिन् सिद्धे उभयोरेकवाक्यत्वसमर्थात्सिध्यति । तस्मिंश्च सिद्धे उपर्युक्तोऽर्थः सिध्यतीति भावः ॥ ५१ ॥

## वपायां चानभिघारणस्य दर्शनात् ॥ ५२ ॥

' प्रयाजशेषेण हवींष्यभिघारयतीति प्रकृतितः प्राजापत्यपशुवपास्वभिघारणं प्राप्तम् । प्रकृते ब्रह्मसाम्न्यालभन्त इत्यनेन तेषामालम्भस्योत्कृष्टत्वाद्वपायामप्युत्कर्षः । प्रयाजानन्तरं सवनीयपशुप्रचारेण जुह्वाः रिक्तत्वात् प्राजापत्यपशुवपायामनभिघारणे प्राप्ते सति तत्रैवं श्रूयते—' सन्य

वा एतर्हि वपा यदनभिघृता, ब्रह्म वै ब्रह्मसाम, यद् ब्रह्मसाम्नालभन्ते तेन अभ्यास्तेनाभिघृता' इति अनभिघृतवपाया. प्रकारान्तरेणाभिघृतत्वप्रतिपादकमर्थवादवाक्यं पर्यग्निकरणोत्तरशेषकर्मणः कालमात्रस्योत्कर्षपक्ष एव सङ्गच्छते। यागान्तरविधौ तु प्रयाजानां पुनरनुष्ठेयत्वात् तच्छेषेण वपाभिघारस्यानुष्ठातुं शक्यत्वात् प्रकारान्तरेणानभिघृतवपाभिघारप्रदर्शनं व्यर्थमेव स्यादिति भाव ॥ ५२ ॥

### अहीने उस्राणामुत्सर्गस्य कर्मशेषप्रतिषेधार्थत्वाधिकरणम् ॥ १२ ॥

## पञ्चशारदीयास्तथेति चेत् ॥ ५३ ॥

अस्त्यहीनेषु पञ्चसंवत्सरसाध्यः पञ्चशारदीयनामकः कश्चित् पञ्चाहः क्रतुविशेषः। तत्र प्रथमे वत्सरे विशाखानक्षत्रोपेतायाममावास्यायां 'सप्तदश मारुतीस्त्रिवत्सरा अप्रसूता उपाकरोति, सप्तदश पृश्नीन् उक्ष्णः तान् पर्यग्निकृतान् प्रोक्षितान् इतरा आलभन्ते, इतरान् उत्सृजन्ति' एवं द्वितीये तृतीये चतुर्थे च वत्सरे प्रथमवत्सरवदनुष्ठानमाम्नाय पञ्चमे वत्सरे 'त्रींस्त्रीनेकैकस्मिन्नहनि आलभेरन् पञ्च उत्तमे अहनि' इत्याम्नायते। अत्र प्रथमे वत्सरे पर्यग्निकृता ये उक्षाण उत्सृष्टास्तेषामेव द्वितीयतृतीयचतुर्थवत्सरेषु पर्यग्निकरणमुत्सर्गश्च पञ्चमे च वत्सरे पञ्चसु सुत्यासु तेषामेवाऽऽलम्भ, उत तेभ्यो भिन्नानामिति संशये पूर्वपक्ष। **पञ्चशारदीयाः**– पशव**स्तथा**—यथा पूर्वाधिकरणे प्राजापत्यपशूनामालम्भकालस्योत्कर्षः केवलं, न कर्मशेषप्रतिषेधस्तद्वदत्रापि तेषामेव पशूनामालम्भकालस्योत्कर्षः केवलं 'पञ्चमे वत्सरे त्रींस्त्रीनेकैकस्मिन्नहनि आलभेरन् पञ्चोत्तमेऽहनि' इत्यनेनोच्यते। तस्मात्तेषामेवाऽऽलम्भ। न तेभ्यो भिन्नानामिति चेत्—॥ ५३ ॥

## सि० ॥ न चोदनैकवाक्यत्वात् ॥ ५४ ॥

: न तेषामेवालम्भकालस्योत्कर्षमात्रम्। अपि तु पञ्चमे वत्सरे त्रीन् त्रीनित्यपूर्वकर्मान्तरमेव विधीयते। कुतः? चोदनैकवाक्यत्वात्— सप्तदश मारुतीरुपाकरोतीति कर्मचोदनया 'सप्तदश-पृश्निरुक्षणः' इत्यस्य मारुतानालभत इति एकवाक्यत्वात्। अनेकगुणविशिष्टापूर्वैककर्मविधानेनैवार्थः। प्राप्तकर्मानुवादेन त्रीनन्वहं, पञ्च उत्तमेऽहनि इत्यनेकगुणविधाने वाक्यभेदापत्तिरिति भावः॥ ५४॥

## संस्काराणां च दर्शनात्॥ ५५॥

**संस्काराणां**—पर्यग्निकरणप्रोक्षणादीनां प्रतिवत्सरं पुनर्दर्शनादपि कर्मान्तरविधिः सिध्यति। अन्यथा प्रथमसंवत्सरे तेन कृतत्वेन पुनः पुनः पर्यग्निकरणादिश्रवणं व्यर्थं स्यादिति भावः॥ ५५॥

अभिषेचनीयदशपेययोर्भेदेन प्रयोगाधिकरणम्॥ १४॥

## दशपेये क्रयप्रतिकर्षात् प्रतिकर्षस्ततः प्राचां तत्समानं तंत्रं स्यात्॥ ५६॥

राजसूये 'अभिषेचनीयदशपेयसंज्ञकौ एकाहसाध्यौ भिन्नकालीनौ द्वौ सोमयागौ स्तः। तदङ्गानामनुष्ठानं तन्त्रेण, उत पृथगिति विचारे आह **तत्समानं**— तयोः— अभिषेचनीयदशपेययोः समान—साधारण, **तन्त्रं**- अङ्गानुष्ठानं तन्त्रेण स्यादित्यर्थः। कुतः? **क्रयप्रतिकर्षात्**—' सह सोमौ क्रीणात्यभिषेचनीयदशपेययोः' इत्यनेनोत्तरक्रतुसम्बन्धिनोऽनक्रयस्य पूर्वक्रतावपकर्षात् तदन्तावरणीयस्य पञ्चमे सिद्धत्वेन ततः **प्राचां**— सोमक्रयात् पूर्वभाविनामङ्गानामपि प्रतिकर्षः सिद्धः। अतः सोमक्रयप्राचीनानामङ्गानां तन्त्रे निश्चिते उपक्रमानुसारेणोत्तराङ्गानामपि तन्त्रं स्यादिति भावः॥ ५६॥

## समानवचनं तद्वत्॥ ५७॥

'समानो वा एष यज्ञो यद्दशपेयश्चाभिषेचनीयश्च' इत्येवं यज्ञयोः **समानवचनं तद्वत्**— यत्कालिकक्रममुदायको ऽभिषेचनीयस्तत्कालिकाङ्ग-

प्रायणीयनिष्कासस्योदयनीयनिर्वापार्थत्वाधिकरणम् ॥ १६ ॥

## प्रायणीये च तद्वत् ॥ ६५ ॥

ज्योतिष्टोमे ' प्रायणीयनिष्कासे उदयनीयमनुनिर्वपति ' इति श्रूयते। अत्रापि **प्रायणीयेऽपि तद्वत्**-अवभृथवत् । यथा अवभृथधर्मकं अपूर्वं कर्म, एवमुदयनीयधर्मकमपूर्वमेव कर्मेति वाच्यम् ॥ ६५ ॥

## प्रतिपत्तिर्वाऽकर्मसंयोगात् ॥ ६६ ॥

**प्रतिपत्तिः**—यः उदयनीयस्य निर्वापः स प्रायणीयशेषस्य प्रतिपत्तिकर्मेत्यर्थः । कुतः ? **अकर्मसंयोगात्**—निष्कासस्योदयनीयकर्मसंयोगाभावात् तद्भिन्नेन निर्वापेणान्वयात् निष्कासे निर्वापं कुर्यात् इत्युपयुक्तसंस्कार इति भावः ॥ ६६ ॥

## सि० ॥ अर्थकर्म वा शेषत्वाच्छ्रयणवत्तदर्थेन विधानात् ॥ ६७ ॥

**अर्थकर्म**— प्रधानकर्मैव निर्वापः । कुतः ? **शेषत्वात्**— निर्वापं प्रति । निष्कासस्य गुणत्वात् । **श्रयणवत्**— ' पयसा मैत्रावरुणं श्रीणाति ' इतिवत् **तदर्थेन**— गुणार्थेन सप्तमीशब्देन विधानात् । सप्तम्या अधिकरणकारकत्वेन गुणत्वं सुप्रसिद्धमेवेति भावः ॥ ६७ ॥

इति पूर्वमीमांसासूत्रवृत्तौ **भावबोधिन्यां** एकादशाध्यायस्य द्वितीयः पादः ॥ २ ॥ श्रीः ।

——

# ॥ अथ एकादशाध्यायस्य तृतीयः पादः ॥३॥

वेद्याद्यङ्गानां प्रधानकालान्यकालकर्तव्यत्वाधिकरणम् ॥ १ ॥

## अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् ॥१॥

एककालानामङ्गानां तन्त्रं पूर्वपादे विचारितम् । अस्मिंस्तृतीयपादे भिन्नकालानामङ्गानां तन्त्रं विचार्यते । **अङ्गानां मुख्यकालत्वात्**— मुख्यस्य प्रधानस्य यः कालस्तत्कालिकत्वात्, **वचनात्**— प्रत्यक्षश्रुतेः, अन्यकालिकत्वमपि स्यात् । यथा पूर्वेद्युः 'इध्मा बर्हिः करोति' । 'पूर्वेद्युरमावास्यायां वेदिं करोति' इत्यादिसिद्धत्वात्केवलोपदेशपरमिदं सूत्रम् ॥१॥

आधानस्य तन्त्रेणानुष्ठानाधिकरणम् ॥ २ ॥

## सि० ॥ द्रव्यस्याकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात्स्वकालत्वात् ॥ २ ॥

'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' इत्याधानं श्रुतम् । तत् इष्टिपशुसोमादिक्रतुषु आवर्तते, उत तन्त्रमिति विचारे अङ्गत्वादावर्तने प्रतिक्रत्वाविति प्राप्ते सिद्धान्तः । **द्रव्यस्य**— आधानसंस्कृतवह्नेः, **अकर्मकालनिष्पत्तेः**—प्रधानकालभिन्नकाले निष्पत्तेः उत्पन्नत्वात् प्रधानकालस्याऽऽधानकालस्य च पार्थक्यात् **प्रयोगः**—आधानप्रयोगः सर्वार्थः । **स्वकालत्वात्**— वसन्तादिस्वस्वकालविहितत्वात् । तन्त्रमिति भावः । अफलत्वात्कर्मार्थमाधानमिति कृत्वाचिन्तयेदमधिकरणं ज्ञेयम् ॥ २ ॥

अग्नीषोमीयादिषु यूपस्य तन्त्रेणानुष्ठानाधिकरणम् ॥ ३ ॥

## यूपश्चाकर्मकालत्वात् ॥ ३ ॥

ज्योतिष्टोमे अग्नीषोमीयादिपशौ 'दीक्षासु यूपं छिनत्तीति' यूपो विहितः। स केवलाग्नीषोमीयार्थे एव। न सवनीयाद्यर्थे इति प्राप्ते सिद्धान्तः। यूपः त्रयाणाम्—अग्नीषोमीयसवनीयानुबन्ध्यानां तन्त्रम्। कुतः? अकर्मकालत्वात्— पाशुककर्मानुष्ठानकाले तस्यानुत्पन्नत्वात्। अग्नीषोमीयतन्त्राद् बहिरुत्पन्नस्याग्नीषोमीयार्थत्वमेवेति निर्णेतुमशक्यत्वात् त्रयाणामपि तंत्रं स इति भावः। एकयूपं च दर्शयति इति सूत्रमधिकं भाष्ये। तस्यार्थस्तत एवावगन्तव्यः॥ ३॥

यूपसंस्काराणां तन्त्रेणानुष्ठानाधिकरणम्॥ ४॥

## संस्कारास्त्वावर्तेरन्नर्थकालत्वात्॥ ४॥

संस्काराः— प्रोक्षणाञ्जनादयो यूपसंस्काराः आवर्तेरन्। कुतः? अर्थकालत्वात्— पशुनियोजनरूपार्थकालत्वादेतेषां संस्काराणाम्। यस्य पशोर्नियोजनं तत्कालत्वे तदर्थमिति निर्णयो भवतीति भाव.॥ ४॥

## सि० ॥ तत्कालास्तु यूपकर्मत्वात् तस्य धर्मविधानात्सर्वार्थानां वचनादन्यकालत्वम्॥ ५॥

तत्कालास्तु—दीक्षाकाला एव छेदनतक्षणादयः सर्वे संस्काराः। कुतः? यूपकर्मत्वात्—यूपकार्यत्वात्तेषां संस्काराणाम्। तस्य—यूपस्य, धर्मविधानात्—यूपधर्मत्वेन संस्काराणां विधानात् 'दीक्षासु यूपं छिनत्ती-त्यत्र द्वितीयया प्रधानं यूपमुद्दिश्यादयेदिति गम्यते। तत्र छेदनेन केवलेन न यूपोत्पत्तिः। किन्तु यावत्संस्कारविशिष्टस्यैव यूपपदवाच्यत्वम्। तत्तच्छेदनं यावत्संस्कारोपलक्षकम्। तथा च यावता संस्काराणां दीक्षाकालीनत्वं सिध्यतीति भावः। एवं सर्वार्थानां तेषां वचनात् अन्यकालत्वं -अन्यकाले अनुष्ठानमात्रमित्यर्थः। यथा 'अग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति' इतिवत्॥५॥

## संक्रमणं च दर्शयति ॥ ६ ॥

'' त्रिवृता यूपं परिवीय सवनीयं पशुमुपाकरोति '' इति श्रुतिः परिव्याणमारभ्य धर्माननुक्रममाणा तत्पूर्वाणां धर्माणां सकृन्मानं- सकृन्मितं खातं यूपं दर्शयति । तन्त्रं दर्शयतीत्यर्थः । तस्मात्त्रिष्वपि सवनीयादिपशुषु यूपवच्छेदनादितत्संस्काराणां तन्त्रेणानुष्ठानमिति निष्कर्षः ॥ ६ ॥

स्वरोस्तन्त्रताधिकरणम् ॥ ५ ॥

## स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात् ॥ ७ ॥

' यूपस्य स्वरुं करोति, स्वरुणा पशुमनक्ति ' इति श्रुतम् । यूपानुनिष्पादी प्रथमः काष्ठशकलविशेषः स्वरुरिति तल्लक्षणम् । स किं सर्वपशूनां तंत्र, उत भेदेनेति विचारे स्वरुः-स्वरोः, **तन्त्रापवर्गः** । तन्त्रेण- अग्नीषोमीयपशुतन्त्रेण अपवर्गः-समाप्तिः स्यात् । अग्नीषोमीयपशुतन्त्रे समाप्ते स्वरोर्विसर्ग इत्यर्थः । कुतः ? **अस्वकालत्वात्**-स्वरोश्छेदनादिवत् प्रधानकालाद्भिन्नकालस्याभावात् । ' स्वरुणा पशुमनक्तीति अञ्जनार्थः स्वरुर्न यूपार्थः । अतोऽञ्जनसमय एव स्वरोर्विधानं, न छेदनकाले । तस्माद्भिन्नेषु पशुषु अञ्जनार्थमन्यः स्वरुः सम्पाद्य इति भावः ॥ ७ ॥

## सि० ॥ साधारणो वाऽनुनिष्पत्तिस्तस्य साधारणत्वात् ॥ ८ ॥

**साधारणो वा**-स्वरुस्त्रिषु पशुषु साधारणः- एक एव । यतो यूपानुनिष्पत्तिः सः । **तस्य**- यूपस्य सर्वपशु**साधारण्यात्**-एकत्वात् स्वरुरपि तेषु एक एवेति भावः ॥ ८ ॥

## सोमान्ते च प्रतिपत्तिदर्शनात् ॥ ९ ॥

' संस्थिते सोमे प्रस्तरं स्वरुं च प्रहरति ' इति **सोमान्ते**-सवनत्रयान्ते, स्वरोः प्रतिपत्तिदर्शनादपि तस्यैकत्वं दृढीभवति । अन्यथा तस्य भिन्नत्वे अग्नीषोमीयादेव स्वरोः प्रहरणं स्यादिति भावः ॥ ९ ॥

## तत्कालो वा प्रस्तरवत् ॥ १० ॥

विहितः । स चोदकेनात्र प्राप्तः । सोऽने प्रयमे वा हविष्कृदाह्वानकाले कर्तव्यः, उतान्त्ये एवेति पूर्वपक्षसंशये पूर्वपक्षे च सिद्धान्तमाह । **वाग्विसर्गः बीजभेदे**— उक्तायां नानाबीजेष्टौ **तथा**— कृष्णविषाणाप्रासनश्चरमेह-विष्कृदाह्वानकाल एव स्यात् । न प्रथमहविष्कृता । अत्रापि वाग्विसर्गस्य न विधिः । रागप्राप्तत्वात्तस्य । किन्तु अपां प्रणयनकाले विहितवाङ्नियमनस्य सह हविष्कृतेति मर्यादामात्रविधिरिति भावः ॥ १४ ॥

अग्नीषोमीये पौरोडाशिककाल एव वाग्विसर्गाधिकरणम् ॥ ८ ॥

## सि० ॥ पशौ च पुरोडाशे समानतन्त्रं भवेत् ॥ १५ ॥

अग्नीषोमीयपशौ पाशुकं पौरोडाशिकं चेति तन्त्रद्वयं वर्तते । उभयत्रापि वाङ्नियमः हविष्कृदाह्वानं च विद्यते इति कृत्वा विचारः । तत्र सिद्धान्तः । पशौ पुरोडाशे च वाङ्नियमस्य समानमेव तन्त्रं भवेत् । कुतः ? वाङ्नियमस्य कर्तृसंस्कारार्थत्वात् । पौरोडाशिकहविष्कृदाह्वानपर्यन्तं वाङ्नियमः कार्य इति भावः ॥ १५ ॥

अग्निचयने प्रधानानन्तरमेवाग्निविमोकाधिकरणम् ॥ ९ ॥

## अग्निसंयोगः सोमकाले तदर्थत्वात्संस्कृत-कर्मणः परेषु साङ्गस्य तस्मात्सर्वापवर्गे विमोकः स्यात् ॥ १६ ॥

अग्निचयने 'अग्निं युनज्मि शवसा घृतेनेति जुहोति, अग्निमेवैतद्युनक्ति' पुनः 'इमं स्तनं मधुमन्तं धयापामग्निविमोकं जुहोति' इति योगविमोकौ श्रूयेते । तत्र किमङ्गप्रधानार्थो योगः, सर्वापवर्गे विमोकः कर्तव्यः, उत प्रधानार्थो योगः, प्रधानापवर्गे विमोक इति संशये, सोमकाले योऽग्निसंयोगः स **साङ्गस्य**—अङ्गसहितप्रधानस्य । कुतः ? **संस्कृत-कर्मणः**—अनयाऽऽहुत्या संस्कृताग्नेः परेषु अग्निकर्मसु विशेषस्याश्रवणात्—अमुककर्मार्थमिदमिति विशेषानुपलम्भेः । किञ्च, संस्कृतकर्मणः **तदर्थत्वात्**—

देहलीदीपन्यायेन साङ्गप्रधानार्थत्वात् योगस्य साङ्गप्रधानार्थत्वेन तन्द्वेविमोकः सर्वापवर्गे-साङ्गप्रधानसमाप्तौ स्यात् । तत्समाप्तिं विना विमोकस्यासम्भवादिति पूर्वपक्षिण आशयः ॥ १६ ॥

## सि० ॥ प्रधानापवर्गे वा तदर्थत्वात् ॥ १७ ॥

प्रधानापवर्गे एव विमोकः स्यात् । न सर्वापवर्गे । कुत ? तदर्थत्वात्—'पञ्चभिर्युनाक्ति । पाङ्क्तो यज्ञः यावानेव यज्ञस्तमालभते' इति यज्ञप्राप्त्यर्थत्वाद्योगस्य । एवं योग प्रधानार्थश्चेत्तत्कार्यं विमोकोऽपि प्रधानापवर्ग एवार्थात्सिध्यतीति भावः ॥ १७ ॥

## अवभृथे च तद्वत्प्रधानार्थस्य प्रतिषेधोऽपवृक्तार्थत्वात् ॥ १८ ॥

'अग्निं युनज्मि०' 'पुनरग्निं स्तनं०' इति योगविमोकविधायकश्रुतौ श्रूयमाणयज्ञशब्दस्य साङ्गप्रधानवाचकत्वाङ्गीकारे तु अवभृथेऽपि 'यद्वृता वषट्कुर्वन्ति भ्रातृव्यं तद्यज्ञस्य आशीर्गच्छेत' यद्वृता वषट्कुर्वन्ति एकधा तद्यजमाने यज्ञस्य आशीःप्रतितिष्ठति ' इत्याशीःस्थितिप्रतिपादकश्रुतिवाक्ये यज्ञशब्दश्रवणाचत्रापि होतुर्वरणमार्षेयवरण च साङ्गप्रधानार्थं स्यात् । तथा च ' न होतारं वृणीते नार्षेयम् ' इत्यवभृथे होत्रादिवरणस्य निषेधः सुतरामसङ्गतो भवेत् । सिद्धान्ते यज्ञशब्दस्य प्रधानमात्रार्थत्वेन प्रधानस्य वरणस्य अपवृक्तार्थत्वात्—निवृत्तकार्यत्वात्, अवभृथे अतिदेशेन वरणप्रसक्तौ उक्तनिषेध समुपपद्यत इति भावः ॥ १८ ॥

## अहर्गणे च प्रत्यहं स्यात्तदर्थत्वात् ॥ १९ ॥

द्वादशरात्रादावहर्गणे च योगविमोकयो. तदर्थत्वात्— प्रधानमात्रार्थत्वात् ' स वा अहरहर्युनाक्ति, अहरहर्विमुञ्चति ' इति श्रुतिः प्रत्यहं योगविमोकौ दर्शयति । यज्ञशब्दस्य साङ्गप्रधानार्थत्वे तु आदौ योग. अन्ते च विमोकः स्यादिति भावः ॥ १९॥

उपसत्कालस्य सुब्रह्मण्याह्वानस्य तन्त्रेणानुष्ठानाधिकरणम् ॥१०॥

## सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात् ॥२०॥

ज्योतिष्टोमे प्रवर्ग्यसन्निधौ उपसत्कालीन सुब्रह्मण्याह्वान ' इन्द्र आगच्छ हरिव आगच्छ मेधातिथेर्मेष० ' इति विहितम् । तद्द्वादशाहे अह-र्गणे अतिदेशेन प्राप्तम् । तदहर्गणे सुत्याभेदाद्भेदेन कार्यं न तन्त्रेणेति प्राप्ते सिद्धान्त । **सुब्रह्मण्या तु**— प्रवर्ग्यसन्निधावुपदिष्टा उपसत्कालीना सुब्रह्मण्या तन्त्रमेव । कुत ' **दीक्षावदन्यकालत्वात्**— यथा दीक्षा सुत्या-कालाद्न्यकालेति तन्त्रम् । तथेयमपि तन्त्रेणेति भाव ॥ २० ॥

अहर्गणे सुत्याकालीनस्य सुब्रह्मण्याह्वानस्य भेदेनानुष्ठाना-धिकरणम् ॥ ११ ॥

## सि० ॥ तत्काला त्वावर्तेत प्रयोगतो विशेष-संयोगात् ॥ २१ ॥

' अद्य सुत्यामागच्छ ' इति श्रुतेः सुत्याकाले क्रियमाण सुब्रह्मण्या-ह्वान तन्त्रेण उत भेदेन कार्यमिति संशय सिद्धान्त । **तत्काला तु** सुत्या-काला सुब्रह्मण्या **आवर्तेत**— भेदेनैवानुष्ठेया । कुत ' **प्रयोगतः**— प्रयोगे, **विशेषसंयोगात्**—उक्तश्रुतौ अद्येति पदसंयोगात्- श्रवणादित्यर्थ ॥२१॥

## शं० ॥ अप्रयोगाङ्गमिति चेत् ॥ २२ ॥

**अप्रयोगाङ्गम्**—अद्येति पद प्रयोगाङ्ग न । यस्मात् ' अर्थ-सिद्धत्वेनाविवक्षितत्वात् । प्रकृतौ हि एकैव सुत्या । अत प्रयोगेऽपि तस्मि-न्नहनि आह्वानमर्थसिद्धमतोऽविवक्षितमद्येति पदं प्रकृतौ । सुत्यामागच्छे त्यम विवक्षितम् । अतिदेशेनाहर्गणे तावन्मात्र प्राप्तम् । तत्तत्राबाधितमेव तन्त्रेणानुष्ठानेऽपीति भाव ॥ २२ ॥

## स्यात्प्रयोगनिर्देशात् कर्तृभेदवत् ॥ २३ ॥

अद्य सुत्यामागच्छेति वाक्यघटकाद्येत्यस्य प्रयोगे निर्देशात् कर्तृभेद-वद्वद् स्यात् । यथा वरुणप्रघासे मारुत्या अप्याहवनीये यागसम्भवे

अदृष्टार्थदाक्षिणवेदिरूपदेशभेदात्कर्तृभेदस्तथा अदृष्टार्थसुत्यारिते अथैतस्य तदहःसम्बन्धित्वे दिनान्तरे सुत्याकालीनमन्यदिलत्यासिध्यतीति भावः ॥२३॥

## तद्भूतस्थानादग्निवदिति चेदपवर्गस्तदर्थत्वात् ॥ २४ ॥

तद्भूतस्थानात्—तेन--सकृदाह्वानेन भूतं—संस्कृतं यत् स्थानं—सकृदाह्वानसंस्कारसंस्कृतैकदैवतामेकमाधिष्ठानमिति यावत् । तदधिष्ठानं अग्निवत्—सकृदाधानसंस्कृताग्नेः यथा आधानोत्तरमाव्यमानाशेषकर्मार्थत्वं तद्वत्सर्वार्थं स्यादिति चेन्नैतद्युक्तम् । कुतः ? यस्मात्तदपवर्गः—तस्य-आह्वानस्य अपवर्गः—तद्दिने एव समाप्तिः । कस्मादिति चेत्—तदर्थत्वात्—यस्मिन् दिने आह्वानं तस्याह्वानस्य तद्दिनीयकर्मार्थत्वात् ।-अग्निसंमार्गादिवदिति भावः ॥ २४ ॥

## अग्निवदिति चेत् ॥ २५ ॥

यथा अग्न्याधानं तदुत्तरयावत्कर्मसु तंत्रं, तथेदमपीत्यस्य कः परिहार इति चेत्—॥ २५ ॥

## न प्रयोगसाधारण्यात् ॥ २६ ॥

नैतत्प्रकृतमाह्वानमाधानतुल्यम् । आधाने हि स्वकाले- तस्य यः कालो विहितस्तस्मिन्नेव वसन्तादौ तत् क्रियते । इदमाह्वानन्तु प्रयोगसाधारण्यात्—प्रयोगान्तःपातित्वात् प्रधानकर्मकालीनम् । इति गृह्यमाणविशेषमतो नाधानवत्तंत्रमिति वक्तुं युक्तमिति भावः ॥ २६ ॥

## लिङ्गदर्शनाच्च ॥ २७ ॥

' संस्थिते संस्थिते अहनि आग्नीध्रागारं प्रविश्य सुब्रह्मण्ये सुब्रह्मण्यामाह्वयेति सम्प्रेषयती ' ति लिङ्गदर्शनादपि प्रत्यहमाह्वानस्य भेदः सिध्यति ॥ २७ ॥

## तद्धि तथेति चेत् ॥ २८ ॥

तद्धि यथा एकादशिन्या यूपाहुतिरूपं कर्म तन्त्रम् । तथेदमपि तन्त्रमिति चेत्—॥ २८ ॥

## नाशिष्टत्वादितरन्यायत्वात् ॥ २९ ॥

न यूपाहुतितुल्यमिदम् । तस्याः अशिष्टत्वात्—अविहितत्वात् । न हि यूपाहुतेः समीपदेशविधिस्तत्र विवक्षितः । 'अशास्त्रत्वात्' (११।२।२८) इत्युक्तम् । किन्तु 'इतरप्रतिषेधो वा' (११।२।२७) आहवनीयप्रतिषेधमात्रमित्यपि तत्रोक्तम् । इह तु 'सुत्यामागच्छेति सुत्याकालः आह्वाने विहित इति वैषम्यम् । तस्मात् इतरन्यायत्वात्—अत्र इतरन्यायः—आग्निसंस्कारन्याय एवं युक्तः कालभेदात् । गृह्यमाणविशेषस्याऽऽवृत्तिर्भाव्येति निष्कर्षः ॥ २९ ॥

## विध्येकत्वादिति चेत् ॥ ३० ॥

विध्येकत्वात्—अत्र विधिविहितः 'वसतीवरीपर्यन्तः अवभृथादिश्च' तन्त्रदृष्टः द्वादशाहिको विधिरेव दृष्टान्तः । अस्यापि द्वादशाहिकविधित्वेन सादृश्यादिति चेत्—॥ ३० ॥

## न कृत्स्नस्य पुनः प्रयोगात्प्रधानवत् ॥ ३१ ॥

न—वसतीवरीवर्यादिवन्नेत्यर्थः । कुतः ? कृत्स्नस्य पुनः प्रयोगात्-सोमाभिषवपवमानग्रहचमसस्तोत्रशस्त्रादीनां तत्र पुनरनुष्ठानात् । प्रधानवत्—यथा प्रधानं पुनरनुष्ठीयते, न तस्य तन्त्रम् । तथेदमपि वसतीवरीसम्भरणादेः सुत्याप्रागदिनेऽनुष्ठेयत्वाद्विलकालीनत्वेन दीक्षणीयेष्टिवत्तंत्र स्यात् । अस्य तु प्रधानकालीनत्वान्न तन्त्रमपि त्वावृत्तिरेवेति भावः ॥ ३१ ॥

देशपात्रऋत्विजामन्यप्रयोगे पूर्वदेशाद्यादानस्य ऐच्छिकत्वाधिकरणम् ॥ १२ ॥

## लौकिकेषु यथाकामी संस्कारार्थालोपात् ॥ ३२ ॥

विहितसंस्कारजनितादृष्टरूपं यूपाऽऽहवनीयादिकमलौकिकम् । तद्भिन्नेषु लौकिकेषु 'समे यजेत, चतुर्जुह्वां गृह्णाति, दर्शपूर्णमासयोश्चत्वार

ऋत्विज इति देशपात्रऋत्विक्षु प्रतिप्रयोग त एवं ग्राह्या, उतान्येऽपीच्छयेति विचारे यूपादिवदन्ये इति प्राप्ते सिद्धान्त । **लौकिकेषु**—उक्तदेशादिषु **यथाकामी**- यथेच्छं ते वान्ये वा स्यु । **संस्कारार्थालोपात्** । संस्कारस्यार्थस्य चालोपाभावादनियम । इच्छैव तत्र नियामिकेति भाव ॥ ३२ ॥

यज्ञपात्राणामाकर्मसमाप्ति धारणाधिकरणम् ॥ ३३ ॥

## यज्ञायुधानि धार्येरन् प्रतिपत्तिविधानादृजीषवत् ॥ ३३ ॥

यज्ञपात्राणां यावज्जीव धारणमुत प्रतिप्रयोगम् यानीति विचारे सिद्धान्तः । **यज्ञायुधानि**— यज्ञपात्राणि स्फयादीनि यावज्जीव **धार्येरन्**- धार्याण्येव । कुत ? **प्रतिपत्तिविधानात्**—'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति प्रतिपत्तिविधानात् । **ऋजीषवत्**— यथा अहर्गणे यावदिनसम्बन्धिऋजीष ( गतसारा सोमावयवा ) अवभृथे ' ऋजीषमप्सु प्रहरति ' ति प्रतिपत्त्यर्थं धार्यते तद्वद्यज्ञपात्रजातमुक्तप्रतिपत्तिसंस्कारार्थं धार्यमिति भाव ॥ ३३ ॥

## पू० ॥ यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथाकामी तदर्थत्वात् ॥ ३४ ॥

यजमानसंस्कारो वा—यजमानस्याङ्ग पात्राणि । नैव तेषां प्रतिपत्ति । कुत ? तदर्थ— तेषां पात्राणामर्थे— यजमानार्थे तदङ्गत्व ' त यज्ञपात्रै ' इति ' आहिताग्निपदोत्तरद्वितीयया प्राधान्य, पात्रपदोत्तरतृतीयया चाङ्गत्व श्रूयते । अतस्तत्र— पात्रधारणे, यथाकामी— यथेच्छ धारणं त्यागं वा कुर्यात् । तदर्थत्वात्— तेषां यजमानसंस्कारार्थत्व । पूर्वप्रयोगीयपात्राणां त्यागेऽपि चरमप्रयोगपात्रैर्यजमानसंस्कार सम्भवतीति भाव ॥ ३४ ॥

## मुख्यस्य धारणं वा मरणस्यानियतत्वात् ॥३५॥

मुख्यस्य—प्राथमिकयज्ञपात्रसमूहस्यैव धारणं कर्तव्यम् । कस्मात्? मरणस्य अनियतत्वात्—प्राथमिकप्रयोगसम्बन्धिपात्राणां त्यागे आग्निप्रयोगात् प्राग्यजमानमरणे पात्रैस्तत्संस्काराभावापत्तिरिति भावः ॥३५॥

## यो वा यजनीयेऽहनि म्रियेत सोऽधिकृतः स्यादुपवेषवत् ॥ ३६ ॥

यो वेति पक्षान्तरम् । यः यजनीयेऽहनि म्रियेत यजमानः सोऽनेन संस्कारेण अधिकृतः—संस्कृतः स्यात् । तस्य पात्राणि सन्निहितानि येनेति । उपवेषवत् । 'उपवेषेण कपालान्युपदधाति' उपवेषेण कपालोपधाने सान्नाय्ययाजिन एवाधिकारः । तस्योपवेषसान्निध्यात् । तद्वदत्रापीति भावः ॥३६॥

## न शास्त्रलक्षणत्वात् ॥ ३७ ॥

नायं पक्षो दृष्टान्तो युक्तः । वैधर्म्यात् । उपवेषस्य शास्त्रलक्षणत्वात्—शास्त्रविहितत्वात् । यथा हि 'शाखामाहरति । शाखया वत्सानपाकरोति । तन्मूलेनोपवेषं करोति । तेनाङ्गारानुपवर्तयति' इति सान्नाय्यार्था शाखा । तस्या मूलमुपवेषः । असान्नाय्ययाजिनः शाखानिवृत्तौ उपवेषोऽपि निवृत्त इति न तस्योपवेषकरणकपालोपधानेऽधिकारः । अत्र तु सान्नाय्यिन एव प्रकृत अन्तरा मृतस्य यजमानस्य पात्रधारणेनापि संस्कारसम्भवात् तन्निवर्तकं किमप्यस्तीति वैधर्म्यं बोध्यम् ॥ ३७ ॥

## उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् ॥ ३८ ॥

उत्पत्तिर्वा—अन्तरा यजमानमृतौ दाहार्थं तत्संस्कारार्थं तत्काले नूतनानां पात्राणामुत्पत्तिः कार्या । कुतः? प्रयोजकत्वात्—उक्तसंस्कारे तेषां प्रयोजकत्वात् । आशिरवत्—यथा व्रतेषु 'घृतव्रती भवति' इति व्रतार्थं घृतविधानात् पयोनिवृत्त्या—सायंदोहनिवृत्त्या तदभावे 'आशिरे दुहन्ति' इत्यत्र दध्यादिपाकाशिरार्थं नवीनैव यजमानस्य गौः स्वीक्रियते । तथात्रापीति पात्रधारणं विनाप्यन्तरा तत्संस्कारोपपत्तिरित्येकदेशिनः शङ्का ॥ ३८ ॥

मासयोस्तेषामुत्पत्ते श्रुतत्वात् प्रकृत्यर्थानि तानि । अत पौर्णमासीमारभ्य क्रियेरन्—पात्राणि धार्येरन्निति ॥ ४२ ॥

## सि० ॥ अग्न्याधेये वाऽविप्रतिषेधात्तानि धार्येरन् मरणस्यानिमित्तत्वात् ॥ ४३ ॥

अग्न्याधेये वा— आधानमारभ्यैव धारयेत् । कुत ? अविप्रतिषेधात्—बाधकाभावात् । पौर्णमासीमारभ्य धारणे तु मरणस्य अनिमित्तत्वात्— अनियतत्वात्, यद्यपि विहितत्वात्प्रकृत्यर्थानि तानि पात्राणि तथाप्याधानानन्तर पौर्णमास्याः प्राग्यजमानमृतौ तच्छरीरसंस्कारो न स्यात् । अत आधानान्तर्गतयमानेष्ट्यावतिदेशेन, प्राप्तानामेव तेषा तदारभ्य धारणमिति भाव ॥ ४३ ॥

## प्रतिपत्तिर्वा यथाऽन्येषाम् ॥ ४४ ॥

इत्यनन्तरोपक्रान्त समाप्य पात्राणा यजमानसंस्काराधित्वमित्येकदेशिमत निरस्यति । प्रतिपत्तिर्वा— यथान्येषा सोमलिप्तपात्राणामवभृथनयनमप्सु प्रक्षेप प्रतिपत्ति । एवं यजमानशरीरे पात्राणा निक्षेपः प्रतिपत्तिसंस्कार एव । 'यजमानस्य दक्षिणे पाणौ जुहूम् । नासिकयो स्रुवौ०' इत्यादौ पात्राणा चवणादोत्तर द्वितीयाश्रवणात । तथान्यत्रोऽपि नैककर्मनुपयुक्ता प्रतिपत्त्यर्हो इति तेषामपि प्रतिपत्तिसंस्कार एव ' आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इत्यत्र तृतीयाश्रुत्या तेषा दाहं प्रति करणत्वेऽपि यजमानशरीरे निक्षेपस्तु तेषा प्रतिपत्तिसंस्कार एवेति भाव ॥ ४४ ॥

### वाजपेये सर्वसोमोत्तरं प्राजापत्यप्रचाराधिकरणम् ॥ १५ ॥

## सि० ॥ उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः ॥ ४५ ॥

वाजपेये- प्राजापत्यपशून् प्रकृत्येत्थं श्रूयते— ' उपरिष्टात्सोमाना प्राजापत्यैश्चरन्ति ' इति । तत्राय प्रयोगक्रमः—' तृतीयसवने आर्भवपवमानस्ततो वैश्वदेवग्रहपर्यन्ता शस्त्रान्ताः सोमाः । तत - शस्त्रसोमग्रहहोमाः, ततः अग्निष्टोमसाम । तत उक्थ्यादयः सोमविकाराः ' इत्येवं क्रमे प्राजापत्यपशुप्रचारः किमार्भवपवमानकाले कार्यः, उत - शस्त्रान्तसोमान्ते, अथवा विकारस्थाने, किं वा सर्वान्ते इति चतुर्धा संशये चरमः सिद्धान्तपक्षः उपरिष्टादिति । सर्वेषां सोमाना उपरिष्टात्— तदनन्तरं प्राजापत्यप्रचारो विधेयः । कुतः ? अविशेषात्—सोमानामिर्थविशेषश्रवणात् । यद्यपि प्रकृतौ ज्योतिष्टोमे आर्भवपवमानकाले पशुप्रचारे प्राप्तस्तथापि सः अत्र अवाच्यः— अश्रुतः आतिदेशिक इति । ततो बलवता ' उपरिष्टात्सोमानामिति नाक्षाच्छ्रुतेन कालेन बाध्यत इति भावः ॥ ४५ ॥

## अङ्गविपर्यासो विना वचनादिति चेत ॥ ४६ ॥

विना वचनादङ्गविपर्यासः—सर्वसोमादूर्ध्वं प्राजापत्यानुष्ठाने कृते सति ' अग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति । प्रहृत्य परिधीन् हारियोजनेन प्रचरन्ति ' इति क्रमबाधः वचनं विना स्यादिति चेत्—॥ ४६ ॥

## उत्कर्षः संयोगात्कालमात्रमितरत्र ॥ ४७ ॥

उत्कर्षः— प्राजापत्यपशुप्रचारयोरुत्कर्षे सति अनूयाजपरिधिप्रहरणयोरपि उत्कर्षो न्याय्यः । कुतः ? संयोगात्—पशुप्रचारेण सह संयोगात्—तदङ्गत्वात्तयोरित्यर्थः । इतरत्र-'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति ' ' प्रहृत्य परिधीन् हारियोजनेन प्रचरन्ति ' इति वाक्यद्वये तु कालमात्रं— ' दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेतिवत्कालमात्रस्य विधानम् । न तदङ्गत्वं विवक्षितमिति भावः ॥ ४७ ॥

## द्वि० प० ॥ प्रकृतिकालासत्तेः शस्त्रवतामिति चेत् ॥ ४८ ॥

शंखवतो सोमानामन्ते प्राजापत्यप्रचारः स्यात्। प्रकृतिकालासत्तेः-प्राकृतिककालस्य सान्निध्यादित्यर्थः ॥ ४८ ॥

## न श्रुतिविप्रतिषेधात् ॥ ४९ ॥

न शंखवतो सोमानाम ते इति वक्तुं युक्तम्। श्रुतिविप्रतिषेधात्-सोमान्ते इति श्रुतेर्बाधात्। अविशेषश्रुतस्य शब्दस्य विशेषितार्थस्वीकारे शक्यार्थबाधप्रसङ्ग इति भावः ॥ ४९ ॥

## पू० प० ॥ विकारस्थाने इति चेत् ॥ ५० ॥

**विकारस्थाने**— *यज्ञायज्ञीयसाम्ना समाप्यमानप्रकृतिभूताग्निष्टोम*-प्रचारोत्तर तद्विकृतिभूतोक्थ्यादिसंस्थानां स्थानम्। अस्य प्राजापत्य-पशुप्रचारस्यापि आनुषङ्गिकत्वेन विकारत्वात्तस्मिन्नेव विकारस्थाने तस्य प्रचारो निष्पन्नो भवेदिति चेत्- ॥ ५० ॥

## न चोदनापृथक्त्वात् ॥ ५१ ॥

न। नैव स्यात्तत्र तस्य प्रचारः। कस्मात्? चोदनापृथक्त्वात्-कर्म-पृथक्त्वात्, सोमयागपशुप्रचारयोः स्वतन्त्रत्वेन प्राधान्यात्—प्रकृतिविकृति-भावात् वैकृतानां कर्मणाम् न निवेश इव परिमाणं तत्र न प्रवेश इति भावः ॥ ५१ ॥

सवनीयपुरोडाशे देवतोत्कर्षाधिकरणम् ॥-१६॥-

## उत्कर्षे सूक्तवाकस्य न सोमदेवतानामुत्कर्षः पश्वङ्गत्वाद्यथा निष्कर्षेऽनन्वयः ॥ ५२ ॥

ज्योतिष्टोमे सवनीयपशोस्तन्त्रे आग्निमारुतशस्त्रादधस्तात् अनूया-जानां स्वकालः। तत्कालं निवार्य "आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति" इति तदूर्ध्वकालस्तेषां विहितोऽस्ति। तदनुसारत उत्कृष्टेषु अनूयाजेषु तदुत्तर-कालीनः सूक्तवाकोऽपि तदादिवदुत्कृष्यते। तथैव निष्कृष्टो भवेत्। स्थिते चैवं प्रसङ्गिनि सवनीयपुरोडाशे भृगुत्विष्टोधे हरिवते धाना पूष एव ते करम्भम्

इत्यादिना सोमदेवता आम्नाताः। प्रसूत्रिनस्तस्य सवनीयपुरोडाशस्य पृथक् सूक्तवाको नास्ति। तत्र सवनीयपशुपुरोडाशसम्बन्धी सूक्तवाक एव। तस्योत्कर्षेण पशुपुरोडाशसम्बन्धिदेवतावाचिपदानामुत्कर्षोऽस्ति न वा नेति संशये सूक्तवाकस्योत्कर्षेऽपि तासां सोमदेवतानां वाचकपदानां नोत्कर्षः। पुनः तासां सोमाङ्गत्वेन पशुनङ्गत्वात्। यथा निष्कर्षे अनन्वयः—पौर्णमासी-प्रयोगाङ्गभूतदेवतानां दर्शदेवतानामन्वयो नास्ति। तथा प्रकृतेऽप्यनन्वय इति ॥ ५२ ॥

## सि० ॥ वाक्यसंयोगाद्वोत्कर्षः समानतन्त्रत्वा- दर्थलोपादनन्वयः ॥ ५३ ॥

वाक्यसंयोगाद्वा— सूक्तवाकवाक्ये तासामपि सोमदेवतानां संयोगात् सवनीयपुरोडाशसवनीयपशुप्रयोगयोर्मिलित्वा एकं सूक्तवाक्यं पठितम्। 'मृज्यमिन्द्राय हरिवते धानाः पूष एव न करम्भ सरस्वतीवते परिवापेण मृपस्या अथ देवो वनस्पतिरभवत्' इति च। अनस्त्वन्मध्यपतितानामपि तासामुत्कर्ष एवेति भावः। पौर्णमास्यां दर्शदेवतानन्वयस्तु युक्त एव। कस्मात्? समान-तन्त्रत्वात्—वेदे हि दर्शपूर्णमासप्रयोगपाठः समानतन्त्रेण कृतः। अत एकस्मिन् वाक्ये यद्यपि सर्वदेवतापाठस्तथापि अमावास्यायाममावास्यया यजेत। पौर्णमास्यां पौर्णमास्या' इति प्रयोगद्वयस्य कालभेदेनानुष्ठानात् अर्थलोपात्—इष्टदेवतास्मरणात्मककार्यस्य लोपात् पौर्णमासीप्रयोगे अमावास्यीयदेवतानामनन्वयो युक्तः। इह सवनीयपुरोडाशे पृथक् सूक्तवाको नास्ति। यत्र तस्य पाठस्तत्रापि तासामनन्वये पाठोऽपार्थ एव स्यात्। तस्मादुत्कर्ष एव तद्वाचकपदानामिति भावः ॥ ५३ ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां एकादशाध्यायस्य तृतीयः पादः ॥ ३ ॥

॥ श्री ॥

## ॥ अथ एकादशाध्यायस्य चतुर्थः पादः ॥

राजसूये आग्नावैष्णवादिके अङ्गानां भेदेन अनुष्ठानाधिकरणम् ॥ १ ॥

### समवायात्तन्त्रमङ्गानि ॥ १ ॥

अथास्मिंश्चतुर्थपादे अव्यक्तकर्तृभेदस्थले तन्त्रावापौ विचार्येते । राजसूये 'सोमापौष्ण एकादशकपालः, ऐन्द्रापौष्णश्चरुः, पौष्णश्चरुः, श्यामो दक्षिणा' । 'आग्नावैष्णव एकादशकपालः, ऐन्द्रावैष्णवश्चरुः, वैष्णवस्त्रिकपालो वामनो दक्षिणा' इति श्रूयते । तत्र द्वयोस्त्रिकयोः अङ्गानां तन्त्रेणानुष्ठानं, उत भेदेनेति संशये अनुक्तदेशकालानामेव **समवायात्**—परस्परसहितानां फलजनकत्वात् 'राजसूयेन स्वाराज्यकामो यजेतेति चोदनैकत्वेन राजसूयेति समुदायवाचकनाम्ना सर्वेषां दर्शपूर्णमासवत्फलसम्बोधनात् अङ्गानां तत्र तन्त्रेणानुष्ठानमिति प्राप्ते ॥ १ ॥

### सि० ॥ प्रतिदक्षिणं वा कर्तृसम्बन्धादिष्टिवदङ्गभूतत्वात् समुदायो हि तन्निर्वृत्त्या तदेकदेशत्वादेकशब्दोपदेशः स्यात् ॥ २ ॥

उक्तेषु कर्मसु श्यामो वामन इति दक्षिणाभेदः श्रूयते । तद्भेदाच्च **प्रतिदक्षिणं कर्तृसम्बन्धात्**—तत्तद्दक्षिणाक्रीता कर्तारस्तस्य तस्य कर्मणोऽङ्गम् । न परस्येति कर्तृभेदात् अङ्गानां भेदः । **इष्टिवत्**—यथा दर्शेष्टौ पूर्णमासेष्टौ च कालभेदात् अङ्गानां भेदेनानुष्ठानं तथाऽत्र कर्तृभेदात् भेदेन आवृत्त्यैवाङ्गानुष्ठानं कार्यम् । यच्च चोदनैकत्वादित्युक्तं तत्र **समुदायः**—इष्टिपशुसोमात्मको राजसूयेतिपदवाच्यः समुदायः, तस्य एकत्वात्तज्जन्यफलस्याप्येकत्वम् । **तन्निर्वृत्त्या**—तदुत्पत्त्यभिप्रायेण **एकशब्दोपदेशः**—राजसूयेनेति शब्दपाठः । न प्रयोगैक्याभिप्रायेणेति भावः ॥ २ ॥

## तथा चान्यार्थदर्शनम् ॥ ३ ॥

तथा च 'आग्नावैष्णवमेकादशकपालं निर्वपेत्, ऐन्द्रावैष्णवमेकादशकपालं, वैष्णवं त्रिकपालं वामनो दक्षिणेत्येक त्रिकम् । 'अग्नीषोमीयमेकादशकपालं, इन्द्रासोमीयमेकादशकपाल, सौम्य चरुं बभ्रुर्दक्षिणेत्यपर त्रिकम्' इत्यस्य सन्निधौ 'यत्पूर्वं त्रिसयुक्तं वीरजननं तत् ।' यदुत्तरं त्रिसयुक्त पशुजननं, तदिति - अन्यार्थदर्शनं — प्रमाणान्तरदर्शनं - साङ्गप्रयोगभेदाच्च तयोः पूर्वोत्तरभावे एवोपपन्न भवतीत्यगत्यावृत्तिरेव । न तत्तन्त्रमिति भाव ॥ ३ ॥

राजसूये कर्तुस्तन्त्राधिकरणम् ॥ २ ॥

## अनियमः स्यादिति चेत् ॥ ४ ॥

राजसूये उपक्रमे ये ऋत्विजस्त एव समाप्तिपर्यन्तमित्यनियमः— नियमो न । ते वा अन्ये वा स्युरिति चेत् ॥ ४ ॥

## नोपदिष्टत्वात् ॥ ५ ॥

न अनियमः । अपि तु नियम एव । कस्मात् ? उपदिष्टत्वात्— वरणकाले ऋत्विजान् वृणे अनेन राजसूयसञ्ज्ञकेन सर्वमुदायेन मा याजयेति तेषामुपदिष्ट यजमानेन । अतो वृताना तेषा समाप्तिपर्यन्तमावश्यकत्वात्त एव स्युरिति नियमः ॥ ५ ॥

## लाघवापत्तिश्च ॥ ६ ॥

प्रत्येकास्मिन् कर्मणि ऋत्विग्वरणापेक्षया सकृद्वरणे लाघवमपि ॥६॥

## प्रयोजनैकत्वात् ॥ ७ ॥

। आनतिरूपप्रयोजनस्य एकत्वात् अवयवानस्य समुदायस्याऽऽनतिसिद्धतीति समुदाये दक्षिणाश्रवण नास्तीति कथं समुदायस्य आनतिसिद्धेरित्याशङ्कानुद्धरः । यतो नावयवातिरिक्त समुदायो नामेति भाव ॥ ७ ॥

## विशेषार्थी पुनःश्रुतिः ॥ ८ ॥

विशेषार्थी— अदृष्टार्था तत्र तत्र पुन श्रुतिरिति ज्योतिष्टोमादिवसमुदाये कुतो न श्रुता दक्षिणेति शङ्कापि न कार्या । अत एव दक्षिणाया दान तत्पूर्वार्थमिति भाव ॥ ८॥

अवेष्टावङ्गानां भेदेनानुष्ठानाधिकरणम् ॥ ३ ॥

## अवेष्टौ चैकतन्त्रं स्याल्लिङ्गदर्शनात् ॥९॥

राजसूयप्रकरणे ' दिशामवेष्टयो भवन्ति ' ' आग्नेयमष्टाकपाल निर्वपति हिरण्य दक्षिणा ' ' ऐन्द्रमेकादशकपाल ऋषभो दक्षिणा ' वैश्वदेवं चरु पिशङ्गी पष्ठौही दक्षिणा, मैत्रावरुणीमामिक्षा वशा दक्षिणा, बार्हस्पत्य चरुं शितिपृष्ठो दक्षिणा । ' इत्याग्नी इन्द्रविश्वदेवमित्रावरुणबृहस्पतिदेवताका पञ्चहविष्का पृथक् पृथक् पञ्चदक्षिणाका अवेष्टिसंज्ञिका इष्टि श्रुता । तत्र अवेष्टिनामकयागेषु अङ्गाना तन्त्र, उत भेदेनानुष्ठानमिति संशये अवेष्टौ लिङ्गदर्शनात्—यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुति हुत्वा तमभिघारयेत् । यदि राजन्य ऐन्द्रम् । यदि वैश्यो वैश्वदेवम् ' इति तत्र ब्राह्मणादिभेदेन मध्ये निधानं प्रयोगैक्ये लिङ्गम् । यदि भिन्नप्रयोगा स्युस्ता इष्टयस्तर्हि प्रत्येकमेकहविष्कत्वात् बार्हस्पत्यादेर्मध्ये निधानमनुपपन्नं स्यात् । तस्माल्लिङ्गदर्शनेन प्रयोगैक्यस्य सिद्धत्वात् अङ्गानामेकतन्त्र्य स्यान्न भेदेनानुष्ठानमिति भाव पूर्वपक्षिणः ॥ ९ ॥

## सि० ॥ वचनात्कामसंयोगेन ॥ १० ॥

' एतया अन्नाद्यकाम याजयेत् ' इति कामसंयोगसहितवचनात्सिद्धे राजसूयबहिर्भूतप्रयोगे तन्त्राङ्गानां तन्त्रत्वेन चरितार्थं तल्लिङ्गमिति भाव. ॥१०॥

## क्रत्वर्थायामिति चेन्न वर्णसंयोगात् ॥ ११ ॥

क्रत्वर्थायां—राजसूयक्रतुशेषायामिष्ट्या तस्य लिङ्गस्य निवेश इति चेन्न । कुत ? वर्णसंयोगात्— ' यदि ब्राह्मणो यजेतेति वर्णसंयोगात् राजसूये राज एवाधिकारात्तत्र ब्राह्मणस्याधिकारो नेति भाव ॥ ११ ॥

प्रवमानेष्टिहविषां भेदेनानुष्ठानाधिकरणम् ॥ ४ ॥

पवमानहविःष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ॥ १२ ॥

"अग्नये पवमानायाष्टाकपाले निर्वपति, अग्नये पावकाय, अग्नये शुचये" इत्याधाने त्रिस्रः पवमानेष्टयः श्रूयन्ते । तासु किमङ्गानामैकतन्त्र्यमुत भेद इति विचारे पवमानहविःषु ऐकतन्त्र्यं स्यात् । कुतः ? प्रयोगवचनैकत्वात्— 'अन्हो निरूप्याणि' इत्येकप्रयोगवचनादतैर्हविर्भिः साध्यस्याग्नेरेकत्वादेशाद्यभेदाच्च तन्त्रमङ्गानामिति ॥ १२ ॥

लिङ्गदर्शनाच्च ॥ १३ ॥

'समानबर्हींषि भवन्ति' इति लिङ्गदर्शनादपि तन्त्रं सिध्यति ॥ १३ ॥

सि० ॥ वचनात्तु तन्त्रभेदः स्यात् ॥ १४ ॥

'अथ यः कामयेत वसीयान् श्रेयान् स्यामिति तस्याग्नये पवमानाय निरूप्य अथ पावकाय शुचये चोत्तरे हविषी समानबर्हिषी निर्वपेत् तदेनमपहीयेन स उत्तरे वसीयान् श्रेयान् भवति' इति वचनात् प्रथमस्य तन्त्रभेदः । उत्तरयोस्तन्त्रम् । अह्नो रूप्याणीति तु एकदिनात्मककालबोधकं, न एकप्रयोगविधायकमिति भावः ॥ १४ ॥

सहत्वे नित्यानुवादः स्यात् ॥ १५ ॥

'यो ब्रह्मवर्चसकामः स्यात्तस्य सर्वाणि हवींषि सह निरूप्याणि' इति ब्रह्मवर्चसवचनेन प्रयोगस्योक्तवचनेन तन्त्रसिद्धौ तत्र समानबर्हींषीति लिङ्गस्य नित्यानुवादरूपत्वं स्यादिति भावः ॥ १५ ॥

द्वादशाहे दीक्षोपसदादुत्यानां प्रत्येकं द्वादशदिनसाध्यताधिकरणम् ॥ ५ ॥

द्वादशाहे तत्प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात् ॥ १६ ॥

'द्वादशाहेन प्रजाकामं याजयेत्' इत्यनेन विहितद्वादशदिननिर्वर्त्यस्योक्तयागस्य प्रत्येकमहः पृथक् पृथक् कर्म। तस्य च ज्योतिष्टोमविकृतिरूपत्वात्तस्मिन् दीक्षोपसत्सुत्यायुक्तस्य ज्योतिष्टोमस्य, विध्यन्तत्वोदकेनातिदिष्ट। अतिदिष्टानां दीक्षाणामुपसदां च प्राकृतसङ्ख्याबाधनाय तत्र 'द्वादश दीक्षाः, द्वादश उपसदः' इति श्रुतम्। तत्रास्य यागस्य दिनमानमुद्दिश्य किं त्रिंशद्दिनसाध्योऽयं क्रमशोऽयं यागः, उत द्वादशदिनसाध्य, आहोस्वित् दीक्षादीनां क्रमशोऽनुष्ठानेन 'द्वादशदिनसाध्य', अथवा षट्त्रिंशद्दिनवर्त्यः इति संशये। द्वादशाहे **एकैकमहः**– द्वादशदीक्षं द्वादशोपसदमेव सुत्याकं च **अपवृज्येत** – समाप्येत। कुतः ? **तत्प्रकृतित्वात्**– ज्योतिष्टोमप्रकृतिकत्वादस्य। ज्योतिष्टोमे हि सदीक्षोपसदमहः अपवर्जितम्। अत्र **कर्मपृथक्त्वात्**–प्रत्यह कर्माणि पृथगिति पृथग्धर्माकाङ्क्षा तेषाम्। तथा च दीक्षार्थं द्वादश उपसदर्थं द्वादश सुत्यार्थं चैकमिति पञ्चविंशतिदिननिर्वर्त्यं प्रत्यह कर्म। तस्य द्वादशावृत्त्या त्रिशतीदिनानुष्ठेयोऽयं प्रजाफलको द्वादशाह इत्याद्यः पक्ष. ॥ १६ ॥

## अन्हां वा श्रुतत्वात्तत्र साङ्गं क्रियेत यथा माध्यन्दिने ॥ १७ ॥

**अन्हा** — द्वादशसङ्ख्याविशिष्टदिनानां **श्रुतिभूतत्वात्**—द्वादशाहेनेत्युत्पत्तिवाक्ये **साक्षाच्छ्रुतत्वात्**— प्रथमपक्षे तद्बाधापत्तेः तत्प्रत्येकस्मिन्नहनि **साङ्ग**–दीक्षोपसत्सहितं क्रियेत। **यथा माध्यन्दिने**–'मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुम्' इत्यत्र अङ्गानामपि माध्यन्दिन एव कालः। तद्वदत्रापि सुत्याख्यप्रधानस्य काल एवाङ्गानामिति द्वितीयः पक्ष. ॥१७॥

## अपि वा फलकर्तृसम्बन्धात्सहप्रयोगः स्यादाग्नेयाग्नीषोमीयवत् ॥ १८ ॥

**अपि वा**— अथवा, **सहप्रयोगः**–अङ्गानां तन्त्रेणानुष्ठान– चतुरहे दीक्षाः, चतुरहे उपसदः, चतुरहे सुत्या इति। कुतः ? **फलकर्तृसम्बन्धात्**-

प्रजारूपफले कर्तृत्वं च दक्षिणैक्येन, समुदायेनैव सम्बन्धात् । प्रत्येकमन्हा फलकर्तृभ्यां सम्बन्धाभावात् । आग्नेयाग्नीषोमीयवत्— यथा 'आग्नेयस्याग्नीषोमीयस्य, चाङ्गानां तन्त्रमुक्तहेतुबलेन, तद्वत्रापि तन्त्रेणानुष्ठानमिति श्रूयमाणद्वादशाहसङ्ख्यासम्पत्तिरिति तृतीय पक्षः ॥१८॥

## सि०॥ साङ्गकालश्रुतित्वाद्वा स्वस्थानानां विकारः स्यात् ॥१९॥

अङ्गानां तन्त्रत्वपक्षाकृत्य सिद्धान्त उच्यतेऽनेन सूत्रेण सागमिति । **स्वस्थानानां**—स्वस्वस्थानेष्वेवानुष्ठीयमानानां दीक्षोपसत्सुत्यानां **विकारः**-वृद्धिः स्यात् । कुतः ? **साङ्गकालश्रुतित्वात्** -साङ्गस्य प्रधानस्य च कालस्य श्रुतत्वात् । प्रकृतित अतिदेशेन एकाहसाध्या दीक्षा, त्र्यहसाध्या, उपसदः, एकाहसाध्या च सुत्या अत्र द्वादशाहं प्राप्ता । सत्येव स शब्दोऽपि सञ्ज्ञारूप सन् योगमत्रयनार्थं स्तुवन् दीक्षासु उपसत्सु सुत्यासु च तुल्यं द्वादशाहसम्बन्धं ब्रूते । ततस्त्रयाणामपि द्वादशाहसम्बन्धसाधारण्यात् स्वस्वस्थानस्य वृद्धिं सम्पाद्यैव द्वादशाहशब्दस्य योगार्थ सम्पादनीयः । तथा च दीक्षाणां द्वादशदिनानि, उपसदां द्वादश, सुत्यानां च द्वादशेति षट्त्रिंशद्दिनसाध्योऽयं द्वादशाह इति भावः ॥१९॥

## तदपेक्षं च द्वादशत्वम् ॥ २० ॥

द्वादश दीक्षेत्यादावपि द्वादशत्वं तदपेक्षं—योगार्थापेक्षमेव ॥२०॥

## दीक्षोपसदां च सङ्ख्या पृथक् पृथक् प्रत्यक्षसंयोगात् ॥ २१ ॥

यद्यपि योगार्थे प्रधाने ज्योतिष्टोमादियागे दृष्ट नास्ति, तथापि अत्र द्वादशाहे 'द्वादश दीक्षा, द्वादश उपसदः' इत्येवं पृथक् सङ्ख्याप्रत्यक्षश्रुतत्वात् अत्रास्तु योगार्थानुसारे न प्रयत्नाय कोऽप्यस्ति भाव ॥ २१ ॥

## तथा चान्यदर्शनम् ॥ २२ ॥

तथा च—दीक्षाद्यहःसूपसदहःसु द्वादशत्वव्यवस्थितौ अन्यदर्शनं "षट्त्रिंशदहो वा एष यद् द्वादशाहः" इति दर्शनमप्युपपन्नम्। अन्यथा तदनुपपत्तिः स्यादिति भावः ॥ २२ ॥

## चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात् ॥ २३ ॥

चोदनापृथक्त्वे—आग्नेयाग्नीषोमयोरुत्पत्तिवाक्यभेदेऽपि समवेतानां मिलितानामङ्गसहितानां कालसंयोगात्—एककालसम्बन्धविधानात् "पौर्णमास्यां पौर्णमास्या साङ्गया यजेत" इत्यनेन वाक्येन विधानात् कालदेशकर्त्रैक्यात्तन्त्रं तत्र। अत्र तु प्रधानकालभिन्नकालविहितानां दीक्षादीनां वसतीवरीग्रहणान्तानामाधानवत्स्वकालस्य स्वातन्त्र्येण विधानादेव न तन्त्रमिति भावः ॥ २३ ॥

प्रधानैरपृथक्कालानामङ्गानां भेदेनानुष्ठानाधिकरणम् ॥ ६ ॥

## सि० ॥ भेदस्तु तद्भेदात् कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात् ॥ २४ ॥

तत्रैव द्वादशाहे यत् प्रधानैरपृथक्कालमङ्गं सवनीयपश्वादिकं तस्यापि तन्त्रमुत भेद इति संशये भेदः। तद्भेदात्—प्रधानकालभेदात् प्रधानभेदः, प्रधानभेदाच्च प्रयोगे—तत्तत्प्रधानप्रयोगे कर्मभेदः—उक्ताङ्गकर्मभेदः स्यात्। तस्य प्रधानशब्दत्वात्—प्रधानविधिविधेयत्वात्। दीक्षादीनां तु स्वातन्त्र्येण प्रधानकालान्यकालत्वात्तन्त्रम्। सवनीयपश्वादिस्तु तत्तत्प्रधानकालिकः। अतो यस्य प्रधानस्य कालेऽनुष्ठितः तदर्थ एव स इति भावः ॥ २४ ॥

## तथा चान्यदर्शनम् ॥ २५ ॥

तथा च—"पत्नीसंयाजान्तानि अहानि सन्तिष्ठन्ते" इत्यन्यदर्शनमुक्तार्थे साधकम्। यद्येकस्मिन्नेवाहनि सवनीयपशुः स्यात्तर्हि तदङ्ग-

पत्नीसंयाजस्याग्रोकादिनसम्बन्धित्वात्, पत्नीसंयाजान्तत्वं सर्वेषु अहःसु श्रूयमाणं बाध्येतेति भावः ॥ २५ ॥

## श्वः सुत्यावचनं च तद्वत् ॥ २६ ॥

'संस्थिते संस्थिते अहनि अग्नीत् अग्नीध्रागारं प्रविश्य सुब्रह्मण्ये सुब्रह्मण्यामाह्वयेति प्रेष्यति' इत्येकसुत्यासमाप्त्यनन्तरं तस्मिन्नेवाहनि श्वःसुत्यावचनं—श्वःसुत्या भवति । तत्र 'इन्द्र आगच्छेति सुब्रह्मण्यानुविरति तद्वत्— उक्तार्थसाधिकेत्यर्थः ॥ २६ ॥

## पश्वतिरेकश्च ॥ २७ ॥

'आग्नेयः कृष्णग्रीवः इत्यादिना एकादशपशूनामेकैकस्मिन्नहन्य-नुष्ठाने वृत्ते द्वादशे अहनि अनुष्ठीयमानः पशुरित्य श्रूयते—'यः मध्युरति-रिच्यते स ऐन्द्राग्नः' इति प्रत्यहमेकैकपश्वनुष्ठाने एव द्वादशाहीयपशोरति-रिक्तत्वं सम्भवति । नान्यथेति तत्कथनं विरुध्येतेति भावः ॥ २७ ॥

द्वादशाहे उपसत्कालीनसुब्रह्मण्याह्वानस्य अधिकारेण कर्तव्यत्वाधिकरणम् ॥ ७ ॥

## सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत् ॥ २८ ॥

'इत्यहे सुत्यामागच्छमघवन्निति ब्रूयात्' इति प्रकृतौ श्रुतम् । अत्रेति-शब्द, अहोवृत्तिसंख्याबोधकः । इत्यहे--अमुकदिने द्वितीयदिने तृतीयदिने सुत्यां आगच्छ इति वक्तव्यमिति तदर्थः । अयमर्थः द्वादशाहे अतिदेशेन प्राप्तः । तत्रास्य प्रधानकालादन्यकालत्वात्तन्त्रेणानुष्ठानमित्युक्तं पूर्वपादे । अत्र तन्त्रेणानुष्ठाने क्रियमाणे सर्वेषामन्हां पृथक् पृथगुपलक्षणं कार्यम् । उत अधिकारेणैव प्रयोग इति संशये सुत्याविवृद्धौ द्वादशाहादौ तस्या विवृद्धौ सुब्रह्मण्यायां—तदाह्वानमन्त्रे प्रत्येकस्याह्न उपलक्षणं कार्यम् । 'त्र्योदशाहे चतुर्दशाहे पंचदशाहे' इति । कुतः? प्रकृत्यन्वयात्—प्रकृतौ ज्योतिष्टोमे

चतुरादिसंख्याना शब्द स्वयदर्शनात । न चानेन मन्त्रेण यक्ष्यमाणदेवताया स्मरणन संस्कार सिध्यति । स च संस्कार मघवद्वृषपदेवतैरयो सकृत्स्मरणन संस्कृतस्य सर्वार्थत्वादह शब्दस्याभ्यासे मानाभाव इति चेन्न । आवाहनवत्—'आग्नेय कृष्णग्रीवमालभेत । सौम्य बभ्रुम । आग्नेय कृष्णग्रीवम् ।' इत्यत्र प्रथमतृतीयदेवतयोरैक्येऽपि यथा आवाहनमन्त्रस्यावृत्तिः कालभेदात तद्वदत्रापि दिनात्मककालभेदात संस्कारावृत्तिरिति ॥ २८ ॥

## सि० ॥ अपि वेंद्राभिधानत्वात्सकृत्स्या-दुपलक्षणम् ॥ २९ ॥

अपि वा इन्द्राभिधानत्वात्—उक्तमन्त्रस्य मघवन्निन्द्रवाचकत्वात् । सकृदेवोपलक्षण—अविकारेणैव प्रयोग स्यात् । न त्वदुक्तरीत्या सर्वेषा महा प्रातिस्विकरूपेणोपलक्षणम् । इन्द्ररूपदेवतैक्येन सकृत्संस्कृत इन्द्र सर्वार्थो भविष्यतीति भाव ॥ २९ ॥

## कालस्य लक्षणार्थत्वादविभागाच्च ॥ ३० ॥

कालस्य—कालवाचकचतुरहादिशब्दस्य लक्षणार्थत्वात् लक्षणावृत्त्या प्रतिपाद्यो य सौमिक कर्मविशेष तदर्थ तादुपलक्षण तत । चतुरहादिपदाना कालरूपे स्वार्थे न तात्पर्यम् । अपि तु सुत्यायाम । तथा च तदर्थस्य अबाधितत्वात अनुहेनैव प्रयोग इति सिद्धान्ताशयम् । अविभागाच्च—' आग्नेय कृष्णग्रीवमित्युदाहृतयोराग्नेययागयो विभाग, सौम्ययागेन व्यवधान विद्यते । इह तु इष्ट्या न केनचिद्व्यवहित । अत अविभागादृष्टान्तवैषम्यमत्रेति भाव ॥ ३० ॥

वाजपेये प्राजापत्येषु कुम्भ्यादीनां तन्त्रत्वाधिकरणम् ॥ ८ ॥

## सि० ॥ पशुगणे कुंभीशूलवपाश्रपणीनां प्रभुत्वात् तन्त्रभावः स्यात् ॥ ३१ ॥

वाजपेये प्राजापत्यपशुषु कुम्भ्यादीनां भेदः, उत तन्त्रमिति विचारे सिद्धान्तः। **पशुगणे**—पशुसमुदाये, कुम्भी—पश्वंगश्रपणपात्रम्, शूलम्-हृदयकमलपाकसाधनीभूतः तीक्ष्णाग्रो दारुविशेषः, वपाश्रपणी—वपायाः अग्नौ श्रपणपात्रम्, एतेषां **तन्त्रभावः स्यात्**। **प्रभुत्वात्**—तन्त्रत्वेऽपि कार्यसाधने क्षमत्वादिति यावत्॥ ३१॥

भिन्नदेवताकेष्वपि शूलादीनां तन्त्रताधिकरणम्॥ ९॥

## भेदस्तु सन्देहाद्देवतान्तरं स्यात्॥ ३२॥

एकादशिनेषु देवताभेदेन कुम्भ्यादीनि भिन्नानि स्युः। अभेदे तु यस्यै देवतायै उपाकृतः पशुः तां देवतामुद्दिश्य तत्पशुप्रदानं न स्यात्। एककुम्भ्यां श्रपणे सर्वावयवानामेकजातीयत्वेन सन्देहः स्यात्। अतो भेदः स्यात् कुम्भ्यादीनामिति॥ ३२॥

## सि०॥ अर्थाद्वा लिङ्गकर्म स्यात्॥ ३३॥

**अर्थात्**—सन्देहनिवृत्तिरूपकार्यसिद्ध्यर्थं **लिङ्गकर्म**—चिन्हकर्म स्यात्। एककुम्भ्यां प्रक्षेपसमये किञ्चिच्चिन्हकरणेन सन्देहनिवृत्तिसम्भवात् तत्रापि कुम्भ्यादीनां तन्त्रमेवेति भावः॥ ३३॥

कुम्भ्या अपि तन्त्रताधिकरणम्॥ १०॥

## अयाज्यत्वाद्वसानां भेदः स्यात्स्वयाज्याप्रदानित्वात्॥ ३४॥

'याज्यार्धर्चान्ते वसां जुहोती' ति श्रुतेः वसानां स्वयाज्याप्रदानत्वात्-स्वयाज्याया अर्धर्चे स्वपशुहोमस्य विहितत्वात् कुम्भीभेदमन्तरा **अयाज्यत्वात्**—उक्तरीत्या वसानां होमकर्मत्वासम्भवात् **भेदः**—कुम्भ्याः भेद एव, न तस्यास्तन्त्रमिति॥ ३४॥

## सि०॥ अपि वा प्रतिपत्तित्वात्तन्त्रं स्यात्स्वत्वस्याश्रुतिभूतत्वात्॥ ३५॥

अपि वा प्रतिप त्तित्वात्—वसाहोमस्य प्रतिपत्तिरूपत्वात् यद्देवताकः पशुः तस्यैव तद्वसा इत्यत्र प्रमाणाभावात् तन्त्रमेव स्यात्कुम्भेः। 'स्वयाज्यार्धर्चे' इत्यत्र स्वत्वस्य अश्रुतिभूतत्वात्—' अर्धर्चे वसाहोमं जुहोति ' इत्यत्र अश्रवणात्, न स्वयाज्यार्धकाले स्वपशुवसाहोमप्रतिपत्त्यपेक्षेति भावः ॥ ३५ ॥

## सकृदिति चेत् ॥ ३६ ॥

नन्वेवं यस्या. कस्याश्चिद् याज्याया अर्धर्चे यस्य कस्यचित्पशोर्वसाहोमश्चेत प्रथमार्धर्चे एव सर्ववसाहोमः सकृत स्यादिति चेत्-- ॥ ३६॥

## न कालभेदात् ॥ ३७ ॥

अर्धर्च इति निमित्तसप्तमी। नाधिकरणे। बाधात्। तथा च निमित्तानामर्धर्चानां भिन्नकालत्वात निमित्ताना कालभेदेनाऽऽवृत्तौ नैमित्तिकानामप्यावृत्तिरिति भाव· ॥ ३७ ॥

**भिन्नजातिषु पशुषु कुम्भ्यादीनां भेदाधिकरणम् ॥ ११ ॥**

## सि० ॥ जात्यन्तरे भेदः स्यात् पंक्तिवैषम्यात् ॥ ३८ ॥

सौत्रामण्या ' आश्विनं धूम्रमालभते । सारस्वतं मेषम्। ऐन्द्र ऋषभम्। ' इति त्रिभिन्नजातीयाः पशवः श्रूयन्ते । तत्राप्येकजातीयपशुष्विव कुम्भ्यास्तन्त्रमिति प्राप्ते आह -जात्यन्तरे- भिन्नजातीयेषु, भेदः— कुम्भीभेदः। कुतः ? पक्तिवैषम्यात्·यावता कालेन अनडुहोऽवयवाः पच्यन्ते तावता कालेन अजस्यावयवाः भृश शिथिलाः सन्तः अवदानाक्षमा भवेयुरिति कुम्भीभेदस्तत्रेति भाव. ॥ ३८ ॥

## वृद्धिदर्शनाच्च ॥३९॥

सौत्रामण्या ' शूलैरवभृथं यन्ति ' इति बहुवचनेन शूलवृद्धिदर्शनादपि कुम्भीवृद्धिस्तेन लिङ्गेन सिध्यति ॥३९॥ ।

**अश्वप्रतिग्रहेष्ट्यां प्रतिपुरोडाशं चतुष्कपालभेदाधिकरणम् ॥ १२॥**

## कपालानि च कुम्भीवत्तुल्यसङ्ख्यानाम् ॥४०॥

'यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत' इत्यनेन विहिताश्वप्रतिग्रहेष्ट्यां किं दीर्घेषु कपालेषु सर्वेषां श्रपणं कर्तव्यं, अथवा प्रतिपुरोडाशं कपालचतुष्कस्य भेदः इति संशये तुल्यसङ्ख्यानां-समसङ्ख्याकपालकर्मणां कपालानि कुम्भीवत्तन्त्रमेव स्युः। पुरोडाशसङ्ख्यानुसारेण कपाले दैर्घ्यं सम्पाद्य चतुर्ष्वेव कपालेषु बहूनामपि तेषां पाको विधेय इति ॥ ४० ॥

## सि० ॥ प्रतिप्रधानं वा प्रकृतिवत् ॥४१॥

प्रतिप्रधानं—प्रतिपुरोडाशं भिन्नान्येव चतुष्कपालानि स्युः। प्रकृतिवत्—यथा प्रकृतौ 'आग्नेयोऽष्टाकपालः, अग्नीषोमीय एकादशकपालः' इत्यत्र भिन्नेष्वेव श्रपणं तथात्रापि। अन्यथा तत्राप्यष्टौ कपालानि पुरोडाशद्वयस्थितियोग्यानि किञ्चिद्दीर्घाणि त्रीणि च किञ्चिद् ह्रस्वाणि एकपुरोडाशस्थितियोग्यानि स्युरिति भावः ॥४१॥

## सर्वेषां चाभिप्रथनं स्यात् ॥४२॥

'यावत्कपालं पुरोडाशं प्रथयती'ति सर्वकपालमभिव्याप्य पुरोडाशविस्तारकरणात्मकं लिङ्गं तन्त्रपक्षेऽनुपपन्नं स्यादिति भावः ॥ ४२ ॥

### व्रीह्यवहननादौ प्रतिप्रहारं मन्त्रस्य अनावृत्त्यधिकरणम् ॥१३॥

## सि० ॥ एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वम् ॥ ४३ ॥

दर्शपूर्णमासयोः 'व्रीहीनवहन्ति' इत्यनेन विहिते अवहनने 'अवरक्षो दिवः सपत्नं वध्यासम्' इत्ययं मन्त्र उपदिष्टः। स किं प्रतिप्रहारमावर्तनीयः, उत सकृदेवादौ पठनीय इति विचारे व्रीह्यात्मकैकद्रव्ये संस्काराणां-त्रिपुरीभावपर्यन्तावहननव्यक्तिसङ्घस्यैकविधिविहितत्वेन एककर्मत्वं व्याख्यातम्—प्रसाधितं प्राक्। अतः कर्मैक्यान्नावृत्तिर्मन्त्रस्य। अपि तु सकृदेव आदौ पाठ इति बोध्यम् ॥ ४३ ॥

नानाबीजेष्टौ द्रव्यभेदेन संस्कारावृत्तौ मन्त्रावृत्त्यधिकरणम् ॥ १४ ॥

**सि०॥ द्रव्यान्तरे कृतार्थत्वात् तस्य पुनः प्रयोगान्मन्त्रस्य तद्गुणत्वात् पुनः प्रयोगः स्यात्तदर्थेन विधानात् ॥४४॥**

राजसूये 'अग्नये गृहपतये आशूनामष्टाकपालं निर्वपेत् । सोमाय वनस्पतये श्यामाकं चरुम्' इति नानाबीजेष्टिः श्रुता । तत्र प्रथमबीजे मन्त्रस्य **कृतार्थत्वात्**- नितुषीकरणरूपकृतकार्यत्वात् द्रव्यान्तरे '**पुनःप्रयोगः स्यात्**' बीजान्तरे तस्यावघातस्य पुनःप्रयोगान्मन्त्रस्य तत्प्रयोगे गुणत्वाच्चोदकशास्त्रेण तदर्थत्वेन विधानात् इति द्रव्यभेदेन संस्कारावृत्तौ मन्त्रावृत्तिरिति भावः ॥ ४४ ॥

दर्शपूर्णमासादौ प्रतिनिर्वपणादिमन्त्रावृत्त्यधिकरणम् ॥१५॥

**निर्वपणलवनास्तरणाज्यग्रहणेषु चैकद्रव्यवत् प्रयोजनैकत्वात् ॥४५॥**

दर्शपूर्णमासयोः 'देवस्य त्वेति मन्त्रेण चतुरो मुष्टीन्निर्वपति' 'बर्हिर्देवसदनं दामीति मन्त्रेण अमुजो मुष्टीन् लुनाति' 'ऊर्णम्रदसन्त्वा स्तृणामीति मन्त्रेण त्रिधातु वा पञ्चधातु वा वेदिं स्तृणाति', 'शुक्रं त्वा शुक्राया धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामीति मन्त्रेण 'चतुर्जुह्वा गृह्णाति' इति तत्तन्मन्त्रसमूतनिर्वपण-लवन-आस्तरण-आज्यग्रहणानि श्रुतानि । तत्र प्रत्येकं ते ते मन्त्राः सकृत्पठनीयाः, उत आवृत्त्या इति संशये निर्वपणादिषु **एकद्रव्यवत्**— व्रीहिमात्रावहननवत् सकृदेव पाठः कार्यः । **प्रयोजनैकत्वात्**—मुष्टिचतुष्टयनिर्वापस्यापि नितुषीभावरूपार्थस्यैकरूपत्वात् इति ॥ ४५ ॥

**सि० ॥ द्रव्यान्तरवद्वा स्यात् तत्संस्कारात् ॥४६॥**

द्रव्यान्तरवत्—नानाबीजावहननवत् संस्कार्यद्रव्यभेदेन मन्त्रेण स्मरणपूर्वकनिर्वापणादिक्रियया पृथग्द्रव्याणां पृथक् पृथक् संस्कारस्य आवश्यकत्वादिति भावः ॥ ४६ ॥

वेदिप्रोक्षणाङ्गमन्त्रस्य सकृत् प्रयोगाधिकरणम् ॥ १६ ॥

## वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः-प्रयोगात् ॥४७॥

' वेदिरसि बर्हिषे त्वा ' इति मन्त्रेण 'त्रिर्वेदिं प्रोक्षतीति वेदिप्रोक्षणं विहितम् । तत्र वेदिप्रोक्षणाङ्गमन्त्रस्य अभ्यासः—आवृत्तिः कार्या। कुतः ? कर्मणः—प्रोक्षणक्रियायाः, पुनःप्रयोगात्— ' त्रिः प्रोक्षतीति त्रिवारमनुष्ठानात्, तस्याः प्राधान्यात् मन्त्रस्य च तदङ्गत्वात् । प्रतिप्रधानमङ्गावृत्तिरिति न्यायात् इति भावः ॥ ४७ ॥

## सि० ॥ एकस्य वा गुणविधिर्द्रव्यैकत्वात्तस्मात्सकृत्प्रयोगः स्यात् ॥ ४८ ॥

एकस्य वा- एकस्यैव प्रोक्षणकर्मणः त्रिरित्यनेन अभ्यासरूपगुणस्य विधिः । न क्रियाभेदः। द्रव्यैकत्वात्—प्रोक्षणसंस्कार्यवेदिरूपद्रव्यस्य एकत्वात् । तस्मात् सकृदेव मन्त्रप्रयोगः स्यात् । नाङ्गवेऽपि तस्यावृत्तिरिति भावः ॥ ४८ ॥

कण्डूयनमन्त्रस्य सकृत् प्रयोगाधिकरणम् ॥ १७ ॥

## कण्डूयने प्रत्यङ्गं कर्मभेदः स्यात् ॥४९॥

ज्योतिष्टोमे ' कृषिषु स्यामकृष.' इति विहितमन्त्रपूर्वकं 'कृष्णविषाणया कण्डूयते' इति ससाधनं कण्डूयनं विहितम् । तत्र युगपदेव नानास्थानोत्पन्नकण्डूत्या मन्त्रस्य प्रत्यङ्गं कण्डूयने आवृत्तिः स्यात्। कुतः? कर्मभेदात्- प्रत्यङ्गं कण्डूयनकर्मणः भिन्नत्वात् मन्त्रस्य तदङ्गत्वादिति ॥ ४९ ॥

## सि०॥ अपि वा चोदनैककालमैककर्म्यं स्यात् ॥५०॥

अपि वा चोदना- न ह्यत्र अङ्गसंस्कारार्था कण्डूयनचोदना, अपि तु रागप्राप्तकण्डूयने साधनमात्रस्य विधिः। फलं च एककालं- कण्डूयनसमकाल , तात्कालिकदुःखानिवृत्तिः । इत्थं तात्कालिकदुःखानिवृत्तिजनककण्डूयनव्यक्तिभेदेऽपि अनष्टननुवदेकफलत्वान्नावृत्तिर्मन्त्रस्य । अपि तु ऐककर्म्यं—सकृदेव पाठ इति भावः ॥ ५० ॥

ज्योतिष्टोमे स्वप्नादिषु मन्त्रस्य अनावृत्त्यधिकरणम् ॥१८॥

## सि० ॥ स्वप्ननदीतरणाभिवर्षणामेध्य- प्रतिमन्त्रणेषु चैवम् ॥५१॥

ज्योतिष्टोमे दीक्षितस्य ' त्वमग्ने व्रतपा असीति स्वप्नार्थो मन्त्रः, देवीराप इति नदीतरणार्थः.' ' उदन्तीरोजो धत्त इति अभिवृष्टस्य' ' अवद्धं चक्षुरिति अमेध्यदर्शनप्रतिमन्त्रणश्च । तत्र यदि प्रतिबुध्दः पुनः स्वपिति तत्र च स्वपननदीतरणादिकं पश्यति तदा तत्तन्निमित्तकमन्त्रस्य आवृत्तिः, सकृदेव वा इति विचारे स्वप्नादिषु चैवम् । कण्डूयनवत्सकृदेव पाठ इति भावः ॥५१॥

दीक्षितस्य प्रयाणे तन्मन्त्रस्य सकृत्पाठाधिकरणम् ॥१९॥

## सि० ॥ प्रयाणे त्वार्थनिर्वृत्तेः ॥५२॥

प्रयाणे ' भद्रादभिश्रेयः प्रेहीति मन्त्रनिष्पाद्यो योऽर्थः— कार्यं तन्निर्वृत्तिः—तत्सिद्धिः तावत्सकृत इति सिद्धान्तः ॥ ५२ ॥

उपरवमन्त्रस्य आवृत्त्यधिकरणम् ॥ २० ॥

## उपरवमन्त्रस्तन्त्रं स्याल्लोकवच्च बहुवचनात् ॥५३॥

ज्योतिष्टोमे ' रक्षोहणो बलगहनो वैष्णवान् खनामी'ति उपरवखननमन्त्रः श्रूयते । उपरवा नाम सोमाभिषवाधःसुषिररूपाश्चत्वारो गर्ताः ।

तत्र प्रत्युपरवं मन्त्रस्य आवृत्तिर्वा न इति संशये उपरवमन्त्रः तन्त्रम्—सकृदेव स्यात्। वैष्णवानीत्येकस्मिन्नपि पूज्यार्थे बहुवचनप्रयोगात् लोकवत्-लोकेऽपि गुर्वादौ पूज्येषु बहुवचनप्रयोगो दृष्टः, तद्वदत्रापीत्यर्थः ॥ ५३ ॥

## सि० ॥ न सन्निपातित्वादसन्निपातिकर्मणां विशेषाग्रहणे कालैकत्वात्सकृद्वचनम् ॥ ५४ ॥

न उपरवमन्त्रस्य तन्त्रम्। कुतः ? तेषां सन्निपातित्वात्—अनुष्ठेयक्रियास्मरणद्वारेणैव नियमादृष्टजनकत्वात्। येषां अर्थस्मरणद्वारा नादृष्टजनकत्वम्। किन्तु साक्षाददृष्टार्थमेवोच्चारणं येषां, यथा सुब्रह्मण्याह्वाने 'देवा ब्राह्मणा०' इत्यौपवसथ्ये अहनि। तत्र कालैकत्वेन विशेषाग्रहणात् भवतु नाम तंत्रत्वं तादृशमन्त्राणाम्। प्रकृते तु तथात्वाभावान्न तन्त्रम्। 'उपरवा हविर्धाने रवायन्ते' इत्युत्पत्तिवाक्ये बहुवचनादुपरवभेदसिध्दौ न सर्वेषां सकृत्खननेन सिद्धिः। अतः प्रत्युपरवं खननमपि भिन्नमेव। तच्च खननं 'रक्षोहण' इति मन्त्रेण स्मृत्वा विधेयम्। यावदेव मन्त्रजनितं ज्ञानं तावदेव तत्क्रियाकरणम्। एकवारमुच्चारणजनितं ज्ञानं तावत्कालपर्यन्तं स्थातुमक्षमम्। तस्य त्रिक्षणवृत्तिध्वंसप्रतियोगितावच्छेदकविशेषगुणत्वावच्छिन्नत्वात्। तस्मादावृत्तिरेव मन्त्रस्य तस्य तत्रेति निष्कृष्टोऽर्थः ॥५४॥

### हविष्कृदाह्वानादिमन्त्राणां आवृत्त्यधिकरणम् ॥२१॥

## सि० ॥ हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्य आवृत्तिः कालभेदात् ॥५५॥

ज्योतिष्टोमे प्रतिसवनं सवनीयपुरोडाशाः सन्ति। तेषु प्रकृतितः चोदकेन हविष्कृदाह्वानं प्राप्तम्। तस्य 'हविष्कृदेहि' इति मन्त्रः। वाजपेये क्रतुपशवः प्राजापत्यपशवश्च। तेषु अध्रिगुप्रैषः प्राप्तः। तस्य 'दैव्याः शमितारः' इति मन्त्रः। एवं 'आग्नेयं कृष्णग्रीवं आलभेत। सौम्यं बभ्रुम्। आग्नेयं कृष्णग्रीवम्' इत्यत्र आग्नेयद्वये पुरोनुवाक्या च प्राप्ता।

मनोतामन्त्रश्च प्राप्त'। 'अग्ने नय सुपथा राये अस्मानिति पुरोनुवाक्या' 'त्वं ह्यग्ने प्रथमो मनोता' इति मनोतामन्त्रः। चतुर्विधानामेतेषां मन्त्राणां सकृत्प्रयोगः, उत भेदः-आवृत्तिरिति संशये न ह्यत्र मन्त्रान्ते अनुष्ठेयं कर्म स्मृत्वा तस्य करणमस्ति। किन्तु हविष्कृदध्रिगुप्रैषौ परप्रत्यायनार्थौ, पुरोनुवाक्यामनोतामन्त्रौ केवलस्मरणजननेन कृतार्थौ। अतः पूर्ववैषम्यात्तन्त्रं सकृदिति प्राप्ते सिद्धान्तः। हविष्कृदाह्वानादीनां भेदः—आवृत्तिः। कुतः? कालभेदात्। अयं सर्वसाधारणो हेतुः। तथा हि—हविष्कृदाह्वानमन्त्रे तत्तत्सवनकालस्य भेदः। अध्रिगुमनोतामन्त्रे सवनीयसम्बन्धिनि प्रातःसवनम्। प्राजापत्यसम्बन्धिनि च तृतीयसवनम्। अग्निमयागसम्बन्धिन्या पुरोनुवाक्यया च सौम्ययागेन व्यवहितः कालः इत्येवं कालभेदान्मन्त्राणामावृत्तिरिति भावः ॥५५॥

## अध्रिगोश्च विपर्यासात् ॥ ५६ ॥

अध्रिगोः—अध्रिगुप्रैषस्य तन्त्रेणानुष्ठाने कृते तस्य **विपर्यासात्**—विहितक्रमलोपादपि न तस्य तंत्रम्। तथा हि—अध्रिगुप्रैषात् पूर्वं क्रियमाणा ये प्राजापत्यपशुसम्बन्धिनः पश्वालम्भश्रुतप्रत्याश्रुतअजेदग्निमन्त्रादयः पदार्थाः तेषां प्रातःसवनेऽनुष्ठाने पर्यग्निकरणान्ते विहितोत्सर्गस्य बाधः स्यात्। तृतीयसवने तदनुष्ठाने पुरस्तात् कर्तव्यानां तेषां परस्तात् कृतिरिति क्रमस्य लोपः। अत आवृत्तिरेवेति भावः ॥ ५६ ॥

## करिष्यद्वचनात् ॥ ५७ ॥

किञ्च, **करिष्यद्वचनात्**—अध्रिगुप्रैषमन्त्रे 'आरभध्वमित्यादि-शब्दोच्चारणाव्यवहितोत्तरक्षणावच्छेदेन मन्त्रप्रतिपादितार्थस्य कर्तव्यता प्रतीयते। प्रातःसवने तस्मिन्ननुष्ठिते बहुकर्मणा व्यवहितमेव तदनुष्ठानं स्यादित्यव्यवहितोत्तरक्षणरूपकालबाधोऽपि स्यादिति ध्येयम् ॥ ५७ ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां एकादशाध्यायस्य चतुर्थः पादः ॥

॥ संपूर्णश्च एकादशोऽध्यायः ॥

---

## ॥ अथ द्वादशाध्यायस्य प्रथमः पादः ॥

★

अग्नीषोमीयपश्वर्थानुष्ठितप्रयाजादिभिः पशुपुरोडाशस्याप्युपकारसिध्यधिकरणम् ॥ १ ॥

**तन्त्रिसमवाये चोदनातः समानानामैकतन्त्र्यमतुल्येषु तु भेदो विधिप्रक्रमतादर्थ्यात् तादर्थ्यश्रुतिकालनिर्देशात् ॥१॥**

एकादशाध्याये तन्त्रावापौ सप्रपंचं निरूपितौ। अथ तदुपजीव्यः प्रसङ्गः द्वादशाध्याये निरूप्यते। अनेकोद्देशेन सकृदनुष्ठानं तन्त्रम्। तच्चानेकोपकारकमित्यर्थात्सिद्धम्। इह द्वादशाध्याये एकोद्देशेन अनुष्ठितमप्यङ्गं देशकालकर्तृणामैक्ये अनुद्देश्यमप्यन्यं उपकारोतीत्यन्यत्र कृतस्यान्यत्र प्रसक्तयात्मकः प्रसङ्गो विचार्यते।

अग्निष्टोमे 'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपेदिति' श्रुतम्। तत्र चोदकप्राप्तानि प्रयाजादीन्यङ्गानि पृथक् कर्तव्यानि उत पशुयागेऽनुष्ठितानि तानि पशुपुरोडाशेऽप्युपकुर्वन्तीति संशये **तन्त्रिणां**— तन्त्रं-साधारणः धर्मः—अङ्गसमूहः येषां तेषां तन्त्रिणां **समवाये**—देशकालकर्त्रैक्ये, **चोदनातः**— विधिवाक्यात्, **समानानां**— एकविधिविहितानां, **एकतन्त्रं**- एकप्रयोगः—अङ्गानां सकृदनुष्ठानमिति यावत्। **अतुल्येषु**—भिन्नविधिविहितेष्वेव, **भेदः**—अनुष्ठानभेदः, अङ्गावृत्तिरित्यर्थः। कुतः **विधिप्रक्रमतादर्थ्यात्**—अङ्गानुष्ठानारम्भस्य तादर्थ्यात्। अत्रायं भावः- 'अग्नीषोमीयं पशुमालभेत' 'अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति' इति पशुयागपुरोडाशयागयोः भिन्नविधिविहितत्वेन पार्थक्यात् पशुयागः प्रयोगारम्भकाले स्वीयापूर्वोपकारकाण्येवाङ्गानि गृह्णातीति तानि तदर्थान्येव। नान्यार्थानि। एवं पुरोडाशयागोऽपि स्वीयापूर्वोपकारकाण्येवाङ्गानि गृह्णातीति तान्यपि तदर्थान्येव। नान्योपकारकाणि। अतो नात्र तन्त्रस्य सम्भवः। **श्रुतिकालनिर्देशात्**— पशुयागप्रयाजानां पुरोडाशयागप्रयाजानां च

'अग्नीषोमीयं प्रणीयं अग्नीषोमीयं तन्त्रं प्रक्रमयति ' ' वपया प्रचर्य पुरोडाशतन्त्रं प्रक्रमयति ' इति श्रुतिभ्यां प्रयोगारम्भकालभेदस्य स्फुटं कथनादिति तदाशयः ॥ १ ॥

## गुणकालविकाराच्च तन्त्रभेदः स्यात् ॥ २ ॥

गुणकालविकाराच्च— पशुयागप्रयोगगृहीताङ्गपुरोडाशयागप्रयोगगृहीताङ्गयोः गुणभेदात् कालभेदाच्च तन्त्रभेदः स्यात् । तथा हि—'पशुयागीयप्रयाजेषु एकादशसङ्ख्यागुणः ', निग्रन्ते पशुं, प्रयंजन्तीति पशोर्जीवनकालः ' । अनूयाजेष्वप्येकादशसङ्ख्या । पृषदाज्यं द्रव्यम् । पुरोडाशयागीयेषु प्रयाजेष्वनूयाजेषु च क्रमेण पञ्चत्वत्रित्वसङ्ख्या गुणः केवलाज्यं द्रव्यम् । वपायागोत्तरकालश्चेति गुणकालयोः उभयत्र भेदात् तन्त्रभेद एव भवेदिति भावः ॥ २ ॥

## सि० ॥ तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धः स्यात्-तन्त्रार्थस्याविशिष्टत्वात् ॥३॥

मुख्यतन्त्रेण— पशुयागप्रयोगेण, सिद्ध— पुरोडाशयागीयापूर्वस्य उपकारः सिद्ध एव स्यात् । कुतः? तन्त्रमध्ये—पाशुकतन्त्रमध्ये पुरोडाशयागस्य विधानात् । तन्त्रार्थस्य— तन्त्रस्य, अङ्गकृतार्थस्य — अपूर्वस्य च अविशिष्टत्वात्— एककालत संनिधानाच्च पशौ क्रियमाणान्यप्यङ्गानि पुरोडाशस्य तत्तन्त्रमध्यविहितत्वेन सन्निहितान्येव । सन्निहितत्वाच्च प्रदीपवत्तस्याप्युपकुर्वन्तीति भावः ॥ ३ ॥

## विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात् ॥४॥

यत्तु गुणकालयोर्भेदात्तावृत्तिरित्युक्तं पूर्वपक्षिणा तत्रोच्यते— विकाराच्च— एकादशत्वपृषदाज्यरूपगुणविकारादपि, न भेदः— न प्रयोगभेदः स्यात् । कुतः? अर्थस्य-अङ्गजनितोपकारस्य, अविकृतत्वात्-प्रकृतौ पशुत्वादिविशिष्टे यः उपकारः तस्यैव पशावतिदिष्टत्वेन फलांशे विकाराभावात् ' एकादशप्रयाजान् यजतीत्यत्र प्रकृतिस्थोदकशास्त्रेण पञ्चप्रयाजाः

प्राप्ता । तान् अनूद्य एकादशत्वादिरूपः गुणः ' एकादशेत्यादिश्रुत्या विधीयते न गुणविशिष्ट अपूर्व प्रयाजादिपदार्थः । तथोक्त चेत् ' नक्षत्रेष्टयुपहोमन्यायेन प्राकृतैकैकोतिमसुदायद्वयापत्ते. । न चेष्टापत्ति । चातुर्मास्ये वैश्वदेवपर्वणि नव प्रयाजा , नवानुयाजाः, द्वावाज्यभागौ, अष्टौ हवींषि, अग्नये समवद्यति, वाजिनो यजति 'इत्याहुतीनां त्रिंशत्सङ्ख्यासम्पत्तिबोधकवचनविरोधात् । प्राकृतानां तु प्रयाजादीनां स्वस्वोपयोगसहितानामेवात्रातिदेशात् द्वयोरु-पकारो न भिन्न । अतो गुणभेदप्रयुक्ता आवृत्तिर्नैवात्र । न च गुणानुरोधाय प्रधानावृत्तिर्न्याय्येति भाव ॥ ४ ॥

## एकेषां चाशक्यत्वात् ॥ ५ ॥

एकेषा अतिदेशशास्त्रप्राप्तयावदङ्गानां मध्ये येषामेव सर्वेषां साङ्ग-प्रधानानुष्ठाने देशकालैक्यनियमस्य भङ्गापत्ते आवृत्तिरशक्या यदि तर्ह्यङ्गत्वा-विशेषात्प्रयाजादीनामप्यावृत्तिर्नैवार्थात्सिध्यति ॥ ५ ॥

## एकाग्निवच्च दर्शनम् ॥ ६ ॥

' मध्येऽग्नेराज्याहुतीर्जुहोति पुरोडाशाहुतीं पश्चाहुतीश्च ' इति प्रत्यक्षश्रुतिदर्शनं एकाग्निवच्च– पशुपुरोडाशयागयोरन्यभदमेकाग्नेर्निदर्शयति । अत साङ्गप्रधानानां देशाद्यैक्यस्य न्यायसिद्धत्वेऽपि तस्य प्रत्यक्षेण चोदकशास्त्रेण बाधः स्यादिति शङ्काया सुतरामनवसर । तस्मात्पाशुकं तत्रैव पुरोडाशयागे प्रसज्यत एवेति प्रसङ्गसिद्धिरिति निष्कृष्टो भाव ॥ ६ ॥

### पुरोडाशे आज्यभागयोः कर्तव्यत्वाधिकरणम् ॥ २ ॥

## सि०॥ जैमिनेः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात् ॥ ७ ॥

पशुपुरोडाशयागे प्राकृतावाज्यभागहोमौ कर्तव्यौ वा नेति संशये पशुयागीयप्रयोगविधिना पौरोडाशिकचोदकस्य बाध इत्याज्यभागहोमप्रापक-प्रमाणाभावेन तौ न कर्तव्याविति प्राप्ते आह—जैमिनेराचार्यस्य मते तावाज्यभागौ तत्र कर्तव्यौ । परतन्त्रापत्ते —परतन्त्रेण पाशुकतन्त्रेण

आपत्तेः—प्रयाजादीनां पशुपुरोडाशे प्राप्तेः, तद्विषये स्वतन्त्रस्य पुरोडाशतन्त्रस्य प्रतिषेधः स्यात् । आज्यभागादिविषये तस्य अप्राप्तिः 'न तौ पशौ करोतीति श्रुत्या पाशुकतन्त्रे तयोर्निषेधात् । ततस्तयोः ' प्राप्यमाणेऽपि प्रकृतितश्चोदकशास्त्रेण तयोस्तत्र प्राप्तत्वात् तौ तत्र कर्तव्यावेवेत्याचार्याशय इति भावः ॥ ७ ॥

सोमे दार्शिकवेदेरकरणाधिकरणम् ॥ ३ ॥

## नानार्थत्वात्सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् ॥ ८ ॥

ज्योतिष्टोमे सौमिकवेदिनिर्माणानन्तरं तदङ्गभूतदर्शपूर्णमासप्राकृतिककर्मानुष्ठानार्थं तदङ्गदार्शिकवेद्यन्तरं कार्यं न वेति संशये दर्शपूर्णमासप्रकृतीनां कर्मणामर्थे वेदिकर्म—पृथग् वेदिः स्यात् । कुतः? नानार्थत्वात्—सौमिकदर्शपूर्णमासवेद्योर्भिन्नफलत्वात् । सौमिकवेदेः प्रधानप्रचारः फलम् । इतरा हविरासादनार्थेति नानार्थत्वम् ॥ ८ ॥

## सि० ॥ अकर्म वा कृतरूपा स्यात् ॥ ९ ॥

अकर्म वा— दार्शिकवेद्यन्तरस्य अकरणमेव । यतः सा कृतरूपा—सौमिकवेदेः रूपरूपा स्यात् । तथा हि-दार्शिकवेदेर्थत्कार्यं हविरासादनात्मकं तदक्षमा सौमिकी वेदिरिति सिध्येत । न चेदमवितथम् । सौमिक्याः हविरासादनसमर्थत्वात् । तस्याः प्रचारार्थत्वेऽपि हविर्धारणस्य प्रसङ्गतः सिद्धिर्भवत्येव । ततो न वेद्यन्तरमिति भावः ॥ ९ ॥

सोमे दार्शिकैः स्रुवादिभिः पात्रैः सवनीयपशुपुरोडाशादिहोमाधिकरणम् ॥ ४ ॥

## पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् ॥ १० ॥

सोमे एकस्रुत्यादिने ग्रहचमसेषु गृहीतेषु सोमतन्त्रमध्यपतितानि दर्शपूर्णमासप्रकृतीनि 'सवनीयः पशुः, सवनीयः पुरोडाशः, सौम्यश्चरुः' इत्यादीनि कर्माण्यनुष्ठेयानि । तानि किं ग्रहचमसैरेव कार्याणि, अथवा जुहूपभृतप्रकृति-

पात्रैः कर्तव्यानीति संशये पात्रेषु-होमसाधनपात्रेषु प्रहचमसेषु प्रसङ्गः स्यात् । प्रहचमसैरेव निर्दिष्टानि कर्माणि कार्याणि । कुतः ? तेष्वपि होमार्थत्वाविशेषादिति ॥ १० ॥

## सि० ॥ न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसङ्गः स्यात् ॥ ११ ॥

न्याय्यानि वा—दर्शपूर्णमासपात्राण्येव तेषु होमेषु योग्यानि । कुतः ? प्रयुक्तत्वात्—तेषां परिग्रहात् । अप्रयुक्ते— अपरिग्रहे प्रसङ्गः स्यात् । ' अथ यद् गृहीत्वा आज्यानि सोमनासादयन्ति । न यजमानं हन्ति ' इति श्रुत्या आज्यासादनांतस्य प्राकृतस्य कर्मणः सौमिकतन्त्रात्पूर्वविहितत्वेन जुह्वादीनां सन्निहितत्वात् तेषु होमेषु प्रसङ्गस्यासम्भवः । लोकेऽपि गमनादिप्रसङ्गे तदुपकारकस्य स्थाने सन्निहिते न परकीयमपेक्षत इति दृष्टम् । तस्माज्जुह्वादिपात्रैरेव ते होमाः कर्तव्या इति भावः ॥ ११ ॥

शामित्रे पशुपुरोडाशश्रपणस्याकर्तव्यत्वाधिकरणम् ॥ ५ ॥

## सि० ॥ शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात् ॥ १२ ॥

पशुपुरोडाशश्रपणं शामित्रेऽग्नावुत गार्हपत्ये इति विशये शामित्रस्याग्नेः हविःश्रपणहेतुत्वं क्लृप्तमिति पुरोडाशश्रपणेऽपि तस्याग्नेः प्रसङ्गसिद्धेस्तस्मिन्नेव तच्छ्रपणमिति प्राप्ते शामित्रेऽग्नौ पशुपुरोडाशः— पशुपुरोडाशस्य श्रपणं नैव स्यात् । कुतः ? इतरस्य— गार्हपत्यस्याग्नेः ' शालामुखीय य एषः अत उर्ध्वं गार्हपत्यो भवति ' इति श्रुत्या शामित्रात्प्रागेव प्रयुक्तत्वात्-सिद्धत्वात् गार्हपत्ये एव तस्य श्रपणमिति सिद्धान्तः ॥ १२ ॥

कौण्डपायिनामयने मासाग्निहोत्रद्रव्यस्य प्राजहितेऽग्नौ श्रपणाधिकरणम् ॥ ६ ॥

## श्रपणं चाग्निहोत्रस्य शालामुखीयेन स्यात् प्राजहितस्य विद्यमानत्वात् ॥ १३ ॥

कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोति' तत्र हविःश्रपणं शालामुखीये उत मुख्यगार्हपत्य इति विचारे 'यं प्रणयन्ति स गार्हपत्यः' इत्यग्नीषोमप्रणयनोत्तरमाहवनीयस्य गार्हपत्यत्वेन चोदितत्वात् शालामुखीये श्रपणमिति प्राप्ते मासाग्निहोत्रद्रव्यस्य श्रपणं प्राजहिते–मुख्ये गार्हपत्येऽग्नौ। कुतः? तस्य प्राजहितस्य मुख्यगार्हपत्यस्य विद्यमानत्वात्– सन्निहितत्वात्। न शालामुखीये गौणे गार्हपत्ये। यतः शालामुखीये गार्हपत्यशब्दो गौणः। मुख्ये सम्भवति गौणग्रहणमन्याय्यमिति भावः ॥ १३ ॥

**हविर्धानशकटादन्येन शकटेन औषधद्रव्याणां पुरोडाशादीनां निर्वापाधिकरणम् ॥ ७ ॥**

## हविर्धाने निर्वापणार्थे साधयेतां प्रयुक्तत्वात् ॥ १४ ॥

ज्योतिष्टोमे हविर्धानशकटप्रवृत्त्यनन्तरं 'पशुपुरोडाशः, सवनीयपुरोडाशः, सौम्यश्चरुः' रित्यादीनि औषधद्रव्यकाणि कर्माण्यनुष्ठेयानि, किंवा हविर्धानशकटे तेषां निर्वापः कार्यः, उत शकटान्तरे इति संशये हविर्धाने– सोमाधारभूते शकटे, निर्वापणार्थे– सवनीयादिनिर्वापणकार्ये साधयेतां– उत्पादयेताम्। प्रयुक्तत्वात्– तन्निर्वापकार्यक्षमत्वात्तयोरन्यतरस्य वा इति ॥ १४ ॥

## सि० ॥ असिध्दिर्वान्यदेशत्वात् प्रधानवैगुण्यादवैगुण्ये प्रसङ्गः स्यात् ॥ १५ ॥

असिध्दिः– हविर्धानशकटयोर्निर्वापसाधनत्वस्यासिध्दिरेव। कुतः? तयोरन्यदेशत्वेन प्रधानवैगुण्यात्– हविर्धानमण्डपे स्थितयोस्तयोस्तयोः सोमशकटयोः गार्हपत्यपश्चाद्भागे निर्वापदेशे नयने सति प्रधानस्य सोमयागस्य वैगुण्यं स्यादतः अवैगुण्ये एव प्रसङ्गो युक्त इति भावः ॥ १५ ॥

## अनसां च दर्शनात् ॥ १६ ॥

अनसां च– 'अनांसि प्रवर्तयन्ति' इति शकटबहुत्वं श्रूयते।

सोमाधारशकटयोर्द्वित्वेन शकटान्तरमन्तरेण बहुवचनमनुपपन्नम् । तदुपपत्त्यर्थं तृतीयं शकटं नाप्राप्तमेव । तत्र तेषां निर्वाप इति भावः ॥ १६ ॥

प्रायणीयादिषु सौमिकदार्शिकदीक्षाजागरणस्याभावाधिकरणम् ॥ ८ ॥

## सि०॥ तदुक्तं च कालभेदात् ॥ १७ ॥

'यां प्रथमां रात्रिं दीक्षितो जागर्ति तया स्वप्नेन व्यावर्तते' इति सोमे दीक्षादिने रात्रौ जागरणं श्रुतम्। एवं दर्शपूर्णमासयोः औपवसथ्येऽह्नि रात्रौ जागरणं श्रुतम्। तत् प्रायणीयादिषु अतिदिष्टम्। तेन दीक्षाजागरणेन तस्य प्रसङ्गसिद्धिरिति प्राप्ते तत्-- जागरणं, पृथगेव युक्तम् । कालभेदात्--औपवसथ्यदिनरूपकालभेदात् । तत्राप्यदृष्टार्थं तत् पृथगेव कार्यम् । नातिदिष्टं दार्शिकमिति भावः ॥ १७ ॥

विहारभेदे मन्त्रभेदाधिकरणम् ॥ ९ ॥

## सि० ॥ मन्त्राश्च सन्निपातित्वात् ॥ १८ ॥

वरुणप्रघासेषु 'मारुतीप्रचारार्थं प्रतिप्रस्थाता आज्यानि गृह्णाति इतरप्रचारार्थमध्वर्युः' इति विहारपार्थक्ये सति तत्र आज्यस्य ग्रहणप्रोक्षणाभिमर्शनेषु ये सन्निपातिनो मन्त्रास्तेषां तन्त्रं, उत आवापः इति संशये आवापः--पृथक् आवर्तनीयाः । कुतः? सान्निपातित्वात्---मन्त्राणामर्थस्मरणद्वारा संनिपत्योपकारकत्वात् । मन्त्रैर्गृह्णाति इत्युक्तत्वपुरस्कृतार्थस्यान्योपकारकत्वासम्भव इति भावः॥ १८॥

दीक्षणीयादिषु अग्न्यन्वाधानस्याभावाधिकरणम् ॥ १० ॥

## सि० ॥ धारणार्थत्वात्सोमे अग्न्यन्वाधानं न विद्यते ॥ १९ ॥

सोमे दीक्षणीयादिष्वैष्टिककर्मसु अग्न्यन्वाधानमस्ति वा नेति संशये कालभेदाज्जागरणवदस्तीति प्राप्ते सोमे सौमिकाग्न्याधानस्य समाप्तिपर्यन्तं धार-

णार्थत्वात् तत्सम्बन्धिदीक्षणीयादिषु पृथगन्वाधानं न विद्यते इति सिद्धान्तः ॥ १९ ॥

दीक्षणीयादिषु व्रतोपायनस्याभावाधिकरणम् ॥ ११ ॥

## तथा व्रतमुपेतत्वात् ॥ २० ॥

**तथा**—यथा दीक्षणीयादिषु पृथगन्वाधानं नास्ति, सौमिकान्वाधानेनैव प्रसङ्गसिद्धिस्तथा सत्यवचनब्रह्मचर्यसङ्कल्पादिरूपं व्रतमपि तासु पृथक् नानुष्ठेयम्। सौमिकव्रतेनैव प्रसङ्गः सिध्यति। तद्धि सोमार्थं गृहीतमेव पूर्वम्। अतः परिगृहीतत्वेन तासु **उपेतत्वात्**- प्राप्तत्वात् अप्राप्तप्रापणरूपं व्रतस्य उपगमनं दीक्षणीयादिषु नास्तीति भावः ॥ २० ॥

## विप्रतिषेधाच्च ॥ २१ ॥

सौमिकव्रते तत्र परिगृहीते व्रतस्य चर्यमाणत्वेन ' अग्ने व्रतपते व्रतं चरिष्यामि ' इति भविष्यत्प्रयोगोऽनुपपन्नः स्यादत ॥ २१ ॥

## सत्यवदिति चेत् ॥ २२ ॥

यथा ' सत्यं वदति व्रतं यावत्पुरुषधर्मत्वेन प्राप्तमपि दर्शपूर्णमासे पुनरुच्यते । तद्वदिदमपि स्यादिति चेत्— ॥ २२ ॥

## न संयोगपृथक्त्वात् ॥ २३ ॥

**नैव तथा स्यात्** । कस्मात् ' **संयोगपृथक्त्वात्** । स्मृतौ पुरुषार्थत्वेन सर्वसाधारण. सत्यं वदेति विधि । दर्शपूर्णमासे तु तदङ्गत्वेन विशिष्ट. स. पृथग्विधि । इति विधिपार्थक्यं तत्र । प्रकृते तु सौमिकसत्यवदनादिव्रतविधिनैव ऐष्टिकव्रतस्य प्रसङ्गत सिद्धिरिति दृष्टान्तवैषम्यमत्र । अथवा **संयोगस्य**- स्मृतौ सत्यवदनादिविधेयार्थानुष्ठानजन्यपुरुषोद्देश्यस्य प्रकृते तु सत्यवदनादिविध्युद्देश्यस्य क्रत्वपूर्वस्य च पृथक्त्वात् इत्यर्थः । न सत्यवदनादे पुनर्विधिरत्र । सौमिकव्रतविधिनैव कृतार्थत्वादिष्टीनामिति भाव ॥ २३ ॥

ऐष्टिकेषु अग्न्यन्वाधानाननुष्ठानाधिकरणम् ॥ १२ ॥

## ग्रहार्थं च पूर्वमिष्टेस्तदर्थत्वात् ॥ २४ ॥

पूर्वं— प्राथमिकं सौमिकमग्न्यन्वाधानं प्रसङ्गत ऐष्टिकेषु कर्मसूपकारं करोतीत्युक्तम् । तस्य धारणार्थत्वात्प्रसङ्ग उक्त ऐष्टिकेषु । परं न केवलं धारणार्थं तदपि तु ' ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं गृह्णाति । देवता एव तत्पूर्वेद्युर्गृहीताः श्वोभूते यजते ' इति अग्निग्रहणेन देवताग्रहण-लिङ्गदर्शनात् देवतापरिग्रहार्थमपि । सत्येवं देवतापरिग्रह प्रसङ्गेन नैव सिध्यति । सौमिक-ऐष्टिकदेवतानां भेदात् इत्याक्षेपे सिद्धान्तः । पूर्वं प्राथमिक-मग्न्यन्वाधानं हविर्धारणदेवतापरिग्रह इत्युभयार्थमपि इति तस्य ऐष्टिकेषु प्रसङ्गतः सिद्धिर्भवत्येव । कुतः ? दीक्षणीयेष्टेस्तदर्थत्वात्- देवतापरि-ग्रहार्थत्वात् । तथा हि- ' आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः ' इत्येव दीक्षणीयेष्टेरुत्पत्तिश्रुतिः तदर्थवादश्चेत्थं- ' अग्निर्वै देवानामवमो विष्णुः परम , यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता यज्ञं च , तदुभयतः परिगृह्य दीक्षते ' इत्यर्थवादेन ,दीक्षणीयेष्टे , देवतापरिग्रहार्थत्वस्य बोधनात् सैव प्रसङ्गत ऐष्टिककार्यं साधयिष्यतीति भावः ॥ २४ ॥

## शेषवदिति चेत् ॥ २५ ॥

दीक्षणीयेष्टिः प्रधानदेवतापरिग्रहार्था । तस्याः क्रियमाणं दार्शिक-मातिदेशिकमग्न्यन्वाधानं शेषवत्— अङ्गाङ्गभूत ऐष्टिकदेवतापरिग्रहार्थमिति भिन्नार्थत्वान्न प्रसङ्गतः सिद्धिरन्वाधानस्येति चेत्- ॥ २५ ॥

## न वैश्वदेवो हि ॥ २६ ॥

न । हि— यत , वैश्वदेवः— प्रधाने वैश्वदेवग्रहो वर्तते । तत्र विश्वेदेवा देवताः सन्ति । जात्यधिकरणन्यायेन विश्वेदेवपदवाच्यं देवतात्वा-वच्छिन्नं सामान्येन । तदन्तःपातित्वमङ्गदेवतानामप्यस्ति । अतः वैश्वदेवग्रह-सम्बन्धस्तासां देवतानामस्तीति प्रधानत्वमङ्गदेवतानामपीति भावः ॥ २६ ॥

## स्याद्वा व्यपदेशात् ॥ २७ ॥

व्यपदेशात्-- देवतैकदेशात 'अग्निर्वसुभिः, सोमो रुद्रैः, इन्द्रो मरुद्भिः, वरुण आदित्यैः, बृहस्पतिर्विश्वेदेवैः' इत्यत्र वस्वाद्यपेक्षया विश्वेदेवानां भेदेन निर्देशात् मरुदादिवत विश्वेदेवशब्दोऽपि गणविशेषवाची। न देवतात्वावच्छिन्नसामान्यवाची। तथा चेत् सः भेदेन निर्देशोऽनुपपन्नः स्यादतः स न्यायबाधकः। तस्मादन्नदेवताना तद्ग्रहसम्बन्धाभावात् तदर्थैष्टिकमन्त्राधानं स्यादिति ॥ २७ ॥

## न गुणार्थत्वात् ॥ २८ ॥

न स्यात्। कुतः? गुणार्थत्वात् - विश्वेदेवशब्दस्य स्तुत्यर्थत्वात्। न भेदानिर्देशपरत्वं तस्य। अपि त्वग्न्यादयो वरुणान्ताः मरुदाद्येकदेशयुक्ताः। बृहस्पतिस्तु सकलदेवतायुक्तः श्रेष्ठः इति बृहस्पतिस्तुतिपरः स शब्द इति प्रसङ्गेन सिद्धेः नैव कर्तव्यं दार्शिकमन्त्राधानमैष्टिकेषु कर्मस्विति भावः ॥ २८ ॥

ऐष्टिकेषु पत्नीसंहननानुष्ठानाधिकरणम् ॥ १३ ॥

## सि० ॥ संहननं वृत्तत्वात् ॥ २९ ॥

संहनन— 'मेखलया यजमानं दीक्षयति, योक्त्रेण पत्नीम्' इति सौमिकसंहननेनैव प्रायणीयादिष्विष्टिषु प्रसङ्गेन संहननं सिध्यति। वृत्तत्वात्— प्राक्तनसंहननात्प्रागेव तस्य सौमिकसंहननप्रवृत्तत्वात। प्रयाजान्वाधानन्यायवैषम्याच्चेति तासु तन्नानुष्ठेयमिति भावः ॥ २९ ॥

ऐष्टिकेषु आरण्यभोजनाभावाधिकरणम् ॥ १४ ॥

## सि० ॥ अन्यविधानादारण्यभोजनं न स्यादुभयं हि वृत्त्यर्थम् ॥ ३० ॥

'पयोव्रतं ब्राह्मणस्य' इति अन्यस्य— सौमिकस्य पयोव्रतस्य विधानात् तेनैव प्रायणीयादिषु प्रसङ्गतः सिद्धेः 'यदारण्यानश्नाति तेनाऽऽरण्यानयो इन्द्रियं वा अरण्यम्, इन्द्रियमेवाऽऽत्मन् धत्ते' इति दार्शिकमारण्यभोजनं चोदकप्राप्तमपि तासु नानुष्ठेयम्। कुतः? उभयं हि वृत्त्यर्थम्-

पयः आरण्यं च भक्षणार्थमेव। प्रत्यक्षेण पयसा प्रसङ्गतस्तत्सिद्धेः चोदकप्राप्तं न कर्तव्यमिति भावः॥ ३०॥

ऐष्टिकेषु शेषभक्षानुष्ठानाधिकरणम्॥ १५॥

## सि०॥ शेषभक्षास्तथेति चेन्नान्यार्थत्वात्॥ ३१॥

प्रायणीयादीष्टिषु शेषभक्षाः— इडाभक्षणं, तथा— आरण्यकभक्षणवन्निवर्तते इति चेन्न। अन्यार्थत्वात्— संस्कारार्थत्वात् 'हविःशेषान् भक्षयन्ति' इति द्वितीयया प्रोक्षणवत् संस्कारार्थत्वावगमात् शेषभक्षणं कार्यमिति भावः॥ ३१॥

ऐष्टिकेषु अन्वाहार्यदानाभावाधिकरणम्॥ १६॥

## सि०॥ भूतत्वाच्च परिक्रयः॥ ३२॥

परिक्रयः- दर्शपूर्णमासीयपरिक्रयरूपः अन्वाहार्यः इष्टिषु निवर्तते। कुतः? भूतत्वात्-- ज्योतिष्टोमदक्षिणयैव परिक्रीतत्वात् ऋत्विजामित्यर्थः॥ ३२॥

ऐष्टिकशेषभक्षणस्य संस्कारार्थत्वेन कर्तव्यत्वाधिकरणम्॥ १७॥

## शेषभक्षास्तथेति चेत्॥ ३३॥

ऐष्टिकशेषभक्षाः तथा-- परिक्रयार्थाः इति चेत्- ॥ ३३॥

## न कर्मसंयोगात्॥ ३४॥

न परिक्रयार्थास्ते भक्षाः। कस्मात्? कर्मसंयोगात्— कर्मवाचकद्वितीयाश्रवणात् संस्कारार्था एवेति भावः॥ ३४॥

ऐष्टिकेषु होतृवरणसद्भावाधिकरणम्॥ १८॥

## सि०॥ प्रवृत्तवरणात्प्रतितन्त्रं वरणं होतुः क्रियते॥ ३५॥

'अग्निर्होता सप्ते होता होतस्त्वं मे होताऽसीति होतारं वृणीते' इति सोमे होतृवरणमाम्नातं क्रियते। पश्चात् 'अग्निर्देव्यो देवो होता देवान् यक्षत्' इति दार्शपौर्णमासिकं होतृवरणं चोदकप्राप्तं प्रायणीयादिष्विष्टिषु

कार्यं न वेति संशये वरणस्य ऋत्विगनुमतिप्रकाशनार्थत्वात्तस्य प्रकाशनस्यैकेनैव सौमिकवरणेन सिद्धत्वादातिदेशिकं तद्वरणं न कार्यमिति प्राप्ते प्रतितन्त्रं- प्रतीष्टि, होतुर्वरणं क्रियते। कुतः ? प्रवृत्तवरणात्- कर्मणि प्रवृत्त्यनन्तरं वरणात्। ऋत्विगनुमतिप्रकाशनार्थं चेत्तदग्निर्देवो दैव्य इत्यैष्टिकं वरणं तर्हि कर्मणि प्रवृत्तेः पूर्वमेव तत् क्रियेत। अत्र तु कर्मप्रवृत्त्यनन्तरं मध्ये तद्वरणमस्ति। अतः अदृष्टार्थं तत्। तच्चादृष्टं सौमिकेन वरणेन न सिध्यति। तस्मात्तत्कर्तव्यमिति सिद्धान्तिनोऽभिप्रायः ॥ ३५ ॥

## ब्रह्मापीति चेत् ॥ ३६ ॥

तर्हि 'भूपते भुवनपते' इत्यनेन मन्त्रेण कार्यं ब्रह्मणो वरणमपि कर्ममध्ये ऽस्तीति तदप्यदृष्टार्थमावर्तेतेति चेत्- ॥ ३६ ॥

## न प्राङ्नियमात्तदर्थं हि ॥ ३७ ॥

न। कुतः ? प्राक्- ऋतुसम्बन्धिब्रह्मकर्तृकक्रियातः पूर्वं, नियमात्- ब्रह्मणो वरणस्य नियमात्। हि- यतः तदर्थं- ब्रह्मानुमतिज्ञानार्थं तद्वरणम्। अन्यकर्तृकक्रियायाः पूर्वं तस्य प्रवृत्तावपि तस्मात् प्राक् कापि ब्रह्मकर्तृकक्रिया नास्तीति ब्रह्मवरणे होतृवरणतो वैषम्यमिति भावः ॥ ३७ ॥

## निर्दिष्टस्येति चेत् ॥ ३८ ॥

निर्दिष्टस्य- 'अमाया पूर्वेद्युर्वेदिं करोति' इति विहितस्य वेदिकरणस्य 'ॐ परिगृहाण' इति परिग्रहानुज्ञात्मकं यद्ब्रूते तस्य पूर्वं सत्वात् ब्रह्मवरणात् प्राक् कापि तत्कर्तृक्रिया नास्तीत्येतदसिद्धमिति चेत्- ॥ ३८ ॥

## नाश्रुतत्वात् ॥ ३९ ॥

पूर्वेद्युर्वेदिकरणं श्रुतम्। परिग्रहो न श्रुतः। अतस्तस्याश्रुतत्वान्नोक्तशङ्का सम्भवतीत्यर्थः ॥ ३९ ॥

## होतुस्तथेति चेत् ॥ ४० ॥

होतुः- होतुर्वरणात्प्रागपि तथा- न किमपि कर्म इति चेत्- ॥ ४० ॥

## न कर्मसंयोगात् ॥ ४१ ॥

न। 'अग्नतः सामिधेनीरन्वाह' इति कर्मसंयोगात्- कर्मणो विधानात्, इयमपि शङ्का तदभावप्रस्ता। तस्मात् होतृवरणमदृष्टार्थमैष्टिकेषु कार्यमेव। सौमिकेनैव सिद्धत्वादनुज्ञारूपदृष्टार्थकं ब्रह्मवरणं न कर्तव्यं तत्रेति भावः॥ ४१॥

आतिथ्यायां बर्हिषः प्रतिकर्म प्रोक्षणादेरभावाधिकरणम् ॥ १९ ॥

## यज्ञोत्पत्त्युपदेशेऽनुष्ठितकर्मप्रयोगभेदात् प्रतितन्त्रं क्रियते ॥ ४२ ॥

सोमे 'यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य' इति श्रुतम्। तथा 'बर्हिरसि स्रुग्भ्यस्त्वा स्वाहेति बर्हिषः प्रोक्षणादिकं श्रुतम्। तत्प्रोक्षणादिकमुपसत्सु अग्नीषोमीयपशुयागे च आवर्तनीयमथवा प्रसङ्गतस्तत्सिद्धिरिति संशये यज्ञोत्पत्त्युपदेशे यज्ञस्य— आतिथ्यात्मकयागस्य उत्पत्त्युपदेशे— उत्पत्तिविधिसमीपदेशे अनुष्ठितं ग्रहणपुरस्सरं यत्कर्म बर्हिषः प्रोक्षणादि तत्तदर्थमेव— आतिथ्याङ्गमेव। प्रयोगभेदात्— आतिथ्याप्रयोगस्य उपसदादिप्रयोगेभ्यो भिन्नत्वात्। अतः प्रतितन्त्रम्— तत्तत्प्रतिप्रयोगं तत्प्रोक्षणादि आवर्तनीयमिति ॥ ४२ ॥

## सि० ॥ न वा कृतत्वात्तदुपदेशो हि ॥ ४३ ॥

न वा— प्रतितन्त्रे— प्रतिप्रयोगं प्रोक्षणस्य नैव आवृत्तिः। तस्य कृतत्वात्— सकृदनुष्ठितत्वात्। हि तदुपदेशः— यस्मात् 'बर्हिः प्रोक्षति' इति द्वितीयया बर्हिरादिरूप तत्संस्कारः प्रोक्षणं विधीयते। तस्य कृतत्वात्न पुनस्तदपेक्षा। अतो नावर्तनीयः स प्रोक्षणादिः संस्कारः। प्रसङ्गतस्तस्य सिद्धिरिति भावः ॥ ४३ ॥

आतिथ्यायां स्तरणमन्त्रस्य आवृत्त्यधिकरणम् ॥ २० ॥

## देशपृथक्त्वान्मन्त्रोऽप्यावर्तते ॥ ४४ ॥

तत्रैव 'ऊर्णाम्रदसन्त्वा स्तृणामि' इति स्तरणमन्त्रस्यापि प्रसङ्गतः

सिद्धिरिति प्राप्ते आतिथ्यायाः प्राग्वंशो देशः, अग्नीषोमीयस्य तु उत्तरवेदिः इति देशयोः पृथक्त्वात् तद्भेदेन मन्त्रः आवर्तनीय एव ॥ ४४ ॥

बर्हिषः देशान्तरनयने संनहनहरणमन्त्रयोरनावृत्त्यधिकरणम् ॥ २१ ॥

## सन्नहनकरणे तथेति चेत् ॥ ४५ ॥

आतिथ्याया संस्कृतस्य बर्हिषः अग्नीषोमीयदेशान्तरनयनसमये 'पूषति ग्रन्थि प्रथातु', 'बृहस्पतेर्मूर्ध्ना हरामि' इति सन्नहनहरणमन्त्रौ श्रूयेते। तयोरावृत्तिरस्ति न वेति विचारे, तथा— स्तरणमन्त्रवदस्त्यावृत्तिः । कुतः? नयनस्य संनहनस्य च आवृत्तत्वादिति चेत् ॥ ४५ ॥

## सि० ॥ नान्यार्थत्वात् ॥ ४६ ॥

न आवर्तनीयौ तौ संनहनहरणमन्त्रौ। कस्मात्? अन्यार्थत्वात्— वेद्यां स्तरणार्थं यत संनहनं हरणं च तदर्थत्वं नानयोर्मन्त्रयोः। अपि तु दर्भप्रदेशाच्छेदनानन्तरं ये संनहनहरणे तदर्थत्वमेव। तयोरेकत्वादनावृत्तिस्तयोर्मन्त्रयोरिति भावः ॥ ४६ ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां
द्वादशाध्यायस्य प्रथमः पादः ॥ १ ॥ श्रीः ॥

— × —

## ॥ अथ द्वादशाध्यायस्य द्वितीयः पादः ॥

विहाराग्नेर्वैदिककर्ममात्राधिकरणम् ॥ १ ॥

## पू० ॥ विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात् ॥ १ ॥

पूर्वस्मिन् पादे तन्त्रमध्यवर्तिनां प्रसङ्गो विचारितः। अस्मिन् द्वितीये पादे तन्त्रबहिर्भूतस्य प्रसङ्गो निरूप्यते। यो आधानेनोत्पन्नस्त्रेताऽग्निराहवनीयादिः स विहारशब्दवाच्यः। स श्रौते कर्मण्येव विनियुज्यते उत लौकिकपार्वणस्थालीपाकादिष्वपि कर्मसु इति विचारे विहारः—

गार्हपत्याद्यग्नित्रयं प्रभुत्वात्— समर्थत्वात्, लौकिकादीनामपि कर्मणां अर्थ— कार्यं, साधयेत्— सम्पादयेदेवेति लैङ्गिकविनियोगः सूच्यते ॥ १ ॥

## मांसपाकप्रतिषेधश्च तद्वत् ॥ २ ॥

'तस्मिन् मांसं न पचेयुः, यत् पचेयुः क्रव्यादं कुर्युः' इति मांसपाकप्रतिषेधस्त्रेताग्नौ श्रूयते। स प्रतिषेधस्तदा उपपन्नः स्यात्। यदि त्रेताग्नौ मांसपाकस्य प्रसक्तिः स्यात्। निषेधस्य प्रसक्तिसापेक्षत्वात्। वैदिकमांसपाकस्य शामित्रेऽग्नौ विधानान्न तस्य पाकस्य तत्र प्राप्तिः। अतस्त्रेताग्नौ पार्वणस्थालीपाकलौकिकभोजनाद्यर्थं तण्डुलादिपाकवन्मांसपाकस्यापि प्रसक्तिर्वाच्या। तथा सत्येव स प्रतिषेधः समुपपद्यते। अन्यथाऽनुपपन्नः स्यादिति ॥ २ ॥

## सि० ॥ निर्देशाद्वा वैदिकानां स्यात् ॥ ३ ॥

निर्देशाद्वा— 'गार्हपत्ये पत्नीः संयाजयन्ति' 'दक्षिणाग्नौ फलीकरणहोमं करोति' 'यदाहवनीये जुहोति तेन सोऽस्याभीष्टः प्रीतो भवति' इत्यादिप्रत्यक्षवचनैस्तत्तत्कार्यनिर्देशात् वैदिकानां कर्मणामर्थं साधयेत् त्रेताग्निः न लौकानां कर्मणाम्। तेनैव तस्य निराकाङ्क्षत्वादिति भावः ॥ ३ ॥

## सति चौपासनस्य दर्शनात् ॥ ४ ॥

सति च— विहारे सत्यपि 'यं कामयेत राष्ट्रस्य प्रजायै स्यात्। तस्य औपासनेऽग्नौ पशुमालभ्य जुहुयात्' इति राजसूयमध्ये पशुहोमाधिकरणत्वेन औपासनाग्नेर्विधानं श्रूयते। यदि त्रेताग्नौ लौकिकमपि कर्म स्यात्तर्ह्यस्य लौकिककर्मणस्तत्रैव सम्भवादौपासनाग्नौ विधानं व्यर्थं स्यादिति साध्यकान्तप्रदर्शनं सिध्दान्तस्येति भावः ॥ ४ ॥

## अभावदर्शनाच्च ॥ ५ ॥

'मासीयन्ति ह वा एतस्य अनुव्हतोऽग्नयो यजमानस्य। ते यजमानमेव ध्यायन्ति। यजमानं सङ्कल्पयन्ति। पचन्ति ह वा अन्येष्वग्निषु वृथा मांसम्। अथ एतेषां नातोऽन्या मांसाशा विद्यत' इति पशुबन्धादन्यत्र मांसाशनं त्रेताग्नेः परिहरति श्रुतिः।

तस्माद् विहितमाससंयोगभिन्नमाससंयोगस्याभावदर्शनादपि त्रेताग्नौ लौकिक-पार्वणस्थालीपाकादिमासपाकनिषेधपरः ' तस्मिन् मास न पचेयुरिति श्रुति । अर्थाद्विहितमाससंयोगभिन्नमाससंयोगो विहारे न कार्य इति भाव ॥ ५ ॥

## मांसपाको विहितप्रतिषेधः स्याद्वाऽऽहुति-संयोगात् ॥ ६ ॥

अथवा **मांसपाक** – मांसपाकप्रतिषेध विहितप्रतिषेधरूप स्यात् । यागश्रपण हि आहवनीये विहितम् । तत्प्रतिषेधरूप- स प्रतिषेध इत्यर्थ । कुत **' आहुतिसंयोगात्–** ' यदाहवनीये जुहोति सोऽस्याभीष्ट प्रीतो भवति ' इ याहवनीयस्याग्नेराहुत्याधाररूपत्वात् यस्मिन्नग्नौ जुहोति तस्मि-न्मास न पचति इति तस्य निषेधवाक्यस्यार्थ इति भाव ॥ ६ ॥

## वाक्यशेषो वा दक्षिणेऽस्मिन्नारभ्य विधानस्य ॥ ७ ॥

**वा–** अथवा, **दक्षिणेऽस्मिन् -** दक्षिणाग्नौ ' पत्नीव्रतमपयती ' ति **विधानस्य–** वाक्यस्य, **शेषः** पर्युदासार्थक इत्यर्थ । तथा हि- यदा पत्न्या रागादिप्रयुक्त मासव्रत प्रसक्तम् । तदा मासस्यापि श्रपण दक्षिणाग्नौ प्राप्तम् । तत्र मासभिन्नं य पत्नीव्रत तद्दक्षिणाग्नौ श्रपयति इति व्रतश्रपणवा-क्यैकवाक्य समापन्नम् , तत्पर्युदासार्थकमिति भाव ॥ ७ ॥

सवनीयपशौ पशुपुरोडाशस्य कर्तव्यत्वाधिकरणम् ॥ २ ॥

## सवनीये छिद्रापिधानार्थत्वात् पशुपुरोडाशो न स्यादन्येषामवर्मर्थत्वात् ॥ ८ ॥

' सुषिरो वा एतर्हि पशु बर्हिर्वै वपामुत्खिदति । यद् व्रीहिमय पुरोडाशो भवति अपिधानायाऽ सुषिराय ' इति पशोर्वपानिष्कासने यच्छिद्र तस्य पिधानाय पशुपुरोडाश श्रूयते । स सवनीयपशुयागस्याङ्गभूत पशुपुरोडाशयाग कार्यो न वेति संशये न कार्य इति प्राप्तम् । कुत ?

छिद्रापिधानार्थत्वात तस्य । तच्छिद्रापिधानन्तु 'अनुसवनं सवनीयाः पुरोडाशा निरूप्यन्ते, । अपिहित्यै अच्छिद्रतायै । ' इत्यन्यैरेव पशुपुरोडाशैः श्रूयते । अतस्तैः कृतार्थत्वात् सपुरोडाशो नैव कार्य इति ॥ ८ ॥

## सि० ॥ क्रिया वा देवतार्थत्वात् ॥ ९ ॥

क्रिया वा— कर्तव्य एव तदङ्गभूत. पशुपुरोडाशः । कुतः देवतार्थत्वात्— देवतासंस्कारार्थत्वात । तच्च प्रागुक्तमेवेति ज्ञेयम् ॥ ९ ॥

## लिङ्गदर्शनाच्च ॥ १० ॥

'वपया प्रात.सवने चरन्ति, पुरोडाशेन माध्यन्दिने सवने । ' इति लिङ्गदर्शनादपि तस्य कर्तव्यत्वं सिध्यति । अन्यथा प्रयोगविप्रकर्षविधानं निरालम्बनं स्यादिति भाव. ॥ १० ॥

सवनीयपुरोडाशे हविष्कृदाह्वानस्याभावाधिकरणम् ॥ ३ ॥

## सि० ॥ हविष्कृत्सवनीयेषु न स्यात् प्रकृतौ यदि सर्वार्था पशुं प्रत्याहृता सा कुर्याद्विद्यमानत्वात् ॥ ११ ॥

सवनीयेषु-पशुपुरोडाशेषु हविष्कृदाह्वानमस्ति न वेति विचारे तदाह्वानं तेषु पुरोडाशेषु न स्यात । कुत. 'प्रकृतौ— दर्शपूर्णमासयोः हविष्कृदाह्वानमोषधिद्रव्ये एव । न सान्नाय्ये । पशुयागस्य सान्नाय्ययागप्रकृतित्वेन तस्मिन्नोषधिद्रव्ययुक्त तदाह्वानमप्राप्तमेव । अतस्तत्पुरोडाशेऽपि तन्नाह्वयेत् । यदि प्रकृतौ सान्नाय्य औषधिद्रव्यसाधारणं तदाह्वानमिति, इ वाचिन्तयेदमधिकरणमित्युच्येत तदा सर्वार्था सा हविष्कृत् पशुं प्रत्यपि आहृता । तत्पुरोडाशेऽपि प्रसक्ता तदुपकारं कुर्यादेव । विद्यमानत्वात् । अतो न पुनस्ता तत्राह्वयेदिति भावः ॥ ११ ॥

तृतीयसवने हविष्कृदाह्वानस्य पुनराह्वानाभावाधिकरणम् ॥ ४ ॥

## पशौ तु संस्कृते विधानात्तार्तीयसवनिकेषु स्यात् सौम्याश्विनयोश्चापवृक्तार्थत्वात् ॥ १२ ॥

तृतीयसवने पश्वङ्गायपणात् पूर्वं सवनीयनिर्वापो विहितः। तदनन्तर सौम्यचर्वाश्विनद्विकपालौ विहितौ। तयोः हविष्कृदाह्वानमस्ति न वेति संशये तार्तीयसवनीकेषु— तृतीयसवनसम्बन्धिषु पशुपुरोडाशेषु सौम्याश्विनयोश्च पृथगभेदेन स्यात्। कुत ? पशौ—पश्वङ्गेषु, संस्कृतेषु—पक्वेषु तदनन्तर विधानात्। अपवृक्तार्थत्वात्— सवनीयपुरोडाशेषु गतार्थत्वात्। सवनीयपुरोडाशार्थमाहूता हविष्कृत तस्य हविष सिध्यनन्तर कृतार्था सती स्वीयगृहकार्यार्थं गामष्यति। पुनरा ह्वानमन्तरेण तदागमन कथ स्यादनस्तदाऽऽह्वान पृथक् कर्तव्य तदेत्याशय पूर्वपक्षिण ॥ १२ ॥

## सि० ॥ योगाद्वा यज्ञाय तद्विमोके विसर्गः स्यात् ॥ १३ ॥

'वाग्वा युनक्ति स वाग्वा युनक्ति सैव विमुञ्चतु ' इति श्रुत्या यज्ञाय—सोमयज्ञनिष्पत्त्यर्थं, योगात्— तस्या हविष्कृत विनियुक्तत्वात तद्विमोके—यज्ञसमाप्त्यैव, विसर्ग - गृहकार्यार्थं गमन स्यात्। तथा चान्यत्रगमनाभावात् सवनीयपुरोडाशार्थं कृतेनैव तदाऽऽह्वानेनैव प्रसङ्गतस्तया सौम्याश्विनयोरुपकारसिद्धेर्न पुनस्तदाऽऽह्वानेन प्रयोजनमिति भाव ॥ १३ ॥

### निशियज्ञे अमावास्यातन्त्रप्रसङ्गाधिकरणम् ॥ ५ ॥

## निशियज्ञे प्राकृतस्याप्रवृत्तिः स्यात् प्रत्यक्षशिष्टत्वात् ॥ १४ ॥

काम्येष्टिकाण्डे ' आग्नये रक्षोघ्ने पुरोडाशमष्टाकपाल निर्वपेद्यो रक्षोभ्यो बिभीया ' दिति श्रूयते। पुनस्तत्रैव ' अमावास्याया निशि यजेत् ' इत्यपि श्रुतम्। इयमिष्टिः दर्शमध्यपतितेत्यमावास्यातन्त्रस्य तस्या प्रसक्तिरस्ति न

राक्षोघ्नयागोपकारं न साधयेत् । दर्शाग्निसमिन्धनार्थसम्पादितेन इध्मेन तदग्निसमिन्धनं प्रतिपद्यते भवति । तत्समिन्धनं निशियागस्योपकारं नैव साधयेत् । एवं दार्शिकवेदिस्तरणार्थैर्बर्हिरपि न तदुपकारं साधयेत् । अग्न्याधानं च यदि देवतार्थम्-आमावास्याङ्गदेवतापरिग्रहार्थं क्रियमाणमन्न्याधानमपि निशियागीयदेवतापरिग्रहार्थं भवितुं नार्हति । तथा च स निशियागो तदभावाद्विगुणः स्यात् । अतस्तत्र ते भेदेन कर्तव्ये । एतद्भिन्नदार्शिकतन्त्रा सा निशीष्टिः स्यादिति परमार्थो ज्ञेयः ॥१८॥

### सौर्यादिविकृतिष्वारम्भणीयाननुष्ठानाधिकरणम् ॥६॥

## आरम्भणीया विकृतौ न स्यात् प्रकृतिकालमध्यत्वात् कृता पुनस्तदर्थेन ॥ १९ ॥

**विकृतौ**– सौर्यादिविकृतियागेषु आरम्भणीयेष्टिर्न स्यात् । पुनर्न कार्या । कुतः ? **प्रकृतिकालमध्यत्वात्**–प्रकृतिकालमध्यपातित्वादित्यर्थः । 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति श्रुत्या जीवनपरिच्छिन्नः कालस्तदङ्गतया विहितः । एकस्मिन् काले क्रियमाणः प्रयोग एक एवेति तन्मध्यपातित्वात् सौर्यादिविकृतीनां प्रयोगोऽपि प्रकृतिकाले एव । इति कालैक्येन आरम्भणीयेष्टेः प्रसङ्गतस्तासु सिद्धिः । **कृता**–यावज्जीवप्रयोगार्थं या कृता सैव **पुनस्तदर्थे**–सौर्याद्यर्थे नापि कृता । न पुनस्तया कृतिरिति ॥ १९ ॥

## सि० ॥ स्याद्वा कालस्याशेषभूतत्वात् ॥२०॥

'कर्तुर्वा श्रुतिसंयोगात्' इत्यत्र कालस्य कर्तृधर्मत्वं प्रतिपादितम् । अतः **कालस्य**–यावज्जीवकालस्य **अशेषभूतत्वात्**— दर्शपूर्णमासाङ्गत्वाभावात्, प्रतिपर्वभिन्नप्रयोगत्वेन तन्त्रमध्यपाताभावात् **स्याद्वा**–स्यादेव सौर्यादिविकृतिषु चोदकप्राप्ता आरम्भणीयेष्टिः । पुनर्न तत्र तस्याः प्रसङ्ग इति भावः ॥ २० ॥

## आरम्भविभागाच्च ॥ २१ ॥

आरम्भविभागात्— दर्शपूर्णमासारम्भात् सौर्यादिविकृत्यारम्भस्य भिन्नत्वेन प्रधानभेदात् प्रतिप्रधानमङ्गावृत्तिरिति न्यायेन स्यात् सा तत्रेत्यर्थः ॥ २१ ॥

प्रधानानां धर्मविरोधे भूयसां प्रधानधर्माणामनुष्ठानाधिकरणम् ॥७॥

## विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम् ॥ २२ ॥

पञ्चदशरात्रस्य प्रथममहोऽग्निष्टुन्नामकम् । तच्चैकाहात्मकाग्निष्टुत्प्रकृतिकम् । ततो 'ज्योतिर्गौरायुरितित्र्यहः' उर्वरितानि एकादशाहाद्वादशाहप्रकृतीनि । स्थिते चैवं प्रकृतिस्थं सुत्याकालीनं सुब्रह्मण्याह्वाने तत्र चोदकशास्त्रेण प्राप्तम् । प्रकृतावग्निष्टुति उपसत्कालीनसुब्रह्मण्याह्वानार्थमाग्नेयीऋक् विहिता । सा पञ्चदशरात्रस्य विकृतिरूपे प्रथमे अग्निष्टुनाम्न्यहनि चोदकेन प्राप्ता । तस्य विकृतिभूतेष्वितरेष्वहःसु द्वादशाहादिस्वस्वप्रकृत्यनुसारेण ऐन्द्री ऋक् प्राप्ता चोदकशास्त्रेण । सकृत् कृतं सुब्रह्मण्याह्वानं तन्त्रेण सर्वत्र उपकरोतीत्यपि प्रागुक्तम् । सत्येवं पञ्चदशरात्रस्य प्रथमे अग्निष्टुदहनि सुब्रह्मण्याह्वानार्थमाग्नेयी ऋक् ग्राह्या वा ऐन्द्री उपादेयेति संशये असंजातविरोधित्वन्यायेन प्राथमिक्या आग्नेय्या ऋचैव सुब्रह्मण्याह्वानं कार्यम् । तयैव सर्वसुत्यानां प्रसङ्गेन उपकारः सिध्येदिति प्राप्ते सिद्धान्तः । **विप्रतिषिद्धधर्माणां**— परस्परविरुद्धधर्माणां समवाये प्राप्ते तत्र अन्यतरानुष्ठानप्रसक्तौ **भूयसां सधर्मत्वं**— बहूनां यो धर्मः स एव धर्मः सर्वेषामपि ग्राह्यः स्यात् । अत ऐन्द्रया एव ऋचा तत्र सुब्रह्मण्याह्वानं कर्तव्यं भूयसामनुग्रहायेति भावः ॥ २२ ॥

तुल्यसङ्ख्याकानां प्रधानानां धर्मविरोधे प्रथमस्यैव धर्मानुष्ठानाधिकरणम् ॥ ८ ॥

**आरम्भविभागात्**— दर्शपूर्णमासारम्भात् सौर्यादिविकृत्यारम्भस्य भिन्नत्वेन प्रधानभेदात् प्रतिप्रधानमङ्गावृत्तिरिति न्यायेन स्यात् सा तत्रेत्यर्थः ॥ २१ ॥

## प्रधानानां धर्मविरोधे भूयसां प्रधानधर्माणामनुष्ठानाधिकरणम् ॥७॥

## विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम् ॥ २२ ॥

पञ्चदशरात्रस्य प्रथममहोऽग्निष्टुन्नामकम् । तच्चैकाहात्मकाग्निष्टुत्प्रकृतिकम् । ततो 'ज्योतिर्गौरायुरिति त्र्यह.' उपरितानि एकादशाद्वादशाहप्रकृतीनि । स्थिते चैव प्रकृतिस्थ सुत्याकालीन सुब्रह्मण्याह्वान तत्र चोदकशास्त्रेण प्राप्तम् । प्रकृतावग्निष्टुति उपसत्कालीनसुब्रह्मण्याह्वानार्थमाग्नेयीऋक् विहिता । सा पञ्चदशरात्रस्य विकृतिरूपे प्रथमे अग्निष्टुनाम्न्यहनि चोदकेन प्राप्ता । तस्य विकृतिभूतेष्वितरेष्वह सु द्वादशाहादिस्वस्वप्रकृत्यनुसारेण ऐन्द्री ऋक् प्राप्ता चोदकशास्त्रेण । सकृत कृत सुब्रह्मण्याह्वानं तन्त्रेण सर्वत्र उपकरोतीत्यपि प्रागुक्तम् । तत्रैव पञ्चदशरात्रस्य प्रथमे अग्निष्टुदहनि सुब्रह्मण्याह्वानार्थमाग्नेयी ऋक् ग्राह्या वा ऐन्द्री उपादेयेति संशये असञ्जातविरोधित्वन्यायेन प्राथमिकया आग्नेय्या ऋचैव सुब्रह्मण्याह्वानं कार्यम् । तयैव सर्वसुत्यानां प्रसङ्गेन उपकार सिध्येदिति प्राप्ते सिद्धान्तः । **विप्रतिषिद्धधर्माणां**— परस्परविरुद्धधर्माणां समवाये प्राप्ते तत्र अन्यतरानुष्ठानप्रसक्तौ **भूयसां सधर्मत्वं**— बहूनां यो धर्मः स एव धर्मः सर्वेषामपि ग्राह्यः स्यात् । अत ऐन्द्रया एव ऋचा तत्र सुब्रह्मण्याह्वानं कर्तव्यं भूयसामनुग्रहायेति भाव. ॥ २२ ॥

## तुल्यसङ्ख्याकानां प्रधानानां धर्मविरोधे प्रथमस्यैव धर्मानुष्ठानाधिकरणम् ॥ ८ ॥

## सि० ॥ मुख्यं वा पूर्वचोदनाल्लोकवत् ॥ २४ ॥

## तथा चान्यार्थदर्शनम् ॥ २५ ॥

'आग्नावैष्णवमेकादशकपालं निर्वपेत्' 'अथ सरस्वत्यै आज्यभागस्य' अत्र आग्नावैष्णवस्य ऐन्द्राग्नविकृतित्वात्तस्मिन्नैन्द्राग्नतन्त्रम् । वृधन्वती । सरस्वत्यास्तु उपांशुयागविकृतित्वात् तस्यामुपांशुयागतन्त्रं धार्त्रवनमन्त्रश्च । इति समसङ्ख्यानां प्रधानानां धर्मविरोधे मुख्यं वा—प्राथमिकमेव ऐन्द्राग्नतन्त्रं स्यात् । कुतः ? पूर्वचोदनात्—आग्नावैष्णवस्य प्रथमं विधानात् । प्रथमविधिना प्रथमोपस्थितप्रयोगानुष्ठाने तेनैवोत्तरस्य प्रसङ्गेन सिद्धिः । यथा पूर्वावसायिनः जघन्यावसायिनं नाराधयन्ते नारसायन्तीत्येवमेवैतदिति भाव. ॥ २४ । २५ ॥

### अङ्गप्रधानयोर्धर्मविरोधे प्रधानधर्मस्यैवानुग्रहणाधिकरणम् ॥९॥

## सि० ॥ अङ्गगुणविरोधे च तादर्थ्यात् ॥ २६ ॥

ज्योतिष्टोमे 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः' इति दिक्षणीयेष्टि. श्रुता । तत्रैव सोमयाग. । तयोरुभयोः 'य इष्ट्वा पशुना सोमेन वा यजेत सोऽमावास्यां पौर्णमास्यां वा यजेत', इति वचनात् पर्वकाल· प्राप्तः । तत्र एका दीक्षा तिस्र उपसद इति पक्षे उपसद्भिर्व्यवधानात् द्वयो· दीक्षासुत्यामहयो. पर्वसम्बन्धो न सम्भवति । तत्रान्यतरस्य बाधे कर्तव्ये कस्य स इत्याकाङ्क्षायां पूर्वाधिकरणन्यायेन प्रथमोपस्थितदीक्षणीयाधर्म एवानुग्राह्यः, सोमयागगुणस्याऽन्यः चरमोपस्थितत्वात् इति प्राप्ते आह महर्षिः अङ्गगुणविरोधे— दीक्षणीयेष्टिरूपाङ्गस्य प्रधानसोमयागगुणेन साकं विरोधे तस्य मुख्यत्व प्रथमोपस्थितत्वमपि त्यक्त्वा प्रधानगुण एवादौ समानीयः । तादर्थ्यात्— अङ्गगुणस्यापि प्रधानसादुगुण्यार्थत्वात् । सोऽङ्गगुणः प्रधानं विगुणं कुर्याच्चेत् किं तेन कृतेन प्रयोजनं प्रधानसादुगुण्यघातिना । यत. प्रधानसादुगुण्याय तत्त· सर्वमङ्गजातम् । तच्च 'स्वयं गुणभूतमिति न

प्रधानाङ्गलोपं कर्तुं समर्थम् । तस्मात्पर्वणि सुत्यामहः, अपर्वणि च दीक्षेति भावः ॥२६॥

परि[illegible] १० ॥

## सि०॥ [illegible] ॥ २७ ॥

पशुमत्सु चानुर्मास्येषु ' परिधौ पशुं नियुञ्जीत ' इति श्रूयते। तत्र यवमतीभिरद्भिः प्रोक्षणमञ्जनं परिव्याणमिति यूपधर्माः । इध्मसंनहनं संमार्जनं जुह्वा अञ्जनमभ्याश्रावणमिति परिधिधर्माः । ते धर्माः—परिधिधर्माः यूपधर्माश्च परिधौ कर्तव्याः । कुतः ? व्यर्थत्वात्—परिधेः अग्निपरिधानार्थत्वात् पश्वप्रावरणार्थत्वाच्चेत्युभयार्थत्वं तस्मिन्नास्ति । तस्मादुभयधर्माः परिधावनुष्ठेयाः । एवमुभयधर्मा सः स्यात् ॥ २७ ॥

परिधौ स्वधर्मविरोधियूपधर्मानुष्ठानाधिकरणम् ॥ ११ ॥

## यौप्यस्तु विरोधे स्यान्मुख्यानन्तर्यात् ॥ २८ ॥

यत्र यूपधर्माणां तक्षणोच्छ्रयणनिखननानां परिधिधर्माणां च प्रागुक्तानां विरोधः स्यात्तत्र कस्य धर्मोऽनुष्ठेय इति संशये **यौप्यस्तु**— यूपधर्म एवानुष्ठेयः । कुतः ? **मुख्यानन्तर्यात्**— यागनिर्वर्तकत्वात् पशुर्मुख्यः, तस्याऽऽनन्तर्यम्—सानिध्य यूपे । अपूर्वं प्रति साधनं यागः । तस्य साधनं पशुः । तस्याङ्गं च यूपः । अन्यत्र परिधिधर्मपक्षे तु अपूर्वं प्रति साधनं यागः । तत्साधनं पशुः । तत्संस्कारसाधनमाग्निः । तत्संस्कारस्य साधनं परिधिरित्यपूर्वस्य यूपापेक्षया परिधेर्विप्रकृष्टत्वाद्बहिरङ्गत्वं तस्य । अन्तरङ्गबहिरङ्गयोर्मध्ये अन्तरङ्गं बलीय इति न्यायः सुप्रसिद्धः । तस्मात् यूपधर्मः कर्तव्य इत्येव प्राप्तम् ॥ २८ ॥

## सि०॥ इतरो वा तस्य तत्र विधानात् ॥२९॥

**इतरो वा**— परिधिधर्म एव कर्तव्यः । कुतः ? **तस्य**— पशुनियोजनस्य, **तत्र**— परिधौ, **विधानात्** । ' परिधौ पशुं नियुञ्जीत इति विधेः परिधौ परिधित्वं संरक्ष्य तस्मिन् पशुनियोजनमभिप्रेतम् । न तद्विनाश्य।

तच्च परिधित्वं सत्यचत्वादिरूपमेव । तस्य तक्षणादिना नाशे परिधिभङ्ग एव भवेत् । तत्र कुत्र पशुनियोजनं स्यादद्देति भावः ॥ २९ ॥

## उभयोश्चाङ्गसंयोगः ॥ ३० ॥

उभयोरपि पक्षयोः अङ्गेनैव धर्मस्य संयोगः । न प्रधानेन कस्यापि तस्य । अतः परिधौ पशुनियोजनश्रुतिविरोधान्न्यायसिद्धमन्तरङ्गत्वं न प्रबलमित्येव न । किन्तु बाधितमेव भवतीति भावः ॥ ३० ॥

सवनीयपशुपुरोडाशयोः पशोरेव तन्त्रित्वेन पाशुकतन्त्रस्यैव ग्रहणाधिकरणम् ॥ १२ ॥

## पशुसवनीयेषु विकल्पः स्याद्वैकृतश्चेदुभयोरश्रुतिभूतत्वात् ॥ ३१ ॥

प्रातःसवने ' आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति । अनुसवनीयं सवनीयाः पुरोडाशा निरूप्यन्ते ' इति श्रुतम् । अत्र-पशुयागे पुरोडाशयागे च अङ्गकलापस्य प्राप्तिश्चोदकशास्त्रादेव समाना । सत्येव द्वयोर्मध्ये कस्तन्त्रीति विचारे यस्याङ्गकलापः प्रत्यक्षविहितः स तन्त्री । तन्मध्ये श्रूयमाणयागाङ्गानुष्ठानस्य तदङ्गैः प्रसङ्गसिद्धिः । यथा पशुपुरोडाशे प्रयाजानाम् । इह त्वङ्गानामुभयत्र प्रत्यक्षपाठाभावेन नियामकस्याभावादिच्छया उभयोर्मध्ये यस्यकस्यचित् तन्त्रस्यानुष्ठानेनाऽपरस्य प्रसङ्गतः सिद्धिः स्यादित्याह । पशुसवनीयेषु—पशुप्रयोगपुरोडाशप्रयोगयोः विकल्पः ऐच्छिकप्रसङ्ग इत्यर्थः । कुतः ' वैकृतश्चेत् चोदकशास्त्रगृहीताङ्गकलापश्चेत्, उभयोरश्रुतिभूतत्वात्-पशुयागपशुपुरोडाशयोर्द्वयोरप्यङ्गानां साक्षाद्विधानाश्रवणाच्चोदकप्राप्तत्वादिति ॥ ३१ ॥

## सि० ॥ पाशुकं वा तस्य वैशेषिकाम्नानादर्थकं विकल्पे स्यात् ॥ ३२ ॥

- ३२-पाशुकं वा- पाशुकमेव तन्त्रं तत्रानुष्ठेयम् । न विकल्पः । पाशुकतन्त्रस्यैव पुरोडाशयागे प्रसक्तिः । कुतः ? वैशेषिकाम्नानात्- विशेषरूपेण पाठात्, तस्य-पाशुकतन्त्रस्य प्रकृत्यपेक्षया विशिष्टो धर्मस्तत्र नित्यवच्छ्रूयते । तथा हि-प्रकृतौ अग्नीषोमीयपशौ ' अग्निर्मघहोतारमवृणीत ' इति सूक्तवाके प्रैषमन्त्रः समाम्नातः । सोऽत्र सवनीयपशौ चोदकेन प्राप्तोऽपि ' अग्निमद्यहोतारमवृणीतायं यजमानः सुतासुती ' इति प्रकृत्यपेक्षया विशिष्टरूपेण पुनराम्नातः नित्यवच्छ्रुतः । विकल्पाङ्गीकारे तु तदनर्थकम्-तन्मन्त्रस्य नित्यवच्छ्रवणमनर्थकं स्यात् । तस्मात् पशुयाग एव तन्त्रीति भावः ॥ ३२ ॥

## पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् ॥३३॥

किंच, ' वपया प्रातःसवने । पुरोडाशैर्माध्यन्दिनसवने । अङ्गै स्तृतीयसवने ' इत्येवं पशोः-पशुयागस्य विप्रकर्षं-दैर्घ्यं श्रूयते । तत्तन्त्रमध्ये पुरोडाशयागः पतितः । अतोऽपि पाशुकं तन्त्रमेव नियतम् । दीर्घकालसाध्यप्रयोगमध्यपतितत्वादल्पकालसाध्यप्रयोगस्येति भावः ॥ ३३ ॥

प्रकृतिविकृत्योः समानतन्त्रत्वे प्रकृतौ विकृतितन्त्रानुष्ठानाधिकरणम् ॥ १३ ॥

## सि०॥ अपूर्वं च प्रकृतौ समानतन्त्रं चेदनित्यत्वादनर्थकं हि स्यात् ॥ ३४ ॥

यदि प्रकृतिः विकृत्या समानतन्त्रा तदा कस्य तन्त्रं कर्तव्यमिति विचारे नित्यत्वात् प्राकृतमेव तन्त्रमिति प्राप्ते अपूर्वं च-काम्यं नैमित्तिकं च तन्त्रं यदि समानं नित्येन तन्त्रेण तदा वैकृतं तन्त्रमेव पूर्वं कार्यम् । तस्य च प्रसङ्गः प्रकृतौ । कुतः ? अनित्यत्वात् । विकृतेः अन्यथा ' आज्यमागावन्ते ' इत्युक्तं काम्यस्य आज्यप्रोक्षणादिकमनर्थकं स्यात् । तस्माद्वैकृतस्य प्राकृते प्रसङ्गः ॥ ३४ ॥

आग्रयणे प्रसूनबर्हिषामेव ग्रहणाधिकरणम् ॥ १४ ॥

## अधिकश्च गुणः साधारणेऽविरोधात् कांस्यभोजिवदमुख्येऽपि ॥ ३५ ॥

आग्रयणेष्ट्या ऐन्द्राग्नवैश्वदेवद्यावापृथिव्ययागा चातुर्मास्यीयवैश्वदेवपर्वगतद्यावापृथिव्यैककपालानुसारेण क्रियन्ते । तत्र ऐन्द्राग्नवैश्वदेवयोः तदीयप्रकृत्यनुसारतः बर्हिर्मात्रं ग्राह्यम् । द्यावापृथिव्ये तु वैश्वदेवपर्वगते पुष्पितबर्हिरिति नियमः । एवं स्थिते आग्रयणेष्टिगतद्यावापृथिव्ये पुष्पितमेव बर्हिर्ग्राह्यमिति नियमः, उत पुष्पितमपुष्पितं वा बर्हिरित्यनियम इति संशये ऐन्द्राग्नवैश्वदेवयोः प्रथमोपस्थितत्वेन मुख्यत्वात् भूयोऽनुग्रहासिद्धेश्च अनियम एवेति प्राप्ते अमुख्येऽपि—चरमोपस्थितेऽपि द्यावापृथिव्ये अधिकश्च—आधिक्येन श्रूयमाणो गुणः—प्रसूनं पुष्पितमेव बर्हिरिति नियमरूपो गुणः सर्वत्र साधारणे— प्रसूनाप्रसूनसाधारणे ऐन्द्राग्नवैश्वदेवयोरपि कर्तव्यः । कुतः ? अविरोधात्— उभयथाप्यङ्गलोपाभावेन विरोधाभावात् । कांस्यभोजिवत्— अमुख्यस्यापि शिष्यस्य कांस्यपात्रभोजननियमानुसारेण मुख्यस्यापि गुरोः प्रत्यवायाभावात् यथा कांस्यपात्रे भोजनं तद्वदत्रापीति भावः ॥ ३५ ॥

ऐन्द्राग्नवैश्वदेवद्यावापृथिव्यानां सर्वेषामेवाग्रयणे तन्त्रित्वाधिकरणम् ॥ १५ ॥

## तत्प्रवृत्त्या तु तन्त्रस्य नियमः स्याद्यथा पाशुकं सूक्तवाकेन ॥ ३६ ॥

आग्रयणे ऐन्द्राग्नतन्त्रं, उत द्यावापृथिव्यतन्त्रमिति विचारे तत्प्रवृत्त्या—तस्य प्रसूनबर्हिर्नियमस्य प्रवृत्त्या द्यावापृथिव्यतन्त्रस्य नियमः स्यात् । यथा पाशुकसूक्तवाकमन्त्रप्रवृत्त्या पाशुकतन्त्रनियमस्तथात्रापीति ॥ ३६ ॥

## सि० ॥ न वाऽविरोधात् ॥ ३७ ॥

न वा—नैव द्यावापृथिव्यतन्त्रस्य नियमः । अविरोधात्— अविरुद्धोऽयं प्रसूनबर्हिरूपो धर्मः सर्वेषामैन्द्राग्नादीनाम् । न वैशेषिकः ।

ततो न समर्थो नियन्तुम्। सूक्तवाकस्तु वैशेषिकः। हि--तत्र 'सवनीयस्य पशोर्हविषा दैव्येति प्रैषमन्त्रः अग्निमद्ये' ति सवनीयपुरोडाशस्य। उभे विरुद्धे अङ्गे। एकानुष्ठाने अपराङ्गस्य बाध एव द्वारलोपात्। इति दृष्टान्तो विषम इति भावः॥ ३७॥

## अशास्त्रलक्षणाच्च॥ ३८॥

किंच, अशास्त्रलक्षणात्–प्रसूनबर्हिषः प्रत्यक्षशास्त्रविहितस्वरूपत्वाभावादप्यपर वैलक्षण्यं विद्यते। सूक्तवाकमन्त्रः सवनीयपशुमन्त्रिवौ प्रत्यक्ष-पठितः। प्रसूनबर्हिस्तु वैश्वदेवपर्वान्तर्गतद्यावापृथिव्यैककपालादतिदेशेन प्राप्तः। अतः स सूक्तवाकमन्त्रवृन्नियन्तुमसमर्थ इति मुख्यत्वात् ऐन्द्राग्नतन्त्र-मेव तत्रेति भावः॥ ३८॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां द्वादशाध्यायस्य द्वितीयः पादः॥२॥

—×—

## ॥ अथ द्वादशाध्यायस्य तृतीयः पादः॥

अष्टरात्रे वत्सत्वगहतवाससोः समुच्चयाधिकरणम्॥ १॥

## विश्वजिति वत्सत्वङ्नामधेये यादितरया तन्त्र-भूयस्त्वा दहतं स्यात्॥ १॥

प्रसङ्गापवादविचारकोऽयं पादः। अस्त्यष्टरात्रनामकः क्रतुविशेषः। तस्य "विश्वजिदभिजितावग्निष्टोमावभितः मध्ये षडहः, एतेनाष्टमेनैव यजेत' इति श्रुतेः तदीय नवमाह, विश्वजिन्नामकम्। तत षडहनामकानि पडहानि। तदनन्तरमभिजिन्नामकमेकमहः। तत्र 'विश्वजिन्नाम्नि प्रथमेऽहनि' अनभूयादुदेत्य वत्सत्वं च परिधत्ते' इति वाक्येन एकाहरूपविश्वजिति परिधानार्थं विहिता वत्सत्वक् नाम्नातिदेशतः

प्राप्ता । अवशिष्टेषु सत्त्वहस्सु ज्योतिष्टोमविहितमाहत वासश्चोदकेन प्राप्तम् । सत्येवमेकेनात्र प्रसङ्गसिद्धिः स्यादिति केन परिधानं कर्तव्य—वासःत्वचा आहतेन वाससा वेति संशये विश्वजिति—प्रकृतिभूते एकाहे विश्वजिद्यागे परिधानार्थं वस्त्रत्वचाविधानात् प्रकृते अहरात्रे नाम्ना तस्या अतिदेशात् चोदकापेक्षया नामातिदेशस्य प्राबल्याच्च अहस्सु वत्सत्वचैव परिधानकार्यम् । इतरथा—नामातिदेशाभावे सत्येन तन्त्रभूयस्त्वात्—प्रयोगाद्वा बाहुल्यात् आहतवाससः परिधानार्थं प्राप्तिरिति । एतेन नामातिदेशस्य भूयोऽनुग्रहापेक्षया बलवत्त्वं सूचितमिति ज्ञेयम् ॥ १ ॥

## सि०॥ अविरोधो वा उपरिवासो हि वत्सत्वक् ॥२॥

अविरोधो वा—गुह्याच्छादनाय आहतं वासः नाभेरूर्ध्वं प्रावरणार्थं वत्सत्वक् इत्येवं विरोधाभावात् द्वयोः समुच्चय इति सिद्धान्तः । तथा च भूयोऽनुग्रहोऽपि सिध्यति । यत सोऽप्यपरिहार्य इति भावः ॥ २ ॥

अनुनिर्वाप्येषु पशुपुरोडाशतन्त्रस्यैव प्रसङ्गाधिकरणम् ॥ २ ॥

## अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यात् ॥३॥

अग्नौ ' अग्नीषोमीयपशुपुरोडाशमनु अष्टौ देवसुवां हवींषि निर्वपति ' इति श्रूयते । तत्र अनुनिर्वाप्येषु अष्टसु हविःषु कस्य तन्त्रमिति संशये अनुशब्दस्वारस्यादष्टहविषां पशुपुरोडाशतन्त्रमध्यपातित्वे स्पष्टेऽपि भूयस्त्वेन तन्त्रनियमः स्यात् । भूयोऽनुग्रहायाष्टहविषां तन्त्रानुष्ठानेनैव पशुपुरोडाशानां प्रसङ्गात् सिद्धिर्भवेदिति ॥ ३ ॥

## सि०॥ आगन्तुकत्वाद्वा स्वधर्मा स्याच्छ्रुतिविशेषादितरस्य मुख्यत्वात् ॥ ४ ॥

आगन्तुकत्वाद्वा— अष्टानां हविषामागन्तुकत्वेन पशुपुरोडाशतन्त्रमध्यपातित्वेन अमुख्यत्वात् इतरस्य— पशुपुरोडाशस्य च श्रुतिविशेषात्—

अनुशब्दस्यारस्येन मुख्यत्वात स एव स्वधर्मा स्यात्–। 'चैत्रमनुगतो मैत्र इत्यत्र चैत्रे मुख्यत्वं यथा तथा पशुपुरोडाशे मुख्यत्वात्तत्तन्त्रस्यैव प्रसक्तिरुक्षु हविष्ष्विति भावः ॥ ४ ॥

## स्वस्थानत्वाच्च ॥ ५ ॥

-वपाहोमानन्तरकालरूपो देशः पशुपुरोडाशस्य स्थानम्। अतोऽपि तस्य प्राबल्यम्। स्वस्थानस्थितत्वादित्यर्थः ॥ ५ ॥

## स्विष्टकृच्छ्रवणान्नेति चेत् ॥ ६ ॥

**स्विष्टकृच्छ्रवणात्**– 'अग्नीषोमीयस्यैकादश कपालस्य देवसुवां च हविषामग्नये स्विष्टकृते समवद्यति' इत्यनेन स्विष्टकृद्योगः श्रूयते। इदमनुनिर्वाप्य तन्त्रपक्षे सम्भवति। न पशुपुरोडाशतन्त्रपक्ष, इति चेत्– ॥६॥

## विकारः पवमानवत् ॥ ७ ॥

**विकारः**–यथा 'अग्नये पवमानायेत्यत्र पवमानोऽग्नेर्गुणः, एवमग्निषोमादिदेवसुदेवताना स्विष्टकृदित्यय गुणविधिरित्यर्थः ॥ ७ ॥

## अविकारो वा प्रकृतिवच्चोदनां प्रतिभावाच्च ॥ ८ ॥

अथवा **अविकारः**-- अस्विष्टकृच्छब्दक कर्तव्यम्। **प्रकृतिवत्**–यथा प्रकृतौ अग्न्यादिशब्दास्तथात्रापि। **चोदनां प्रतिभावाच्च**–विधिं प्रतिषिद्धशब्देनानुवादात्। विध्युद्देशसमर्पणादिति यावत्। यथा 'शरमयं बर्हिरित्यत्र बर्हिःकार्यमनूद्य तदुद्देशेन शरविधिः, तथा स्विष्टकृत्कार्यमुद्दिश्य उक्तहविष्कृदेवताभिस्तत्सम्पद्येदित्युक्त वाक्यघटकस्विष्टकृच्छब्दस्य गतिरिति भाव. ॥ ८ ॥

### एकस्मिन् कर्मणि भिन्नकार्याणां गुणानां समुच्चयाधिकरणम् ॥ ३ ॥

## सि० ॥ एककर्मणि शिष्टत्वाद्गुणानां सर्वकर्म स्यात् ॥ १ ॥

**एककर्मणि**—आधारपैकस्मिन् कर्मणि ' ऋजुमाघारयति ' इत्यनेकेषां गुणानां **शिष्टत्वात्**-विहितत्वात्, **सर्वकर्म**-सकलमेवानुष्ठानं समुच्चयेन स्यादित्यर्थः ॥ ९ ॥

प्रयाजनैक्ये गुणानां विकल्पाधिकरणम् ॥४॥

## सि० ॥ एकार्थास्तु विकल्पेरन् समुच्चये आवृत्तिः स्यात् ॥ १०॥

**एकार्था**—एककार्यजनका ये गुणाः, यथा खादिरादीनि यूपद्रव्याणि । बृहद्रथन्तरे च सामनी । ते व्रीहियववद्विकल्पेरन् । विकल्प एव स्यात्तेषाम् । यत **समुच्चये आवृत्तिः**-, अनेकद्रव्यप्रयुक्ता प्रधानावृत्तिः स्यात् । सा चायुक्तेति भावः ॥ १० ॥

## अभ्यस्येतार्थवत्त्वादिति चेत् ॥ ११ ॥

**अर्थवत्त्वात्**— अपूर्वात्मकप्रयोजनवत्त्वात्, **अभ्यस्येत**-आवृत्तिः स्यात् प्रधानस्येति चेत् ॥ ११ ॥

## नाश्रुतित्वात् ॥ १२ ॥

**न अश्रुतित्वात्**- अभ्यासस्याश्रवणात् विना शास्त्रमपूर्वसाधनं न सिध्यतीति भावः ॥ १२ ॥

## सति चाभ्यासशास्त्रत्वात् ॥ १३ ॥

' गोसव उभे कुर्यात् ' ' सत्र उभे कुर्यात् ' ' अपचितामयन्हे उभे बृहद्रथन्तरे कुर्यात् ' इति क्वचिदभ्यास इष्यते इति चेदस्तु नाम तत्राभ्यासः यत्र श्रूयते । प्रकृते तु न तथा श्रवणमित्यत न । अपि तु ॥१३॥

## विकल्पं च दर्शयति ॥ १४ ॥

' बैल्वो वा खादिरो वा पालाशो वा यूपो भवति ' ' अथैतस्य खादिर एव कार्यः ' इति वाजपेये खादिर नियच्छन् यत्र विकल्पमनुवदति इयति । तस्मादत्र विकल्पो व्रीहियववदिति स्थितम् ॥ १४ ॥

## कालान्तरे अर्थवत्त्वं स्यात् ॥ १५ ॥

विकल्पपक्षे एकेन चारितार्थ्ये अपरस्य वैयर्थ्यमित्यपि नाशङ्कनीयम्। कालान्तरे—प्रयोगान्तरे अर्थवत्त्वस्य संभवादित्यर्थः ॥ १५ ॥

वैगुण्यादिदोषनिर्घातार्थानां प्रायश्चित्तानां विकल्पाधिकरणम् ॥ ५ ॥

## प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात् सर्वस्य निर्घातः ॥ १६ ॥

प्रमादप्रयुक्तवैगुण्यादिदोषसमाधानार्थानि सति निमित्ते कर्माङ्गानीति द्विविधानि प्रायश्चित्तानि। अत्र आद्यानि यथा; "यदि ऋक्तो यज्ञ आर्तिमियात्। भूः स्वाहेति गार्हपत्ये जुहुयात्। यदि यजुष्टः दक्षिणाग्नौ भुवः स्वाहेति। यदि सामतः स्वः स्वाहेति आहवनीये जुहुयात्। यद्यविज्ञातो भूर्भुवः स्वाहेत्याहवनीय एव जुहुयात्" । एवम्— 'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां पौर्णमासीं वाऽति पातयेत्' । 'वैश्वानरं द्वादशकपालं निर्वपेत अमावास्यां पौर्णमासीं वा अतिपात्य' इति। एतेषां समुच्चयो विकल्पो वा इति संशये सिद्धान्तः। **प्रायश्चित्तेषु—** उक्तभूःस्वाहेत्यादिप्रायश्चित्तेषु **ऐकार्थ्यात्—** दोषनिर्घातरूपैकप्रयोजनकत्वात् **निष्पन्नेन—** उत्पन्नेन यज्ञस्य आर्त्यादिरूपदोषेण **अभिसम्बन्धः—** संयोगः उक्तप्रायश्चित्तेषु तन्निवारणाय शास्त्रेण कृतः—बोधितः। तस्मात् तस्य दोषत्वावच्छिन्नस्य सर्वस्यैव वैगुण्यस्य **निर्घातः—** प्रध्वंस एकस्मादेव भवति। इत्येकार्थत्वान्न समुच्चयः। किन्तु विकल्प एव। क्रतुवैगुण्यस्य शास्त्रैकगम्यत्ववत्तन्निर्घातस्यापि शास्त्रैकगम्यत्वमिति भावः ॥ १६ ॥

नैमित्तिकप्रायश्चित्तानां समुच्चयाधिकरणम् ॥ ६ ॥

## सि० ॥ समुच्चयस्त्वदोषोऽर्थेषु ॥ १७ ॥

यानि न दोषप्रध्वंसकानि, न वा पुरुषस्य प्रत्यवायोत्पादकानि, केवलं कर्मप्रकरणोत्पन्नत्वेन कर्माङ्गानि विज्ञायन्ते। यथा-यस्या हुतमग्निहोत्रं

सूर्योऽभ्युदयात् मैत्रचरुं निर्वपेत् सौर्यमेककपालम्', 'यस्याहुतमग्निहोत्रं सूर्योऽभ्युदयात् अग्निं समाधाय वाचं यत्वा दम्पती सर्वाहमुपासीयाताम्' इति। तानि नैमित्तिकानि प्राप्ते निमित्ते कर्तव्यानि प्रयाजादिवत् तदङ्गानि। अर्थेषु दोषाश्रवणात् तेषां समुच्चय एव। यत्रन्ति विहितानि तानि सर्वाण्येव प्रयोगविधिना गृह्यन्ते। यत – ॥ १७ ॥

अनध्यायादावपि कर्मकालीनमन्त्रप्रयोगाधिकरणम् ॥ ७ ॥

## मन्त्राणां कर्मसंयोगात् स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वात् ॥ १८ ॥

कर्माङ्गतया विधीयमानानां मन्त्राणामनध्याये पठनं कार्यं न वेति सशये तादृशमन्त्राणां **कर्मसंयोगात्**— कर्मार्थत्वेन विधानात्, **स्वधर्मेण**- 'पर्वणि नाध्येयम्। रात्रे नाध्येयम्। स्तनयित्नौ नाध्येयम्' इत्यादिग्रहणकालीन**धर्मेण**—अनध्यायभिन्नकालपठितस्वरूपेणैव प्रयोगः स्यात्। कुतः ? **धर्मस्य**—स्वाध्यायपठितस्वरूपस्य **तन्निमित्तत्वात्**— पठनप्रयोजकत्वादिति पूर्वः पक्षः ॥ १८ ॥

## सि० ॥ विद्यां प्रति विधानाद्वा सार्वकालं प्रयोगः स्यात् कर्मार्थत्वात् प्रयोगस्य ॥ १९ ॥

**सार्वकालं**- अनध्याये स्वाध्याये च काले, **प्रयोगः**-तादृङ्मन्त्रपाठः स्यात्। कुतः ? **विद्यां प्रति** अपूर्वग्रहणार्थं—अपूर्वग्रहणाङ्गत्वेन निषेधस्य विधानात्। **प्रयोगस्य**—कर्मप्रयोगकाले पाठस्य, **कर्मार्थत्वात्**- कर्माङ्गत्वात्, अत्र स नियमो नेति भावः ॥ १९ ॥

कर्मणि प्रावचनस्वरेणैव मन्त्रोच्चारणाधिकरणम् ॥ ८ ॥

## भाषास्वरोपदेशेषु ऐरवत् प्रावचनप्रतिषेधः स्यात् ॥ २० ॥

छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः।
उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते ॥ ८

इति तत्तच्छाखीयब्राह्मणग्रन्थोपदिष्टस्वरः भाषिकस्वरः। मन्त्रसमाम्नाये तु त्रैस्वर्येण पाठः। स प्रावचनिकः स्वर इत्युच्यते। स्थिते चैवं क्रतुप्रयोगे केन स्वरेण विनियुक्तमन्त्राणां पाठः कार्य इत्याशङ्कायां भाषा-स्वरोपदेशात्— ब्राह्मणग्रन्थेषु स्वरान्तरोपदेशात्, ऐरवत् - यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे' इत्येतस्यामृचि यज्ञायज्ञीयसामगायका ऋत्विजः 'ऐरं कृत्वा उद्गेयं' इति ब्राह्मणेन विहितत्वात् गिरापदस्थाने इरापदं प्रयुज्य गानं कुर्वन्ति। अर्थात् गिरापदस्य यथा तत्र इरापदेन बाधस्तद्वत् ब्राह्मणोपदिष्टभाषिकस्वरेण प्रा[illegible]
प्रतिषेधः निवृत्तिरत्र स्यादिति [illegible]
भाषिकस्वरेण कर्मणि मन्त्रपाठः कार्य इति ॥ २० ॥

## सि० ॥ मन्त्रोपदेशो वा न भाषिकस्य प्रायापत्ते भाषिकस्तुतिः ॥ २१ ॥

मन्त्रोपदेशो वा—न हि स्वरविशेषविधानाय ब्राह्मणस्य प्रवृत्तिः, अपि त्वौत्पत्तिकस्वरोपेतं मन्त्रमनूद्य तस्य तत्तत्कर्माङ्गत्वं तेनोपदिश्यते। स्वरविधाने वाक्यभेदापत्तिः। आरुण्यन्यायेन विशिष्टविधाने स्वरान्तरस्य सिद्धत्वात् द्वितीयस्यादृष्टार्थत्वकल्पनापत्तिः। अतो भाषिकश्रुतिः—उत्पत्तिसमये श्रवणं यस्येति व्युत्पत्त्या औत्पत्तिकस्वर एव कर्मणि प्रयोक्तव्यः। अन्यथा तस्य भाषिकस्य—औत्पत्तिकस्वरस्य, प्रायापत्तेः—बाधापत्तेरिति भावः ॥ २१ ॥

## विकारः कारणाग्रहे ॥ २२ ॥

विकारः— गिरापदस्थाने इरापदविकारो युक्त एव। कारणाग्रहात्— वाक्यभेदादिरूपविकारकारणाभावात्। प्रकृते न तथेति विषमो दृष्टान्तः ॥ २२ ॥

ब्राह्मणोत्पन्नमन्त्राणां भाषिकस्वरनियमाधिकरणम् ॥ ९ ॥

## तन्न्यायत्वाददृष्टोऽप्येवम् ॥ २३ ॥

यो हि मन्त्रो मन्त्रकाण्डे त्रैस्वर्येण पठितस्तस्य तथैव प्रयोग इति स्थितम् । यस्तु मन्त्रसमाम्नायेन पठितः, ब्राह्मणे एव भाषिकस्वरेण पठितः । यथा ' तं वै प्रोहेद्वानंस्पत्येोऽसीति ' तस्य कथं पाठः कार्यः इति विशये तन्न्यायत्वात्— ' यज्ञकर्मण्यजपन्यूङ्खसामसु ' ( पा०-सू० १।२।३४) इति सूत्रानुसारतः अदृष्टोऽपि— मन्त्रकाण्डे अपठितोऽपि मन्त्रः एवं— त्रैस्वर्येण पठनीयः । न ब्राह्मणोक्तस्वरेण । तस्य मन्त्रमात्रविधायकत्वेन स्वरविधायकत्वाभावादित्याशयः पूर्वपक्षिणः ॥ २३ ॥

## सि०॥ तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् ॥२४॥

तदुत्पत्तेः—तस्मिन् ब्राह्मणे तस्योत्पत्तिर्यतस्तस्मात् तत्रैवोत्पन्नत्वेन यथा पाठः स एव तस्य मन्त्रस्य स्वरः । नान्य इति भावः । प्रवचनलक्षणत्वात्— पूर्वोक्तमन्त्रलक्षणस्य तस्मिन् सत्त्वान्मन्त्रत्वमेवोपाहृतमेव तस्येति ब्राह्मणे पठितत्वान्न मन्त्रत्वं, किन्तु ब्राह्मणत्वमिति नाशङ्कनीयमिति भाव. ॥ २४ ॥

करणमन्त्राणां पाठानन्तरं पदार्थानुष्ठानाधिकरणम् ॥१०॥

## मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादि संनिपातः स्यात् सर्वस्य वचनार्थत्वात् ॥ २५ ॥

' इषे त्वेति छिनत्ति, देवस्य त्वा सवितुः प्रसव इत्यादत्ते, ऊर्जे त्वेत्यनुमार्ष्टि, इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते ' इत्यादिपदार्थकरणीभूतमन्त्राणां करणार्थत्वात्— क्रियार्थत्वात्, स्मृतिद्वारा मन्त्रान्तेन मन्त्रपाठानन्तरं कर्मादिसंनिपातः—कर्मसम्बन्धः, स्यात्—कर्तव्य. । कुतः ? सर्वस्यमन्त्रस्य वचनार्थत्वात्—लिङ्गकल्पितविषयाभिप्रेतत्वात् । अनेन मन्त्रेणेदं कर्म कर्तव्यमिति । एव लिङ्गकल्पितविधिवाक्येन हि मन्त्राणां तत्तत्क्रियाया विनियोगः क्रियते । तत्र यथा मन्त्रस्य वैयर्थ्यं मा भूदिति, मन्त्रेणैव

स्मर्तव्यमिति विधितात्पर्यं कल्प्यते । तथा समग्रमन्त्रेणैव स्मर्तव्यमिलपि शेष-मन्त्रपाठवैयर्थ्यपरिहाराय कल्प्यत इति 'इमामगृभ्णन्निति' क्रियास्मारक-लिङ्गमात्रेण तत्स्मरणस्य सिद्धत्वात् शेषमन्त्रपाठस्तत्र नैव कार्य इति कुशङ्का नोदेतीति भावः ॥ २५ ॥

वसोर्धारासु पूर्ववन्मन्त्रान्ते कर्मसंनिपाताधिकरणम् ॥ ११ ॥

## सन्ततवचनाद्धारायामादिसंयोगः ॥ २६ ॥

'अग्नौ सन्ततां वसोर्धारां जुहोति' इति श्रूयते । तत्रादिसंयोगोऽ-न्त्यसंयोगो वा कर्मण इत्याशङ्कायां सन्ततवचनात्—सम्पृक्तकतनुधातोरेकी-भूय विस्तारोऽर्थः । स च द्वयोः सहभावेनात्यन्तसंयोगे सत्येव भवति । नान्यथा संयोगो हि द्वयोर्भवति । नैकस्य । प्रकृते चोभे मन्त्रक्रिये इति तयोर्धाराया आदिसंयोगः—सहभावेन संयोग । न मन्त्रान्ते संनिपात इति ॥ २६ ॥

## सि०॥ कर्मसन्तानो वा नानाकर्मत्वादितरस्या-शक्यत्वात् ॥ २७ ॥

कर्मसन्तानो वा—कर्मणा—क्रियाणामेव सन्तानः—सहभावेना-त्यन्तसंयोगः। न मन्त्रक्रिययोः । कुतः ? नानाकर्मत्वात्—' द्वादश द्वाद-शानि जुहोति ' इति श्रुतत्वेन सङ्ख्यया अनेककर्मत्वस्य तत्र सत्वात् । तथा हि— वाजश्चमे १ प्रसवश्चमे २ प्रयतिश्चमे ३ प्रसितिश्चमे ४ अधीति-श्चमे ५ क्रतुश्चमे ६ स्वरश्चमे ७ श्लोकश्चमे ८ श्रावश्चमे ९ श्रुतिश्चमे १० ज्योतिश्चमे ११ सुवश्चमे १२ इत्येतैर्द्वादशभिर्मन्त्रवाक्यैः सम्पाद्यमेकाहुत्यात्मकं द्वादशम् । ' प्राणश्चमे, अपानश्चमे, व्यानश्चमे ' इत्या-दिभिरेवं नैश्च तादृशद्वादशानि सम्भवन्ति । एतेषु होमद्वादशकेषु मध्ये नित्य-म्वस्याभावः सान्तत्यशब्दार्थः । न मन्त्रकर्मणोः सहोपक्रमः । इतरस्य—तयोः सहोपक्रमस्य अशक्यत्वात्—यत क्रिया आशुतरविनाशिनी । मन्त्रस्तु चिरस्थायी । तुल्यकालयोरेव सन्तानसम्भव इति भावः ॥२७॥

आघारेऽपि पूर्ववन्मन्त्रान्ते कर्मसंनिपाताधिकरणम् ॥ १२ ॥

## सि० ॥ आघारे च दीर्घधारत्वात् ॥ २८ ॥

आघारे च–दर्शपूर्णमासयो 'सन्ततमाघारयति' इति श्रुतम्। तत्रापि सन्ततवचनस्य दीर्घधारापरत्वात् पूर्ववन्मन्त्रान्ते एवोक्तकर्मसंनिपात ॥ २८ ॥

एकार्थानां करणमन्त्राणां विकल्पाधिकरणम् ॥ १३ ॥

## सि० ॥ मन्त्राणां संनिपातित्वादेकार्थानां विकल्पः स्यात् ॥ २९ ॥

'पूषा वा विभजतु' 'भगो वा विभजतु' 'अर्यमा वा विभजतु' इति पुरोडाशविभागरूपैकजातीयक्रियास्मारकाणां मन्त्राणामनेकत्वं श्रूयते। तत्र तस्या क्रियाया तेषां मन्त्राणां विकल्प एव स्यात्। न समुच्चयः। कुतः? संनिपातित्वात्—स्मरणद्वारा संनिपत्योपकारकत्वात्। तस्य स्मरणस्यैकेनैव सञ्जातत्वादिति भावः ॥ २९ ॥

संख्यायुक्तवचनविहितानां मन्त्राणां समुच्चयाधिकरणम् ॥ १४ ॥

## सि० ॥ सङ्ख्याविहितेषु समुच्चयोऽसंनिपातित्वात् ॥ ३० ॥

अग्नौ 'चतुर्भिरभ्रिमादत्ते' 'द्वाभ्यां खनति' 'षड्भिराहरति' इति सङ्ख्याविहितेषु—सङ्ख्यायुक्तवचनविहितेषु समुच्चयः स्यात्। असंनिपातित्वात्—कर्मणि स्मरणद्वारा हेतुत्वात् तत्र विधिबलाच्चाममन्त्रेणैव स्मरणस्य सिद्धिर्वक्तव्या, अदृष्टार्थत्वायेति भावः ॥ ३० ॥

ब्राह्मणेन विनियुक्तानां मन्त्राणां विकल्पाधिकरणम् ॥ १५ ॥

## ब्राह्मणविहितेषु च सङ्ख्यावत् सर्वेषामुपदिष्टत्वात् ॥ ३१ ॥

'उरु प्रथस्वेति पुरोडाशं प्रथयति' 'उरु प्रथोरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयति' इति मन्त्रद्वयं पुरोडाशप्रथने ब्राह्मणवाक्येन विहितम्। तयोः समुच्चयो विकल्पो वेति संशये ब्राह्मणविहितमन्त्रेष्वपि सङ्ख्यावत्—पूर्वाधिकरणोक्तसङ्ख्यायुक्तवचनविहितमन्त्रवत् सर्वेषां समुच्चय एव। उपदिष्टत्वात्—ब्राह्मणवाक्येन द्वयोरप्युपदिष्टत्वादिति ॥ ३१ ॥

## याज्यावषट्कारयोश्च समुच्चयदर्शनं तद्वत् ॥ ३२ ॥

'याज्यया जुहोति' 'वषट्कारेण जुहोति' इति वाक्यद्वयविहितयोर्याज्यावषट्कारयोर्यथासमुच्चयस्तद्वदयमपीति ॥ ३२ ॥

## सि० ॥ विकल्पो वा समुच्चयस्याश्रुतित्वात् ॥ ३३ ॥

विकल्प एव। समुच्चयस्य अश्रुतित्वात्— अश्रवणादित्यर्थः ॥ ३३ ॥

## गुणार्थत्वादुपदेशस्य ॥ ३४ ॥

ननु, प्रथनरूपलिङ्गेनैव मन्त्रद्वयस्य पुरोडाशप्रथनक्रियायां विनियोगसिद्धौ पुनर्विधानं व्यर्थम्। अतः समुच्चयविधानेन तस्य सार्थक्यं वाच्यमिति न विकल्प इति पुनराशङ्कायामाह उपदेशस्य— वाक्यद्वयस्य, गुणार्थत्वात्— 'स्तुतिरूपगुणार्थत्वात्'। अर्थवादात्मके तद्वाक्यद्वयमित्यर्थः। 'गुणार्थेन पुनः श्रुतिः' इत्युक्तत्वादिति भावः ॥ ३४ ॥

## वषट्कारे नानार्थत्वात् समुच्चयः ॥ ३५ ॥

वषट्कारे— वषट्कारदृष्टान्ते, नानार्थत्वात्— याज्ययादेवतास्मरणम्, वषट्कारेण प्रदानमिति विभिन्नकार्यत्वात् समुच्चयः। प्रकृते न तथेति विषमो दृष्टान्त इति भावः ॥ ३५ ॥

हौत्रमन्त्राणां समुच्चयाधिकरणम् ॥ १६ ॥

## हौत्रास्तु विकल्पेरन्नेकार्थत्वात् ॥ ३६ ॥

'यूपाय उच्छ्रीयमाणायानुब्रूहि' इत्यध्वर्युकर्तृकप्रैषानन्तरं होत्रा उच्छ्रयणलिङ्गकमन्त्राः पठ्यन्ते। तेषु 'उच्छ्रयस्व वनस्पते वर्ष्मन् पृथिव्या अधि' इति प्रथमः। 'समिद्धस्य श्रयमाण' इति द्वितीयः। 'ऊर्ध्व ऊषु ण' इति तृतीयः। 'ऊर्ध्वो नः पाहि' इति चतुर्थः। एतेषां मन्त्राणां विकल्पः समुच्चयो वेति संशये, हौत्रास्तु—होत्रा पठ्यमाना एते मन्त्राः, विकल्पेरन्—विकल्प एव तेषां, न समुच्चयः। कुतः? एकार्थत्वात्—यूपोच्छ्रयणकर्तव्यतास्मरणरूपकार्यस्य एकत्वात्, तस्मिन्नेकेन जाते अन्यस्य पठनं निष्प्रयोजनमिति ॥ ३६ ॥

## सि० ॥ क्रियमाणानुवादित्वात् समुच्चयो वा हौत्राणाम् ॥ ३७ ॥

क्रियमाणानुवादित्वात्—अध्वर्युणा क्रियमाणं यूपोच्छ्रयणमनुवदति होता एतैर्मन्त्रैः, ततो भिन्नार्थत्वात् समुच्चय एव तेषां मन्त्राणाम् ॥ ३७ ॥

## समुच्चयं च दर्शयति ॥ ३८ ॥

तत्रैव 'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्। ज्योतिष्मतीरनुब्रूयात्' इति त्रिः प्रथमोत्तमयोश्च मन्त्रगणनमन्तरा न सम्भवतीति लिङ्गदर्शनमपि समुच्चयस्य उपोद्बलकं द्रष्टव्यमिति भावः ॥ ३८ ॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां द्वादशाध्यायस्य तृतीयः पादः ॥३॥ श्री ॥

—×—

## ॥ अथ द्वादशाध्यायस्य चतुर्थः पादः ॥

जपस्तुत्याशीरभिधानानां मन्त्राणां समुच्चयाधिकरणम् ॥१॥

### सि० ॥ जपाश्चाकर्मसंयुक्ताः स्तुत्याशीरभिधानाश्च यजमानेषु समुच्चयः स्यादाशीःपृथक्त्वात् ॥ १ ॥

पूर्वपादे अस्पष्टविषयः समुच्चयः प्रदर्शितः । अस्मिन् पादे स्पष्टविषयः स उच्यते । तत्रादौ ' अथ वै केशमाग्नावैष्णवीं सारस्वतीं बार्हस्पत्यामुत्तमामनूच्य वाग्यन्तव्येति ' सूत्रकारैर्वचनात् ' वैष्णवीमनूच्य वाग्यन्तव्या ' ' सारस्वतीमनूच्य वाग्यन्तव्या ' ' बार्हस्पत्यामनूच्य वाग्यन्तव्या ' इति दीक्षितस्य वाङ्नियमनात् प्राक् जपार्थं मन्त्राः श्रूयन्ते । ' अग्निर्मूर्धा दिवः ककुदित्यादयः स्तुत्यर्थाः । ' ' आयुर्मे देहि ' ' वर्चो मे देहि ' इत्यादयः आशीरभिधानाः । ' एषोऽसि ' ' स्वेषोऽसि ' इत्यादयः अभिधानार्थाः । नैते मन्त्राः लिङ्गेन स्मृत्या वा अनुष्ठेयकर्मविशेषबोधकाः । अत्र एतेषां विकल्प समुच्चयो वेति विचारे अकर्मसंयुक्ताः—अनुष्ठेयकर्मप्रकाशकलिङ्गशून्याः, याजमानेषु यजमानेन पठ्यमानेषु मन्त्रेषु प्रागुक्ता जपाः-जपमन्त्राः स्तुत्याशीरभिधानमन्त्राश्च स्तुत्याशीःपृथक्त्वात् अदृष्टार्थत्वाच्च सर्वेषामेतेषां समुच्चय एव । न विकल्प इति सिद्धान्तः ॥१॥

### समुच्चयं च दर्शयति ॥ २ ॥

' त्रिः प्रथमामन्वाह त्रिरुत्तमाम् ' इति समुच्चये लिङ्गदर्शनं प्रागुपवर्णितमेवेति भावः ॥ २ ॥

ऐन्द्राबार्हस्पत्ये कर्मणि द्विविधयाज्यानुवाक्ययोर्विकल्पाधिकरणम् ॥ २ ॥

## सि० ॥ याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात् ॥ ३ ॥

'इदं वां मात्स्ये हविः प्रियमिन्द्राबृहस्पती । अयं वां परिषिच्यते सोम इन्द्राबृहस्पती' 'अस्मे इन्द्राबृहस्पती । बृहस्पतिर्नः परिपातु पश्चात् ।' इत्यैन्द्राबार्हस्पत्ये कर्मणि अनेके याज्यानुवाक्या युगुम्माम्नात मैन्द्राबार्हस्पत्यलिङ्गकम् । तयोः समुच्चय पूर्वे यागेनेति प्राप्ते उक्तासु याज्यानुवाक्यासु विकल्प एव स्यात् । कस्मात् ? देवतोपलक्षणार्थत्वात्— कर्मणि गुणभूतदेवतायाः स्मरणार्थत्वात्तस्य तच्च दृष्टं फलमेकेन सिध्यतीति विकल्पः प्रयोगान्तरार्थे द्वितीय भविष्यतीति भाव ॥ ३ ॥

## लिङ्गदर्शनाच्च ॥ ४ ॥

'ऋग्वै देवाना' याज्यानुवाक्ये एकया प्रत्यागच्छति । 'गमयत्यन्यया' इति एका याज्या एका चानुवाक्येति द्वित्वमुचितं दर्शयत्येतल्लिङ्गम् । ततोऽपि विकल्प ॥ ४ ॥

### सोमक्रयद्रव्याणां समुच्चयाधिकरणम् ॥ ३ ॥

## क्रयणेषु तु विकल्पः स्यादेकार्थत्वात् ॥ ५ ॥

सोमक्रये 'अजया क्रीणाति । हिरण्येन क्रीणाति । वाससा क्रीणाति एकहायन्या क्रीणातीत्यादीनि दश द्रव्याणि सोमक्रयार्थानि श्रूयन्ते । तत्र विकल्प समुच्चयो' वा तेषामिति विचारे सर्वेषां तेषामेकार्थत्वात् सोमक्रयरूपैकप्रयोजनकत्वात् व्रीहियववद्विकल्प एव स्यात् क्रयणेष्विति प्राप्ते ॥ ५ ॥

## सि० ॥ समुच्चयो वा प्रयोगे द्रव्य समवायात् ॥६॥

प्रयोगे—सोमक्रयरूपव्यापारे, द्रव्यसमवायात् -अधिकद्रव्यसम्बन्धसम्भवात् समुच्चय एव भवेत् । क्रयसौकर्यार्थम् न विकल्प । श्रुता येद्रव्यवैश्यव्यापादक इति भाव ॥ ६ ॥

## समुच्चयं च दर्शयति ॥ ७ ॥

'तं वै दशभिः क्रीणाति। दशाक्षरा विराट् । विराजमेव प्राप्नोति' त्यादिनापि समुच्चयं दर्शयति ॥ ७ ॥

उपजनादिप्रतिपत्तिकर्मणां समुच्चयाधिकरणम् ॥ ४ ॥

## सि० ॥ संस्कारे च तत्प्रधानत्वात् ॥ ८ ॥

'गुदेनोपयजति । प्राणो वै गुद' इत्याग्नीषोमीयपशौ गुदेनोपयजनं श्रुतम् । तत्र एकादशिनेऽपि चोदकेन प्राप्तम् । तत्र तस्य विकल्पः समुच्चयो वेति विचारे संस्कारे च—अग्नीषोमयागे उपयुक्तस्य पशोस्त्रेधात्वस्य गुदस्य प्रतिपत्तिसंस्कारे तत्प्रधानत्वात्--गुदस्य प्रधानत्वात्, प्रतिप्रधानमङ्गावृत्तिरिति यावद्गुदाना होमे समुच्चयस्तेषामिति सिद्धान्तः पर्यवस्यति ॥ ८ ॥

आधाने नैकसङ्ख्याकानां दक्षिणानां विकल्पाधिकरणम् ॥ ५ ॥

## सि० ॥ सङ्ख्यासु तु विकल्पः स्याच्छ्रुतिविप्रतिषेधात् ॥ ९ ॥

आधाने 'एका देया, षड् देया, द्वादश देया' इत्येवं दक्षिणादानं श्रुतम् । तत्र सोमक्रयवत् समुच्चय इति प्राप्ते सङ्ख्यासु तु-अनेकादिसङ्ख्यासु, श्रुतिविप्रतिषेधात्—सङ्ख्याश्रुतिविरोधात् विकल्प एव स्यात् । न समुच्चयः । कुतः ? एकस्य षण्णां च समुच्चये सति दक्षिणाः प्रदत्ताः स्युः । नैकस्य षण्णां वा दानमिति विरोध इति भावः ॥ ९ ॥

पशुगणेषु जाघनीनां विकल्पाधिकरणम् ॥ ६ ॥

## सि० ॥ द्रव्यविकारं च पूर्ववदर्थकर्म स्यात्तथा विकल्पे नियमः प्रधानत्वात् ॥ १० ॥

दर्शपूर्णमासयोः 'आज्येन जाघन्या वा पत्नीः संयाजयन्ति ।' इति श्रुतम् । तत्र कस्यचित्पशोरभूनायां जाघन्या अभावात् पैष्टिर्या एव

जाघन्याः आज्येन सह विकल्पात् तत्पत्नीसंयाजाख्यमर्थकर्मेव । न प्रतिपत्तिः । क्रियायाः प्राधान्यात् जाघन्याश्चागुणत्वात् । सा आज्येन सह विकल्पिता जाघनी अग्नीषोमीयपशौ चोदकेन प्राप्तापि पुनस्तत्र ‘जाघन्या पत्नीः संयाजयन्ति’ इति श्रुतम् । तेन तत्राग्नीषोमीयपशौ जाघन्येवेति नियमः सिद्धः । तस्मादग्नीषोमीयात् पशुगणे तस्याः प्राप्तिरतिदेशेन । तत्र सकलजाघनीनां समुच्चयो विकल्पो वा इति संशये द्रव्यविकारं च—द्रव्यस्य पशोः विकारावयवसाधनकं पत्नीसंयाजाख्यं कर्म पूर्ववत्—आधाने दक्षिणादानवत् अर्थकर्म स्यात् । यथा तत्र विकल्पस्तथात्रापि प्राकृतिकवाक्यानुसारतो विकल्पप्राप्तौ पुनर्विधानश्रुतिजाघन्यैवेति नियमः । प्रधानत्वात्— प्रधानकर्मत्वात्, न समुच्चयः । यत्र कर्मणो गुणत्वं द्रव्यस्य च प्राधान्यं तत्रैव यावद्द्रव्येषु क्रियासम्बन्ध एकस्मिन् प्रयोगे । प्रकृते तु कर्मणः प्राधान्यान्न समुच्चय इति भावः ॥ १० ॥

## सि० आ० ॥ द्रव्यत्वेऽपि समुच्चयो द्रव्यस्य कर्मनिष्पत्तेः प्रतिपशु कर्मभेदादेवं सति यथाप्रकृति ॥ ११ ॥

द्रव्यत्वेऽपि- यतो-

द्रव्यस्य—जाघन्याः, यत्

पुरुषव्यापारादुत्पद्यते तत्प्रयोजनापेक्षं दृष्टम् । यथा बर्हिरादि । एवमप्येकेन जाघनीद्रव्येण पत्नीसंयाजात्मककार्ये कृते कार्याकाङ्क्षायाः शान्तत्वात् सर्वजाघनीनां समुच्चयः कथं सिध्यति तत्राह—प्रतिपशु कर्मभेदात्— यावन्तः पशवस्तावन्ति विशसनानि । एवं विशसनात्मककर्मभेदात् प्रतिविशसनजन्यजाघनी प्रत्येकं कार्यमपेक्षते । इति समुच्चयः सिध्यति । एवं सति यथाप्रकृति— प्रकृतावशेषजाघन्या पत्नीसंयाजसम्पादनं यथा, तथात्रापि कृतं भवति । इत्याक्षेपः सिद्धान्ते ॥ ११ ॥

## कपालेऽपि तथेति चेत् ॥ १२ ॥

यथा निशसनकर्मण उत्पन्नत्वात् पशुगणे जाघनीसमुच्चयः, तथा कपालेऽपि—'पुरोडाशकपालेन तुषानुपवपति' इति तुषोपवापार्थत्वात्कपालस्य पुरोडाशगणे तुषोपवापार्थं मध्यकपालानामपि समुच्चयः स्यादिति चेत्—॥ १२ ॥

## न कर्मणः परार्थत्वात् ॥ १३ ॥

न—उभयत्रापि न समुच्चयः । कुतः ? कर्मणः—निशसनकर्मणः परार्थत्वात्—'एकादशावदानान्यवद्यति' इति ह्येकादशावदानार्थत्वात् । तथा पुरोडाशश्रपणार्थत्वात् कपालसम्पादनस्य । न जाघनीतुषोपवापार्थौ तौ निशसनकपालसम्पादनव्यापारौ । तस्माद् यदुद्देशेन यो व्यापारस्तस्मादुत्पन्नमवश्यं प्रयोजनमपेक्षत इति जाघन्यां कपाले च न तथेति नैव समुच्चय इति भावः ॥ १३ ॥

## प्रतिपत्तिस्तु शेषत्वात् ॥ १४ ॥

प्रतिपत्तिस्तु निर्वर्तिते पशुकरणयागे जाघन्याः शेषत्वात् हुतशेषद्रव्यं प्रतिपत्तिमपेक्षत इति तस्याः पत्नीसंयाजे निक्षेपः प्रतिपत्तिकर्मैव गुदवत् । नार्थकर्म । अतो न विकल्प इति पुनराक्षेपः प्रकारान्तरेण ॥ १४ ॥

## शृतेऽपि पूर्ववत्स्यात् ॥ १५ ॥

'येऽग्निष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम्' 'ये स्तोमिष्ठास्तानिन्द्राय प्रदाने दधिचरुम्' इत्यनुद्दिश्य शृते क्षीरे दधनि च पूर्ववत्—जाघनीवत् प्रतिपत्तिः स्यात् । यतः तत् शृतं दधि च 'ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामिति' इत्यर्थमुपनतम् । उत्पत्तौ येन संयुक्तं तदर्थमेव तत् । 'तन्तुमिष्टेतुराद' इत्यत्र शिपिविष्टाय विष्णवे इत्यर्थान्तरगमनं भवति । अतः शेषत्वाद् हुतशेषद्रव्यत्वं च प्रतिपत्तिरेवेति भावः ॥१५॥

## विकल्पे त्वर्थकर्म नियमप्रधानत्वाच्छेषे च कर्मकार्यसमवायात्तस्मात्तेनार्थकर्म स्यात् ॥ १६ ॥

**नियमप्रधानत्वात्**—जाघन्यैवेति नियमतात्पर्यकत्वात् विकल्पे सिद्धे **अर्थकर्म स्यात्**। दर्शपूर्णमासतः अग्नीषोमीयपशौ चोदकशास्त्रेण जाघन्या विकल्पेन प्राप्ताया पुनरप्यग्नीषोमीयपशौ श्रुत 'जाघन्या पत्नीः संयाजयन्ति' इति विधिवाक्यं व्यर्थं सचोदकशास्त्रेण, आज्येन सह तस्या विकल्पे तत्र प्राप्ते जाघन्यैव पत्नीसंयाजकर्म कर्तव्यमिति नियममात्रविधायकं सत् तत् पुनः श्रुतं विधिवाक्यमाज्यं निवारयति। न तु प्रकृतितः प्राप्तमर्थकर्मत्वं वारयति। तच्च प्रकृतावुभयवादिसिद्धम्। अतो नियममात्रे विधितात्पर्यमिति पशुयागे जाघन्या विकल्पे नियमप्रधानत्वमवधितमित्यर्थकर्मैव तत्। एवं **शेषे**—उपयुक्तशेषे श्रुतादावपि **कर्मकार्यसमवायात्**—संस्काररूपकर्मसाध्यस्य अपूर्वसमवायात्—उत्पत्तेः, तेनार्थकर्म स्यात्। यत्र हि प्रतिपत्तिसंस्कारस्तत्र संस्कार्यस्य काचिदुपयोगान्तरमुपयुक्तशेषस्य प्रतिपत्तिर्दृष्टा। इह श्रुतादेस्तु पुनरप्युपयोगस्यादृष्टत्वान्न तस्य प्रतिपत्तिः सम्भवतीत्यर्थकर्मैव तदपीति भावः॥ १६॥

उखायां काम्येन नित्याग्निविकाराधिकरणम् ॥ ७ ॥

## उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात् ॥ १७ ॥

अग्निचयनप्रकरणे निष्पादितामुखां प्रकृत्य 'सन्तापेनाग्निं जनयति' इति श्रुतम्। आहवनीये उखाग्न्यन्तः सन्ताप्य तस्माज्जनितोऽग्निस्तस्यामेव ध्रियते। स च नित्यः। तमपि प्रकृत्य तत्रैव 'वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्याहृत्य अवदध्यात् प्रदरजातं पशुकामस्य, वैद्युताद् वृष्टिकामस्य' इत्यादि श्रुतम्। वनदाहे वृक्षाग्रादौ प्रदीप्तो योऽग्निः स ब्रह्मवर्चसकामस्याधातव्य-

मस्य भ्राष्ट्राद् वृष्टिकामस्य वैद्युतात् अवदध्यात्— धारयेदित्यर्थः। स च काम्य.। तत्र काम्यनित्ययोरग्न्योः समुच्चयः, उत काम्येन नित्यस्य बाध इति संशये नियोगे—विधिवाक्ये आहत्यनिधानस्य कामदर्शनात्—ब्रह्मवर्चसादिफलश्रवणात् उखाया काम्यनित्ययोरग्न्योः, समुच्चयः। वृक्षाग्निः केवलनिधानार्थः। नित्यः सन्तापाग्निस्तु होमार्थः। इति भिन्नार्थत्वेन एकेनापरबाधासम्भवात्समुच्चय एवेति ॥ १७ ॥

## असति चासंस्कृतेषु कर्म स्यात ॥ १८ ॥

काम्येन— वृक्षाग्राज्ज्वलदग्निना नित्यस्याग्नेर्बाधे अर्थान्नित्येऽग्नाव सति असंस्कृतेषु—आधानादिजन्यसंस्काररशून्येषु भ्राष्ट्रादिष्वग्निषु कर्म—होमकर्म स्यात् तथा चाऽऽधानस्य यावद्धोमार्थत्वं बाध्येत। अतोऽपि समुच्चयः ॥१८॥

## तस्य च देवतार्थत्वात् ॥ १९ ॥

तस्य च— आधानस्य, देवतार्थत्वात्— देवतोद्देश्यकहोमार्थत्वात्—आग्न्युत्पत्तिद्वारा सर्वहोमार्थत्वादपि नित्येन सह काम्यस्य समुच्चयो युक्तः। न काम्येन तस्य बाध इति ॥ १९ ॥

## सि० ॥ विकारो वा तदुक्तहेतुः ॥ २० ॥

विकारो वा—होमार्थं विहितस्य नित्यस्याग्नेः विकारः— तत्कार्यकारी— तत्स्थानापन्न एव काम्योऽग्निरित्यर्थः। तदुक्त हेतुः— उक्तार्थसाधको हेतुस्तृतीयाध्यायस्य पञ्चमादे दशमसूत्रेण 'नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात्' इत्यनेन उक्त एवेति भावः ॥ २० ॥

## वचनादसंस्कृतेषु कर्म स्यात् ॥ २१ ॥

यच्चासति नित्येऽग्नावसंस्कृते कर्म स्यादित्युक्तं तत्रोच्यते। वचनात् प्रत्यक्षविधिवचनात्स्यादेव तथा। किमिव हि वचनं न कुर्यात्। न हि वचनस्यातिभार इति भावः ॥ २१ ॥

## संसर्गे चापि दोषः स्यात् ॥ २२ ॥

'अग्नये शुचये अष्टाकपालं निर्वपेत् यस्याग्निं ग्राम्येण संसृज्येत' इति श्रवणात् संसर्गे दोषः- नित्योऽग्निरशुचिः स्यात् ॥ २२ ॥

## वचनादिति चेत् ॥ २३ ॥

वचनात्— कामयुक्तवचनान्नाशुचिः स्यादिति चेत्- ॥ २३ ॥

## तथेतरस्मिन् ॥ २४ ॥

तथा इतरस्मिन्- सिद्धान्तमतेऽपि वचनबलात् असंस्कृतेऽपि होमः स्यात् ॥ २४ ॥

## उत्सर्गेऽपि परिग्रहः कर्मणः कृतत्वात् ॥ २५ ॥

यथाऽऽधानस्याग्नेः देवतार्थत्वादियुक्त- तथोत्सर्गेऽपि- संस्कृताग्नेरुत्सर्गेऽपि 'यः पूर्वेद्युरग्निं गृह्णाति स वै श्वोभूते देवता अभियजते' इति वचनात् परिग्रहः- देवतापरिग्रहो न विरुद्धः । कर्मणः कृतत्वात्— देवतोद्देश्यकहोमस्य कृतत्वात् । अग्नेः आधानं देवतापरिग्रहार्थम् । नाग्निस्तदर्थः । अत्राधानं त्वत्रापि क्रियत इति भावः ॥ २५ ॥

वैकारिकाग्नेराहवनीयत्वाभावाधिकरणम् ॥ ८ ॥

## स आहवनीयः स्यादाहुतिसंयोगात् ॥ २६ ॥

स वृक्षाग्रादानीतोऽग्निः, आहवनीयः- आहवनीयपदवाच्यः स्यात् । आहुतिसंयोगात्—हूयते यस्मिन्निति योगार्थसम्भवादिति ॥ २६ ॥

## सि० ॥ अन्यो वोद्धृत्यहरणात् ॥ २७ ॥

अन्यो वा—प्रसिद्धादाहवनीयात् अयं वृक्षाग्रात् भ्राष्ट्राद्वा उद्धृत्य *आहृतोऽग्निरयमेव । नाऽऽहवनीयः । यतः आधानादिना संस्कृतेऽग्नौ* आहवनीयशब्दो योगरूढः । न योगमात्रेण यत्र वर्तितुं शक्यः । पङ्कजादिशब्दवदिति भावः ॥ २७ ॥

वैकारिकाग्नेः आधानिकसंस्काराभावाधिकरणम् ॥ ९ ॥

## तस्मिन् संस्कारकर्म शिष्टत्वात् ॥२८॥

तस्मिन्— प्रागुक्ते वैकारिकेऽग्नौ आधानादि सर्वं संस्कारकर्म कर्तव्यम् । शिष्टत्वात्—सर्वकर्मार्थित्वेन तस्य विहितत्वात् । यद्याधानादिसंस्कारकर्म न क्रियेत तस्मिंस्तर्हि तस्मिन्नसंस्कृते कृतहोमादिकं निगुणत्वादफलं स्यादिति ॥ २८ ॥
—

## सि० ॥ स्थानाद्वा परिलुप्येरन् ॥ २९ ॥

स्थानाद्वा— असंस्कृताग्ने संस्कृताग्निस्थानात्तत्स्थाने विहितत्वात् परिलुप्येरन् तस्मिन् तानि कर्माणि । नहि ज्वलतो वृक्षाग्रादानीतोऽग्निराधाने- नोत्पद्यते । यथा वा चैत्रो मैत्रकार्ये नियुक्तो मैत्रकार्यं कुरुते । परं तत्र मैत्र- मातुरुदरान्निस्सरणादिकं नापेक्षते । तथा तत्र तस्य तदपेक्षा नास्तीति भाव ॥ २९ ॥

नित्यस्य उख्यस्याग्नेः धारणाभावाधिकरणम् ॥ १० ॥

## नित्यधारणे विकल्पो न ह्यकस्मात् प्रतिषेधः स्यात् ॥ ३० ॥

तस्याग्नेरोख्याया नित्योऽग्निर्नित्यं धार्य, उत विकल्पस्तस्य धारण इति संशये विकल्प । कुतः ' अकस्मात्-प्राप्तिं विना प्रतिषेधो न सम्भवति । स तु—' न प्रतिसमीधीत यत्प्रतिसमीधीत । भ्रातृव्यमस्मै जनयति ' इति श्रूयते । अतस्तस्य प्राप्तिपूर्वकत्वाद्धारणविधि प्रकल्प्यते । तथा च विधिप्रति- षेधयो सत्त्वाद् विकल्प एवेति ॥ ३० ॥

## सि० ॥ नित्यधारणाद्वा प्रतिषेधो गतश्रियः ॥३१॥

' धार्यो गतश्रिय आहवनीय ' इति प्रत्यक्षश्रुतेः नानुमानिकी श्रुतिर्बलवत्तरा । तस्मात् गतश्रिय नित्यधारणात्—प्रत्यक्षश्रुत्या नित्यधा- रणस्य विहितत्वात् तस्यैवायं प्रतिषेध । न प्रतिसमिन्धीतेति उख्याग्नौ

क्रियते । आहवनीयस्थानापन्नत्वादुख्याग्नेरपि नित्यधारणं प्राप्तमिति । अतो नित्यधारणविधिरभावान्न विकल्पः । कार्याभावाद्धारणमेव तस्येति भावः ॥३१॥

सत्राहीनयोरनेकयजमानसमवाये शुक्रस्पर्शादीनामेकयजमानकर्तृकत्वाधिकरणम् ॥ ११ ॥

## सि० ॥ परार्थान्येको यजमानगणे ॥ ३२ ॥

सत्राहीनयोः सर्वेषां यजमानत्वात् 'शुक्रं यजमानोऽन्वारभते । यजमानसंमितौदुंबरी भवति' इति यानि, परार्थानि —यजमानानुपकारकाणि कर्माणि तानि यजमानगणे एक एव कुर्यात् । न सर्वे । सर्वेषां प्रवृत्तौ प्रयोजनाभावादिति भावः ॥ ३२ ॥

अहीने शुक्रस्पर्शादावनियतयजमानकर्तृकत्वाधिकरणम् ॥ १२ ॥

## सि० ॥ अनियमोऽविशेषात् ॥ ३३ ॥

अहीने—एकेन यत् कार्यं तत् अविशेषात्— विशेषस्याभावात् अनियमः—येन केनापि कार्यमित्यर्थः ॥ ३३ ॥

सत्रे शुक्रस्पर्शादौ गृहपतेरेव कर्तृत्वाधिकरणम् ॥ १३ ॥

## सि० ॥ मुख्यो वा अविप्रतिषेधात् ॥ ३४ ॥

सत्रे तु मुख्यः गृहपतिरेव याजमानं कुर्यात् । अविप्रतिषेधात्-प्रतिषेधस्याभावादित्यर्थः ॥ ३४ ॥

सत्रे यजमानसंस्काराणामञ्जनादीनां सर्वगामिताधिकरणम् ॥ १४ ॥

## सत्रे गृहपतिरसंयोगात् हौत्रवत् ॥ ३५ ॥

सत्रे अञ्जनाभ्यञ्जनवपनादयः संस्कारा गृहपतेरेव, उत सर्वेषामिति संशये गृहपतिः यजमान एव फलभूयस्त्वादिविशिष्टत्वादुक्तसंस्कारसहितः स्यात् । न सर्वे स्युः । कुतः ? असंयोगात्- 'गृहपतिं दीक्षयति' इति वाक्यस्य गृहपतिपदे असंयोगस्य—संयोगाभावस्यासत्वात् सम्बन्धाभावाभावस्य-- शक्तिरूपसम्बन्धस्य विद्यमानत्वात् । सः गृहपतिशब्दस्य शक्त्यात्मकः सम्बन्धः अबाधितः स्यात् । हौत्रवत्- यथा होतृशब्दशक्तेरबाधाय होत्रा क्रियमाण-

कर्मण्येव हौत्रपदस्य प्रयोग, तथाऽत्रापीति। अन्यथा सम्बन्धो बाधित स्यात्तदयुक्तमिति ॥ ३५ ॥

## आम्नायवचनाच्च ॥ ३६ ॥

' यो वै सत्रे बहूना यजमानाना गृहपति' स सत्रस्य प्रणेता, स हि भूयिष्ठा ऋद्धिमाप्नोति ' इत्याम्नायवचनादपि विशिष्टो यजमान एव गृहपतिरिति सिध्यति ॥ ३६ ॥

## सि० ॥ सर्वे वा तदर्थत्वात् ॥ ३७ ॥

' ऋद्धिकामा सत्रमासीरन् ' ' द्वादशाह ऋद्धिकामा सत्रमुपेयु ' 'सप्तदशावरा एकविंशतिपरमा सत्रमासीरन् ' इत्यादिश्रुतिभि तदर्थत्वात् - सर्वार्थत्वात्-सर्वेषा ऋध्यादिफलार्थत्वबोधनात् सर्वे एवाञ्जन दिसस्कारै. सस्कार्या । न गृहपतिरेक एवेति भाव ॥ ३७ ॥

## गृहपतिरिति च समाख्या सामान्यात् ॥ ३८ ॥

गृहपतिरिति समाख्या तु **सामान्यात्**--सर्वसाधारणत्वादुपपन्ना । **गृहस्य**- शालाया सत्रस्य वा प्रभु र सर्वसाधारणमिति शक्यार्थबाधाभाव इत्याशय ॥ ३८ ॥

## विप्रतिषेधे परम् ॥ ३९ ॥

याजमानाऽऽर्त्विज्ययोर्विप्रतिषेधे— विरोधे **परं**— आर्त्विज्य-त्विक्कर्म एव कार्यम् । कुत ? ' यजमानास्ते ऋत्विज ' इत्यनन वाक्येन ऋत्विक्कर्मण आतिदेशिकयाजमानापेक्षया प्रबलत्वबोधनादिति भाव ॥३९॥

## हौत्रे परार्थत्वात् ॥४० ॥

हौत्रे कर्मणि होतु **परार्थत्वात्**— परार्थं यत कर्म प्रधानम् । होता तत्र गुणभूत । अत एकेनापि कृत तच्चरितार्थम् । अभ्यञ्जन फल-सस्कार । तत्र यजमान प्रधानम् । अत प्रधानसस्कारावृत्तिरिति सर्वे त सस्कारेण सस्कार्या इति भाव ॥ ४० ॥

## वचनं परम् ॥ ४१ ॥

यच्च फलभूयस्त्ववचनमुपन्यस्तम्। तत् परं—अर्थवाद इत्यर्थः ॥४१॥

### ब्राह्मणस्यैव आर्त्विज्ये अधिकाराधिकरणम् ॥ १५ ॥

## प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ ४२ ॥

आर्त्विज्यं—ऋत्विक्त्वं, सर्ववर्णानां—ब्राह्मणक्षत्रवैश्यानामुपनयनोत्तरमधीतवेदानां विद्यावत्त्वेन प्रभुत्वात्—सामर्थ्यवत्त्वात् स्यात् ॥ ४२ ॥

## सि० ॥ स्मृतेर्वा स्याद् ब्राह्मणानाम् ॥ ४३ ॥

'प्रतिग्रहोऽधिको विप्रे' इत्यादिस्मृतेः 'याजनाध्यापनप्रतिग्रहाः ब्राह्मणस्यैव वृत्त्युपायाः' इति कल्पसूत्राच्च ब्राह्मणस्यैवाऽऽर्त्विज्येऽधिकारः। नेतरयोः ॥ ४३ ॥

## फलचमसविधानाच्चेतरेषाम् ॥ ४४ ॥

'यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिभीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्' इति सोमपानस्य तयोः प्रतिनिषेधात् ऋत्विजा सोमपानावश्यकत्वान्नार्त्विज्यमितरयोः ॥ ४४ ॥

## सान्नाय्येऽप्येवं प्रतिषेधः सोमपीथहेतुत्वात् ॥ ४५ ॥

एवं सान्नाय्ये च 'न राजन्यो न वैश्यो वा सान्नाय्यं पिबेत, असोमपीथी ह्येषः' इति सान्नाय्यपाननिषेधहेतुत्वेन सोमपानानर्हत्वं श्रुतिर्दर्शयति। अतोऽपि नाऽऽर्त्विज्यं तयोरित्यर्थः ॥ ४५ ॥

## चतुर्धाकरणे च निर्देशात् ॥ ४६ ॥

दर्शपूर्णमासयोः पुरोडाशस्य चतुर्धाकरणशेषभक्षणे 'ब्राह्मणानामिदं हविः सोमपीथिनां नेहाब्राह्मणस्यास्तीति' श्रुतेः यदि राजन्यवैश्ययोरपि ऋत्विक्त्वं स्यात् तर्हि ब्राह्मणानामेव सोमपीथिनामिदं शेषभक्षणहविः, नेह अब्राह्मणस्य

प्रसक्तिरिति श्रुतिर्नावक्ष्यत्। अग्नीति च ब्राह्मणानामेवेति। अतोऽपि न तयोरार्त्विज्यमिति भावः॥ ४६॥

## अन्वाहार्ये च दर्शनात्॥ ४७॥

'एते वै देवा अहुतादो यद् ब्राह्मणाः यदन्वाहार्यमाहरन्ति। तानेव तेन प्रीणाति' इति दार्शपूर्णमासक्याम्नाहार्यदक्षिणाया ब्राह्मणा एव दृश्यन्ते। दक्षिणा च ऋत्विग्भ्य एव दीयते। तस्मादुक्तेभ्य श्रुत्युक्तहेतुभ्य स्मृतिभ्यश्च शिष्टाचाराच्च ब्राह्मणनामेवं आर्त्विज्यम्। नेतरयोरिति निष्कृष्टः सिद्धान्तः॥४७॥

इति पूर्वमीमांसासूत्रवृत्तौ भावबोधिन्यां द्वादशाध्यायस्य चतुर्थः पादः॥ ४॥ श्रीः॥

सम्पूर्णश्च द्वादशोऽध्यायः।

---

॥ श्रीः॥

यदीयसम्बन्धमवाप्य पावनम्
अहं कृतार्थोऽस्मि विशुद्धचेताः।
भवाब्धिसन्तारितशिष्यवृन्दम्
प्रणौमि तद्देशिकपादपङ्कजम्॥
कृष्णासरित्तीरपूतवेणेग्रामनिवासिना।
पूर्वजार्जिततत्रत्यावनिस्थानाल्पवृत्तिना॥
मारुलकरेत्यन्ववायनाम्ना नृहरिशर्मणा।
अधीततर्कमीमांसाद्वयश्रीरङ्गनाथिना॥
नागेषुवस्विन्दुमिते (१८५९) शाके ईश्वरवत्सरे।
जगद्गुरुश्रीशङ्करार्यपदपद्म विभूषितम्॥
करवीरलसत्पीठ वन्द्य समधितिष्ठता।
विद्याशङ्करभारतीत्याह्वेन यतिना मया॥

इन्द्वश्ववस्विन्दुमिते (१८७१) विरोधिवत्सरे शुभे ।
प्रौष्ठपद्यां पूर्णिमायां वासरे सौम्यसंज्ञके ॥
सौत्रप्रतिपदस्यार्थमादावुक्त्वा ततः परम् ।
भावार्थो वर्णितो यस्यां सूत्रकृद्धपिसंमतः ॥
इत्थंविधा सूत्रवृत्तिः प्रणीता भावबोधिनी ।
सलीलं श्रौतधर्मस्य मुन्युक्तार्थप्रकाशिका ॥
सेयमीशप्रसादेन आस्तीकजनतुष्टये ।
चिरं समर्था सम्भूयादित्याऽऽशंसेऽहमादरात् ॥

॥ श्रीः ॥

आदौ धर्मे प्रमाणं विविधविधिमिदां शेषतां च प्रयुक्तिम्
पौर्वापर्याधिकारौ तदनु बहुविधं चातिदेशं तथोहम् ॥
बाध तंत्रं प्रसङ्गं नयनयनशतैः सम्यगालोचयद्भ्यो
भिन्ना मीमांसकेभ्यो विदधति भुवि के सादर वेदरक्षाम् ॥

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमज्जगद्गुरुशङ्कराचार्यान्वयसञ्जाताभिनवपञ्चगङ्गातटवास–कमलानिकेतन–– करवीरसिंहासनाधीश्वर–श्रीविद्याशङ्करभारतीस्वामिपादप्रणीता भावबोधिनीसमाख्या श्रीमज्जैमिनीयसूत्रवृत्तिः समाप्तिमगात् ।

---

